॥ श्रीः ॥

विद्याभवन संस्कृत ग्रन्थमाला

५४



कौमुदी-

# कथाकल्लोलिनी

( पाणिनीयलौकिकव्याकरणसमापनीया )


रचयिता—

**रामशरणशास्त्री एम्० ए०**

मुरादाबादस्थ के० जी० के० कालेजसंस्कृतप्रोपाध्यायोऽध्यक्षश्च

सम्पादकः—

ग्रन्थकर्तुरात्मजो लब्धस्वर्णपदकः

**गयाचरणत्रिपाठी एम्० ए०**





चौखम्बा विद्याभवन, वाराणसी-१




# प्राक्कथनम्

## आचार्यः श्रीबदरीनाथशुक्लः

( वाराणसेयसंस्कृतविश्वविद्यालयस्य न्यायशास्त्रविभागाध्यक्षः )

संस्कृतं संसारस्य सर्वप्राचीना भाषा । एतदीयं साहित्यं सर्वतो विशालं समृद्धं च । नास्ति जीवनस्य कोऽपि पक्षः, ज्ञानस्य कोऽपि भागः, विश्वस्य वा कोऽपि भावो य इहोपेक्षितो भवेत् । न सम्भवति मानवजातेः काचित्समस्या कापि वा सामाजिक-जीवनस्य परिकल्पना यस्या विवेचनमत्र नोपलभ्येत। न वर्तते लेखनस्य, विषयवर्ण-नस्य साहित्यस्य वा कश्चित्प्रकारो योऽत्र संगृहीतो न भवेत् । किं बहुना, अस्त्यत्र सर्वविधं सुदूरमतीतमिव समग्रं भविष्यदपि सम्यङ्निरूपितम् । अत एव मानवस्य दृष्टिं स्पष्टयितुं, मानसं परिष्कर्तुं पन्थानं प्रदर्शयितुं च यथेदं क्षमते न तथा जगतः किञ्चिदन्यत् साहित्यम् । ईदृशीं सम्पन्नतामुपयोगितां च बिभ्रतोऽप्यस्य साहित्यस्य यथापेक्षिते अध्ययनाध्यापने न भवत इति देशस्य महद् दुर्भाग्यम्। एतदध्ययने जना-नामप्रवृत्तेः कारणेष्वेतदीयव्याकरणस्य काठिन्यमप्येकं कारणं मन्यते । तच्च काठिन्यं व्याकरणस्य प्रत्यक्षाध्ययनेऽधिकतरं वर्धते । अतः कतिपयैः पण्डितैः काव्यद्वारेण तदध्ययने सौकर्यमाधातुं व्याकरणशिक्षणौपयिकाः भट्टिकाव्यप्रभृतयः कतिचिद् ग्रन्थाः प्रणीताः, परमीदृशरचनानामतिप्रज्ञाप्रयाससाध्यतयाऽस्यां दिश्यपेक्षितं कार्यं न समपद्यत ।

लक्ष्यतेऽधुना संस्कृतं प्रति जनरुचेः किमपि जागरणम् । दृश्यते प्रशासनस्यापि संस्कृतसंवर्धने कश्चित्प्रयासः । सूच्यते संस्कृतविश्वविद्यालयादिस्थापनया संस्कृतस्य किमप्युज्ज्वलं भविष्यत् । अस्मिन्नवसरे यदि संस्कृतविपश्चितो निस्तन्द्राः सन्तो लोकरुचेरनुकूलग्रन्थान् रचयेयुस्तदाऽविलम्बमेव संस्कृतं जनजीवने पुनः सुप्रतिष्ठितं भवेदिति निस्संशयम् । सत्यमिदं साक्षात्कुर्वता मुरादाबादस्थ के० जी० के० महाविद्यालयस्य संस्कृतप्रोपाध्यायाध्यक्षेण पण्डितवर्येण श्रीरामशरणशास्त्रिमहोदयेन 'कौमुदीकथाकल्लोलिनी' नामको ग्रन्थो महता प्रयत्नेन प्रणयनकर्मतां नीतः । अत्र सरलानां रोचकानां च कथानकानामवलम्बनेन वैयाकरणसिद्धान्तकौमुद्या औणा-दिकातिरिक्तस्य कृत्स्नस्य प्रकरणजातस्य समग्राणामावश्यकसूत्राणामुदाहरणानि प्राय उपन्यस्तानि। उदाहरणानि चेदृशानि परिगृहीतानि यानि व्यवहारस्य विभिन्न-

कक्षीयाणां पदार्थानां संज्ञाविज्ञापनपराणि बहूनां कलासंस्कृतिसभ्यतेतिहासानां प्रकाशनक्षमाणि च सन्ति ।

व्याकरणं गीर्वाणवाग्देव्या मुखम् । अस्य दर्शनं विना तस्या अन्यन्निखिलमेव न मनागप्यवबोधनार्हम् । अतोऽस्य देशस्य बालाऽपि व्याकरणानभिज्ञस्य वरणे संकुचन्तीत्थं सञ्जिरन्ती श्रूयते स्म—

यस्य षष्ठीचतुर्थ्यौ स्तो विहस्य च विहाय च ।
अहं यस्य द्वितीया स्याद् द्वितीया स्यामहं कथम् ? ।।

अस्योपयोगित्वं च—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ।।

इत्यादिवचनैः बहुत्र बहुधोद्घोषितम् । अत एव व्याकरणस्यावबोधनायैव मुख्यतयाऽस्य ग्रन्थस्य प्रवृत्तिर्यद्यपि विद्यते तथाप्यत्र काव्यकामनीयकमपि नैव न्यूनतां गतम् । यथास्थानं श्लेषरूपकोपमाप्रभृत्यलङ्काराणां प्रयोगः, कथाङ्गानां यथोचितं विन्यासः, रसभावयोः समीचीनः सन्दर्भः, सर्व एषोऽस्य काव्यानुगुणं महिमानमुपचिनोति ।

भारतस्य सनातन्याः संस्कृतेः, भारतीयानां वीरतापूर्णाया अध्यवसितेः, भारतस्य धार्मिक्या आध्यात्मिक्या भौतिक्याश्च विविधाया जीवनधाराया भारतस्य समग्रविश्वस्पर्शिन्या मानवीयदृष्टेश्च चारुतरं चित्रणमत्र चतुराणां चेतश्चमत्काराय सुचिरं चकास्ति ।

इत्थमसौ ग्रन्थो निजेनावर्जकेन गुणगणेन संस्कृतप्रणयिनः स्वात्मन्यनुबध्नन् काठिन्यप्रत्यायनमन्तरैव व्याकरणस्य विस्तृतं परिनिष्ठितं च ज्ञानं तेष्वाधातुमर्हतीति निर्विवादम् । यद्यपरेऽपि संस्कृतविद्वांसो मार्गमिममनुसरन्तो नूतनानां हृद्यनिरवद्यगद्यग्रन्थानामेतद्ग्रन्थसमानोद्देश्यकानां सरलतराणां प्रणयने बद्धपरिकरा भवेयुस्तदा संस्कृतस्याध्ययनाध्यापनयोः काचिन्नवीना क्रान्तिर्नूनमेव जायेत ।

अहमस्य गद्यग्रन्थन्यूनतानिराकरणे निमित्ततां दधतः सुन्दरग्रन्थस्य रचयितारं भूयोभिर्हार्दिकैर्धन्यवादैः सत्कुर्वन्नस्य विद्वज्जनैराद्रियमाणतां, विद्यार्थिजनैः सोत्साहमधीयमानतामधिकारिजनैः पाठ्यग्रन्थेषु सन्निवेश्यमानतां च कामये येनेदृश्यो रचना अनायासं पण्डितजनैर्बाहुल्येन निष्पादिता भवेयुरिति ।

—o—

# प्रास्ताविकम्

सत्स्वपि भट्टिकाव्य-रावणार्जुनीयादिकतिपयव्याकरणवैशिष्ट्यपद्यग्रन्थेषु इतरेषु च विद्वच्चरित्रपञ्चक-सेतुयात्रानुवर्णन-कथामुक्तावल्याद्याधुनिकगद्यग्रन्थेषु व्याकरण-समापनीयपद्यगद्यान्यतरग्रन्थस्य सर्वथा राहित्यं ग्रन्थस्यास्य निर्मितौ प्रेरकत्वेन मूलम्। व्याकृतिसुधाब्धिर्हि गम्भीरतमः। तत्तीरोत्प्लवनमपि चासाधारणाभ्याससाध्यमिति स्वल्पायासेन निर्भयं जनसाधारणावगाहनाय भगीरथप्रयासेन कल्लोलिन्याः अवतारः।

एषा हि सरलेषु रोचकेषु च कथानकेषु सिद्धान्तकौमुद्याः सन्धिप्रकरणमारभ्यौणादिकातिरिक्तोत्तरकृदन्तपर्य्यन्तानां प्रायः समेषामावश्यकसूत्राणामुदाहरणैः संयुक्ता। पादटिप्पण्यां सूत्राणामुल्लेखः। तत्र प्राकरणिकसूत्राणि ह्रस्वाक्षरैरप्राकरणिकानि चापेक्षाकृतस्थूलाक्षरैर्निर्दिष्टानीति विशेषः। विरोधाभासादिस्थले क्लिष्टांशानाञ्च विस्तरव्याख्येति तत्तदुदाहरणैरानुषङ्गिकवर्णनानुसारं यत्र कुत्र प्रतीयमानवैषयिकदुरुहत्वापि सारली कल्लोलिनी-वैशिष्टी।

एकादशकल्लोलात्मको ग्रन्थश्चायं कौमुद्यनुसारमेव पूर्वार्द्ध-पश्चार्द्धात्मकभागद्वय्या विभाजितः। तत्राद्येषु पञ्चसु पूर्वार्द्धीयकल्लोलेषु सूत्रोदाहरणानां महत्त्वात्तन्निर्देशः। पश्चार्द्धे च षट्सु कल्लोलेषु आद्ये गणनिर्देशकल्लोले तत्तद्गणीयधातूदाहरणानां प्राधान्येन यथास्थानं यथागणधातुरूपाणां निर्देशः। णयन्तप्रक्रियातोऽग्रे चासमाप्तेस्तत्तत्कल्लोलेषु पुनर्यथास्थानं सूत्रोदाहरणानां निर्देशः। सा चैषा मदीयतनुजनुषा समुपलब्धसौवर्णपदकेन, समुपलभ्यमानराजकीयानुसंहितिवृत्तिना, एम्० ए० इत्युपाधिधारिणा गयाचरणत्रिपाठिना स्वल्पव्याकृतिबोधेभ्यः समस्तक्लिष्टांशभावावबोधकव्याख्यया सँव्वलितेति वाग्वल्लर्य्याः संवर्धनेन संस्कृतस्य भाषणे, अवगमने, अनुवदने, निबन्धने चात्यन्तोपयोगिनीत्येतन्नात्युक्तिपरम्।

इहत्यसूत्राणामुदाहरणानाञ्च व्याकरणप्रयोगदृष्ट्या महत्त्वे सत्यपि यथास्थानं तत्तत्सूत्रोदाहरणैर्देश-पर्वत-वन-नदी-जनपद-नगर-भोज्य-पेय-पदार्थानाम्, तत्तद्धान्योत्पादकक्षेत्र-फल-रोग-वस्त्राभूषण-सुगन्धितद्रव्य-प्राकार-पात्र-वाहन-मृगया-संगीत-वाद्ययन्त्राणाम्, नक्षत्रर्तुकृषिधान्य-पुष्प-वनस्पति-पक्षि-क्षुद्रजन्तु-यादसाम्, कला-व्यापारादीनाञ्चोल्लेखेन तत्तत्कथानकसम्बद्धदेशकालसांस्कृतिकमपि महत्त्वमित्येतद्ग्रन्थसावहित्यध्ययनेनाभिव्यक्तं स्यात्।

साहित्यिकदृष्ट्याऽपि च ग्रन्थस्यास्य महत्त्वं न नैयूनीमावहति। गद्यमस्याति-

सरसं सप्रवाहञ्चेति प्रतिकल्लोलं सूत्रोदाहरणानां घटनानाञ्च जिज्ञासायां पाठको निसर्गतः कल्लोलिनीभावतरङ्गेषूत्तरोत्तरं प्रयासमन्तरेणैव प्रवाहितः संजायते। विषमस्थलेषु श्लेषरूपकोपमानुप्रासपरिसङ्ख्याविरोधाभासाद्यलङ्काराणामपि सफलः प्रयोग इति ग्रन्थोऽयमाधुनिकसंस्कृतगद्यस्योत्तमादर्शः सन्नांशिकरूपेण संस्कृतगद्य-ग्रन्थन्यूनतां परिपापरीति।

अत्र कथासरित्सागरीयनरवाहनदत्तस्य कथा मुख्या। प्रातिस्विकरूपेण व्याकृतिसत्पृथङ्महत्त्वयोर्वररुचिगुणाढ्ययोरपि वृत्तान्तद्वयी। तदनन्तरञ्च नर-वाहनदत्तजनुषः प्रभृति तन्महाभिषेकपर्य्यन्तकथासूत्रेष्ववान्तरकथासन्दृब्धिः। आवश्यकतानुसारं संक्षितासु परिवर्द्धितासु च कथासु नरवाहनदत्तीयकथासूत्र-माद्योपान्तमविच्छिन्नमित्यासामध्ययनेन संस्कृतसाहित्यास्तत्तद्ग्रन्थेषु पल्लवितानां कथानां मूलरूपेण परिज्ञानं प्राचीनभारतसंस्कृत्याः भारतीयवीराणामध्यवसायपूर्ण-तत्तत्समृद्धलोककथासाहित्याश्च सहैवावबोधो यस्या महत्त्वमन्यदीयसाहित्येऽप्यद्या-क्षुण्णमुपलभ्यते।

एतत्सर्वेहत्यविषयावगत्यर्थनिर्दिष्टसाधनावलम्बनपूर्वकं कल्लोलिन्या मुहुर्मुहुर-वगाहनाभ्यासेन भविष्णुविद्वन्नदीष्णेभ्यस्तदन्तर्वर्तिरत्नानां सम्प्राप्तिः। तथापि महाकविभट्टेरुक्त्यनुसारम्—

दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।
हस्तादर्श इवान्धानां भवेद् व्याकरणादृते॥

इत्यपि न विस्मर्त्तव्यम्।

अत एव पातञ्जलमहाभाष्ये सत्स्वपीतरप्रयोजनेषु—

"उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥"

इत्युक्त्वा 'वाङ्नोविवृणुयादात्मानम्' इति व्याकरणाध्यनस्यावश्यकत्वं प्रदर्शितम्। तदनुसृत्यैवाधुनिकैरपि—

'अचीकमत' यो न जानाति यो न जानात्य'वर्वरीः।'
'अजर्घाः' यो न जानाति तस्मै कन्या न दीयताम्॥

इत्यादिरीत्या यस्य शास्त्रस्य महत्त्वमुद्घुष्यते तस्य विदुषां कृते साहित्यिकरसाप्ला-वितमेकैकमस्योदाहरणं नूनं सविशेषमास्वाद्यं प्रतिभायादिति नात्युक्तिपरम्।

यद्यपि ग्रन्थस्यास्य भाषासारल्ये, उपयोगिकथासञ्चये, साधारणसंस्कृतज्ञसर्वथोपयोगिशब्दसङ्कलने च मया यथाशक्ति समवाधायि तथापीहैतावतो विस्तृतवाङ्मयमहोदधेः कियन्ति रत्नानि समचीयन्त कियन्ति वा तैः सह शुक्तिशङ्ककानि सन्न्यधीयन्तैतन्निर्धारणाऽसाधारणातिमर्त्यमतिमद्भिर्विद्वद्भिरेव कार्येत्यत्र नैव सन्देहसन्दोहः।

गद्येऽयमेतज्जातीयोऽचरमः प्रयासः। मुद्रणमप्यस्य दविष्ठं वाराणसेयम् इत्यनेकदृष्टिभिरेष परिवर्द्धनसंशोधनाद्यपेक्षते। किन्तु कार्यमेतत्सहृदयाध्यापकाध्याप्यानां साहाय्यमन्तरेणासम्भवीत्यध्यापनाध्ययनावसरे समुपलभ्यमानानामिहत्यत्रुटीनां निर्देशं ते प्रणेत्रे धारयन्तो निजकर्तव्यपरिपालनेनात्मसौजन्याद्बद्धं तं चिराय करिष्यन्तीति नितरामाशासनम्।

एतद्ग्रन्थस्यैतद्रूपदाने येषां येषां ग्रन्थानां सहयोगो मयोपलब्धस्तेषां तेषां प्रकृत्योपकर्त्तॄणां कर्त्तॄणामहमधमर्णः।

वाराणसेयसंस्कृतविश्वविद्यालयस्य न्यायविभागाध्यक्षपदमलङ्कुर्वाणाः प्राच्यपाश्चात्त्योभयविद्यावैदुषीविशिष्टशेमुषीकाः श्रीबदरीनाथशुक्लमहोदयाः ग्रन्थस्यास्य प्राक्कथनं लेखित्वा यद्गौरवमभ्युच्छ्रितवन्तस्तदर्थं ते मदीयासकृदाभारभाजः।

अस्य पाण्डुलिपिप्रस्तुतौ सम्प्रति एम्० ए० वर्गीयाणां स्वेषां श्रीधर्मेन्द्रदेवशिवस्वरूपप्रभृत्यनेकान्तेवासिनां विशेषेण मया सहयोगो लब्ध इति ग्रन्थोऽयं तदाभारितः।

सर्वतोऽधिकं श्रेयोऽस्य ग्रन्थस्यैतद्रूपप्राप्तौ चौखम्बा-संस्कृतसीरीज-चौखम्बाविद्याभवनयोरध्यक्षेभ्यः श्रीजयकृष्णदास-हरिदासगुप्तमहोदयेभ्यस्तदीयसंस्कृत-हिन्दीमुद्रणविभागाध्यक्षविद्वद्वरश्रीरामचन्द्रझामहोदयेभ्यश्च वर्तते येषां समनोयोगाध्यवसायेन यथास्थलं समुचितपरिवर्तनपरिवर्धनादिपरामर्शेन च पर्याप्तलाभान्वितो भूत्वा पादटिप्पणी-प्राकरणिकाप्राकरणिकसूत्रादिजटिलग्रन्थिग्रथितस्य ग्रन्थस्यैतस्य समापने कृतकार्योऽहमभवम्।

के० जी० के० कालेज
३/ शिवनिवास
मुरादाबाद
महाशिवरात्रिः २०१७

विदुषामाश्रवस्य—
**—रामशरणत्रिपाठिनः**

# शुद्ध्यशुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६ | १६ | मयि तत् | मया तस्मिन् |
| २३ | ६ | अत्र समया इत्यस्य अग्रे | स मया इत्यपि योजनीयम् |
| ३५ | १७ | जगदग्निम् | जमदग्निम् |
| ३६ | ३ | वलयीकृतः | वलयी कृतः |
| ,, | १६ | इवमुक्तः | एवमुक्तः |
| ३९ | १० | तदीव | तदीय |
| ४४ | १८ | यथातावोत्तरा | यथातथ्योत्तरा |
| ६५ | २२ | युक्तम् | युक्ताम |
| ८६ | २ | किमार्जवे | किं सार्जवे |
| ९५ | ११ | विद्यातितान्तः | विद्योतितान्तः |
| १०२ | १५ | मासकीनः | मामकीनः |
| ,, | २१ | समीप्य | सामीप्य |
| १०५ | २० | सेर्मा | सेर्मः |
| १०८ | १ | वचनीयो | वचनीयां |
| ११२ | १० | रभसा | रभसात् |
| ११७ | १७ | अगद्यिष्यति | अगदिष्यति |
| ११८ | ८ | ब्रुवन्ती | ब्रुवती |
| १२२ | २० | प्राणिति | प्राणति |
| १२५ | २४ | क्तिुर | विचतुर |
| १३८ | ६ | त्वप्युपेते | त्वय्युपेते |
| १३९ | २६ | संख्याया विधार्थे धा | अधिकरण-विचाले च |
| १४० | २० | गोयुगं | युगलं |
| १४१ | १८ | संदिग्धि | संदिग्ध |
| १७२ | १६ | तस्थानं | तत्स्थानं |
| १७६ | १५ | सुग | युग |
| १९२ | २० | राज्ये | राज्यं |
| २०४ | १० | अजागोघन | अजागर्घन |
| २१२ | १२ | विसूचिका | विषूचिका |
| २५७ | ११ | न सोऽपरा-धभाक् | सोऽपराधभाक् |
| २६७ | १६ | निर्णयस्व | निर्णयतु |
| २६८ | २ | निदां | निन्दां |
| २८२ | १८ | गणिताम-स्माक | गणिताना-मस्माक |
| २९१ | २० | अहमहमिहा | अहमिहा |
| २९४ | १३ | तिर्निष्ट | निर्दिष्ट |
| २९७ | २२ | इतीहाससं-स्तुतस्य | इतीहासं-स्तुतस्य |
| २९८ | ३ | मत्वा इत्य-स्याग्रे | स (अष्टावक्रः) इत्यपियोज्यम् |
| ३१६ | २० | सच्छल | यच्छल |
| ३३७ | २८ | ससुदोरजः | समुदोरजः |
| ३३९ | २० | मानसस्य | मानस्य |
| ,, | २६ | कर्नण्या | कर्मण्या |

# विषयानुक्रमः


पूर्वार्द्धे—                                                  पृष्ठ-संख्या

१ संन्धिनिर्देशे प्रथमः कल्लोलः ... ... १

२ कारकनिर्देशे द्वितीयः कल्लोलः ... ... १९

३ समास-स्त्रीप्रत्ययनिर्देशे तृतीयः कल्लोलः ... ... ५४

४ समास-तद्धितनिर्देशे चतुर्थः कल्लोलः ... ... ७१

५ तद्धितद्विरुक्तनिर्देशे पञ्चमः कल्लोलः ... ... १६०

पश्चार्द्धे—

६ गणनिर्देशे षष्ठः कल्लोलः ... ... १९५

७ प्रक्रियानिर्देशे सप्तमः कल्लोलः ... ... २३५

८ कण्ड्वादिनिर्देशे अष्टमः कल्लोलः ... ... २६१

९ पद वाच्य-लकारार्थनिर्देशे नवमः कल्लोलः ... ... २६४

१० प्रकीर्णकनिर्देशे दशमः कल्लोलः ... ... २८८

११ कृदन्तनिर्देशे एकादशः कल्लोलः ... ... २९७

(क) समर्पणम् ... ... ३५०

(ख) शब्दार्थ एवं टिप्पणियाँ ... ... ३५१




कौमुदी-

# कथाकल्लोलिनी

## [पूर्वार्द्धभागः]



## अथ सन्धिनिर्देशात्मकः प्रथमः कल्लोलः

नत्वा गुरून् गणेशादीन् कल्लोलिन्यां मुदे विदाम् ।
व्याकृत्यब्धिसुसद्रत्नसञ्चयोऽत्र विधीयते ॥

### वररुचिवृत्तान्तः

अस्ति विविधकिन्नरगन्धर्वविद्याधरनिषेवितपादः [1]स्वौन्नत्यगौरवाधरीकृतापरधराधरः धराधरेन्द्रः सिद्धगणगणनीयमहिमवान् हिमवान् । समारूढातिमाहात्म्यपदवीको यश्चाखिलजगज्जनन्या भवान्यापि निजजनकभावेनाश्रितः । कैलाशाख्यश्च तदीयोत्तरसानुः । हितकाम्यया इव यो जनानां योजनानां सहस्राणि समाक्रम्य तिष्ठन्[2] निजनैसर्गिकधवलिम्ना हसतीव निर्मथितोदधिसमुद्भूतसुधानवाप्तश्वैत्यं मन्दरममन्दम् । अधिवसति च तमखिलचराचरगुरुर्गिरीन्द्रजाजानिः ।

एकदा स्तुतिभिः सन्तोषितः शिवः समुत्पन्नविस्रम्भामम्बां हेरम्बस्यावदत्, 'किं ते प्रियमाचरामीति' । एतद् आकर्ण्यातिरम्यकथाशुश्रूषासम्प्रेर्यमाणमानसा सा साग्रहमनुनाथितवती भगवन्तं सुध्युपास्यं[3] भवं काञ्चित्कथां कथयितुम्[4] । शर्वाण्या मनोऽनुरञ्जयितुञ्च सर्वंगतः शर्वो नातिविस्तृतां तां कथामेकामभिधातुमेवमारभत—

एकदा ब्रह्मा[5] मध्वरिश्च मामीक्षितुं महीमटन्तौ हिमवत्पादमूलम् आगतवन्तौ;[6] दृष्टवन्तौ च तत्रैकं महाज्वालालिङ्गम् । तस्यान्तम् अवालुलोकयिषुः[7] एकोऽधस्ताद्[8] अपरश्च उपरिष्टाद्[9] अगमत् । किन्तु अलब्धान्तौ तौ तपोभिर्मां सन्तो-

---

१. वृद्धिरेचि । २. लटः शतृशानचावप्रथमासमानाधिकरणे । ३. इको यणचि । ४. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् । ५. सर्वत्र शाकल्यस्य । ६. क्तक्तवतू निष्ठा; निष्ठा । ७. सनाशंसभिक्ष उः । ८. दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः; अस्ताति च । ९. उपर्युपरिष्टात् ।

षितवन्ताविल्याविभूतेन मया 'कोऽपि वरो व्रियताम्' इत्युक्तयोस्तयोर्ब्रह्मा स्व-पुत्ररूपेण मां प्राप्तुमभ्यर्थितवानित्यत्याख्या स निन्दापात्रमनभ्यर्हितश्च संजातः। धात्रंशस्तु 'अहं तव वरिवस्यापरः स्याम्' इत्येव मामयाचत्। अतो विष्णुरूपा शक्तिमतो मे शक्तिः सर्वत्र पूज्यते। त्वञ्च मदीया भूतपूर्वजाया। इत्थं भवेनोक्ता[2] भवानी कथमेतदिति पुनस्तं पर्यपृच्छत्। शङ्करश्च दाक्षायणीरूपेणो-त्पन्नायास्तस्याः प्राग्जन्मकथया दक्षकृतावमाननानिमित्तकतत्तनुत्यागं तस्याः स्मारितवान्। तच्चाकर्ण्य नातिशयमुदमापन्नां भवानीं पूर्वोक्तकथाव्याजेन प्रतार्य-माणाञ्चात्मानं मन्यमानामनभिप्रशंसितोदितकथाहृद्यतां तां पुनरपि पञ्चवक्त्रो[4] वक्तुमारभत विद्याधराणां कथाम्। किन्तु यावदेव स कथां वक्तुमुद्युयुजे तावदेव देवदेवमहादेवगणोत्तमो गणः पुष्पदन्तस्तत्कथाशुश्रूषासमासक्तमना नन्दिना प्रतिषिद्धोऽपि[6] अन्तःप्रवेष्टुम्, योगवशादलक्षितस्तत्र प्रविश्य विद्याधरसप्तकापूर्वच-रितमाकर्णितवान्। गृहञ्चागत्य रहस्यमेतदखिलं निजजायायै जयायै समुद्घाटित-वान्। तस्याञ्च तत्सर्वं शिवासमक्षमभिदधत्यां नह्यप्यपूर्वं[8] किञ्चिद्वर्णितं त्वया, एतत्तु सर्वं पुष्पदन्तजाया जयापि जानाति' इति शिवा शिवायाक्रुध्यत्। ततः प्रणि-धानेन सर्वमाकलय्य योगवशात्पुष्पदन्तेन सर्वमेतच्छ्रुत्वा निजजायायै[9]युद्घाटितम् इत्युमामुमाधवो बोधयामास। एतेन चात्यर्थमभिक्रुद्धा धराधरेन्द्रजा तत्कृते विज्ञप्तिं कुर्वाणं माल्यवन्तं पुष्पदन्तञ्च 'मर्त्यौ भवतां भवन्तौ' इति शशाप। जयया सह पार्वतीपादयोः पतितौ तौ शापाद् विमुक्त्य[10]र्थमित्थमुक्तौ यत्कुबेरस्य शापात् पिशाचतां गतं सुप्रतीकाख्ययक्षमिदानीं काणभूत्याख्यया विन्ध्याटव्यां स्थितमवलोक्य स्वजातिं स्मरन् यदा तस्मै कथामिमामभिधास्यति तदा पुष्पदन्तो विगतशापो[11] भविष्यति,

---

१. दीर्घादाचार्याणाम्। २. निष्ठा, वचिस्वपियजादीनां किति। ३. वा नामधेयस्य वृद्धसंज्ञावक्तव्येति वृद्धसंज्ञायाम् 'उदीचां वृद्धादगोत्रात्' इत्यपत्यार्थके फिञि 'गोत्रं च चरणैः सह' इति गोत्रलक्षणजातित्वात् ङीष्। ४. त्रिप्रभृतिषु शाकटायनस्य। ५. श्रोतुमिच्छेति विग्रहे सन्नन्ताच्छ्रुधातोः 'अप्रत्ययात्' इति स्त्रीत्वे अप्रत्यये टाप्। ६. षिधूधातोरूदित्वात्स्वरतिसूतीति वेट्-त्वेन 'यस्य विभाषा' इतीडभावः, एकाचोबशोभष०, झलां जश्झशि, उपसर्गात् सुनोति० इति षत्वम्। ७. समानकर्तृकयोः पूर्वकाले, समासेऽनञ्पूर्वे क्त्वो ल्यप्, अनुदात्तोपदेश०, ह्रस्वस्य पिति कृति तुक्। ८. अचो रहाभ्यां द्वे। ९. एचोऽय-वायावः। १०. स्त्रियां क्तिन्, अनिदितां हल उपधायाः क्ङिति। ११. भावे।

एवं काणभूतेस्तां कथां यदा माल्यवान् श्रोष्यति तदा काणभूतौ मुक्ते तत्कथां प्रख्याप्य माल्यवान् विमुक्तशापो भविष्यतीति विज्ञाप्य मौनमाकलितवत्यां पार्वत्यां पूर्वोक्तगणद्वयी विद्युदिव दृष्टनष्टा बभूव।

व्यतीते च कालेऽथैकदा सदयहृदया गौरी शङ्करमनुयुक्तवती 'हे देव, मया शप्ताभ्यां ताभ्यां प्रमथवराभ्यां जनुषा कतमं भूभागमलङ्कृत्य स्वावदातगुणैर्निजकर्मपद औयत[1]? एतदाकर्ण्य स हे प्रिये, कौशाम्ब्यां महानगर्यां वररुचिनामा पुष्पदन्तः, सुप्रतिष्ठाख्ये नगरे गुणाढ्यनामा माल्यवाँश्चोत्पन्न इत्युदतीतरत्।

एवं दत्तशापाया अपि सततानुवृत्तभृत्यावमाननविभावनानुभूयमानतापायाः पार्वत्याः कैलाशशैलतटकल्पितकल्पवल्लीलीलागृहेषु मनोऽनुरञ्जयञ्च्छम्भुश्चिरमुवास[2]।

ततः शर्वाणीशप्तः पुष्पदन्तो भुवि धृतजन्मा नाम्ना वररुचिः किन्तु कात्यायनाभिधोपलब्धविश्रुतिः, अधीती सर्वासु विद्यासु, समर्चिती निजेष्टदेवेषु, स्वकीयाचलाभ्यासेन शास्त्रनिधिं[3] निर्मथ्य ज्ञानरत्ने गृहीती, निगृहीतीन्द्रियग्रामेषु, कदाचिद्विन्ध्यवासिनीदर्शनार्थमाजगाम। तच्छ्रद्धया[4] प्रसन्ना देवी स्वप्नादेशेन तमेकदा काणभूतिमन्वेष्टुं विन्ध्याटवीं प्रजिघाय। स च व्याघ्रभल्लूकादिविविधश्वापदसङ्कुलायां निस्तोयशुष्कपत्रकाण्डप्रकाण्डद्रुमैर्[6]बहुलायामरण्यामटाव्यापरवशः समुन्नतं न्यग्रोधतरुमेकमपश्यत्। निकषा च तं तरुं पिशाचशतपरिवृतं विशालशालसन्निभवर्ष्माणं पिशाचं काणभूतिमवलोक्य कृततत्पादोपसङ्ग्रहणः क्षणमुपविशन् 'सदाचारोऽपि भवान् कथमिमां योनिम् आपन्नवान्' इति तमपृच्छत्। तच्छ्रुत्वा काणभूतिर्निजगाद-भगवन्, वेद्मि नाहं किमपि, तथाप्युज्ज-

१. धातोस्तन्निमित्तस्यैवेति नियमेनात्र वेञः कर्मणि लङि, यगात्मनेपदे, यजादित्वात्सम्प्रसारणे, आडजादीनामित्याटि आटश्चेति वृद्धिरित्यौकारो न यादिप्रत्ययनिमित्तकः, अतो न 'वान्तो यि प्रत्यये' इत्यस्य प्रवृत्तिः। २. शि तुक्, स्तोः श्चुनाश्चुः, शश्छोऽटि, झरो झरि सवर्णे। ३. उपसर्गे घोः किः। ४. 'श्रदन्तरोरुपसर्गवद्वृत्तिः' इति श्रत्पूर्वकात् धाधातोः 'आतश्चोपसर्गे' इत्यङ् ततष्टाप्। ५. शुषः कः। ६. द्युद्रुभ्यां मः।

यिन्यामीशानेन श्मशाने यन्मया श्रुतं तदहं त्वां प्रवच्मि । श्रव्यं[1] तत्त्वयाऽवश्यश्राव्यम्[2] ।

एकदा कपालश्मशानप्रियताविषयकजिज्ञासापरवशया शिवया सम्पृष्टोऽति-[3]हृष्टो भवो भवानीमुवाच—'पुरा कल्पक्षये[4] जाते जगदिदं जलमयमजायत । मया च तत्र तदा स्वकीयोरुं विभिद्य रक्तबिन्दुर्निपातितः । स चाण्डतामभजत् । द्वैधीभूताच्च[5] तस्मान्निरगच्छदेकः पुमान्, ततोऽन्येऽपि प्रजापतयः, अन्याश्चापि प्रजाः[6] जाताः इति [7]ज्येष्ठस्तेषु [8]पितामहपदवीं गतो विश्वं विश्वमसृजत् । किन्तु सकलचराचरसर्जनेनातिदृप्तस्स संजात इति तस्य मूर्द्धानमहमच्छैत्सम् । तदनुतापतप्तः कपालपाणिः श्मशानप्रियश्चाहमभवम् ।

एतदाकर्ण्य स पुष्पदन्तः कियता कालेनास्मानुपैष्यतीति वक्तुमनुनाथ्यमानो भवो भवान्या पुनरपि मामुद्दिश्यैवमभिधातुमारभत—दृश्यमानोऽयं पिशाचो वैश्रवणानुचरो यक्षोऽस्ति स्थूलशिरोनामकरक्षोमित्रम् । सुहृत्संगत्या च पापाचारपरायणोऽयं धनदेन[9] विन्ध्याटव्यां पैशाचीं योनिमाप्तुमादिष्टः । दीर्घजङ्घाख्येन तदैतद्भ्रात्राऽतिविनीतभावेनानुनाथ्यमानो धनाधिपस्तच्छापावधिं पुष्पदन्तमुखकथाकर्णनम्, शापान्मर्त्यतामवाप्ताय माल्यवते तदनुवर्णनञ्च निर्दिदेश । इत्थमिहागतस्य मे पुष्पदन्तागमावधिः [10]क्षय्यशापदोषः। वररुचये[11] इत्थमुक्त्वा तूष्णींभूते काणभूतौ तत्क्षणमेव जातस्वजातिस्मृतिः सुप्तोत्थित इव 'स एवाहं पुष्पदन्तो मत्तश्च तां कथां शृणु' एवमामन्त्र्य तां विस्तृतकथां कथयामास । तां [12]चाकर्ण्य परमानन्दमाविन्दमानः काणभूतिरुवाच—'देव, साक्षाद्रुद्राव-

---

१. अचो यत्, सार्वधातुकार्द्धधातुकयोः, धातोस्तन्निमित्तस्यैवेति सहकारेण 'वान्तो यि प्रत्यये' । २. ओरावश्यके इति ण्यत् मयूरव्यंसकादित्वात्समासः ततः 'लुम्पेदवश्यमः कृत्ये, तुम् काममनसोरपि । समो वाहिततयोः, मांसस्य पचियुड्घञोः' इति नियमेन अवश्यम् इत्यस्य मलोपः। ३. प्रच्छधातोः क्ते 'च्छ्वोः शूडनुनासिकेचे'ति शत्वे 'व्रश्चभ्रस्जे'ति षत्वे ष्टुत्वम् । ४. एरच् । ५. संख्याया विधार्थे धा, द्वित्र्योश्च धमुञ् ततश्च्विः । ६. उपसर्गे च संज्ञायाम् । ७. अतिशायने तमबिष्ठनौ, ज्य च, प्रकृत्यैकाच् । ८. मातृपितृभ्यां पितरि डामहच् । ९. आतोऽनुपसर्गे कः । १०. क्षय्यजय्यौ शक्यार्थे । ११. एचोऽयवायावः । १२. 'अचोरहाभ्यां द्वे' इति णस्य द्वित्वे 'हलो यमां यमी'ति तल्लोपः ।

तारस्त्वम् । नान्यः कश्चिद् ऋते त्वद् वेत्तीमां कथाम् । त्वत्कृपयाऽधुना मुक्तशापोऽहं सञ्जात इति मादृशोऽसङ्गोप्यं[1] न चेज्जनुषः प्रभृति निजोदन्तं[2] हे पुष्पदन्त, वर्णयित्वा भूयोऽपि मां पवित्रय। एवं प्र[3]णतेन तेनाभ्यर्थितो वररुचिराजन्मवृत्तान्तं तं सकलं सविस्त[4]रमभिधातुमेवमुपाक्रमत—

आसीत् कौशाम्ब्यामग्निशिखाऽपरनामा सोमदत्ताख्यो वसुदत्ताजानिर्विप्रः। शापवशाच्च तस्यां जातावुत्पन्नायां भूतपू[5]र्वर्षिकन्यायां शापवशादहं तस्मात्तस्याः प्राभूवम्। शैशव[6] एव च पञ्चत्वमापन्ने पितरि माता मे मामवर्द्धयत्। एकदा च वासतेय्यामाश्रयाभिकांक्षिणौ दवीयोऽध्वधूलिधूसरितौ द्वौ विप्राव[7]स्मद्गृहमाश्रयताम्। तिष्ठतोश्च तयोस्तत्रै[8]कतः समागच्छता जातु मुरजध्वनिना समुपजातमज्जनकस्मृतिर्जननी मामकीना हे सुत, तव पितुः सुहृदेष नन्दो नटो नृत्यतीति सगद्गदमगदत्। तच्छ्रुत्वाऽहमम्बामवदम् 'व्रजामि जननि, नृत्यमेतदक्षिलक्ष्यीकर्त्तुम्। यदैवाहं तत उपै[9]ष्यामि तदैव त्वयापि सपाठं तत्सर्वं स्वप्रौढ्या[10] दर्शयिष्यते। एतन्मद्वचनमाकर्ण्य विस्मयमापन्नौ तौ विप्रावभ्यधत्त धात्री[11], पुत्रौ, नात्रास्ते विचिकित्सालेशोऽपि; सकृदाकर्णितं यतो हि बालोऽयं सर्वं हृदि धारयति। एतदाकर्ण्य परीक्षणार्थं ताभ्यां प्रातिशाख्यं मेऽपठ्यत। मया चाक्षरशस्तदन्वगद्यत। ततस्ताभ्यां सह तत्र गत्वा नाट्यञ्चावलोक्य गृहमागत्य मातुरग्रे समग्रमभ्यग्रोऽहमदर्शयम्। सकृच्छ्रुत[12]धरं मामेवमालोक्य तयोर्विप्रयोरेको व्याडिनामा प्रणम्य मन्मातरमब्रवीत् यद्वेतसाख्ये पुरे देवस्वामि-करम्भकनामानौ, परस्परसञ्जातातिप्रेमाणौ भ्रातरावभूताम्। तयोरेकस्यायमिन्द्रदत्तस्तनयः। अपरस्य चाहं व्याडिः। यदैवाहं समुत्पन्नः पिता मे विपन्न इति तच्छोकविदीर्णहृदय इन्द्रदत्तपिता तमनुसरन्निव परेतपतिपालितपुरीपान्थोऽभवत्। येन चास्मज्जनन्योर्हृदयं शुचा स्फुटितमिति सत्यपि पित्राद्यर्जितविभवे विद्याभिगृध्नू[13] आवां तपसा स्कन्द-

१. ऋहलोर्ण्यत्, पुगन्तलघूपधस्य चेति गुणः। २. आद्गुणः। ३. प्रपूर्वकान्नम्धातोः क्ते उपसर्गादसमासेऽपि णोपदेशस्येति णत्वे अनुदात्तोपदेश० इति मलोपः। ४. ऋदोरप्। ५. उरण् रपरः। ६. लोपः शाकल्यस्य, पूर्वत्राद्धिम्। ७. एचोऽयवायावः। ८. वृद्धिरेचि। ९. एत्येधत्यूठ्सु। १०. प्रादूहोढोढ्येषैष्येषु। ११. ण्वुल्तृचौ, ऋन्नेभ्यो ङीप्। १२. नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः, धरतीति धरः श्रुतस्य धरः श्रुतधरस्तम्। १३. ईदूदेद्द्विवचनं प्रगृह्यम्, प्लुतप्रगृह्या अचि नित्यम्।

सन्तोषयितुं वनमभिप्रातिष्ठावहि, तत्र च तपस्यन्तावावामादिशत्स्वप्ने प्रभुर्यन्नन्दभूपतिपालितपाटलिकपुरं प्राप्यताम् । तत्रास्ते वर्षाख्यो विप्रो यस्माच्च कृत्स्नां विद्यां युवामवाप्स्यथ' इति । इत्थमादिष्टावावां तत्पुरं प्रयातौ किन्तु वर्षान्वेषणतत्परावावामस्तीहैको मूर्खो वर्षो विप्रः इति तत्रत्या न्यगदन् । दोलायमानमानसौ चावां तत्क्षणमुपेत्य किञ्चिद्दूरमविधुरस्थित्यपि[1] विधुरस्थिति, विशालमपि[2] विशालम्, अभीकमपि[3] जीर्णवलभीकम्, विच्छायमपि[4] अविच्छायम्, अहीनमपि[5] छदिषा हीनम्, अनिर्जरमपि[6] भित्तिविश्लेषजर्जरम्, शरणमपि[7] अशरणाशरणम्, क्षपितबहुवर्षमप्येकवर्षम्[8], वर्षगृहमपश्याव । अभ्यन्तरे चैकस्मिन् प्रदेशे ध्यानावस्थितं वर्षमवलोक्य [9]विशीर्णमलिनाम्बरां धूसरक्षाम[10]-शरीरां गुणरागागतां विग्रहिणीमिव दुर्गतिं तद्गृहिणीमुपागत्य विहितातिथ्यसत्क्रियायै च तस्यै प्रणतिपुरस्सरं[11] निजवृत्तान्तं श्रुतपूर्वतत्पतिमौर्ख्यञ्च न्यवेदयाव । श्रुत्वा चैतत्सर्वं सा साध्वी वक्तुमेवमारभत—

अस्मिन्नगरे शङ्करस्वामिनामा कश्चिदासीद् [12]दरिद्रद् देवद्र्यङ्[13] द्विजः। मम भर्त्ता ( वर्षः ) उपवर्षश्चास्तां तत्पुत्रौ। तयोरयम् ( मम भर्त्ता ) वर्षः आसीत्समवाप्तपैतृकदारिद्र्यद्रविणः । वर्षावरोपवर्षश्च[14] दारिद्र्यदारिद्र्यः । अतः स स्व-

---

१. अविद्यमाना विधुरस्य विधुराणां वा स्थितिर्यत्रतथाभूतमपि विधुरस्य विधुराणां वा स्थितिर्यत्रेति विरोधः, विधुरा विपन्ना स्थितिर्यस्येति परिहारः । २. विगता शाला यस्य तथाभूतमपि विस्तृतम् । ३. अविद्यमाना भीः यस्मिन् । ४. विगता छाया सौन्दर्यमाच्छादनं वा यस्मात्तथाभूतमपि अविद्यमाना वीनां पक्षिणाम् अश्वानां वा छाया पंक्तिः, रक्षणं वा यत्रेति विरोधपरिहारः । ५. अहीनम् अपरित्यक्तम्, अहीनां सर्पाणाम् इना ईश्वरा वा यत्र । ६. अविद्यमाना निर्जरा देवा यत्र । ७. गृहमपि अशरणानां गृहरहितानां कृते शरणदानासमर्थम् । ८. बहुवर्षम् अतिप्राचीनम्, अन्यत्र च वर्षनामकपुरुषम् । ९. शॄधातोः क्ते 'ऋत इद्धातोः' रपरः, 'र्वोरुपधाया दीर्घ इकः' इत्यधिकारे 'हलि चे'ति दीर्घः, णत्वम् । १०. क्षायो मः । ११. 'पुरोऽग्रतोऽग्रेषु सर्त्तेः' इति सृधातोष्टः । १२. जक्षित्यादयः षट्, नाभ्यस्ताच्छतुः । १३. विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये । १४. वर्षेण अवरः कनीयान् इति वर्षावरः, 'अवरस्योपसंख्यानम्' इति समासः ।

भार्यां गृहपरिरक्षणे न्ययोजयत। एकदा च योषिद्भिः प्रदत्तं [1]गुडपिष्टरचितं गुह्य-मादायायमायाद्गृहम्। दानादानेन हि जीवनयात्रां परपिण्डग्लस्त्वेन कुत्सितं कर्म मन्वानयाऽनया मे यात्रा[2] तदस्मा एव वर्षपूर्वाय[3] वर्षाय सदक्षिणमदायि। तदादाय गृहमागतोऽयं भृशं मया निर्भर्त्सितोऽत्यन्तमन्तर्मन्युना खिन्नमनास्तपसा भगवन्तं स्कन्दमाराधितवान्। तेन चातितुष्टेन सर्वा विद्या अस्मै प्रकाश्योक्तम्– 'श्रुतधरं विप्रं प्राप्यैतास्त्वं प्रकाशयेरिति'। गृहमागतोऽयं सर्वं तन्मह्यमुक्तवान्। तदाप्रभृति जपन् ध्यायँश्च तिष्ठति। अतो युवां श्रुतधरं कञ्चिद् विप्रमन्विष्यानयतं चेद् युवयोरसंशयं[4] साध्यं[5] सिध्येत्।

वर्षपत्नीत एतच्छ्रुत्वा प्रचुरं धनं तस्यै प्रदाय नगराद्बहिरावां निर्गतवन्तौ, श्रुतधरविप्रान्वेषणतत्परौश्रान्तौ चावामद्य भवत्या भवनमागतवन्तौ, अयञ्च तव सूनुः सकृच्छ्रुतधर इत्येनं विद्याद्रविणोपलब्धये नौ दातुं दयसे चेत् प्र[6]र्णावावां ते भवावः। व्याडेर्वचनमेतदाकर्ण्य निजगाद मामकीनातिदीना जननी 'सत्यं सर्वं, विश्वसिमि चैतदहमपि, यतो हि पुत्रस्यास्य जन्मकाले जातयाऽशरीरिण्या वाचाऽहमेवं विज्ञापिता यद् बाले, बालोऽयं श्रुतधरो नाम्ना वररुचिर्वर्षाद्विद्यामवाप्स्यति व्याकरणं च लोके प्रतिष्ठापयिष्यतीति। विवृद्धेऽधुनाऽस्मिन् बालके क्व स वर्षो-पाध्यायो भवेदिति नक्तं दिवं चिन्तयन्त्यहमद्य युष्मन्मुखादखिलं विज्ञाय नितरां पर्यतुष्यम्। अतः स्वकीयभ्रातरमिमं युवां नयतम्। नात्र काचित् क्षतिः एवं मामकीनमातृवचनमाकर्ण्य हर्षनिर्भरमानसौ तौ तत्र तां क्षपां क्षणोपमं क्षपयित्वा व्याडिनोपनीय वेदार्हीकृतं कथञ्चिदवरुद्धबाष्पया तयाऽभ्यनुज्ञातं मामादाय वर्षस्य गुरोर्गृहं तावुपाच्छितवन्तौ। सोऽपि च स्कन्दप्रसादमिव विग्रहिणं मामाकलयमानोऽन्येद्युरस्माकं पुरः पवित्रभूमिपरिकल्पितासनोपविष्टो दिव्यया गिरा 'ॐ' इत्येवोदचरत्। तत्क्षणमेव च तस्य साङ्गाः सरहस्याः सर्वे वेदाः समुपस्थिताः। तांश्चाध्यापयितुं सोऽस्मान् प्रावर्तत। तत्र सकृच्छ्रुतं मया, द्विःश्रुतं व्याडिना, त्रिःश्रुतम् इन्द्रदत्तेन च गृहीतम्। एवमध्ययनाध्यापनदिव्यध्वनि-

---

१. भक्ष्येण मिश्रीकरणम्। २. देवरपत्न्या। ३. वर्षेण पूर्वः, पूर्वं जातः तस्मै, पूर्वसदृशसमोनार्थेति समासे 'तृतीया समासे' इति सर्वनामताऽभावः। ४. एरच्। ५. ऋहलोर्ण्यत्। ६. 'प्रवत्सतरकम्बले'ति वृद्धिः। ७. उपसर्गा-दृति धातौ।

माकर्ण्य सद्यः समुल्लसितान्तर्विस्मयो विप्रवर्गस्तत्रत्योऽत्याद[1]त्यं तमवलोकयितु-
मागत्य स्तुत्यं[2] सशिष्यं[3] मनीषिणं[4] वर्षं प्रणामैरर्चतिस्म । प्रमद[5]परवशः उपवर्षश्च
किन्तु न तत्र किमपि चित्रमित्यचिन्तयत्। पाटलिपुत्रलोकस्तु कृतसकलकलसकल-
समुत्सवोमासमास्त[6]। राजा नन्दोऽपि च गिरिनन्दिनीनन्दनवरप्रभावमेवमवलोक्य
भृशं सन्तुष्टः सादरं वर्षस्य सदनं वसुभिः समपूरयत् ।

एवमेकाग्रेण मनसा सर्वं शृण्वति काणभूतौ तस्मिन् वने वररुचिस्तं पुनरित्थ-
मब्रवीत्—एकदा स्वाध्यायकर्मणि समाप्ते सति सम्पादिताह्निककृत्यो वर्षोपाध्या-
योऽस्माभिः पृष्टः 'एवंविधमेतत्पाटलिपुत्रनगरं कथं लक्ष्मीसरस्वत्योः क्षेत्रं संजा-
तमिति' हे गुरो कृपयाऽभिधीयताम्, एतच्छ्रुत्वा स इमां कथामवर्णयत्—

गङ्गाद्वारे पवित्रै[7]कनखलतीर्थे भार्यया सह तपस्यतः कस्यचिद्[8]दाक्षिणात्य-
द्विजस्य तत्रैव पुत्रास्त्रयः समजायन्त । समया[9]नुक्रमेण भूसुरे तस्मिन् सभार्ये
स्वर्याते तत्सुता विद्याध्ययनेच्छया राजगृहमुपाजग्मुः। तत्र चाधीतविद्यास्ते
दैन्यदुःखिताः स्कन्ददर्शनार्थं दक्षिणापथमुपेयुः। तत्र चार्णवतटे वर्तमानायां
चिञ्चिनीनामकनगर्यां भोजिकाभिधस्य कस्यचिद्विप्रस्यसदने न्यवसन् । तस्य
तिस्रस्सुता आसन् । अनन्यसन्तानः स विप्रस्ता एभ्यस्त्रिभ्यो दत्वा सर्वां निज-
सम्पत्तिञ्चैभ्यः समर्प्य सभार्यो विरहितैहिकचिन्तासन्तानवितानस्तपश्चर्यार्थं
गंगातटमशिश्रियत। अथ तेष्वेवं श्वशुरवेश्मनि निवसत्स्ववग्रह[10]कृतो महान् दुर्भिक्षो
जात इति त्रयो[11]ऽपि ते साध्वीरपि स्ववधूस्तत्रैव परित्यज्य जग्मुः। ताश्च स्वपितृ-
मित्रस्य यज्ञदत्तस्य सदनमाश्रित्य क्लिष्टवृत्तयोऽपि स्वधवान् ध्यायन्त्यस्तस्थुः।
तासां मध्यमा तदानीमासीदन्तर्वत्नीति यथासमयं सा सूनुमसूत । तस्मिंश्चान्यो-
न्यस्नेहरतासां शनैः शनैरवर्धत । एकदा [12]गवेन्द्रमारुह्य गच्छन्ती शम्भुना सह
शाम्भवी शिशुं तमवलोक्य सदया शम्भुमवदत्—देवेहि[13],पश्यार्भकेऽस्मिन्नेतास्ति-
स्रोऽपि वध्वो बद्धबुद्धयो यदयमस्मान् जीवयेदिति त्वं तथा कुरु येनायमासामाश्रयः[14]

---

१, २, ३. एतिस्तुशास्वृदृजुषः क्यप् । ४. शकन्ध्वादिषु पररूपं वाच्यम् ।
५. प्रमदसम्मदौ हर्षे । ६. अकर्मकधातुभिर्योगे इति द्वितीया । ७. पुवः
संज्ञायाम् । ८. झलां जशोऽन्ते । ९. अकः सवर्णे दीर्घः । १०. 'अवे ग्रहो वर्ष-
प्रतिबन्धे' इति वैभाषिकघञभावे 'ग्रहवृदृनिश्चिगमश्चे'त्यप् । ११. एङः पदान्ता-
दति । १२. इन्द्रे च । १३. ओमाङोश्च । १४. एरच् ।

स्यात्। एवमुक्तः शम्भुः शाम्भवीं सविस्रम्भमभणत्—'अवश्यमहमिममनुग्रहीष्यामि, यतो हि सभार्येणाहममुना प्राग्जन्मन्याराधित इत्ययं भोगार्थमेव भुवि समुत्पन्नः। महेन्द्रवर्मणश्च भूपतेः पाटलीनामतनुजैतज्जाया भविष्यति।' एवमुक्त्वा सतीशस्तास्तिज्ञः स्वप्ने[1] सूचयामास—'युष्माकमस्य पुत्रकस्य पुत्रक इति नाम, सुप्तप्रबुद्धस्य चास्य शीर्षान्ते सुवर्णलक्षमनुदिनमुपलब्धं भविष्यति, यथाकालमयमवनिपतिश्च भविष्यतीति'। सुप्तोत्थिते च तस्मिन् शिशौ साध्व्यस्ताः सुवर्णलक्षं समुपलभ्य सातिशयं प्रासीदन्। सुवर्णेन च तेनाचिरेण प्रवृद्धकोषः पुत्रको भूपो बभूव।

एकदा यज्ञदत्तो रहसि पुत्रकमुवाच, 'राजन्! तव पितरो दुर्भिक्षपीडिताः इताः क्वापीतोऽतः सदा दातव्यं द्रविणं द्विजेभ्यो येन ते तव ऋद्धिं[2] दानशालितां च निशम्यात्रायान्तु। एतद्विषयेऽहं ब्रह्मदत्तकथां त्वामेकां कथयामि, तामाकर्णय—पुरा वाराणस्यामासीद् ब्रह्मदत्ताभिधो नृपः। स चैकदा निशि गगने गच्छद्धंस[3] शतसमावृतं भास्वरस्वर्णसङ्काशम्,[4] अकाण्डसितपयोदपरिवेष्टितविद्युत्पुञ्जमिव हंसयुगलमपश्यत्। तद्दर्शनेन[5] तथा तदवलोकनोत्कण्ठा राज्ञो ववृधे यत्स राजकीयसौख्येभ्योऽपि विरक्तो मन्त्रिभिश्च सम्मन्त्र्यैकमतिरमणीयं[6] सरो विरचय्य तत्रागमनार्थं प्राणिनामभयमददात्। कालेनान्यैः तिर्यग्भिः[7] सह तद्धंसद्वयमपि तत्रागादिति तस्य सौवर्णे वपुषि नृपः कारणमपृच्छत्। राज्ञः प्रश्नमाकर्ण्य व्यक्तवाक्[8] सा हंसद्वयीत्थमवोचत् यत् 'पुरा आवां काकावास्व। एकस्मिन् मन्दिरे बल्यर्थं युद्ध्यमानौ द्रोणिकान्तरे पतित्वा विपन्नावित्यस्मिन् जन्मनि जातिस्मरौ हेममयहंसावभवाव।' एतच्छ्रुत्वा राजा परां कोटिं सन्तोषस्याप।

अतश्च त्वमपि दानेन स्वपितॄनवाप्स्यसि' इत्युक्तो यज्ञदत्तेन पुत्रकस्तथैवाकरोत्। तत्प्रदानवार्तामाकर्ण्य ते ब्राह्मणास्तत्रागताः स्वपत्नीर्बहुलक्ष्मीं च लेभिरे।

---

१. स्वप्धातोः क्ते वचिस्वपीति सम्प्रसारणम्। २. ऋत्यकः। ३. झयो होऽन्यतरस्याम्। ४. स्थेशभासपिसकसो वरच्। ५. ल्युट् च इति भावे ल्युट्, युवोरनाकौ। ६. तव्यत्तव्यानीयरः। ७. तिरसस्तिर्यलोपे ८. संख्याया अवयवे तयप्, द्वित्रिभ्यां तयस्यायज्वा, यस्येति च। ९. क्विब्वचिप्रच्छायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च।

किन्तु दृष्टनष्टापदोऽपि[1] दुष्टाः स्वभावं न परित्यजन्तीति राज्यमभिलाषुकास्ते[2] पुत्रकं जिघांसवो[3] विन्ध्यवासिनीदर्शनव्याजेन तं तद्देवालयमानिन्युः। तत्र देवी-गर्भगृहान्तरे घातकान्[4] नियुज्य पूर्वमेकाकी त्वं देवीदर्शनार्थमन्तरं व्रज इति तमाचख्युः। विश्वासादन्तःप्रविष्टः स हन्तुमुद्यतान् घातुकान्[5] आलोक्य स्ववध-हेतुं तान् पप्रच्छ। ते चोदतीतरन् यद्धनं दत्त्वाऽत्र तव व्यापादनार्थं स्वपि-तृभिर्नियुक्ता वयमिति। एतदाकर्ण्य स तेभ्यो बहुमूल्यं स्वरत्नालङ्करणं दत्त्वा मुक्तोऽनुद्घाटितरहस्यो द्वारान्तरतो बहिर्निर्ययौ। घातकैश्च पुत्रको व्यापादित इति ब्राह्मणाः मृषोदिताः[6]। किन्तु घातकप्रदत्तप्रतिज्ञातधनाः स्वगृहं प्रतिनिवृत्ता राज्यार्थिनस्ते द्विजा मन्त्रिभिर्ज्ञाता हताश्च।

अत्रान्तरे स पुत्रकः स्वपितृदुर्वृत्तिविरक्तचेता विन्ध्यकान्तारं प्रविवेश। तत्र च पर्यटन् बाहूबाहवि युद्धं कुर्वाणौ द्वौ पुरुषाववलोक्य 'कौ युवाम्' इति पप्रच्छ। तावपि 'भगवन्, मयासुरसुतावावाम्, इदं भोजनम्, एषा यष्टिः, पादुके एते[7] चैतदस्मत्पितृधनम्। धृतैतत्पादुको जनो नभश्चरो[8] भवति। यष्ट्या च यल्लिख्यते[9] तत्सर्वं सत्यं सम्पद्यते। भाजनं चैतद् [10]यथेच्छं भोजनं वितरतीत्येतेषां कृते आवयोर्युद्धम्' इत्यूचतुः। पुत्रकेणोक्तम् स्वल्पस्यैतावतो निमित्तं भवतोर्युद्धं साम्प्रतमसाम्प्रतम्। एतदर्थमस्त्वयं पणो यद् धावन् यो बलाधिको भवेत्स एवैतत्सर्वमादद्यात्। तयोर्मूर्खयोरेवमस्त्विति प्रतिपन्नयोः पुत्रको धृतपादुकः समुपात्तयष्टिभाजनश्चोदपतत्। व्योममार्गेण च क्षणमात्रेणैव दविष्ठामा[11]कर्षिकाख्यां नगरीमवाप्य नभसोऽवततार। तत्र च जीर्णे एकस्या वर्षीयस्या[12] योषितो गृहेऽलक्षितो न्यवसत्। तद्व्यवहारेण चातिप्रीता वृद्धा पुत्रकमेकदाऽकथयत्, 'पुत्र, त्वदनुरूपा भार्या नास्ति इति मदीया चिन्ता वर्तते। इह पाटलीनाम-धेया राज्ञः कन्या रत्नमिवान्तःपुरेऽभिरचयते'। एतद्वृद्धावचनमाकर्ण्य सा

---

१. सम्पदादिभ्यः क्विवक्तव्यः। २. लषपतपदस्थेति उकञि नलोकाव्य-येति षष्ठीनिषेधः। ३. हन्तेस्सन्नन्तात् 'सनाशंसभिक्ष उः'। ४. 'ण्वुल्तृचौ' इति ण्वुलि 'हनस्तोऽचिण्णलोः'। ५. 'लषपतपदस्थाभूवृषहन्' इति उकञि 'हनस्तोऽचिण्णलोः' इति नस्य तकारः। ६. वदधातोः क्ते, यजादित्वात्सम्प्रसा-रणम्। ७. ईदूदेद्द्विवचनं प्रगृह्यम्', 'प्लुतप्रगृह्या अचि नित्यम्'। ८. चरेष्टः। ९. तोर्लि। १०. इच्छा 'इति' सूत्रेण निष्पन्ने इच्छाशब्देऽव्ययीभावः। ११. अतिशयेन दूराम्। १२. अतिशयेन वृद्धायाः।

मयाऽद्यैवावलोकनीयेति कृतनिश्चयोऽसौ राज्यां[1] धृतपादुकोऽन्तःपुरं पादुको[3] व्योममार्गेण राजप्रासादमासाद्य गवाक्षेणान्तःपुरं[4] प्रविश्य रहसि सुप्तामति-सुन्दरीं पाटलीं ददर्श। कथमेनां प्रबोधयेयमिति चिन्तयँश्चालसोन्मिषदीषदीक्षणां तां सत्वोत्कम्पविक्लवैरङ्गैरालिलिङ्ग। एतेन च प्रबुद्धा पाटली पुत्रकमालोक्य तत्प्रत्याकृष्टा सञ्जातेति गान्धर्वेण विधिना तत्र सँव्वृत्तोद्वाहयोस्तयोः प्रीतिः परस्परमवर्धत। एवमनिशं प्रतिनिशं तत्र गच्छन् पुत्रकः कदाचिद्राज्ञा ज्ञातः। कुपितेन च तेन स्वनिकटमानीतश्चेति क्रुद्धं नरपतिमवलोक्य पुत्रकः यथापूर्वं पादुके धृत्वा खमुत्पत्य पाटलीमाश्रयन् सर्वथा विदितवृत्तान्तां च तां कृत्वाऽङ्के समारोप्य समुत्पतन्नभसा गङ्गातटनिकटे ततोऽवतीर्य पात्रप्रभावेण च समवाप्त-यथेच्छाहारैरध्वश्रमक्लान्तां कान्तां नितान्तं परितोषयामास। एवमवलोकित-प्रभावः पुत्रकः पाटल्या प्रार्थितः सन् चतुरङ्गबलयुक्तं नगरं यष्ट्या समुल्लिलेख। सत्यताञ्च गते तथाभूते तस्मिन्नगरे महाप्रभावः पुत्रकः श्वशुरं नमयित्वाऽऽ-समुद्रं[5] क्षितिं शशास। तदेतन्मायारचितं पाटलिपुत्रं नाम नगरं लक्ष्मी-सरस्वत्योः क्षेत्रम्।

एवं वर्षमुखादाकर्ण्य आ एवं[6] किल तत्! अहो[7] एषा विचित्रा कथैतस्य नगरस्येति विस्मयोत्फुल्लमानसा वयं सञ्जाताः।

एवमानुषङ्गिककथां कथयित्वा वररुचिः पुनः प्रकृतार्थमेवमवर्णयत्—व्याडी-न्द्रदत्ताभ्यां सह सन्निवसन्नहं सर्वविद्यापारङ्गमोऽभवम्। एकदेन्द्रोत्सवं द्रष्टुं निर्गता वयमतिरमणीयाकृतिं कन्यामेकामपश्याम। केयमिति मया पृष्ट इन्द्र-दत्तोऽभ्यधत्त यदियमुपकोशाभिधोपवर्षसुतेति। सा चापि मद्दर्शनोत्पन्नान्तः-प्रीतिः, प्रीतिपेशलया दृशा मामवलोकयन्ती निजनिशान्तं कृच्छ्रादगच्छत्। अहं च तदवलोकनसमकालमेव कामशरनिपातनिर्भिन्नहृन्[8] निशि निद्रामलप्सि। कथञ्चिदुपलब्धनिद्रं मामवशिष्टान्तिमयामायां त्रियामायामभिरामा वामा दिव्यै-काभाषत—'इयमुपकोशा ते भूतपूर्वजाया नापरं पतीयतीति हे पुत्र, अत्र

---

१. ग्रहवृद्धनिश्चिगमश्च। २. कृदिकारादक्तिनः। ३. लघपतपदस्था०। ४. अवङ्स्फोटायनस्य। ५. आङ् मर्यादावचने; आङ् मर्यादाभिविध्योः। ६. निपात एकाजनाङ्। ७. ओत्। ८. पद्दन्नोमासिति हृदयस्य हृदादेशः।

त्वया निश्चिन्तेन स्थातव्यम्[1]। अहञ्चाजस्रं[2] तव शरीरान्तर्निवासिनी सरस्वती तव दुःखं द्रष्टुं न पारयामि' एवमुक्त्वाऽन्तर्दधौ।

प्रबुद्धोऽहं तत्स्वप्नसञ्जातास्थो दयितासदनासन्नबालरसालतरोरधो गत्वाऽतिष्ठम्। तत्सखीमुखेन च यौवनानन्ददानदक्षिणायास्तत्रोपकोशाया[3] मन्निबन्धनमनङ्गविजृम्भणमशृणवम्। ततस्तां तस्याः सखीमहमेवमब्रवम्, यद् गुरुभिर्दत्तां तां स्वीकर्त्तुं कथमहमुत्सहेयेत्येतद्यथा सम्पद्येत तथा कृत्वा स्वसखीं माञ्च[4] समुज्जीवय। इत्थमभिहिता सा गत्वा तन्मातरमखिलमवदत्। सा चापि तत्क्षणमेव स्वभर्तारमवगतसर्वसमाचारमकरोत्। तच्च तेन तदग्रजेन वर्षेणापि चाभिनन्दितमिति समुपलब्धवर्षाचार्यनिदेशेन व्याडिना[5] कौशाम्बीं गत्वा नीतायां मम मातरि, उपकोशापितृभ्यां यथाविधि सम्पादिते चावयोर्विवाहेऽहं तत्र जायया जनन्या च सह चिरं ससुखं न्यवसम्।

अतिक्रान्तेषु चैवं कतिपयवर्षेषु वर्षस्य शिष्याणामन्यतमो जडबुद्धितमो नाम्ना पाणिनिरेकश्छात्रोऽभवत्। शुश्रूषापरिक्लिष्टः[6] स वर्षभामानुज्ञातो विद्याकामस्तपस्तप्तुं हिमनगमगमत्। तत्र तीव्रतपस्तोषितशशिशेखरसमवाप्तसर्वविद्यामुखनवव्याकरणस्तत आगत्य मामेव वादायाह्वयत। प्रवृत्ते चावयोर्विवादे वासरसप्तकं समाप्तिमापत्। अष्टमेऽह्नि मया पराजिते पाणिनौ समनन्तरमेव नभःस्थस्थाणुकृतमहाघोरहुङ्कारेण नः सर्वं तदैन्द्रव्याकरणं भुवि प्रनष्टम्। पाणिनिना पराभूताश्च वयं सर्वे तदैव मूर्खीभूता इति निर्विण्णोऽहं[9] स्वगृहस्थितं[10] हिरण्यगुप्तस्य हस्ते निजस्वं समर्प्य तच्चाखिलमुपकोशामाभाष्य निराहारस्तपोभिश्शङ्करमारिराधयिषुः परित्यक्तजायादिमोहमार्यं हिमालयमायम्। पतिव्रतोपकोशा च नियमव्रता निजगृहेऽनुदिनं मम श्रेयोऽभिलषन्ती, गंगायां स्नान्ती[12] समतिष्ठत।

---

१. तव्यत्तव्यानीयरः। २. नमिकम्पिस्म्यजसकमहिंसदीपो रः। ३. व्यवस्थाभावात्पूर्वपरावरेति सर्वनामताया अभावः। ४. स्तोः श्चुना श्चुः। ५. व्यडस्यापत्यं व्याडिः (अत इञ्) स्वागतादीनाञ्चेत्यैजागमाभावः। ६. 'व्रश्चभ्रस्जे'ति शस्य षत्वे 'ष्टुना ष्टुः'। ७. तस्य पूरणे डट्, नान्तादसंख्यादेर्मट्। ८. नशेः षान्तस्य। ९. निर्पूर्वकाद्विद्धातोः क्तः, 'रदाभ्यामि'त्युभयत्र नत्वे णत्वम्, ष्टुत्वञ्च। १०. तिष्ठतेः क्ते 'द्यतिस्यतिमास्थामित्तिकिति'। ११. गेहे कः। १२. आच्छीनद्योर्नुम्।

एकदा मधौ व्रतनियमजन्यतनिमानमातन्वतीं तनुं बिभ्राणां क्षामामप्यभिरामां प्रतिपच्चन्द्रलेखामिव दर्शकलोचनानन्ददायिनीं तां स्नातुं गंगां गच्छन्तीं निरीक्ष्य राजपुरोधाः, दण्डाधिपतिः, कुमारसचिवश्चैते [2]कत्रयः पञ्चशरशरशरव्यतामुपजग्मुः। सा चापि तस्मिन्नहनि स्नान्ती कथमपि चिरायते स्मेति ततः सायमागच्छन्तीं तां मार्गे कुमारसचिवः साग्रहमग्रहीत्। प्रत्युत्पन्नमतिश्च सैनमित्थमब्रवीत्—'यथात्थ त्वमेतत्सर्वं ममाप्यभिप्रेतम्। किन्तु सत्कुलजया प्रोषितभर्तृकया च मया सह अस्मिन्[3]त्स्थाने किमपि कर्त्तुमस्थाने। अतस्त्वया मधूत्सवव्यासक्तलोकाया रात्रेराद्यप्रहरे ध्रुवं मद्गृहे समागन्तव्यम्।' एवं कृतसन्धा कामान्धेन च तेन परित्यक्ता यावदेव किञ्चिद्दूरं गता तावत्पुरोधसा सा निरुद्धा। किन्तु तस्मा अपि तस्या एव रात्रेर्द्वैतीयीके[4] प्रहरे समागन्तुं सङ्केतं परिकल्प्य यथाकथञ्चिदात्मानं मोचयित्वा प्रचलिता। ततोऽपि च किञ्चिदग्रेऽध्वन्यां दण्डाधिपस्तां न्यरुणदिति तृतीयस्मै[5] तस्मै अपि त्रियामायास्तार्तीयीके[6] प्रहरे तत्रागन्तुं संकेतं विधाय दैवात्ततोऽपि च निर्मुक्ता वेपमानतनुयष्टिर्गृहमागत्य कर्तव्योचितं सर्वं स्वचेटीभ्यो निरदिशत्। प्रवासस्थे भर्तरि कुँलीनयोषितो मरणं श्रेयो[8] न पुना[9] रूपैकपक्षपातिलोकलोचनापातपात्रतेति सञ्चिन्तयन्तो, स्मरन्तो च मम संयोगसमयं, निशं तां निर्निद्राहारा निनाय।

समुदिते च भगवति अहर्पतौ[10] ब्राह्मणपूजार्थं किञ्चिद्धनमानेतुं सा चेटीं हिरण्यगुप्तस्य गृहं प्रेषितवती। स च वणिक् तामागत्यैकान्ते, कान्ते मां भजस्व तदैव त्वद्भर्तृनिक्षिप्तं धनं दास्यामीत्यब्रवीत्। एतदाकर्ण्य तं वणिजं साऽसात्त्विकधनदानानिच्छुकं निर्धार्य तमपि तस्यामेव रात्रौ [11]तुरीये यामे समागन्तुमससंकेतदिति निर्गते तस्मिँश्चेटीभिः सा [12]शैलेयादिसंयुक्तेन तैलमिश्रितकज्जलेनापूरितं

---

१. 'करणाधिकरणयोश्चे'ति करणे ल्युट्। २. 'त्रौ' च इति कोः कदादेशः। ३. 'नश्चे'ति धुडागमे 'खरि चे'ति चर्त्वम्। ४. द्वेस्तीयः, तीयादीकक् स्वार्थे वाच्यः, किति च। ५. तीयस्य ङित्सु वा। ६. त्रेः संप्रसारणं च, तीयादीकक् स्वार्थे वाच्यः, किति च। ७. 'कुलात्खः' इति खप्रत्यये तस्य 'आयनेयीन्' इति ईनादेशः। ८. हशि च। ९. रोरि, ढ्रलोपे पूर्वस्य दीर्घोऽणः। १०. अहरादीनां पत्यादिषु वा रेफः। ११. चतुरश्छयतावाद्यक्षरलोपश्च। १२. 'शिलाया ढः' इत्यत्र शिलाया इति योगविभागाड् ढञ्।

कुण्डकमेकमकारयत् । तत्कज्जललिप्ताश्च चत्वारश्चेलखण्डा विहिताः, एका स्थूलायताकृतिसबहिरर्गला मञ्जूषा चापि निर्मापिता ।

अथ वसन्तोत्सवावसरवासतेय्या आदिमे यामे महार्हवेषः कुमारसचिवः समागमत् । अलक्षितप्रवेशमुपकोशा तमब्रवीद् यन्नाहमकृतस्नानं त्वां स्पृशामीत्यभ्यन्तरं प्रविश्य सम्पादितस्नानो भव । स च मूढस्तदङ्गीकुर्वन्[1]न्धतमसाच्छ[2]न्नाभ्यन्तरगृहं चेटीभिः प्रवेशितस्तत्रात्तान्तर्वस्त्राभरणोऽन्तर्वासस: कृते प्रदत्तैकचैलखण्डः, आशिरःपादमङ्गेष्वभ्यङ्गभङ्ग्या विलेपिततत्तैलकज्जलो विहितः । प्रत्यङ्गमस्य मर्दयन्त्यो यावच्चेट्योऽतिष्ठँस्तावद् द्वितीये प्रहरेऽसौ पुरोधा अप्युपागमत् । चेट्यश्च 'वररुचेः सुहृत्कश्चित्पुरोहितः समागत इति त्वमिह प्रविश' इत्युक्त्वा परिहितचतुर[3]ङ्गुलकज्जलमलिनमलमल्लकम[4]ात्रं तं कुमारसचिवं मञ्जूषायां निक्षिप्य बहिस्तामर्गलेनाबध्नन् । एवमेव स्नानमिषेणाभ्यन्तरगृहं नीतः पुरोहितोऽपि हृतवस्त्रादिश्चैलखण्डधरस्तैलकज्जलमर्दनैश्चेटीभिर्विमोहितस्तृतीये प्रहरे दण्डाधिपतौ समायाते सहसा रहस्योद्भेदभयभीताभिरिव विप्रलब्धो यथापूर्वं मञ्जूषायां निक्षिप्तो मञ्जूषा च सार्गलीकृता । ततो दण्डाधि[5]पोऽपि स्नानोप[6]धिनान्तरगृहं प्रवेश्य परिधापितचेलखण्डैककर्पटो यदा तैलकज्जलाभ्यङ्गसुखमनुभवन्नासीत्तदैव तुरीये यामे स वणिगपि तत्र समागच्छदिति दण्डाधिपोऽपि तद्भयं प्रदर्श्य चेटीभिर्मञ्जूषायां निक्षिप्तो बहिरर्गलञ्च प्रदत्तम् ।

एवं त्रयोऽपि तेऽन्धतमसावासाभ्यासोद्यता इव लब्धपरस्परस्पर्शा अपि नान्योन्यमालपन् । अथोपकोशा सदनेऽत्र दीपं प्रज्वाल्य तं वणिजञ्च तत्रैव प्रवेश्य 'मद्भर्त्रा प्रत्तं यद्धनं तद्देही'त्यगदत् । वणिगपि च शून्यं तद्गृहमालोक्य 'तव भर्त्रा यद्धनं स्थापितं सर्वमवितथं तदहं प्रदास्यामी'ति प्रत्यजानात् । सा चापि

---

१. ङमो ह्रस्वादचि ङमुण्नित्यम् । २. आङ्माङोश्चेति तुकि चुत्वम् । ३. चतस्रः अङ्गुलयः प्रमाणमस्येति तद्धितार्थे समासः, 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इति समासान्तोऽच्, ततः 'प्रमाणे द्वयसज्' इति विहितस्य मात्रचः 'द्विगोर्नित्यम्' इति लुक् । ४. मात्रशब्दस्यात्रावधारणमर्थः 'मात्रं कार्त्स्न्येऽवधारणे' एवं च मलमल्लकमेवेत्यस्वपदविग्रहे मयूरव्यंसकादित्वात्समासः । ५. आतश्चोपसर्गे । ६. उपसर्गे घोः किः । ७. अच उपसर्गात्तः ।

मञ्जूषां श्रावयन्ती 'भो[1] देवा हिरण्यगुप्तस्यैतद्वचः शृणुत' एतदुक्त्वा निर्वापितप्रदीपगेहेऽन्यवस्त्रानाभ्यङ्गापदेशेनापादमस्तकं तैलकज्जलाभ्यक्तं तं कृत्वा निशावसाने 'निर्गच्छेदानीम्, त्रियामा हि विगतयामा' इत्युक्त्वाऽनिच्छन्तमपि चन्द्राधं[2] दत्वा कर्णग्राहं निरसारयत्। एवं [3]कौपीनमात्रवसनः, कज्जललिप्तवदनः, परिवृक्ताद्भिः कौलेयकैः[4] परिव्रियमाणः, नेममग्नः[5] पदे पदे स्खलन्निशान्ते स निशान्तमापत्। तत्र तां मर्षी चालयतो दासजनस्यापि सम्मुखीनो[6] भवितुं नाशकत्।

उपकोशा च प्रातश्चेटिकानुगता नन्दालयमासाद्य हिरण्यगुप्तो वणिङ्[7] मम भर्त्रा न्यासीकृतं धनमात्मसात्कर्त्तुमिच्छतीति विज्ञापितवती। अतस्तत्र राज्याधिकारिभिराकारितो 'देव, न किञ्चिन्मात्रम् अप्यस्या मद्गेहे वर्तत' इति सोऽकथयत्। तदाकर्ण्योपकोशाऽवादीत्—'मदीयो भर्ता[8] गृहदेवता मञ्जूषायां निक्षिप्य विदेशं गतः। तासामग्रे चायं किञ्चिल्लेखं विनापि मम धनं दातुमङ्गीकृतवान्। न विश्वासश्चेन्मञ्जूषामिहानाय्य देवताः[9] प्रष्टव्याः।' एतदाकर्ण्य नन्दाज्ञापितबहुजनैः अभ्यु[11]त्थाप्य आनीतायां मञ्जूषायाम् उपकोशाऽगादीत्—'देवताः, यदनेन वणिजोदितं तत्सत्यमुक्त्वा निजावासं यात; नो चेदहं कस्मैचित् सर्वा वो ददामि; सदस्यस्मिन्नुद्घाटयामि वे'ति। [12]तच्छ्रुत्वा भीतभीतास्ते त्रयो मञ्जूषापिहिताः[13], 'सत्यमेतत्; अस्मत्समक्षमनेन धनमङ्गीकृत'मित्यूचुः। एतेन निरुत्तरो वणिक् सर्वं तद्धनं प्रत्यर्पयितुं प्रत्यपद्यत। अतिकुतूहलाक्रान्तमनसा राज्ञा चाभ्यर्थितोपकोशा सदसि स्फोटितार्गलां मञ्जूषां समुदजीघटत्। ततस्त्रयस्ते तमःपिण्डसन्निभाः पुरुषा निर्गता ये च मन्त्रिभिर्भूभृता नन्देन च कृच्छ्रात्प्रत्यभिज्ञाताः क्षणं सर्वानपि किंवृत्तान् सदस्यान् व्यस्मापयन्। अथ कौतुकात्सर्वैः पृष्टोपकोशा प्रथमतस्तेभ्यः सर्वमुपवर्णयन्ती तत्रत्याखिलसभासदां प्रशंसाभाजनमभवत्। पारदारिकाश्च[14] ते त्रयोऽप्यपहृतसर्वस्वा देशान्निर्वासिताः। सम्रा[15]जा नन्देन चाभिनन्दितचरितो-

---

१. ससजुषो रुः, भोभगोअघोअपूर्वस्य योऽशि, हलि सर्वेषाम्। २. समासत्तौ इति णमुलि, तृतीयाप्रभृतीन्यन्यतरस्याम्। ३. शालीनकौपीने अधृष्टाकार्ययोः। ४. कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु इति ढकञ्। ५. अर्धनग्नः। ६. यथामुखसंमुखस्य दर्शनः खः। ७. यरोऽनुनासिकेऽनुनासिको वा। ८. प्रत्यये भाषायां नित्यम्। ९. ण्वुल्तृचौ। १०. देवात्तल्, तलन्तं स्त्रियाम्। ११. उदः स्थास्तम्भोः पूर्वस्य। १२. शश्छोऽटि, खरि च। १३. वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः, दधातेर्हिः। १४. गच्छतौ परदारादिभ्यः। १५. मो राजि समः क्वौ।

पकोशा कोशादपरिमितं धनं प्रदाप्य प्रेषिता ससन्तोषं जोषं स्वसदनमसदत्। वर्षोपवर्षावपि च तत्सकलमाकलय्य निरतिशयं तामभिनन्दितवन्तौ। सर्वे तत्पुरवासिनश्च [1]स्मेरमुखाः [2]सँव्वृत्ताः।

अत्रान्तरे हिमाद्रौ तीव्रतरं तपस्तप्त्वा मयाऽऽराधितेन देवेन महादेवेन मे पाणिनीयं शास्त्रं प्रकाशितम्। तदनुगृहीतेन चैव मया तत्पूर्णीकृतम्। ततः प्रतिनिवृत्तेन शशिमौलिप्रसादामृतपानाज्ञाताध्वक्रमेन निजसदनं चासादि। कृतगुरुमातृचरणाभिनन्दनेन श्रुतोपकोशाद्भुतवृत्तान्तेन च परमा कोटिरानन्दस्यान्वभावि।

अथ मन्मुखात् तन्नवसंस्कृ[3]तव्याकरणं शुश्रूषोर्वर्षस्य कृते षाण्मातुरेण[4] तत्सर्वं प्राकाश्यं नीतम्।

ततोऽतिनिर्बन्धपराभ्यां व्याडीन्द्रदत्ताभ्यां दक्षिणार्थं विज्ञप्तो गुरुर्वर्षः स्वर्णनिष्ककोटिर्मे[5] देयेत्यवोचत्। अङ्गीकृततद्गुरुवचनौ तौ नैतावद्धनमन्यस्मादुपलब्धुं शक्यँम्[6] इति लक्ष्मीपुँस्पुँत्रान्नवनवतिकोटीश्वरान्नन्दाद् गुरुदक्षिणां याचितुं मया सहाचलताम्। अवोचताञ्च तौ 'प्रागुपकोशा तेन धर्मभगिनीत्वेन स्वीकृतेति स तव धर्मश्यालकोऽतस्त्वद्गुणैरवश्यं तस्मादेतावद्धनं प्राप्तुं शक्यते' इति भगवँश्छिन्धि आवयोः प्रतिज्ञाबन्धनमेतदिति। स्वीकृते च मयि तत्, त्रयोऽपि सतीर्थ्या वयमयोध्यास्थं नन्दकटकमगच्छाम। किन्तु प्राप्तमात्रेषु चास्मासु तत्र राजा पञ्चत्वमवापेति तद्विषादेन राष्ट्रे महान् कोलाहलो जातः। एवंभूते व्यतिकरे योगसिद्धिमानिन्द्रदत्तोऽभ्यधत्त यद्गतासोरस्य भूपस्य शरीरमहं प्रविशामि। वररुचिरस्त्वर्थी मामकीन इत्यहं तस्मायभीष्टं काञ्चनं दास्यामि। व्याडिश्च देवगृहे मम प्रत्यागमावधिं यावन्मदीयदेहमभिरक्षतु।

सर्वमेतत्स्थिरीकृत्य, नन्दशवान्तःसमाविष्टे इन्द्रदत्ते, प्रत्युज्जीवति च भूपतौ, राष्ट्रे महानुत्सवोऽजायत। शून्ये देवगृहे चेन्द्रदत्तस्य शरीरमभिरक्षति व्याडौ, राजकुलमहमगमम्। प्रविश्य च स्वस्तीत्युच्चार्य मया स[9] योगनन्दो

१. नमिकम्पिस्म्यजस्० इति रः। २. 'मोऽनुस्वारः' इति समो मस्यानुस्वारे 'वा पदान्तस्ये'ति वैकल्पिकोऽनुनासिको वकारः, परसवर्णः। ३. समः सुटि, अत्रानुनासिकः पूर्वस्य तु वा। ४. मातुरुत्संख्यासम्भद्रपूर्वायाः। ५. ईद्यति। ६. शकिसहोश्च। ७. पुमः खय्यम्परे। ८. नश्छव्यप्रशान्। ९. एतत्तदोः सुलोपोऽकोरनञ्समासे हलि।

गुरुदक्षिणार्थं हेमकोटिं याचित इति तेन सत्यनन्दस्य मन्त्री[1] शकटालः 'सुवर्णकोटिमस्मै दापय' इति समादिष्टः। किन्तु प्रातिभशक्तिसम्पन्नो मन्त्री शकटालो मृतस्योज्जीवनसमकालमेवार्थिनमागतमवलोक्यावधृतसर्वतत्त्वो नन्दस्य तनयो बाल इति चिन्तयन्नन्दस्य बहुशत्रुबलराज्यमभिरक्षितुं[2] तथाभूतमपि नन्दस्य देहमभिरक्षितुं निश्चिन्वानस्तत्क्षणमेव सर्वान् शवानदीदहत्। तन्मध्ये चारैरुपलब्धमिन्द्रदत्तकलेवरमपि—तद्रक्षकं व्याडिमपसार्य—दाहितवान्। अत्रान्तरेऽर्थिने हेमकोटिसमर्पणाय त्वरमाणं राजानमाह—'देव, इदानीं सर्वोऽपि परिजनः उत्सवासक्तस्वान्त इत्ययं क्षणं प्रतीक्षताम्। तदनन्तरं कौतस्कुतः[3] काँस्कान्[4] उपहारान् वाञ्छतीति पृष्ट्वा भवदाज्ञया सर्वं सम्पादयिष्यते।'

क्षणानन्तरं च योगनन्दमागत्य, 'देव, सत्यपि भवादृशे रक्षितरि, योगस्थितोऽनुत्क्रान्तजीवो द्विजोऽनाथशव इति बलाद्दग्धः' इति व्याडिना अब्रह्मण्यमुद्घोषितम्। देहदाहानन्तरं निर्गत्य स महामतिश्शकटालः[5] सुवर्णशतमर्पितवान्। किन्तु योगनन्दो रहसि सशोको व्याडिमवदत्—'विप्रोऽप्यहमिदानीं शूद्रत्वमापन्न इति स्थायिन्यपि[6] 'श्रीर्नेदानीं[7] यशस्काम्यतो[8] मम सन्तोषायोपकल्पते।' एतदाकर्ण्य व्याडिस्तमाश्वास्याभाषत—'शकटालेनाधुना त्वं परिज्ञातोऽसीति महामन्त्री ह्ययमचिरात्त्वां यथेच्छं विनाशयितुं, पूर्वनन्दनन्दनं[9] चन्द्रगुप्तं भूपञ्च विधातुमलमिति मुख्यामात्यं वररुचिं नियोजय, येन दिव्यानुभावतद्बुद्धिपुरस्कृतं[10] राज्यं निष्प्रत्यूहं[11] सुस्थिरं स्यात्।'

एवमुक्त्वा गुरुदक्षिणां दातुं गते व्याडौ तदैव योगनन्देन मन्त्रिपदे नियुक्तोऽहं तमेवमवदम्—'विगतब्राह्मण्यस्यापि ते शकटाले पदस्थिते राज्यं सुस्थिरं

---

१. मन्त्रि गुप्तभाषणे इत्यस्मात् धातोः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति ग्रह्यादित्वाण्णिनिः। २. 'अन्येभ्योऽपि दृश्यते' इति वलच्। ३. 'कस्कादिषु च'। ४. 'कानाम्रेडिते', 'सम्पुंकानां सो वक्तव्यः'। ५. 'वा शरि'। ६. स्थाधातोः ग्रह्यादित्वाण्णिनिः, 'आतो युक् चिण्कृतोः', ऋन्नेभ्यो ङीप्। ७. क्विब्वचिप्रच्छ्यायेति क्विपि दीर्घः। ८. 'पाशकल्पककाम्येष्विति वाच्यम्' इति सहकारेण 'सोऽपदादौ' इति सः। ९. 'नन्दिग्रही'ति नन्द्यादित्वाल्ल्युः, 'युवोरनाकौ'। १०. 'पुरोऽव्ययम्' इति गतिसंज्ञायां 'नमस्पुरसोर्गत्योः' इति सः। ११. 'इदुदुपधस्य चाऽप्रत्ययस्य'।

न मन्ये, तस्मादयं जीवितद्विजदाहदोषीति तिरस्कृत्य[1] युक्तथा विनाशं नेयः[2]। एवं मयोपदिष्टो योगनन्दः शकटालं मध्येऽन्धान्धु सतत्सुतशतं निक्षिप्य सक्तूनां पयस्पाशस्य[3] चैकैकं शरावं ससुतस्य तस्य कृतेऽन्तर्न्यदीधपत्। एवं स्वकीयम् अधस्पदम्[4] अवलोक्य शकटालः पुत्रानुवाद, 'सुताः, एतद्भोज्य[5]-पेयैर्द्रव्येणैकोऽपि[6] कृच्छ्राज्जीवेत्, बहूनां तु कथैव केत्येक एव सजलानमून् सक्तून् नः प्रत्यहमद्याद्यात् यश्च समर्थः सन् योगनन्दस्य वैरं प्रतिकुर्वीत।'

एतदाकर्ण्य पुत्रास्तमब्रुवन्—'तात, नास्मिन् कर्मण्यतिभवकान्[7] कोऽप्यस्मास्विति सविषानिव सविषान्[8] सक्तूनिमान् पिबन्नात्मानं त्वं धारय।' तन्निशम्य शकटालस्तैः[9] शारावसक्तुवारिभिः एक एव सकृद्वृत्तिमह्नोऽकरोत्। एवमन्धान्धुनिपतितस्य तस्य पश्यत एव सुतशते निरसुतां गते स एव केवलो जीवितोऽवाशिनट्।

इत्थञ्च निष्कण्टकं योगनन्दसाम्राज्ये बद्धमूले, अहरहः[10] तत्समृद्धौ च जायमानायां, गुरुप्रदत्तदक्षिणो व्याडिस्तत्रायथौ। तं च तथाभूतबद्धमूलसाम्राज्यमवलोक्यातिप्रसन्नः, योगनन्देन तेन तद्राज्ये विविधभोगान् भोक्तुं भृशमभ्यर्थितोऽपि, संसारासारतां तत्त्वेन जानानस्तत्कालमेव तपस्तप्तुमनुवनमभिप्रतस्थे। योगनन्दश्चाथ सकलसैन्यसंयुक्तो मत्सहितः स्वराजनगरं पाटलिपुत्रमगमत्। अहमपि च तत्र योगनन्दस्य मन्त्रित्व-[11]धूर्पतित्वे नियुक्त उपकोशया परिचर्यमाणो जनन्या गुरुणा च साकं चिरमवसम्। साक्षात्सरस्वती च सर्वेषु कार्येषु मत्साहाय्यं व्यदधात्।

इति कथाकल्लोलिन्यां सन्धिनिर्देशात्मकः प्रथमः कल्लोलः समाप्तः।



१. 'तिरसोऽन्यतरस्याम्'। २. 'अचो यत्'। ३. पाशकल्पेति सः, कुत्सितस्य पयसः इति भावः। ४. 'अधःशिरसी पदे'। ५. 'भोज्यं भक्ष्ये'। ६. 'ईद्यति'। ७. भवन्तमतिक्रान्तोऽतिभवकान्। ८. विषम्, जलञ्च; तेन सविषानित्यस्य सजलान् विषयुक्तांश्चेत्यर्थः; 'तथायुक्तं चानीप्सितम्' इति कर्मत्वम्। ९. 'तत्रोद्धृतममत्रेभ्यः' इत्यञ्। १०. 'रोऽसुपि'। ११. 'अहरादीनां पत्यादिषु वा रेफः'।

## कारकनिर्देशात्मको द्वितीयः कल्लोलः

वररुचिरेवमुपवर्ण्य पुनः काणभूतिमवोचत्—'इत्थं व्यतीतेषु केषुचिद्वत्सरेषु वामाकामाद्यतिदृप्तसमुन्मत्तो योगनन्दः, समुपेक्षितस्वसहयोगी,[1] निजपरिजन-परिदाही,[2] परमोन्माथी च सञ्जातः। एवमुच्छृङ्खलं तमवलोक्याहमचिन्तयम् यन्मयि स्थिते विरुद्धमाचिचरिषिष्यन्नपि[3] न शकटालः स्वमनोरथं पूरयितुमल-मितीदानीं[4] स उद्धर्तव्य[5] इति तमुद्दिधीर्षू राजानमहमभ्यर्थ्यान्धान्धोस्तमुदधरम्। नीतिकुशलः शकटालोऽपि च पुना राज्ञो मन्त्रित्वमवाप्य वररुचौ स्थितेऽयं योग-नन्दोऽजय्यः इति सञ्चिन्तयन् वैतसीं वृत्तिमाश्रित्य मदिच्छानुकूलं राज-कार्याण्यकरोत्।

एकदा नगराद्बहिर्निर्गतो राजा मध्येगङ्गमुद्न[6]: समुदञ्चन्तं संश्लिष्टपञ्चाङ्गुलि-हस्तम्[7] अपश्यत्। किमेतदिति मां पृच्छति भूभृति, तस्यामेव दिश्यहं स्वकीये द्वे अङ्गुल्यावदर्शयम्। एतेन तिरोभूते हस्तेऽतिविस्मयमापन्नेन च भूपेन पुनस्तदर्थ-मनुयुक्तोऽहं तमेतदब्रवम्—संश्लिष्यत्पञ्चाङ्गुलिहस्तोऽयं निरदिशद् यत्पञ्चभिर्मि-लितैरिह न किमप्यसाध्यं वर्तत', अहं च तदङ्गुलिद्वयं दर्शयन्नेतत्प्रत्युदतीतरं यदैकचित्त्येन वर्तमानाभ्यां द्वाभ्यामेव संसारेऽस्मिन् सर्वं सम्पादयितुं शक्यते। ममैतद् गूढविज्ञानमवधार्य भूपोऽत्यर्थं प्रासीदच्छकटालश्च दुर्जयां[9] मदीयां बुद्धि-मवधार्य नितरां व्यषीदत्।

एकदा कश्चिद् ब्राह्मणातिथिर्योगनन्दस्य प्रासादद्वारमुपागच्छत्। तत्र[10] मुहूर्त-मवस्थितश्च किञ्चिदुपलिप्सयेव अनु[11]प्रासादवातायनम् उददृाक्षीत्। तच्च वातायना-त्प्रपश्यन्तीं स्वपत्नीमवलोक्य तन्मात्रेणैव च तमतिथिम् अभिक्रुध्यन्नृपतिर्हन्तु-

---

१–२. 'सम्प्रचानुरुधेति' घिणुन्। ३. चरतेस्सन्नन्तात् लृटः सद्वा। ४. दानी-श्चेतीदमो दानीम्। ५. हरतेस्तव्यत्। ६. उदकशब्दस्य पद्न-इत्युदन्नादेशोऽल्लो-पोऽनः। ७. 'कर्तुरीप्सिततमं कर्म', 'कर्मणि द्वितीया'। ८. 'अकथितञ्चेति' पञ्चम्याः द्वितीया। ९. ईषद्दुःसुषु—इति खल्। १०. अकर्मकधातुयोगे काले द्वितीया। ११. 'अनुर्लक्षणे', 'कर्मप्रवचनीययुक्ते द्वितीया'।

मादिदेश। तस्मिंश्च द्विजे वध्यभूमिं नीयमाने विपणिस्थापितो निरसुरप्येको[1]वैसारिणोऽहसत्। तद्धासहेतुचिन्तासन्तानेन मया स्मृतैकान्तोपस्थिता सरस्वती तन्मत्स्यहासहेतुश्रवणार्थं तत्रत्यतालतरोः पृष्ठेऽलक्षितः स्थातुं मामादिशत्। तथा कुर्वन्नहं रात्रौ तत्र बालपुत्रैः सहागतां राक्षसीमेकामपश्यम्। सा च भोज्यं याचमानान् स्वबालानवादीत् 'प्रातस्तरां विप्रमांसमहं वो दातास्मि। अद्य तु तं दृष्ट्वा मृतोऽपि मत्स्योऽहसदिति न स व्यापादितः। किमर्थञ्च स तिमिरहसदिति सुतैः परिपृष्टा राक्षसी समवोचत्—'स्त्रीरूपधारिभिः अन्तःपुरमधितिष्ठद्भिः[2] नरैः सर्वासु राजस्त्रीषु परिच्यावितचारित्रीषु[3] अपि सच्चारित्र्यम्[4] अभिनिविशमानः[5]वराकोऽयमनेनानेना[6] नृपतिना विप्रो व्यापाद्यते इति तिमिरहसत्। राक्षस्या एतद्वचः श्रुत्वा तत आगत्य प्रातरहं राजानं विज्ञापिततत्तिमिहासहेतुमकरवम्। राज्ञा चापि सर्वं तत्सत्यमवाप्य बहु सम्मानितोऽहं विप्रश्च वधान्निर्मोचितः।

अन्यदा तत्र कश्चिच्चित्रकारोऽतिकुशल आगमत्। स च पटे योगनन्दं देवीञ्चैवमचिचित्रत् यद्वाक्चेष्टारहितं सजीवमिव तच्चित्रमलक्षयतेत्यतिसन्तुष्टेन राज्ञा चित्रकारः[7] पुष्कलेन धनेन सन्तोषितः, चित्रपटश्च स स्वावासगृहे भित्तौ संयोजितः।

संयोगवशादेकदाऽऽवासगृहं प्रविष्टेन मया चित्रगता सम्पूर्णलक्षणा महादेवी समवलोकितेति लक्षणान्तरसम्बन्धात्प्रातिभबलेनाभ्यूह्य तस्या मेखला-स्थानं तिलेन चिह्नयित्वाऽपाकृतन्नैयूनिरपासरम्। किन्तु गृहं प्रविष्टेन योगनन्देन तच्चिह्नमवलोक्यानुयुक्तेन परिजनेन तत्तिलकचिह्नकोऽहं विज्ञापितः। तच्चाकर्ण्य राजा व्यचिन्तयद् यद् गुप्तप्रदेशस्थं तिलकममुं न मद्व्यतिरिक्तोऽन्यः कश्चिद्वेत्तीति वररुचेरस्य ज्ञानं तत्प्रयोजकमयशस्करमन्तःपुरदूषणं[8] विशुनयति। अत एवैने-[9]नान्तःपुरस्त्रीवेशधारिणो नराः अवलोकिताः। एतद्विचिन्त्य क्रुधाऽभिज्वलन् योगनन्दो रहसि शकटालं समाहूय समादिशत्—'देवीदूषको वररुचिस्त्वया-

---

१. 'विसारिणो मत्स्ये', 'इनण्यनपत्ये'। २. 'अधिशीङ्स्थासां कर्म'। ३. चरित्रस्य भाव इति ष्यञि षित्वान्ङीषि हलस्तद्धितस्येति यलोपः। ४. 'अभिनिविशश्च'। ५. जल्पभिक्षेति षाकन्। ६. अविद्यमानम् एनः पापं यस्मिन्, निरपराध इति भावः। ७. 'कर्मण्यण्'। ८. 'अतः कृकमिकंस०' इति सः। ९. 'द्वितीयाटौस्स्वेनः'।

बध्यः[1]' इति । तदाज्ञां स्वीकृत्य बहिर्निस्सृतः शकटालोऽचिन्तयद् यद् दिव्यबुद्धि-प्रभावस्य वररुचेः चाण्डालान्[2] बधं कारयितुम् अहमशक्तः । ममापदुद्धर्त्ता विप्रश्चा-यमिति तद्रक्षणमेव श्रेयः । एवं कृतनिश्चयः शकटालो मामागत्य राज्ञो बधान्त-मकारणक्रोधमबोधयत् । ततो राजा न मामभिक्रुध्येदिति मया कश्चिदन्यो निहन्यते त्वञ्च मद्गेहेऽवच्छन्नस्तिष्ठेत्युक्तवन्तं तथैव कुर्वन्तञ्च तमहमवोचम्—त्वमेवैको मन्त्री यो मां नाजिघांसत् । राक्षससुहृदहं नापि च केनापि घात्यः[3] । ध्यातमात्र एव च क्षणे राक्षसस्स समागत्य विश्वमात्रं ग्रसितुमलम् । एतदाकर्ण्य तं राक्षसं दिदृक्षुणा मन्त्रिणा ध्यानसमकालमेवोपस्थितं तं राक्षसमहमदर्शये[4], येन सोऽतिविस्मितो भीतश्च सञ्जातः । अन्तर्हिते च राक्षसे शकटालो मामन्वयुङ्क्त 'कथमयं राक्षसस्तव सजूः सञ्जात' इति । अहं तमेवमवदं, यत्पुरा नगररक्षार्थमनुनिशं पर्य्यटन्नेकैको नगराधिपोऽक्षैषीत् । तदाकर्ण्य योगनन्देन नगराधिपत्वेऽभिनि-वेशितेन मया भ्रमन्नेको राक्षसोऽदर्शि । तेन च का नारी 'नयनाभिरामा नगरेऽ-स्मिन्निभाल्यते' इत्यनुयुक्तेन मया 'मूर्ख! यैव यस्याभिमता सैव तस्य कृते नयना-भिरामा' इति निगदितः । स च अहो, एकेनैवोत्तरेणाहं त्वया जित इति स्मृतमात्र एव त्वां सन्निधास्ये इति प्रत्यजानात् । इत्थं मित्रत्वमवाप्य मदीयापत्सहाये तस्मिन् राक्षसे निर्गते शकटालेनाभ्यर्थितोऽहं ध्यानमात्रेणैवोपस्थितां गङ्गिकां[5] तमदर्शयम् । स्तुतिभिः सन्तोषितायां तस्यामपि च तिरोहितायां शकटालो मत्सहायोऽभवत् ।

एकदा च स खिन्नं मामवलोक्यावदत्—'सर्वज्ञेनापि त्वया किमर्थमेवं दूनेन[6] चेतसा स्थीयते । अविचारकारिणो हि राजानो न चिरादेव प्रकृतिमायान्ति । बहूनि चात्र प्रमाणानि, अतः कालेनावश्यमेव स त्वाम् स्मरिष्यतीति त्वमत्रैव प्रच्छन्नो मम गृहमधिवस[7] । एतदाकर्ण्याहं तस्यैव गृहे प्रच्छन्नस्तिष्ठन्शुभावसरं प्रतीक्षमाणोऽनेहसमनैषम् ।

---

१. 'हनो वा यद्बधश्च वक्तव्यः' । २. 'हृक्रोरन्यतरस्याम्' । ३. हन्तेर्ण्यति वृद्धौ, हो हन्तेरिति कुत्वे, 'हनस्तोऽचिण्णलोः' । ४. 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' । ५. गंगाशब्दात्स्वार्थेकनि 'केऽण' इति ह्रस्वानन्तरम् अभाषितपुंस्काच्चेति साहचर्येण आदाचार्याणाम्-इत्यात्वम् । ६. स्वादय ओदित इति गणपाठ-साहचर्येण ओदितश्चेति नत्वम् । ७. 'उपान्वध्याङ्वसः' ।

एकस्मिन्नवसरे तस्य योगनन्दस्य सुतो हिरण्यगुप्तो मृगयार्थं वनमगमत्। इतस्ततो मृगयां कुर्वतः स्वानुचरैः परित्यक्तस्य वने[1] चोपवसतस्तस्य वासरो व्यत्यगात्। अतस्तां क्षपां क्षपयितुं स एकं वृक्षमारोक्षीत्। क्षणादेव चारुक्षत् तमेववृक्षमृक्ष एको हर्यक्षभीतः। तं तरुमारूढं राजपुत्रं च भीतमवलोक्य मनुष्य-भाषया 'मा भैषीः सुहृत्त्वं मदीयः' इत्यभयमददात्, एतेन विस्रब्धो राजपुत्रस्तं तरुमध्यशयिष्ट[2]। ऋक्षस्तु तं वृक्षमधिवसन् जाग्रदेव तस्थौ। एतस्मिन्नन्तरे तत्र समागतो हर्यक्षो मानुषमधः क्षेप्तुमृक्षमाचचक्षे। तञ्चादाय ततो गन्तुञ्च प्रतिजज्ञे। किन्तु ऋक्षोऽवदन्नाहं मित्रमेवं घातयामीति। ततः स्ववारक्रमेण ऋक्षे प्रसुप्ते जाग्रतं राजपुत्रं हर्यक्षो ऋक्षमधः क्षेप्तुमचकथत्। राजपुत्रश्च भयात् सिंहं प्रसाद-यितुमृक्षमधः क्षेप्तुं प्रायसत्। किन्तु दैवात्प्रबुद्धो ऋक्षो नाधो न्यपतत; अपि तु 'मित्रद्रोहिन्, धिक्[3] त्वाम्, हा वि[4]श्वासघातिनम्, गच्छ, उन्मत्तो भव' इति तस्मै शशाप। राजपुत्रः स्वगृहमागतः प्रातरेवोन्मत्तश्च संजातः। तं सहसा तथोन्मत्त-मालोक्य योगनन्दोऽत्यर्थं व्यषीददब्रवीच्च यद्वररुचिं व्यापादयता मया न समी-चीनमाचरितम्। निःसहायमिव जगन्मां तेन विना प्रति[5]भाति। इदानीं स यदि जीवेदखिलं जानीयात्। एतदाकर्ण्य बुद्धिविशालः शकटालः वररुचि-प्रकाशनेनोभयतः स्वगौरवमवगत्य 'राजन्, वि[6]षद्यालमद्यापि वररुचिः प्राणिति' इति विज्ञापितवान्। तदाकर्ण्य तदा राजाज्ञया तदन्तिकमानीतोऽहं सरस्वती-प्रसादेन तस्य राजकुमारस्य मित्रध्रुट्त्वमुदजीघटम्। त्वया कथमित्थमवगत-मिति पृच्छति भूभृति, अहमवोचम् 'प्रज्ञावन्तोऽन्त[7]रेणापि प्रत्यक्षसाधारण-सामग्रीम् सर्वमनुमानेन लक्षणैश्च ज्ञातुं शक्नुवन्ति। यथा मया महिष्यास्तिलको ज्ञातस्तथैवेदमपि सर्वमवगतम्। एतच्छ्रुत्वा वैलक्ष्यावनतमस्तकस्य राज्ञः सत्कृतिमनादृत्य तत्परिशुद्धिमेव बहुमन्यमानोऽहं स्वागारमागाम्। तत्रागतं मामुपवर्षो न्यगदद् यत्त्वां राज्ञा घातितं निशम्योपकोशा स्वशरीरमग्नि[8]सात्कृत-वती। तद्दुःखानभ्राशनिपातं सोढु[9]मशक्तायास्तन्मातुश्च शुचा हृदयमस्फुटत्। समा-

---

१. 'अभ्युक्त्यर्थस्य न'। २. 'अधिशीङ्स्थासांकर्म'। ३, ४. धिग्योगे हायोगे च द्वितीया। ५. प्रतियोगे द्वितीया। ६. 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा'। ७. 'अन्तराऽन्तरेण युक्ते'। ८. 'विभाषा सातिकात्स्न्र्ये', 'सात्पदाद्योः'। ९. सह-धातोः तुमुनि, 'सहिवहोरोदवर्णस्य'।

कर्णितैतज्जननीजायोदन्तोऽहमन्तरा[1] दिवं भूमिञ्च न कमप्यात्मीयमवगच्छन्मूर्च्छितोऽरुग्णोऽपि वातरुग्णो[2] द्रुम इव द्रुतमपतमवन्याम्। ततो वर्षेणागत्यजगतोऽनित्यतामेवैकां सत्यतां बोधयित्राहं कथंचिद् धारितधृतिश्छिन्नाखिलमायानिबन्धनबन्धनोऽपरिमार्ग्य[3]दुःखविरक्तहृदयः प्रशमैकमात्रसहायस्तपोवनमशिश्रियम्।

गच्छत्स्वहस्सु तपोवने तस्मिन्नयोध्यातः समायातः कश्चिद्विप्र इत्येकदोपलब्धो मन्निवसतिं समया[4] योगनन्दस्य वार्तामनुयुक्त इत्थमवोचत्–'योगनन्दस्य सकाशात् त्वयि गते लब्धावकाशः शकटालो युक्त्या तद्वधोपायं चिन्तयंस्तेन सह चिरमवसत्। एकदा च स पथि क्षितिं खनन्तं चाणक्यनामानं ब्राह्मणमपश्यत्। किमर्थमेतत् करोषीति पृष्टश्चाणक्यः 'अनेन दर्भेण मदीयः पादो विद्धः, अहमेनमतः समूलं नाशयिष्यामि' इत्यवदत्। एतदाकर्ण्य मन्त्री शकटालो नाहमेवं क्रूराग्रहेऽतीम[5]कं कमप्यन्यं नन्दविनाशाय साधनभूतं प्राप्स्यामीत्यवधार्याभाषणसम्बन्धेन तं चाणक्यनामानं च परिज्ञाय उक्तवान्—'विप्र, नन्दस्य गृहे त्रयोदशीश्राद्धाहेऽहं त्वयाँ[6] सुस्वादुभोज्यान्नमादयिष्यामि। तत्र सर्वतः प्रथमं भुक्तस्य तव स्वर्णमुद्रालक्षं दक्षिणा भविष्यति। त्वं तावन्मद्गृहमेहि।' एवमुक्त्वा स्वगृहमानीतश्चाणक्यः श्राद्धाहे नन्दं प्रदर्शितो धुर्य्युपाविष्टः। किन्तु कश्चित्सुबन्धुनामाऽन्यो ब्राह्मणस्तत्र धुर्य्युपाविविक्षदिति शकटालेन तथा कर्त्तु विज्ञप्तो भूपतिर्धुरि तमुपावीविशत्। चाणक्यं चोपगत्य भयावनतः शकटालः 'भगवन्! नाहमेतस्याँ[7]पराधकः, अपितु राजाज्ञयैवैवं संजातम्' इति समभाषत। एतेनामन्दं नन्दं प्रति क्रुद्धश्चाणक्योऽवलिह्यमान इवापादमस्तकं क्रोधशिखिशिखया, शिखां च स्विर्कामुन्मुञ्चन्नसिधारासगन्धां[8] सन्धामिमामाबबन्ध, 'यत्सप्त-

---

१. अन्तरायोगे द्वितीया। २. रुजोभङ्गे इत्यस्मात् क्ते ओदितश्चेति नत्वम्। ३. मृजेर्विभाषा इति क्यबभावे 'ऋहलोर्ण्यत्', 'चजोः कुघिण्ण्यतोः', ततो 'मृजेर्वृद्धिः'। ४. समयायोगे द्वितीया। ५. इममतिक्रान्तम् इति विग्रहे अव्ययसर्वनाम्नामकच् प्राक् टेः। ६. त्वया इत्यत्र गतिबद्धीत्यादिना द्वितीया 'आदिखाद्योर्न' इत्यनेन वार्यते। ७. ण्वुल्तृचाविति कालसामान्ये ण्वुल् तेनात्र तद्योगे षष्ठी ओदनस्यपाचक इतिवत्। भविष्यति गम्यादय इत्यधिकारे विहितस्य तुमुन्ण्वुलाविति ण्वुलो योगे तु अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीनिषेधः। ८. प्रत्ययस्थादितीत्वम्। ९. असिधारातुल्याम् ( अतिभयानकामिति भावः )

भिरेवाहोभिरवश्यं विनाश्यो मया नन्दः । तदैव च विहितावमानप्रत्यपकृतिना कृतिना मया शिखा बन्धनीया' इत्युक्त्वा राज्यगृहाङ्गणात्तत्क्षणान्निरगात् । एवं निर्गतञ्च तमलक्षितरूपेण शकटालस्स्वभवनेऽतिष्ठिपत् । तत्र एव च स्थायी चाणक्यो मन्त्रिणः साहाय्येन समुपलब्धोपकरणः साधितकृत्याप्रयुक्त्या सप्तमेऽहनि श्रुतदाहज्वरनिमित्तकयोगनन्दमृत्युः समुत्तीर्णसन्धासिन्धुस्सञ्जातः । शकटालश्च योगनन्दनन्दनं परेतपुरीप्रैष्यं विधाय पूर्वनन्दनन्दनं चन्द्रगुप्तं च राज्येऽभिषिच्य धियाऽपरामरगुरुमिव चाणक्यं तन्मन्त्रित्वेनाभ्यर्थनया नियुज्य सुसम्पादितवैरप्रतिक्रियया कृतकृत्यमात्मानं मन्यमानोऽपि ग्लानः[2] सुतशुचा घनवनमविशत् ।

एवमायोध्यिकमुखादवगतयोगनन्दवृत्तोऽचलायामध्यस्यां चलं सर्वमालोच्य निर्विण्णोऽहं विन्ध्यवासिनीदर्शनार्थमिहायातः, तत्प्रसत्त्या चोपलब्धस्वत्साक्षात्कृत्या समुपजातस्वजातिज्ञानः, समुपलब्धदिव्यविज्ञानः, समुपवर्णितमहाकथः क्षीणशापोऽहं[3] देहमिममुजिजिह्निषामि । त्वं तु परित्यक्तभाषात्रयस्य शिष्ययुक्तद्विजगुणाढ्यस्यागमनं प्रतीक्षमाणः, साम्प्रतमिहैव तिष्ठ । सोऽप्यहमिव देव्या शप्तो मर्त्यत्वमुपागतो मत्पक्षपाती माल्यवान्नामा गणः । एषा चोमेशोक्ता बृहत्कथा तस्मै त्वयाऽवश्यं कथनीया । तदवधिरेव च युवयोः शापः ।

एवं काणभूतये वररुचिर्निवेद्य स्वतनुतित्यक्षया पुण्यं बदरिकाश्रममाश्रयितुमभिप्रतस्थे । तत्र च गतोऽतिभक्त्या शरण्यां त्र्यम्बिकां शरणमुपगत्य प्रकटितनिजमूर्त्यास्तस्या उपदेशानुसारं स्वधारणासमुत्थापितयोगाग्निना तपसा कृशं[4] प्रियमपि[5] पार्थिवं देहं भस्मसात् कृत्वा दिव्यां गतिमवाप । स्वाभीष्टगुणाढ्यसमागमोत्कः काणभूतिश्च कालं प्रतीक्षमाणस्तत्रैव तस्थौ ।

इति वररुचिवृत्तान्तः



१. ग्रह्यादित्वाण्णिनिस्ततो युक् । २. 'संयोगादेरातोधातोर्यण्वतः' । ३. क्षिधातोः गत्यर्थाकर्मकेति कर्त्तरि क्ते, 'निष्ठायामन्यदर्थे' इति दीर्घे 'क्षियो दीर्घात्' इति नत्वम् । ४, ५. 'इगुपधज्ञाप्रीकिरः कः' ।

## गुणाढ्यवृत्तान्तः

व्यतीतेषु कतिपयदिवसेषु मर्त्यवपुर्माल्यवान् गुणाढ्य इति नाम्नोपलब्धख्यातिः सातवाहनभूपतिं सेवित्वा प्रज्ञोऽपि[1] राज्ञोऽग्रे प्रतिज्ञया परित्यक्तप्राकृतसंस्कृतदेशभाषोऽतिसुग्लः[2] इतस्ततो विचरन् विन्ध्यवासिनीं दर्शक[3] आयातस्तदादेशेन तत्रैव विन्ध्याटव्यां काणभूतिं द्रष्टुमाजगाम। तत्र च काणभूतिसमवलोकनसमकालमेव स्मृतनिजजातिः पैशाच्या गिरा निजनाम श्रावयित्वा काणभूतिमिदमवदत्—सखे, पुष्पदन्तादाकर्णितां दिव्यां कथामाशु मां भाषय[4], येन द्वावपि विमुक्तशापौ स्यावेति। तदाकर्ण्यातिहृष्टः काणभूतिरुवाच—प्रभो, भवदनुज्ञातोऽहमवश्यं तां कथां कथयिष्यामि। किन्तु कृपया पूर्वमात्मीयं चरितमाजन्म मां श्रावयित्वा विगतकौतूहलं कुरु। एवं तेनाभ्यर्थितो गुणाढ्यो वक्तुमेवमुपाक्रमत—

'प्रतिष्ठानेऽस्ति सुप्रतिष्ठनामकं नगरमेकम्। तत्र सोमशर्माख्यो ब्राह्मणो न्यवसत्। वत्सगुल्मकनामानौ तस्य द्वौ पुत्रौ, श्रुतार्थाभिधैका कन्या चेत्थं सन्ततित्रयमासीत्। दुर्भाग्यवशात् कन्यां द्विहायनीमेव[5] भूलोके परित्यज्य सोमशर्मा सपत्नीकः स्वरगमदिति तत्पुत्रौ गृहे स्वसारमनुपालयन्तावतिष्ठताम्। व्यतीतेषु दिवसेषु चिरण्टी[6] श्रुतार्था सहसा सगर्भाभवत् इति तत्र पुरुषान्तराभावादन्योन्यावनु[7] शंका सोदर्ययोः स्वान्ते समुदपद्यत। श्रुतार्था च एवंभूते व्यतिकरे तावभाषत–भ्रातरौ, पारस्परिकपापशंकयैवालम्। रहस्यमस्याहमुद्घाटयामि। इतः स्नातुमितां मामवलोक्य मदनाक्रान्तो नागराजस्य वासुकेर्भ्रातुष्पुत्रः[8] कीर्तिसेनाख्यः स्वपरिचयप्रदानपूर्वकं गान्धर्वेण विधिना मामुपायच्छतेति[9] विप्रवर्णस्[10] न्ववसितोऽयं मे गर्भः। एतदाकर्ण्य किमत्र प्रमाणमित्यनुयुक्तया श्रुतार्थया रहस्यनुस्मृतो नागकुमारकस्तत्क्षणं तत्रोपस्थाय वत्सगुल्मकावेवमभाषत–शापभ्रष्टेयं वरा-

---

१, २. 'आतश्चोपसर्गे'। ३. 'जल्पतिप्रभृतीनामुपसंख्यानम्' ४. 'भविष्यति गम्यादय' इत्यधिकारे 'तुमुन्ण्वुलौ क्रियायां क्रियार्थाया'मिति ण्वुलि 'अकेनोर्भविष्यदाधमर्ण्ययोरिति' षष्ठीनिषेधः। ५. 'दामहायनान्ताच्चेति' ङीप्। ६. 'वयस्यचरम इति वाच्यम्'। ७. 'अनुर्लक्षणे', 'कर्मप्रवचनीययुक्ते द्वितीया'। ८. इण् परत्वेन कस्कादित्वात्षः। ९. 'उपाद्यमः स्वकरणे'। १०. 'तृतीयार्थे'।

प्सरा भवतोर्भगिनी, उपै[1]नामन्या नार्यः, शापपरिभ्रष्टौ च युवाम्। अस्याः पुत्रप्रसव-समकालमेव भवतां शापविमुक्तिः। एवमुक्त्वाऽन्तर्हिते तस्मिन् स्तोकैरेव दिवसैः श्रुतार्था मामसूत। तत्क्षणमन्तरिक्षादुदभूदियं वाणी यन्नवच्छापविमुक्ति[2]कारो गणावतारो[3]ऽयं जातः। अ[4]न्वेनं मर्त्याः, गुणाढ्यो नाम ब्राह्मणोऽयम्, भूलोके जनं जन[5]मभि कीर्तिरस्य प्रसरिष्यति इति। किञ्चित्कालानन्तरमेव मे माता मा[6]तुलौ च क्षीणपापाः पञ्चत्वं प्राप्ताः। किन्तु बालोऽप्यहं स्वं शुचेऽसमर्प्य स्वावष्टम्भेनैतस्ततः पर्यटन् सर्वा विद्याः परिसमाप्य स्वदेशमायातः प्रसिद्धिमगमम्।

एकस्मिन्त्समयेऽहं सशिष्यः प्रतिष्ठितं नगरं प्रविश्य तत्रत्यानां परापराणां[7] पौराणां विविधा वार्ताः समाकर्णयन्, प्रतिपदं तत्कृतकौतुकानि चावलोकयन्निन्द्रसदनसदृशं राजप्रासादमासादयम्। तत्र च शिष्यैर्निर्दिश्यमानवर्त्माऽन्तः समाविष्टोऽहमास्थानस्थितममरैः सर्वतः परिवारितं वासवमिव शर्वशर्मप्रभृतिभिः स्वमन्त्रिभिः परिवृतं रत्नसिंहासनमासीनं[8] राजानं सातवाहनमपश्यम्। तत्र राज्ञे विहितस्वस्तिकारं विष्टरोपविष्टं मां स्तुतिपूर्वकं शर्ववर्मादयः 'देव, अयमेव जगद्विख्यातः, सर्वानवद्यविद्याविद्योतितान्तःकरणः, विविधगुणगणाढ्यो गुणाढ्यः' इति राज्ञा पर्यचीचयन्। राजा चापि निजमन्त्रिभिः सु[9]स्तुतं मामाकर्ण्याति-प्रीतः सत्कृत्य निजमन्त्रित्वे न्ययूयुजत। अहमपि च कृतदारपरिग्रहस्तत्र शिष्यानध्यापयन् सातवाहन-राजकार्याणि चानुचिन्तयन् ससुखं न्यवसम्। एतदाकर्ण्य सातवाहननामकरणकौतूहलाक्रान्तमनाः सुमनाः काणभूतिस्तन्नामकरणहेतुं गुणाढ्यमपृच्छत्। यदाकर्ण्य गुणाढ्य एवं तस्य तत्कौतूहलमपनेतुं प्रारभत—

'अभवदेको दीनेभ्यो धनद इव ध[10]नंदो, गोदः, कम्बलदश्च प्राज्यराज्योऽत्य[11]न्यान् नृपतीन्नृपो नाम्ना दीपकर्णिः। तस्य प्रेयसी भार्या शक्तिमती रतान्तोद्यानसुप्ता जातु सर्पेण दष्टा नष्टा। पञ्चत्वमवाप्तायाञ्च तस्यां मासं[12] नु-

---

१. 'उपोऽधिके च' इति हीने कर्मप्रवचनीयता। २. 'कर्मण्यण्'। ३. 'अवेतृस्त्रोर्घञ्'। ४. हीनेऽनोः कर्मप्रवचनीयत्वम्। ५. 'अभिरभागे' इति वीप्सायां कर्मप्रवचनीयता। ६. 'पितृव्यमातुल०' इति सूत्रे 'मातुर्डुलच्'। ७. परे चापरे चेति द्वन्द्वे 'द्वन्द्वे च' इत्यनेन सर्वनामताऽभावः। ८. 'ईदासः' इति शानच आकारस्येत्वम्। ९. 'सुः पूजायाम्'। १०. 'आतश्चोपसर्गे'। ११. 'अतिरतिक्रमणे च'। १२. अकर्मकधातुयोगे कालवाचकाद् द्वितीया।

द्विग्नो[1] दीपकर्णिरपुत्रोऽपि विधुर एव धुरं राज्यभारस्य विवहन् शैषायुष्को[2] ब्रह्मचारी न पुनरुद्वाहमचिन्तयत्। एकदा राज्यार्हपुत्रासद्भावोद्विग्नमानसं राजानं भगवान् शशिशेखरः स्वप्ने समादिदेश—'अटव्यामटन् त्वं कुमारकमेकमवलोकयिष्यसि। तमादाय गृहमागच्छेः। स ते पुत्रो भविष्यति'। प्रबुद्धो राजा स्वप्नं[3] स्मरन्नतिप्रहृष्टस्तमनेहसं सम्प्रतीक्षमाणोऽतिष्ठत्। एकदाऽऽखेटाकृष्टोऽटव्यामुपमहीध्रं[4] दवीयसीं पदवीमवगाहमानो मध्याह्ने एकस्य पद्मसरसस्तीरे तपनतेजसं सिंहारूढं पञ्चषवर्षं[5] बालकमेकमपश्यत्। स्मृतस्वप्नेन तेन नृपेणा[6]-वतारितबालक एकेनैव च शरेण[7] व्यापादितः सिंहः सद्यः पुरुषत्वं प्रपद्य राजानं सम्बोध्योवाच-धनदस्य सखा सातसंज्ञो यक्षोऽहम्। पुरा व्योमचरः स्नान्तीं मुनिकन्यामालोक्य सञ्जातमन्मथोन्मथित-मानसोऽहं सान्निध्यमुपगतस्तत्स्वीकृतिपूर्वकं गान्धर्वेण विधिना तां पर्यणयम्। अवबुद्धैतदुदन्तास्तद्बान्धवा आवयोः स्वेच्छाचारमिममसहमानाः 'पापौ, स्वेच्छाचारौ सिंहौ स्ताम्' इत्यशपन्त। मुनयश्च पुत्रप्रसवकालं तस्याः, तदनन्तरं त्वच्छराघातपर्यन्तं च मम, शापावधिं व्यदधुः। अथ कालेन सिंहयोनिमापन्नयोरावयोर्दारकेऽस्मिन् जाते साश्रु स्वासुभिर्व्ययुज्यतेत्यन्यसिंहीस्तन्यसंवर्धितमिमं[8] प्रकृत्या[10] महासत्त्वं सुतं मद्दत्तं त्वं गृहाण। अहं तव बाणाहतो विमुक्तो यथाप्राप्तगतिं सुखेन[11] यामि। एवमुक्त्वाऽन्तर्हिते सातनाम्नि तस्मिन् गुह्यके, तस्य बालकस्य [12]आदायचरः सप्रसादमासादितनिजप्रासादो दीपकर्णिः सातेनोढतया बालकस्य तस्य 'सातवाहन' इति नाम कृत्वा कालेन च तमेव राज्येऽभिषिच्यारण्यमाश्रयत्। सातवाहनश्च सार्वभौमो भूपतिः संवृत्तः।

एवमुपशमितसातवाहननामविषयककाणभूतिजिज्ञासो गुणाढ्यः प्रकृतमनु-

---

१. ओविजीभयचलनयोः इत्यस्मात् 'श्वीदितो निष्ठायाम्', 'ओदितश्च'। २. शेषायुः ब्रह्मचर्यमस्येति 'तदस्य ब्रह्मचर्यम्' इति ठञि वृद्धौ 'इसुसुक्तान्तात्कः'। ३. 'स्वपो नन्'। ४. 'मूलविभुजादिभ्यः क'स्ततोऽव्ययीभावः। ५. पञ्च वा षड्वेति संख्ययाऽव्ययेति बहुव्रीहौ, डचि पञ्चषाणां वर्षाणां भूत इति 'तमधीष्टोभृतोभूतो भावीति' प्रकरणे 'वर्षाल्लुक् चेति' विहितस्य खस्य ठञो वा 'चित्तवति नित्यम्'– इति लुक्। ६, ७. 'कर्तृकरणयोस्तृतीया'। ८. 'चतुर्वर्णादीनामुपसंख्यानम्' इति ष्यञ्। ९. 'शरीरावयवाद्यत्'। १०, ११. 'प्रकृत्यादिभ्य' उपसंख्यानम्। १२. 'भिक्षासेनादायेषु च'।

सूत्याग्रे वक्तुमेवमारभत—'स च सातवाहन एकदा वसन्तोत्सवसमये नन्दनेऽमरपतिरिव निजारामे रामा[1] दीव्यन् गाहमानजनतापहारिणि वारिणि रमणीये जलक्रीडां कर्तुं तत्रत्यवापीमवतीर्णः तत्र व्यात्युक्षिकायामत्यायताक्षीणां करवारिभिरभितः सिच्यमानो वारणो वशासु इव क्रीडापरवशासु तासु नखद्युतिवलक्षमम्भः सिञ्चँस्तदभिषिक्तिमसहमानया शिरीषसुकुमाराङ्गया स्वकीयान्यतममहिष्योक्तः, 'देव, मोदकैर्मां ताडयेति'। तदाकर्ण्य प्रिया मे मोदकैस्ताड्यमानामात्मानमिच्छतीति बुद्ध्या नृपतिर्द्रुतं वचनकरेण[2] बहुमोदकानानाययत्। तानालोक्य विहस्य साऽभाषत—राजन्नत्र जलान्तरे कोऽवसरो मोदकानाम्? उदकैर्मां सिञ्च इत्येवमुक्तस्त्वं माशब्दोदकशब्दयोः सन्धिं प्रकरणञ्च नावगच्छसीत्येतावान् मूर्खः। परजनमेजयो[3]ऽपि शब्दशास्त्रविदा तयैवं पराजितो राजा सव्रीडः परित्यक्तजलक्रीडः, जातावमानः, परित्यक्तकार्यान्तरावधानस्तत्क्षणं निजावासमविशत्। तत्र च परित्यक्ताहारविहारः, विवर्जिताखिलव्याहारः, विरहितकुशेशयशयनीयः पाण्डित्यं मृत्युं वा शरणं करवाणीति कृतमना न मनागपि शान्तिमुपजगाम। अकस्मादथ राज्ञस्तथाविधामभूतपूर्वावस्थामवलोक्य सम्भ्रान्ते सर्वस्मिन् परिजनक्रमे क्रमेणाहं शर्ववर्मा च तत्सर्वमवगतवन्तावित्यस्मदाहूतपृष्टेन हंसाख्येन राजचेटकेनावाचि यद्राज्ञ्यवमानानुतापजन्यमन्युनाऽनिशं दन्दह्यमानमानसो नृपो न निशि नेत्रे निद्रया निमीलति। एतदाकर्ण्यान्योन्यमालोच्याहं शर्ववर्मा च सर्वावरुद्धप्रवेशमपि सातवाहनवासवेश्म कथमपि प्राविशाव। निकटोपविष्टेन च मया तदस्वस्थावस्थाहेतुमनुयुक्तो नृपोऽविकलसकलेन्द्रियोऽपि वाचा[4] विकल इवानुत्तरयन्नेव मौनेन[5] मुनिरिव तथैव तूष्णीकामास्त। किन्तु ततश्शर्ववर्मणि 'देव, शयानेन[6] मयाऽद्य दृष्टं यन्नभसोऽम्बुजमेकं च्युतम्। तच्च दिव्येन केनचित् कुमारेण विकासितम्। तस्मान्निर्गता धवलाम्बरैका दिव्या स्त्री तत्क्षणमेव भवन्मुखं प्रविष्टा। इत्थं स्वप्नगहं[7] प्रबुद्धः मन्ये, सा स्त्री साक्षात्सरस्वती देवस्य वदनं प्रविष्टेति'। इत्थं निवेदितनिजस्वप्ने, भग्नमौनमुद्रः सातवाहनः साकूतं मामवदत्—'प्रयत्नेन[8] शिक्षमाणः पुमान् कियता कालेन पाण्डित्यमधिगच्छतीति त्वयाऽहं वाच्यः। यतो हि तेन विनैषा सम्पन्न रमणी रमणीगणयुक्तस्यापि मे

---

१. दिवः कर्म चेति करणसंज्ञापवादात्कर्मत्वम्। २. 'कृञो हेतुताच्छील्यानुलोम्येषु' इति करोतेष्टः। ३. 'एजेः खश्'। ४. 'येनाङ्गविकारः'। ५. 'इत्थंभूतलक्षणे'। ६. लटः शतृशानचाविति शानच्। ७. 'स्वपितृषोर्नजिङ्'। ८. 'यजयाचेति नङ्'।

सम्पन्नकमनीयरमणीव विरक्तस्येति। काष्ठस्याभरणानीव विभवा न मे मूर्खस्य शोभासंवर्द्धिनः। एतदाकर्ण्य तस्य राज्ञो वैदुष्यासादनोत्कटेच्छया[1] संज्ञानाशोऽहमवदम् 'देव अभ्यासेन सर्वं सिध्यतीत्यलं चिन्तया[2]। यत्नेनोद्गन्धिनः[3] पुष्पस्य तिलतैलमिव[4] मूर्खातिमूर्खोऽप्युपलब्धवैदुष्यस्योपस्कुरुते[5]। व्याकरणं हि सर्वविद्यानां मुखम्। तच्च नरैर्द्वादशभिर्वर्षैरभ्यस्यते[6]। किन्त्वहं त्वां तद्वर्षषट्केनैव शिक्षयिष्यामि। एतदाकर्णितशर्ववर्मा, सहसा सेर्ष्यमभाषत–सुखोचितो जनः कथमेतच्चिरमेवं क्लेशं कुर्यात् इति हे देव, त्वामहं मासषट्केन शिक्षयिष्यामि तद् व्याकरणमिति। एतेनासम्भाव्यमानेनात्मानमुच्चैःकृत्य[7] प्रदर्शयन्तं रुषाऽहं तमवोचम्—यदि मासषट्केन त्वया देवः शिक्षितः क्रियेत तदासंस्कृतं, प्राकृतं, देशभाषाश्चेति मनुष्यसम्भवं भाषात्रयं मया सद्यः परित्यक्तं स्यात्। शर्ववर्मा चैतदाकर्ण्यावदन्न चेदहमेवं कुर्याम्, द्वादशाब्दान् यावत्तव पादुके शिरसा वहँस्ते वशंवदतां[8] कुर्याम्। एवमन्योऽन्यं निर्भर्त्स्य निर्गतयोरावयोरुभयतः सिद्धिं मत्वा राजा समुपलब्धाश्वासनः स्वासने समश्वसत्। शर्ववर्मा च तां सुदुस्तरां[9] प्रतिज्ञां तितीर्षुः सानुशयः सर्वं स्वस्त्रियै शंसित्वा संकटे चास्मिन् स्कन्देन विनाऽन्यां गतिमपश्यन् तस्या एव त्रियामायाः पश्चार्द्धे[10] भागे प्रस्थितः स्कन्दप्रसिषादयिषया वातैकभक्षः, कृतमौनः शरीरनिरपेक्षेण[11] तपसा सन्तोषितात् कुमाराद्यथेप्सितवरमुपलभ्यागतश्चिन्तितोपस्थिताः सर्वा विद्या राज्ञे प्रदत्तवानिति नियतैरेवं[12] अहोभिर्भूपः सर्वशास्त्रपारङ्गमो[13] बभूव।

इत्थं राज्ञोऽखिलविद्यालाभं समाकर्ण्य सर्वं तदीयं राष्ट्रमानन्दममन्दमविन्दत, राजा च 'गुरुरिति' राजार्हरत्नराशिभिरर्चित्वा शर्ववर्मणेऽनुनर्मदाकूलविनिवेशितभरुकच्छविषयराजधानीम्, मोदकैरित्याद्यभिहितवत्यै विद्यागमप्रेरणावसानेन तन्मौर्ख्यमपसारितवत्यै तद्राज्यै सर्वसपत्नीषु प्राधान्याश्च[14] प्रीत्या प्रायच्छत्।

---

१. 'संज्ञोऽन्यतरस्यां कर्मणि'। २. गम्यमानापिक्रिया कारकविभक्तौ प्रयोजिका'। ३. गन्धस्येदुत्पूतसुसुरभिभ्यः'। ४. 'स्नेहे तैलच्'। ५. 'कृञः प्रतियत्ने'। ६. 'अपवर्गे तृतीया'। ७. 'क्त्वा च'। ८. 'प्रियवशे वदः खच्'। ९. 'ईषद्दुःसुषु०' इति खल्। १०. अपरश्चासावर्धश्चेति विग्रहे पूर्वापरेति समासे 'अपरस्यार्धे पश्चभावो वक्तव्यः' इत्यपरस्य पश्चादेशः। ११. 'हेतौ',तृतीया। १२. 'अपवर्गे तृतीया'। १३. 'गमेः सुपि वाच्य' इति खच्। १४. प्रधानस्य भावः इति ष्यञन्तत्वेन षित्वान् ङीषि 'हलस्तद्धितस्येति' यलोपः।

सर्वस्मिन्नेवं संजातेऽवलम्बितमौने मयि च द्वितीयस्मिन्नहनि राजान्तिकं प्रातरित्वनि[1], कश्चिद् द्विजः स्वयंकृत[2]श्लोकमेकमपठत् । यच्चाकर्ण्य राजा सम्यक् संस्कृतया गिरैकैक[3]मत्तरं स्पष्टमन्वाचष्ट येन च तत्रस्थाः सर्वे जनाः प्रमुदिताः संजाताः । तदनन्तरं राज्ञा सविनयं पृष्टः शर्ववर्मा स्वस्मिन् कृतं देवानुग्रहप्रकारमेवं सविस्तरमुपवर्णितवान्—'देव, इत इतोऽहं हीना[4]हारः, संयतव्याहारः, परित्यक्तबन्धुबान्धवजायाका[5]यादिमायः, तीव्रतपःकृशक्ला[6]न्तकायः, निःसंज्ञो[7]ऽध्वनि धरण्यामेकत्र न्यपतम् । तदा जाने, कश्चिच्छक्तिहस्तः पुमानेत्य मामेवं विस्पष्टमाचष्ट 'पुत्र, उत्तिष्ठाभीष्टं सर्वं ते सम्पत्स्यते', इति । तेनाहं तदा सुधाधारासारसंसिक्त इवाननुभूताशनायोदन्य इवाभवम् । तदनन्तरं देवस्य सा[8]मीप्यं प्राप्य भक्त्यासक्तचेतसे स्नात्वा गर्भगृहं [9]प्रविष्टाय मे प्रभुणा स्कन्देन दर्शनं दत्तम् । मुखं च मदीयं साक्षात्सरस्वती प्रविष्टा । अथ भगवान् षडाननः षड्भिराननैः 'सिद्धो वर्णसमाम्नायः' इति सूत्रमुदैरयत् ।

तदाकर्ण्य मानवसुलभचापलेन मयाभ्यूह्योत्तरं सूत्रमुदितमिति देवो मामेवमब्रवीत्—यत्त्वयं चेत्त्वं नावदिष्यः शास्त्रमेतत्पाणिनीयोपमर्दकमभविष्यत् । अधुना चैतत्स्वल्पतन्त्रत्वात्कातन्त्राख्यम्, मद्वाहनस्य कलापस्य च नाम्ना कलापकमिति प्रसिद्धिं यास्यति । एवमभिनवं लघुशब्दशास्त्रं प्रकाश्य स भूयो मामभाषत यद् युष्मदीयो राजा पूर्वस्मिञ्जन्मनि भरद्वाजमुनिशिष्यो महातपाः कृष्णनामा मुनिरासीत् । तुल्याभिलाषां मुनिकन्यकामेकामालोक्याकस्मात्कन्दर्पशरशरव्यतां गतः स मुनिभिः शप्तोऽधुनाऽवतीर्णः । तस्य देवी भवितुं स मुनिकन्यकाप्यवतीर्णा । इत्थमृष्यवतारो नृपतिरयं सातवाहनस्त्वयि दृष्टे त्वदिच्छयैवावाप्तसर्वविद्यो भविष्यति। एवमुक्त्वाऽन्तर्हिते देवे, गृहीतदेवलतण्डुलबलोऽहं बहिरागच्छम्। अल्पमात्रा अपि भक्षिता बुभुक्षावाव[10]नस्ते च तण्डुला मया मार्गेऽनुदिनं भुज्यमाना अपि तावन्त एवेति चित्रीयमाणचेताः क्रमेणाहमिहायातः ।

---

१. 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिपि 'ह्रस्वस्य पिति कृति तुक्' । २. 'स्वयं क्तेनेति' समासः । ३. 'एकं बहुव्रीहिवत्' । ४. जहातेः क्ते 'घुमास्थागापाजहातिसांहली'तीत्वे ओदितश्चेति नत्वञ्च । ५. निवासचितिशरीरेति घञि कुत्वम् । ६. 'अनुनासिकस्य क्विझलोः क्ङिति' इत्युपधादीर्घः । ७. 'आतश्चोपसर्गे' । ८. चतुर्वर्णादित्वात् ष्यञ् । ९. 'चतुर्थी सम्प्रदाने' । १०. 'अन्येभ्योऽपि दृश्यन्ते' इति ओणृधातोर्वनिपि, 'विड्वनोरनुनासिकस्यात्', अवादेशः ।

एवं स्ववृत्तान्तमुक्त्वा विरतवचसि शर्ववर्मणि, हर्षोत्कर्षाकृष्टस्वान्तः सातवाहनः सिस्नासुरुदतिष्ठत् । तद्दृष्टिवडवा[1]भ्रडुपजातवैलक्ष्यः कृतमौनोऽहं व्यवहारबहिष्कृतस्ततो गच्छन्ननिच्छन्नमपि भूपतिं सातवाहनं प्रणामेनैवामन्त्र्य शिष्यद्वयानुगतो नगरात्तस्मान्निर्गत्य कृततपोदृढीयोनिश्चयो विन्ध्यवासिनीदर्शनार्थमायातस्तत्स्वप्नोपदेशेन त्वद्दिदृक्षया भीषणामिमां विन्ध्याटवीं प्रविष्टो बहूनाममीषां पिशाचानामन्योन्यालापान् दूरादाकर्णयमिति मयेयमात्ममौनमोक्षसाधनभूता पिशाचभाषाऽभ्यस्ता । तेभ्य एव च त्वामुज्जयिनीगतमाकर्ण्य भवते[2]ऽद्यावध्यत्रान्यवसम् । भवन्तञ्चाद्यावलोक्य चतुर्थ्या भूतभाषया सम्पादितस्वत्स्वागतेन मया स्वजातिः स्मृतेरयेतस्मिञ्जन्मन्येतदन्तो मदुदन्तः ।

एतदाकर्ण्य काणभूतिर्गुणाढ्यमुवाच—'आम्, उज्जयिन्यां भूतिवर्माख्यो मदीयः सखा वर्तते । तं द्रष्टुमेव तत्र गतः, तस्मादवगतात्मशापमोक्षसाधनभूतत्वदागमनोऽहमिहायात इति तुभ्यं[3] रोचमानां तां पुष्पदन्तोदितां कथां कथयामि। एवमुक्त्वा स सप्तकथामयीं दिव्यां कथां कथयामास । ताञ्च पैशाच्या भाषया सप्तभिर्वर्षैर्गुणाढ्यो लक्षसप्तकश्लोकैः 'मैनां विद्याधरा हार्षुरिति' धारणयाऽटव्यां मष्यभावादात्मशोणितेन लिलेख । गुणाढ्येनैवमुपनिबद्धां महाकथां दृष्ट्वैव मुक्तशापः काणभूतिः 'भगवन्निमं शापमोक्षं त्वं मह्यम[4]धारय' इति प्रदर्शितविनयो निजां गतिमगमत् । तत्सहचारिणस्तत्रत्या अन्येऽपि पिशाचास्तां दिव्यां कथामाकर्ण्य दिवमुपजग्मुः । तदनन्तरमियं दिव्योमेशोक्तबृहत्कथा भुवि कथं प्रतिष्ठापनीया, कोवाऽस्यै[5] स्पृहयालुः, न को वास्या[6]सूयिष्यति कस्मै वा तावदिमां समर्पये इति चिन्तयन् महाकविर्गुणाढ्यः स्वपुस्तकं दत्त्वा गुणदेव-नन्दिदेवाभिधस्वशिष्यौ तदानीन्तनकाव्यरसिकस्य सातवाहनस्यान्तिकं प्रेषयामास । स्वयं च प्रतिष्ठानपुराद्बहिः कृतसङ्केत उद्याने तस्थौ । तौ च शिष्यौ तत्र गत्वा गुणाढ्य कृतिरेषेति कथयित्वा पुस्तकं सातवाहनायादर्शयताम् । किन्तु स तदाकृती तौ शिष्यौ पिशाचभाषोपनिबद्धां शोणिताक्षरविन्यस्तां तां बृहत्कथाञ्चावलोक्य विद्वन्मानी

---

१. दृष्टिरेव वडवा तस्या भ्रंशते 'क्विप् च' इति व्रश्चभ्रस्जेति षत्वे जश्त्वम् ।
२. 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' । ३. 'रुच्यर्थानां प्रीयमाणः' ।
४. 'धारेरुत्तमर्णः' । ६. 'स्पृहेरीप्सितः' । ५. 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' ।
६. आत्मानं विद्वांसं मन्यते इति 'आत्ममाने खश्च' इति णिनिः, वसुस्रंसुध्वंस्वनडुहां दः इति सस्य दत्वे तस्यानुनासिकत्वम् ।

निजलक्ष्मीमदोन्मत्तोऽवहेलया परावर्तयदिति द्वावपि शिष्यौ परावर्त्य गुणाढ्याय यथावृत्तमवर्णयताम् ।

तदाकर्ण्यातिखिन्नो गुणाढ्यः तत्त्वज्ञैरेवमवज्ञातः सशिष्यो नातिदवीयसि विविक्तारण्यरम्यभूमिभागे विहिताग्निकुण्डः तत्राग्नावेकैकं पत्रं वाचयित्वा मृगपक्षिणः श्रावं[1] श्रावं स्वशिष्याभ्यामभीप्सितां श्लोकलक्षोपनिबद्धां नरवाहन-दत्तकथामेकामवशेष्यावशिष्टं ग्रन्थरत्नमाशुशुक्षणौ प्रचिक्षेप । तमेवं दिव्यां कथां पठन्तं दहन्तं च तत्रत्या निखिला अप्यारण्यकाः सारङ्गवराहमहिषादयः परित्यक्त-तृणाहाराः बद्धमण्डलाः पर्यवारयन् ।

अत्रान्तरे स राजा सातवाहनोऽस्वस्थो जातः । तदस्वस्थताहेतुश्च वैद्यैः शुष्कमांसोपयोगो निरणायि । तन्निमित्तमाक्षिप्ताः सूदास्तथाविधमांसदायिनो[2] तदुत्तरदायित्वेऽतिक्षिपन् पृष्टाश्च लुब्धकास्ततो नेदीयसि गिरौ पत्रमेकैकं पठित्वाऽग्नौ क्षिपतो द्विजस्य कथां श्रोतॄणामखिलवनौकसां स्ववृत्त्यर्थमन्यत्र गमनाभावेन निराहारत्वाच्छुष्कमांसत्वं सम्पन्नमिति व्याजह्रुः । तच्छ्रुत्वा तान् व्याधाननुगत्य स्वयं सातवाहनस्तत्र गतो जटाभिः समाकीर्णं सबाष्पमृगमध्यगं गुणाढ्यमपश्यत् । नमस्कृत्य च तं तदखिलवृत्तान्तं महीपतिर्ज्ञातुमाचकांक्ष । सोऽपि च ज्ञानी मूलतः सर्वं भूतभाषया तमाचख्याविति गणावतारं तं ज्ञात्वा पादानताय नृपाय हरमुखोद्गतामवशिष्टां तां कथां तस्मायाचमानाय दत्त्वा स्वशिष्यौ च तद्व्याख्यातृत्वे नियुज्य नृपमामन्त्र्य योगशक्तिपरित्यक्ततनुर्गुणाढ्यः शापनिर्मुक्तो दिव्यं निजपदमवाप ।

सातवाहनश्च नरवाहनदत्तमयीं तां बृहत्कथामादाय निजनगरमागतस्तत्र-गुणाढ्यशिष्यगुणदेव-नन्दिदेव साहाय्येन-कैलासे शम्भुमुखात्पुष्पदन्तम्, वररुची-भूताच्च तस्माद् भूतले काणभूतिम्, काणभूतेश्च गुणाढ्यम्, गुणाढ्याच्च परम्परया प्राप्तामात्मानम्—तद्विद्याधराद्भुतकथां तत्पूर्वजवर्णनानुक्रमेणेत्थमाकलयाञ्चकार—

इति गुणाढ्यवृत्तान्तः



१. नित्यवीप्सयोः । २. सुप्यजातौ णिनिस्ताच्छील्ये ।

# उदयन-कथा

## ( उत्पत्तिः )

अस्ति वत्सेषु कौशाम्बी नाम नगरी, तस्यां पाण्डवान्वयसम्भवो विष्णुमती-पत्नीकः शतानीको नाम राजाऽभूत्। तेन, पत्न्या सह विस्रब्धव्याहार-विहारैर्यापितास्वपि बह्वीषु निट्स्[1]सु, न पुत्रमुखावलोकनसौभाग्यमलम्भीति सुता-सद्भावखेदखिन्नचेता एकदा विमलदि[2]वि, शारदेऽह्नि, स्वजवेन[3] गरुत्मन्तमप्यधरी-कुर्वन्तमर्वन्तमारुह्य, परनिरासनपरशरासनवरकरः, परन्तपः[4], समन्ततः शकुन्तर-वनिरन्तरदिगन्तरमखिलमृगकुलशरण्यमरण्यं मृगयार्थं गतः, शाण्डिल्यमुनिना सह परिचयमलभत। आभाषणप्रसङ्गेन च मुनिर्भूपतेः पुत्राभावजन्यदशायां दयालुः कौशाम्बीमागत्य पुत्रेष्टियाजि[5]नस्तस्य पत्नीं[6] मन्त्रपूतं चरुं प्राशयदिति यथासमयमन्तर्वत्नी शतानीकपत्नी, अभङ्गुर[7]शुभंयुताविकासमये समये, सहस्रानीकसंज्ञकं सूनुं सुषुवे। शतानीकस्तेनामितां मुदमादधानोऽतिक्रा-न्तशैशवस्य विविधशास्त्रोपशास्त्राकूपारपारदृश्वनः[8] सहस्रानीकस्य राजकृत्वा[9] निश्चिन्तो बभूव।

एवमतिक्रामत्सु दिवसेषु, सम्प्रवृत्तेऽसुरैर्निर्जरसां सङ्ग्रामे शतानीकाय तुरा-साहा साहाय्येच्छया विसृष्टो मातलिः समाययाविति नृपतिर्मन्त्रिमुख्यस्य युगन्ध-राख्यस्य सेनापतिप्रधानस्य सुप्रतीकाभिधानस्य चाभिभावकत्वे समर्पितस्वसूनुसा-म्राज्यशासनोऽपरपाकशासनो यथा, करधृतपरासनशरासनः, सूरंम[10]न्यान् असुरान् संग्रामे संहर्त्तुं सत्वरं मातलिना सहामरावतीमाजगाम। तत्र च सहस्राक्षप्रत्यक्ष-मेव धरातुराषाट्, सांयु[11]गीनः शतानीकः, उत्पतत्कबन्धबन्धुरे समरे सहस्रशोऽसु-रान् तत्साहाय्यसहितानहितान् यमदंष्ट्रादींश्च यमदंष्ट्राऽतिथीन् विधाय, सहयुध्वा[12], स्वयमपि महाध्वाध्वनीनः सँव्ववृते। मातल्यानीतवीतासुदेहं प्रियतममवलोक्य

---

१. 'डः सिः धुट्'। २. 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' अतः 'दिव उत्' इत्युत्वाभावः। ३. 'ऋदोरप्'। ४. 'द्विषत्परयोस्तापेः', 'खचि ह्रस्वः'। ५. 'करणे यजः'। ६. गतिबुद्धीत्यादिना कर्मत्वम्। ७. 'भञ्जभासमिदो घुरच्', 'चजोः कुघिण्ण्यतोः'। ८. 'दृशेः क्वनिप्'। ९. 'राजनि युधिकृञः'। १०. 'आत्म-माने खश्च'। ११. 'प्रतिजनादिभ्यः खञ्'। १२. 'सहे च' इति क्वनिप्।

प्रियपतिवियोगानलमनलापेक्षयाऽधिकतरमसह्यं[1] मन्वाना देवी विष्णुमती तमन्वगात्। राजश्रीश्च सहस्रानीकमशिश्रियत्।

अथ विपक्षविजयोत्सवे वासवेन मातलिं प्रेष्यामरपुरमाकारितः सहस्रानीकोऽपत्नीको नन्दनोद्याने क्रीडतो नितान्तकान्तकान्तान् अमरान् अवलोक्य स्वोचितभार्यार्थी सशोक इव प्रतीयमानो विज्ञाततदाशयेन मघोनोक्तः 'राजन्, विषादेनालम्, तव वाञ्छेयमवश्यं पूर्तिमेष्यति। यतो हि त्वदर्थं निर्मिता त्वया तुल्या भार्या क्षितावुत्पन्ना। एतत्सम्बद्धवृत्तान्तं त्वं मया वर्ण्यमानमाकर्णय—

पुरा पितामहदिदृक्षयाऽहमगमम्। मम पश्चाच्च विधूमनामैको वसुरागमत्। तत्र स्थितेष्वस्मासु, द्रष्टुं विरिञ्चिमाञ्चदलम्बुषाऽप्सरा इति वातेन शरीरस्रद्[2]वांससं तां समवलोक्य विधूमोऽपि सोऽन्तर्धूमायितकामाग्निधूमधूम्राक्षः संजातः।

तद्रूपाकृष्टलोचनाऽलम्बुषाऽपि नालम्बभूव हृद्गतभावं निह्नोतुमिति विदिततदानीन्तनकमलोद्भवभावेन मयाऽविनीतौ तौ मर्त्यौ जायापती भवितुमभिशप्तौ। तयोः हे भूपते, त्वं विधूमो वसुः अप्सराश्च साऽयोध्यायां कृतवर्मणो राज्ञस्तनया मृगावती नाम्नोत्पन्ना ते भाविनी भामिनी। एवं वासववाक्यवायुविधूतभूतपूर्वविधूममदनदहनेन जाज्वल्यमानसस्नेहहृदयो नरपतिरमरपतिसत्कृतिं स्वीकृत्य मातलिना सह स्वपुरीं प्रतस्थे। गच्छन्तं तं तिलोत्तमाऽप्सराः प्रीत्या किञ्चिद्विवक्षया प्रतीक्षितुमीषदाचकांक्ष किन्तु न सोऽवदधौ मृगावतीसंलग्नमना मनागपीत्यनुभूतावमानना विमनास्तिलोत्तमा तमभिक्रुध्य[3] यया हृतमनास्त्वं राजन्, न वचो मेऽवधत्से तस्याश्चतुर्दशसमास्तव वियोगो भविष्यतीति शशाप। तं शापम् मातलिरेव शुश्राव। नरपतिस्तु मनोरथेनायोध्यां, रथेन च कौशाम्बीमुपगम्य, वासवोक्तं सर्वं मृगावतीसम्बद्धमत्यौत्सुक्येन युगन्धरादिभ्यो मन्त्रिभ्योऽभिदधत्तस्याः प्राप्त्यै क्षणमप्यनल्पकल्पमिव मन्वानस्तां याचितुमयोध्यां कृतवर्मणः समीपे प्रैष्यं प्रैषयत्। सोऽपि च निजपत्न्या सह सम्मन्त्र्य स्वानुरूपकृतोत्सवमङ्गलोद्वाहविधिना कान्तालकान्तां तां सुतां सहस्रानीकाय ददौ।

परस्परस्पर्द्धितप्रेमपूर्वकं रममाणयोस्तयोरतिक्रामत्सु दिवसेषु तन्मन्त्रिमध्ये युगन्धरस्य यौगन्धरायणः, सुप्रतीकस्य रुमण्वान्, नर्मसुहृदश्च वसन्तक इमे पुत्रा

१. 'शकिसहोश्च'। २. 'क्विप् च', 'अनिदितां हल उपधायाः क्ङिति', 'वसुस्रंसुध्वंस्वनडुहां दः'। ३. 'क्रुधद्रुहोरुपसृष्टयोः कर्म'।

उत्पन्नाः। कतिपयदिवसैर्नृपपत्न्यप्यन्तर्वत्नी संजाता। तस्याश्चासृक्पूर्ण[1]लीला-वापीनिमज्जनदोहदः समुद्भूतः। तस्यास्तामिच्छां पूरयितुकामो नृपतिर्लाक्षादिरस-निर्भरामेकां वापीमसृक्पूर्णामिव कारयामास। किन्तु तस्यां स्नान्तीं राज्ञीमामिषा-शंकया गरुडान्वयजोऽण्डज एकोऽकस्मात्कस्माच्चित्रिपत्यादायोत्पपात। पतत्रिणा तथाऽपहृतां स्वप्रियामालोक्य तां तदनुपदमन्वेष्टुमिवातिग्ला[2]नस्य तस्य चेतना क्वापि निर्गतेति लून[3]पक्षजीनपक्षीव निस्संज्ञो भूपतिर्भूमौ निपपात। क्षणानन्तर-मवाप्तसंज्ञे राज्ञि, व्योममार्गेण तत्रावतीर्णो मातलिस्तस्मै राज्ञे[4] राध्यमानस्तिलोत्त-माशापस्य यथाप्राक्श्रुतं चतुर्दशवर्षात्मकमवधिमभिदधाविति स्वप्रियतमायाः पुनः संगमेच्छया याथा[5]कथाचेन राजा जीवितुमाचकाङ्क्ष। तेन पक्षीन्द्रेण खमुन्नीतां मृगावतीं च जीवन्तीतिकृत्वोदयाचले परित्यक्तां शोकभयाकुलत्वादेकाकिनीमद्रितटे क्रन्दन्तीमाजगर एको न्यजिग्लसिषत्। किन्तु शुभोदर्का सा निहताजगरेणैकेन दृष्टनष्टेन पुंसा सुरक्षिता। तथापि च पतिविरहिता जीवनधारणायानिच्छन्ती अवन्यां, वन्यवारणस्यैकस्याग्रे साऽऽत्मानमक्षिपत्। तेनापि दययेव परिरक्षिता गिरिप्रपतनकृतमरणमना गर्भभरालसगमना सा भर्तारमनुस्मरन्ती मुक्तकण्ठं रुरोद। तस्यास्तत्क्रन्दनमाकर्ण्य तत्रागतेनैकेन फलमूलार्थिना मुनिपुत्रेण यथा-वृत्तमाकर्ण्य भृशमाश्वासिता कथञ्चिद् जामदग्न्याश्रमञ्च नीता साऽऽश्वासावतार-मिव, स्वतपस्तेजसा उद्यदर्कमिवोदयाचलं कुर्वाणं, जगदग्निमक्षिलक्ष्यीचकार। आश्रितवत्सलो मुनिः प्रणिधानेन सर्वमाकलय्य वियोगविक्लवां तामभाषत— 'पुत्रि, शुचे माऽऽत्मानं देहि, अत्र पितृवंशध[6]रस्ते पुत्रो जनिता, भविता च भर्तृसंगम' इति तेन मुनिनेत्थमुक्ता, अमुक्तात्मभर्तृसंगमाशा सा, आश्रमे तस्मि-न्नाश्रयं जग्राह, असूत च तत्र कतिपयैरेव दिवसैः सुतम्। तस्मिन् कालेऽभून्नभो वाणीत्थम्—'अयमुदयनो नाम्ना महानुभावप्रभावो जातः शिशुः। अस्य सूनुः सर्वविद्याधराधिपो भविष्यति इति। एवं क्रमात्तस्मिन्नेवाश्रमे स्ववयस्यैः सहैध-

---

१. पॄ धातो र्ल्वादित्वात् क्तस्य नत्वम् 'उदोष्ठ्य पूर्वस्य', 'हलि च', 'रषाभ्यां नो णः समानपदे'। २. 'संयोगादेरातोधातोर्यण्वतः'। ३. 'ल्वादिभ्यः', जीन इत्यत्र ग्रहिज्येतिसम्प्रसारणञ्च। ४. 'राधीक्ष्ययोर्यस्य विप्रश्नः'। ५. यथाकथाचेत्यव्ययसंघा-ताद् युवादेराकृतिगणत्वादण्, 'तेन यथाकथाचहस्ताभ्यां णयताविति' अनादरार्थे णे वा सिद्धिः। ६. धरतीति धरः, वंशस्य धर इति पचाद्यच्।

मानः[1] स बालः क्षत्रियोचितैरखिलसंस्कारैः संस्कृत्य सर्वाभिर्विद्याभिर्धनुर्वेदादिभिश्च जमदग्निना व्यनीयत। मृगावती च वत्सस्नेहात्स्वकराकृष्टसहस्रानीकनामाङ्कित-कटकेन तस्यकरो वलयीकृतः।

एकदाऽऽखेटके उदयनोऽटव्यां शबरगृहीतं सुन्दरं सर्पमेकमवलोक्य तस्मिन् दयालुस्तन्मुक्त्यर्थं शबरमभिहितवान् किन्तु सोऽवादीत्—प्रभो, एष सर्पो मदीया जीविका। विपन्नपूर्वपन्नगो[2] न मया मन्त्रौषधिबलाद् अवष्टब्धोऽयमटव्यामु-पलब्धः। इमं खेलायन्नेवाहं वर्ते[3]। एतदाकर्ण्य त्यागी उदयनस्तं जननीबद्धं कटकं तस्मै शबराय दत्त्वा पन्नगं तममोचयत्।

गृहीतकटके च गते शबरेऽतिप्रीतः पन्नग उदयनमुवाच—'महात्मन्, अहं वासुकेर्ज्यायान् भ्राता वसुनेमिर्नाम, त्वमिमां मत्संरचितां वीणां गृहाण, एवं तेनोक्त आत्तवीणोऽतिप्रीणः[4] उदयनः स्वमातरमागात्। इतः स शबरश्चोदयन-प्रदत्तं राजनामाङ्कितं कटकं विपणौ विक्रीणानो राजपुरुषैर्निगृह्येनसभमानीतः[5], 'कुतस्त्वयैष कटक उपलब्ध' इति राज्ञा सहस्रानीकेन सदुःखं पृष्टः शबरस्तदा-गमप्रकारं सविस्तरं वर्णयामास, तदानीमेव दिव्यया वाण्या 'राजन्नधुना स ते पापः क्षीणः, जमदग्न्याश्रमे त्वदीया जाया मृगावतीदानीं पुत्रवती वर्तते' इवमुक्तः सहस्रानीकः समुपलब्ध प्रियजायाजातोदन्तोऽनुभूतातिमुत्कः, प्रियतमा-वाप्तिसमुत्कः, तं शबरमेव पुरस्कृत्यापरेद्युरुदयाचलमनुप्रतस्थे।

अथ समतिक्रान्तदवीयोऽध्वनेऽनुभूयमानातिश्रान्तये दिने तस्मिन्नेकस्मिन् कासारतटे कृतवसतये, भूपतये[6] सायं सेवासंलग्नः संगतकाभिधः कथकः काञ्चन-मनोविनोदिनीं कथां कथयितुम् प्रतिश्रृण्वन्नवादीत् 'देव, अलमत्यनुतापेन; आसन्न एव ते देव्याः संगमः। संयोगवियोगसूत्रसम्बद्धा हि प्राणिन इत्येतत्सम्बन्धां कथामेकां श्रृणु—

एवं ब्रुवाणाय संगतकायानुगृणन्[7] नृपतिर्विस्तरेणेमां कथां श्रोतुमवहितमना

१. एधधातोः शानचि आने मुक्। २. पन्नं पतितं गच्छतीति विग्रहे 'सर्वत्रपन्नयोरुपसंख्यानम्' इति डः। ३. सम्पृचानुरुधेति विणुन्। ४. ल्वा-दिभ्यः इति नत्वे, णत्वम्। ५. इनस्य सभेति विग्रहे 'सभाराजाऽमनुष्यपूर्वा' इति नपुंसकत्वम्। ६. 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता' इति चतुर्थी। ७. 'अनुप्रतिगृणश्च'।

बभूव— आसीत् पुरा मालवे यज्ञसोमाख्यो विप्रः। तस्य कालनेमि-विगतभयनामानौ द्वावतिजनप्रियौ पुत्रावुत्पन्नौ, पितरि[1] मृते तौ तीर्णशैशवौ भ्रातरौ विद्याप्राप्तिकामनया पाटलिपुत्रकं प्रययतुः। तत्र समुपात्तविद्ययोस्तयोस्तदुपाध्यायस्य देवशर्मणः सुताभ्यां परिणीतयोश्च तयोः कालनेमिरितरांस्तत्रत्यान् धनाढ्यानवलोक्येर्ष्यापरः कृतव्रतोऽत्युत्तमैराहवनीयद्रव्यैर्[2]लक्ष्मीमियाज, सन्तुष्टा च सा साक्षात्समभाषत—'त्वमनल्पं धनं सार्वभौमं पुत्रञ्च समवाप्स्यसि, किन्त्वमर्षकलुषितात्मवृत्तिर्हि श्रियै[3] त्वमहौषीरिति चौरसदृशो 'वधोऽन्ते ते भविष्यति', एवमुक्त्वा श्री[4]रन्तरधात्।

कालक्रमेण कालनेमिरप्यपरिमितधनः समुत्पन्नसूनुश्च संजातः, पुत्रस्य च श्रीवरात्प्राप्तिमाकलय्य श्रियै[5] श्लाघमानः कालनेमिस्तस्य श्रीदत्त इति नाम चक्रे। क्रमाद्यौवनमवतीर्णः श्रीदत्तो, विप्रः सन्नप्यस्त्रेषु, बाहुयुद्धेषु, चाप्रतिमः पृथिव्यां सँवृत्तः। कालनेमेर्भ्रातुर्विगतभयस्य च भार्या भुजङ्गदष्टा नष्टेति तीर्थार्थी स देशान्तरमियाय, कालनेमिपुत्रस्य श्रीदत्तस्य च तदानींतनगुणज्ञभूपतेर्वल्लभशक्तेः पुत्रेण विक्रमशक्तिना मैत्री समजायत, किन्त्वतितरस्वितया, तस्याभिमानित्वेन दुर्योधनभीमयोरिवानयोः सहवासः शैशवे समवर्तत, अनन्तरञ्च विप्रस्यास्य वज्रमुष्टिबाहुशालिनामानौ द्वाववन्तिजौ क्षत्रियौ मित्रतापन्नौ, अथान्येऽपि गुणग्राहिणो दाक्षिणात्याः मन्त्रिपुत्राश्चास्य मैत्रीमापन्नाः।

एकस्मिन् प्रावृ[6]षिके दिने श्रीदत्तः सराजपुत्रः सान्यमित्रश्च विहर्त्तुं जाह्नवीतटमाटत्। तत्र राजपुत्रभृत्यास्तं राजसुतं स्वनृपं चक्रुरिति श्रीदत्तोऽपि तत्कालं निजमित्रै राजा कल्पितः, एतेन संजातरोषो राजपुत्र आहवाय तमाशु प्रवीरं विप्रवीरम् आजुहाव। किन्तु श्रीदत्तेन बाहुयुद्धे राजपुत्रो निर्जित इति प्रकारान्तरेण सभृत्यो राजपुत्रस्तमजिघांसत्। राजपुत्रस्यैतदभिप्रायं ज्ञात्वा शङ्कितः श्रीदत्तः समित्रस्तत्समीपादपासरन् मध्ये गङ्गाजलौघेन ह्रियमाणां कांचित् स्त्रियमवलोक्य जलात्तामुद्दिधीर्षुर्बाहुशालिप्रभृतीन् षडपि स्वसखान् तत्रैव स्थापयित्वा तरङ्गिणी-

---

१. 'यस्य च भावेन भावलक्षणम्'। २. 'यजेः कर्मणः करण संज्ञा सम्प्रदानस्य च कर्म संज्ञा'। ३. 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्'। ४. क्विब्वचिप्रच्छ्यायेति श्रिधातोः क्विप्, दीर्घश्च। ५. 'श्लाघह्नुङ्स्थाशपांज्ञीप्स्यमानः' श्रियं स्तुवन्नित्यर्थः। ६. 'प्रावृषष्ठप्'।

मवततार, किन्तु केशेषु प्राप्तामपि दूरमम्भसि मग्नां तामनुसरन् सोऽपि मंक्षु न्यमाङ्क्षीत्, क्षणादेव चात्मानमभितो रमणीयमेकमुद्यानं तत्र शैवं दिव्यं देवालयं चैकमपश्यन् न पुनर्नारं[1] नापि नारीम्; इत्याश्चर्यचकितो भक्त्यार्थं[2] भविकं धारयन्तं भगवन्तं भवं प्रणत्य तत्रैवोद्याने क्षपां तां क्षपयामास। प्रातश्च तत्रैवायाता सकतिपयवयस्या सम्यक्सम्पादितपशुपतिवरिवस्या सा स्वावासं परावर्तमाना श्रीदत्तेनानुगता। किञ्चिद्दूरं गत्वा समासादितनिजसदनान्तः प्रविष्टा शीलसौजन्यव्यवहाराय[3] परिक्रीतानामान्तर्वेश्मिकं[4] वनितानां सहस्रेणोपसेविता मानिनी सा सावमानेव तदन्तिकोपविष्टमपि श्रीदत्तमभाषमाणेव पर्यङ्के न्यषीदत्। अनन्तरमकस्मादेव प्रवृत्तरुदितां तामवलोक्य श्रीदत्तस्यापि चक्षुषी अबाष्पायेतामिति[5] तेन तद्दुःखकारणं पृष्टा सा कथंचिदित्थमुवाच—'दैत्यपतेर्बलेः पौत्री दशशतकेषु प्रेष्ठा ज्येष्ठाऽहं विद्युत्प्रभा नाम। विष्णुना दीर्घबन्धनं नीते अस्मत्पितामहे पितापि नस्तेनैव बाहूबाहवि युद्ध्वाऽध्वगोऽभवत्प्रेतपतिपुर्याः। पुर्याश्चास्याः कुर्यात गमनमित्यस्मान्निर्वास्य तेनैव विष्णुना कुबेरशापात्सिंहत्वमवाप्तो यक्षश्चैकोऽस्मत्पुरीप्रवेशावरोधको विहित इति केसरी स त्वया जीयताम्। एतदर्थमेव त्वमिहानीतः। पराभूताच्च तस्मादवाप्तमृगाङ्ककाख्यखड्गस्त्वं सार्वभौमो राजा भविष्यसि। एतदाकर्ण्यातीततद्दिवसः श्रीदत्तोऽन्येद्युस्तत्सिंहहननाय ताः कन्या अनुगच्छन् तत्पुरं गत्वा हत्वा च बाहुयुद्धेऽत्युद्धतं तं केसरिणं शापविमुक्ताच्च पुरुषाकृतेस्तस्मादवाप्तोक्तखड्गोऽसुराङ्गनादुःखभारेण सहैवादर्शनतां च गते तस्मिन् यक्षे सानुजया तया दैत्यकन्यया सह श्रीदत्तस्तत्पुरं विवेश। दैत्यसुता च तत्र तस्मै[6] विषघ्नाङ्गुलीमकमेकं ददौ। कतिपयदिनानि तत्र स्थितः श्रीदत्तः पारस्परिकपरिचयाधिक्यात्तस्यां साभिलाषो जात इति गृहीतग्राहभयापहखड्गहस्तो वाप्यां स्नातुं निर्दिष्टः सन् तथा कुर्वन्नवतीर्णपूर्वजाह्नवीतटे समुदमज्जत्। इत्थं खड्गाङ्गुलीयहस्तः, पातालादुत्थितः, स सासुरसुताभिलाषावञ्चनाय[7] मे समपद्यतेति खिन्नचेताः स्वसुहृद्भ्यः[8] स्वगृहाभिमुखमागच्छन्निष्ठुरकाख्यं स्वमित्रं मार्गे ददर्श। पृष्टस्वजनो-

---

१. जलम्। २. 'धारेरुत्तमर्णः'। ३. 'परिक्रयणे सम्प्रदानमन्यतरस्याम्'। ४. वेश्मनि इत्यन्तर्वेश्मम् तत्र भवमिति विग्रहे 'अन्तःपूर्वपदाट्ठञ्'। ५. 'बाष्पोष्मभ्यामुद्वमने' इति क्यङन्ताल्लङ्, प्रकृतिभावः। ६. 'चतुर्थी सम्प्रदाने'। ७. 'क्लृपि सम्पद्यमाने च'। ८. 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' सुहृदोऽन्वेष्टुमित्यर्थः।

दन्तश्च तेनैवमभिहितो यत् त्वां गङ्गान्तर्निमग्नं दृष्ट्वा बहून् दिवसानन्विच्छन्तोऽप्यप्राप्य त्वद्वियोगशोकसन्तप्तमानसाः स्वशिरांसि समुच्छेत्तुमुद्यता वयम्, 'पुत्राः, मा साहसमेवं कुरुत। हितं, स्वस्ति च युष्मभ्यं[1] भविष्यति। जीवन् वः सखा समेष्यति' एवमाश्वासयन्त्या देवगिरा तथाभूतसाहसिककार्यान्निवारिताः। ततश्च त्वत्पितुः पार्श्वं प्रतिगच्छन्तो वयं सत्वरमागत्य मार्गे पुत्रेणैकेनेत्थमुक्त्वा तन्नगरे प्रवेशाय[2] निरुद्धा यद्विपन्ने राजनि वल्लभशक्तौ, मन्त्रिभिः सम्भूय राज्येऽभिषिक्तो विक्रमशक्तिरपरेद्युः कालनेमिगृहमभ्येत्यामर्षनिर्भरः 'क्व ते पुत्रः श्रीदत्त' इति तं पप्रच्छ। किन्तु तेन 'नाहं राजन्, वेद्मी'त्युक्तोऽमुना पुत्रः क्वापि प्रच्छादितः इति धिया कालनेमिः शूलमारोप्य निषूदितः। एतद्दृष्ट्वा तदीयभार्याऽपि महता पतिशोकेन दिवंगता। श्रीदत्तस्तदीयवयस्याश्च विक्रमशक्तिना हन्तुमन्विष्यन्ते। एतदाकर्ण्यास्माकमितरैः पञ्चभिः सखिभिर्बाहुशाल्यादिभिः परस्परं सम्मन्त्र्य निजां जन्मभूमिमुज्जयिनीं गच्छद्भिस्त्वदर्थं प्रच्छन्नोऽहमिह स्थापित इति हे मित्र, तत्रैव सुहृदन्तिकमुपसर्पावः। निष्ठुरकादेवं निष्ठुरोदन्तमाकर्ण्योन्मज्जनान्तं स्ववृत्तान्तञ्च तमुपवर्णयन्नवसरं प्रतीक्षमाणः श्रीदत्तस्तेन सह स्वसुहृद्भिर्भायोज्जयिनीमाजगाम। तत्र बाहुशालिसदने कृतवसतिरयमेकदा समित्रो मधुमाससमुत्सवमालोकयितुमुपवनमुपगतस्तत्रागतां राज्ञो बिम्बिकेः सुतां मृगाङ्कवतीमालोकितवान्। किन्तु तयापहृतहृदयो यदैव तदिङ्गितज्ञेन बाहुशालिना सह तस्याः पार्श्वमुपगन्तुं[3]मना बभूव तत्क्षणमेव राजपुत्री सर्पेण दष्टेति तदनुचरा उच्चैराचक्रन्दुः। समाकर्णिततत्कोलाहलः श्रीदत्तश्चाक्रन्दिकीभूय[4] विषघ्नं[5] स्वाङ्गुलीयकं तस्याः कनिष्ठिकायां निवेशितवान्। तेन च सद्यः प्रत्युज्जीवितायां तत्पिताऽतिप्रसन्नोऽपरिमितं धनं तस्मै ददौ यच्चाखिलं स बाहुशालिपित्रे व्यश्राणयत्। तदनन्तरमङ्गुलीयकप्रत्यर्पणव्याजेन समागता मृगावत्याः सखी भावनिका स्वसख्याः श्रीदत्तासक्तिं तस्मै न्यवेदयदिति स कृतबाहुशालिपरामर्शो मृगावतीमपहृत्य मथुरायां तया सह प्रच्छन्नरूपेण स्थातुमभिप्रतस्थे। किन्तु महाबलाधिकृतश्चैकः

---

१. 'हितयोगे च', 'नमः स्वस्तीति' च चतुर्थी। २. 'तुमर्थाच्च भाववचनात्'। ३. तुमुन्ण्वुलाविति तुमुनो मकारस्य—'तुं काममनसोरपि' इति मनसि लोपः। ४. आक्रन्दं दुःखिनां रोदनस्थानं तद्धावतीत्यर्थे 'आक्रन्दाट्ठञ् च' इति ठञ् ५. घञर्थे कविधानम्, गमहनजनइत्युपधालोपे होहन्तेरिति कुत्वम्।

साप्तिको[1] मार्गे विश्रामं कुर्वंस्तस्मान्मृगावतीमाच्छिद्याश्वमारोह्य सत्वरमित्वरो[2]बभूव। श्रीदत्तस्तमनुसरन् साम्ना कार्यस्य सिद्धिञ्चानाकलय्य 'चोर! चोर[3]!! अलमहं तुभ्यमिति[4] कत्तृणाय[5] मन्यमानोऽहं त्वामेव हन्मीत्युक्त्वा पादैकगुल्फेन तमा गृह्णानो भ्रामयित्वा पाषाणे चैकस्मिन्निक्षिप्य सञ्चूर्णयन्नन्येषां परेषामधिकां दिशि दिशि कांदिशीकतां[6] दिदेश। समुपात्ततरसस्तिश्च मृगावत्या[7] सह पुरस्ससार। किन्तु नातिदविष्ठमार्गंगमनानन्तरमेव व्रणितः पतितोऽश्वोऽसून् विजहौ। एतस्मिन्नेवावसरे मृगावती उदन्याजन्यातिकष्टपीडिताऽभवदिति श्रीदत्तस्तां तत्रैव परित्यज्य प्रतिपदं पयः पर्यन्वेषणपरोऽपि नाऽऽसाद्य सलिलं समवाप। अस्तमिते च भगवति गभस्तिमति समवाप्तसलिलोऽपि परावर्तमानो मार्गपरिभ्रष्टोऽटव्यामटाव्यापर एव क्षपितततत्क्षपः प्रातस्तत्रागतो मृगावतीविरहितं तत्स्थानमवलोक्य भूमिस्थापितनिजखड्गमृगाङ्कस्तामितस्ततोऽवलोकयितुं तरुमेकमारुरोह। एतस्मिन्नेव काले तेनैव पथा गच्छन्नेकः शवरस्तस्य तं खड्गमुपाददाविति तमवलोक्य वृक्षादवरूढः श्रीदत्तस्तस्मान्मृगावतीवृत्तान्तमपृच्छत्। शबरोऽवादीत् यत्सा मम पुरे वर्तते; त्वमेभिर्मम सार्थिभिस्तत्पुराय[8] गच्छ। अहं तत्रैवागत्य तव खड्गमिमं दास्यामीति। एतदाकर्ण्य तत्र गतः श्रीदत्तोऽध्वपरिश्रान्त्या क्षणं निदद्रौ। सुप्तोत्थितश्च स निगडितपादमात्मानमुपलभ्यातिचिन्तापरवशस्तत्रागतया[9] मोचनिकानामकभुजिष्ययाऽभिहितो यदिहागच्छता त्वया न समीचीनमाचरितमिति। कार्यपरवशोऽनार्यः स शबरः श्रीचण्डनामकोऽद्य बहिर्गतः। आगमनसमकालमेव स ते देहेन देव्यै बलिमुपहरिष्यति। एतदर्थमेव त्वमिह विन्ध्याटवीतः समानीतः। अस्तीदानीमेक एव तव मोक्षोपायो यत्त्वं सुन्दरीनामधेयायास्त्वदवलोकनमदनचिह्नोपज्ञेयायास्तच्छबरसुताया आकाङ्क्षां पूरयेः। एतदाकर्ण्य मुमुक्षैकोद्देश्यः श्रीदत्तश्रेष्ठीकथनमेव तत्कालोचितं

---

१. सप्तिनाचरतीत्यर्थे 'चरति' इत्यनेन ठक्। २. 'इण् नशजिसर्तिभ्यः क्वरप्'। ३. वाक्यादेरामन्त्रितस्येति भर्त्सने द्वित्वम्। ४. नमःस्वस्तिस्वाहेति चतुर्थी। ५. 'तृणे च जातौ' इति कोः कदादेशे 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति चतुर्थी। ६. मयूरव्यंसकादित्वात् सिद्धिः। ७. 'सहयुक्तेऽप्रधाने'। ८. गत्यर्थकर्मणीति चतुर्थी। ९. 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इत्यङ्।

मन्यमानो गान्धर्वेण विधिना तां हस्तेकृत्य[1] प्रतिनिशं च तया सह रममाणः सस्नेहमनेहसमत्यवाहयत् ।

अथ कालेनान्तःसत्त्वा सुन्दरी प्रकाशिताखिलतत्त्वां स्वमातरं कृत्वा जामातृ-प्रेमपरायत्तया तया श्रीदत्तं मोचितवती । ततः क्षिप्रं निर्गमनार्थं च निर्दिशन्ती तज्जननी, निर्गमनसमये 'न त्वया सुन्दरी विस्मृतिपथातिथीकरणीयेति' तमवोचत् । श्रीदत्तोऽपि च मदीयः खड्गस्तव पित्रा गृहीत इति सुन्दरीमुक्त्वा तस्मात्[2] प्रस्थितो मृगावतीं मृगयमाणः पुनरपि स्वाश्रान्तिमनिश्वासस्थलमवाप । तत्र चागच्छन्तमेकं व्याधं प्रदत्तमृगाङ्कवतीपरिचयस्त्वयैवंभूताभिजाता काचिन्नारी समवलोकिता भवेदित्यपृच्छत् । व्याधोऽवादीत्-'आम्, तामहं जानामि, श्वापदचौरादिभ्यो[3] भीतैकाकिनी साऽस्मात्स्थानात् स्वपुरं नीता । किन्तु युवकशबराकीर्णमेतत्पुरमेवंभूताया युवतेः कृतेऽसुरक्षितमित्यवगच्छता मयोपमथुरं नागस्थलनामकग्रामे धर्मा[4]दप्रमाद्यतो विश्वदत्तनामकस्थविरविप्रस्य गृहे निक्षेपरूपेण स्थापिता वर्तते । तदाकर्ण्य नागस्थलमागतो विश्वदत्तयाचितनिजपत्नीकः श्रीदत्तो विश्वदत्तेनाभिहितो यन्मया सा राज्ञः शूरसेनस्य मन्त्रिपुरोहितगृहे निवासितेति त्वमिहैवाद्य तिष्ठ, प्रातस्तरां तत्र गन्ताऽसीति समाकर्ण्य श्रीदत्तस्तत्र क्षपितत्तत्रिस्रः स्वप्रियापर्यन्वेषणपरिश्रमाद[5]पराजयमानः प्रातर्मथुरामाययौ । तत्र नगराद्बहिरेकस्यां वाप्यां दीर्घाध्वमलिनमालिन्यापचिकीर्षया स्नानसुरवतीर्णश्चौरनिवेशितमञ्चलबद्धहारं वस्त्रमेकमलभत । तच्चादायालक्षिततद्बद्धतद्धारः प्रियां दिदृक्षुः श्रीदत्तः मथुरां प्रविवेश । तत्र नगररक्षिभिस्तद्वस्त्रप्रत्यभिज्ञानपूर्वकहारावाप्त्या चौरोऽयमित्यवष्टभ्य नगराधिपसमीपमानीतो वधायादिष्टः । परेद्यवि पश्चात्प्रहतडिण्डिमं वध्यभूमिं नीयमानं तं राजमार्गे मृगावत्यवलोक्य मन्त्रिमुख्यमाख्यत् यदयं मे भर्त्ता वध्यभूमिं नीयते । एतदाकर्ण्य राजानं विज्ञाप्य वधकाँश्च तद्वधा[6]न्निवार्य स मन्त्री श्रीदत्तमात्मगृहमानयत् । पारस्परिकसंलापप्रसंगेन संजाते च पारस्परिकपरिचये, श्रीदत्तः स्वपितृव्यपादयोरपतत् । अवर्णयच्चाखिलमुदन्तम् । सोऽपि चावोचत्-'पुत्र, मा भैषीः, ममैका यक्षिणी सिद्धा । सा मह्यं सहस्रपञ्चक-

---

१. 'नित्यं हस्तेपाणावुपयमने' । २. 'अपादाने पञ्चमी' । ३. 'भीत्रार्थानां भयहेतुः' । ४. 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' । ५. 'पराजेरसोढः' । ६. 'वारणार्थानामीप्सितः' ।

मश्वानाम्, कोटिसप्तकञ्च स्वर्णस्यादादिस्यपुत्रस्य[1] मे तत् क्वेवोपयोगं[2] यास्यतीति सर्वं तत्तवैव। एतदुक्त्वा स श्रीदत्ताय तत्प्रियां मृगावतीं दत्त्वैकान्ते तमेवमवोचत्। अस्य राज्ञः शूरसेनस्य सुताऽवन्तिदेशे नेतव्या, तदाज्ञया तत्र देया चेत्येतेनैवापदेशेनैनां नीत्वा तुभ्यं दास्यामीति तदनुगे बले सम्प्राप्ते, मयि च तत्र वर्तमाने, श्रिया समादिष्टमचिरेणैव त्वं राज्यमवाप्स्यसीति। कृतैतन्निश्चयौ तौ पितृव्यभ्रातृष्पुत्रौ शूरसेनसुतामादाय ततः प्रस्थितौ। मार्गे विन्ध्याटव्यामकस्माच्चौरशबरसेनया महत्या शरवर्षिण्याऽवरुद्धावित्युभयतः शस्त्रसम्पाते सम्प्रवृत्ते, विहतान्यसैन्यः प्रहारमूर्च्छितस्तस्करापहृतसर्वस्वः, श्रीदत्तः शबरपल्लीं नीतः। तत्र च भीषणे चण्डिकासद्मन्युपहाराय समानीतं तं देवीदर्शनार्थमागता ससुता तत्पल्लीपतिसुता सुन्दरी समपश्यत्। तत्र परिचितनिजपतिका सा सर्वान् दस्यूनपवार्य परमानन्दतुन्दिलनी[3] तं निजसदनमनयत्। तत्र तत्त्राकरोष्वा[4]-नन्यसन्ततेः दिवं गच्छतो निजपितुः समवाप्तं सराज्यं स्वापतेयं[5] तदीयं मृगाङ्कखड्गञ्चेति तत्रैव परिणीतसूरसेनसुतः कालनेमिसुतः ( श्रीदत्तः ) तन्नगरनरेशः समपद्यत। अथ च प्रैष्यं प्रेष्य समाहूतौ बिम्बकिसूरसेनावपि ससेनौ तत्रायातावबुद्धसम्बन्धौ परमानन्दमविन्देताम्। ताभ्यां श्वशुराभ्यां सहितेनैव च श्रीदत्तेन जनकवधजन्यमन्युहुताशनोऽपि विक्रमशक्त्याहुत्या सन्तर्पितः। एवमुत्तीर्णसकलवियोगव्यसनार्णवः श्रीदत्तोऽब्धिवलयां मेदिनीमवाप्य मृगावत्या सह भुवं बुभोज[6]।

इत्थं धीरधारयाँ[7] अपारयाऽऽत्मशक्त्या समुत्तीर्णव्यसनाकूपाराः कल्याणतटभाँजो[8]भवन्तीति तवापि श्वः परश्वो वावश्यं देवीसङ्गमसम्भवः।

संगतकमुखादेवमाकर्णितकथो नृपः सहस्रानीको दयितासंयोगसमुत्सुकोनीतनिशः प्रातरेव प्रियां प्रति प्रस्थितस्तस्मात् स्थानाद्[9] योजनानि वर्तमानं जमदग्नेराश्रमं कतिपयैरेव प्रयाणकैरवाप। तत्र तं मुनिं प्रणम्य स्वीकृततत्कृतातिथ्य आसने समुपाविशत्। मुनिरपि च तस्मै राज्ञे सतनयां तत्पत्नीं मृगावतीं

---

१. अविद्यमानपुत्रस्य (निःसन्ततेरिति भावः)। २. 'एवे चानियोगे' इति पररूपम्। ३. 'तुन्दादिभ्य इलच्चे'त्यत्र चकारादिनिस्ततो ङीप्। ४. 'देये त्रा च,' तदधीनमकरोदिति भावः। ५. 'पथ्यतिथिवसतिस्वपतेर्ढञ्'। ६. 'भुजोऽनवने' इत्यात्मनेपदनियमाद्रक्षणार्थे परस्मैपदम्। ७. 'अनुपसर्गाल्लिम्पविन्दधारिपारि'—इत्यादिना शः। ८. 'भजो ण्विः'। ९. 'यतश्चाध्वकालनिर्माणं तत्र पञ्चमी', 'तद्युक्तादध्वनः प्रथमा सप्तम्यौ'।

समर्पयामासेति शापावग्रहविदीर्णोभयहृदयस्थलं संयोगानन्दामृतधारासारेण पङ्किलत्वमापेदे ।

अन्येद्यू राजा सहस्रानीको जमदग्निमामन्त्र्य सजायाजातस्तस्मादाश्रमात्प्रस्थितः क्रमात्कौशाम्बीमवाप्य स्वमन्त्रिपुत्रवसन्तकरुमण्वद्योगन्धरायणसहायके स्वयवीयःसूनावुदयने न्यस्तभारो वर्षीयःसचिवप्रियतमासहायो महाप्रस्थानाय द्रुतं हिमगिरिमशिश्रियत् ।

इत्थमवाप्तवत्सराज्योदयनो, यौगन्धरायणादिविश्वस्तसमस्तमन्त्रिवर्गविन्यस्तराज्यभारो, मृगयायां, विशेषेण हस्तिबन्धने, वसुनेमिप्रदत्तघोषवतीवीणावादने वा समयमतिवाहयन् 'न मे कुलानुरूपा भार्या वर्तते, एका वासवदत्ताख्या चण्डमहासेनसुतोज्जयिन्यां वर्तते कथं सा प्राप्येति' चिन्तातुरोऽभवत् । तत्र चण्डमहासेनश्चापि मद्दुहितुरनुरूपः क्वापि कोऽपिभर्त्ताऽत्र भुवि नावलोक्यते, एकश्चास्त्युदयननामकः स तु मे विपक्ष इति कथं स मे वश्यो जामाता च भवेदिति विचारपरायणोऽभवत् । एवं विचिन्तयँश्चण्डमहासेनश्चण्डीमन्दिरमागत्याभ्यर्चितचण्डीकः 'राजन्नेतत्तव वाञ्छितमचिरेण सम्पत्स्यत' इत्यशरीरिणीं वाचमश्रौषीत् । एतेन सुसन्तुष्टो नृपतिर्निजसदनमागत्य मन्त्रिबुद्धदत्तप्रदत्तपरामृष्टिमनुसृत्य पूर्वं साम्नैव कार्यसाफल्यमाकलयन् कलय एवानल्पचतुरिमजल्पाकं प्रैषमेकमुदयनं प्रति प्रहिण्वन्नैदम्पर्यमादिदेश—'दूत, मद्वचनादुदयनो वाच्यो यन्मदीया पुत्री गान्धर्वे तव शिष्या बुभूषुरिति स्नेहश्चेदस्मासु ते स्यादस्मत्सदनमासाद्यैहैव सा शिक्षेलिमेति' । प्रैष्यश्च स्वकर्णदेशाध्वनीनीकृततन्निदेशः कौशाम्बीमनुप्राप्योदयनमवगतचण्डमहासेनसन्देशमकरोत् । समाकर्णिताशिष्टजनोचिततद्वचोऽनुभूतावमाननो वत्सराजश्च 'त्वत्पुत्री मच्छिष्यतां[1] अभिलाषुका चेदिहैव प्रहेतव्या सेति प्रतिसमादिशन्नपि तं कौशाम्बीमानिनीषुश्चण्डसेनमभिषेणयितुम् यौगन्धरायणेन समं सममन्त्रयत । परं तच्छुभेच्छुनाऽमुनाऽधुना महाराज, नैतत्साम्प्रतम्; महाप्रभाववान् हि चण्डमहासेनः; राजन्वती चोज्जयिनी तेनैव जनैरुच्यते । तद्गतं किञ्चिदुपवर्ण्यमानं मया श्रुतिपथमवतार्यताम् इति तदभिषिषेणयिषानिषिषेधयिषुणाऽवाचि—

1. 'लषपतपद'—इत्यादिना उकञ्, 'न लोकाव्ययनिष्ठेति' षष्ठीनिषेधः ।

अस्ति सुधाधवलितप्रासादा. प्रस्फुरद्भास्वरपताकाभिरुपहसन्तीवामरावतीमुज्जयिनी नाम नगरी। तत्र शास्त्ययं राजा महासेनोराजसेनिः। स चायमेकदा न मेऽनुरूपः खड्गो नापि च कुलोद्भवा भार्येतिचिन्ताकुलश्चण्डिकामन्दिरमागत्य निराहारश्चिरं चण्डिकामाराधयन्नुत्कृत्योत्कृत्य स्वक्रव्येण[1] हव्यवाहनमयष्ट। तेनातिप्रीता देवी कात्यायनी[2] खड्गमेकमस्मै ददती समुवाच—'पुत्र प्रीताऽस्मि ते; गृहाणेममसिमस्यसेरस्य साहाय्येन परापराजेयस्त्वम्। किञ्च, अचिरादेव त्वं त्रैलोक्यसुन्दरीमङ्गारकासुरसुतामङ्गारवतीं भार्यामवाप्स्यसि। यतो हि त्वया स्वकऽग्रहवनरूपमतीव चण्डं कर्म कृतमित्यद्य प्रभृति चण्डमहासेन इत्याख्याञ्च यास्यसीति। एवमुक्त्वा प्रदत्तखड्गा देवी समतिरस्यत्। राजा च निजप्रासादमासाद्य तत्खड्गप्रभावेणैरावतकल्पस्वकीयनडागिरिगजसाहाय्येन च ससुखं निवसन्नुपाध्याये[3]भ्यो विविधशास्त्रोपदेशानाददानोऽवर्तत।

एकदा स मृगयायै वनं गतोऽकाण्डपिण्डितं नैशं तम इव दिवा, घोरघोणं घोणिनमेकमचिलक्ष्यीचकार। प्रखरतरशरैराहतोऽपि शूकरोऽनवाप्तमर्म एव पलायमानो बिलमेकमविशत्। समुत्सृष्टस्यन्दनो जयसेननन्दनोऽपि गृहीतशरासनः शूकरमनुसरन् सुषिरा[4]न्तरं प्रविश्य नगरवरमेकमपश्यत्। तदन्तर्दीर्घिकातटे सविस्मयं निषीदँश्चातिसुन्दरीं कन्यकामेकाञ्चावालोकत। सा च राजानमालोक्य प्रेमरसासारवर्षिणा चक्षुषा स्नपयन्तीव तदन्तिकमागत्य, 'कस्त्वम्' कस्मात् कुत आयात' इत्यादि प्रश्नानन्तरमवाप्तयथातथोत्तरा विमुक्तधैर्यं रोदितुमारभत। रोदनहेतुमनुयुक्ता च साऽब्रवीत्—योऽयं वराहोऽत्र प्रविष्टः सोऽङ्गारकाभिधो दैत्यः। अहञ्चास्मा[5]ज्जाताऽङ्गारवतीनाम्ना कन्या। अयं हि शापदोषाद्राक्षसीभूतो वज्रमयो महासुरस्तृष्णाश्रमार्त इति भवन्तं प्राप्तमपि परित्यज्य परित्यक्तवराहरूपः क्षणं शय्या[6]या विश्राम्यति। सुप्तोत्थिते चास्मिन्न ते श्रेयः इति निश्चयमनुचिन्तयन्त्या मेऽन्तःसन्तापक्वथिताः प्राणा बाष्पबिन्दुरूपेण गलन्ति। श्रुत्वैतदङ्गारवतीवचनो राजा, स्नेहस्ते मयि चेत्प्रबुद्धस्य तस्याग्रे त्वं

---

१. 'यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञेतिवाच्यम्'। २. 'सर्वत्र लोहितादिकतन्तेभ्यः'। ३. 'आख्यातोपयोगे'। ४. 'ऊषसुषिमुष्कमधोरः', 'मयूरव्यंसकादयश्च'। ५. 'जनिकर्तुः प्रकृतिः'। ६. 'ल्यब्लोपे कर्मण्यधिकरणे च' ( शय्यायामुपविश्येति भावः )।

हृदिहि। रोदनहेतुमनुयुञ्जानं च तं 'केनापि त्वयि व्यापादिते का मे गतिर्भवेत्' इति रोदनहेतुश्च तं वद। एवमुक्त्वा साऽसुरायणी[1] यथानिर्दिष्टमुच्चरन्ती पित्रा प्रत्युदतारि पुत्रि मामिके[2], सर्वं हि मामकीनं शरीरं दम्भोलिघटितम् एकश्च वामकरे छिद्रं तच्चापि चापेन रचयते। एवं स्वसुतामाश्वासयतो दैत्यस्य सर्वं भेदं तत्रैव तस्मान्निलीनो[3] नृपः समाकर्णयामास।

तदनन्तरं स दैत्य उत्थाय स्नातः कृतमौनो भगवन्तं हरं पूजयितुं प्रवृत्ते। एतस्मिन्नेवान्तरे समाकृष्टशरासनेन नृपेण तत्रोपेत्य स दैत्यः रणायाहूयमानः समुत्क्षिप्तवामहस्ततलं क्षणं प्रतीक्षितुमसंकेतदिति समवाप्तधनुर्विद्याविशारदिम्ना[4] राज्ञा तस्मिन्नेव मर्मस्थले पृषत्केनैकेन हतो घोरं रावं कुर्वन्निरसुरवन्यां न्यपप्तत्। राजा चापि सममङ्गारवत्योज्जयिनीमागत्य परिणीय च तां तत्र तस्यां पालक-गोपालकनामानौ द्वौ पुत्रौ समुत्पादयामास। ततस्तेन तुष्टस्तुराषाट् स्वप्नेऽवोचत् यत् मत्प्रसादादनन्यसदृशीं त्वमेकां सुतां समवाप्स्यसीति कालेनोत्पन्नायां तस्यां व्योमवाणी तस्याः प्रभविष्यन्तं[5] सुतं रतिपत्यवतारं विद्याधराधिपमाशु चासुसूचत्। एतेनातितुष्टो राजा स्वप्ने वासवेन दत्ततया स्वप्नवासवदत्तेति तत्तनयानाम चकार। रतेः[6] प्रति सा चाद्य तद्गृहे मन्थनात्प्राग्[7] रत्नाकरे वर्तमाना कमलेव विष्णवे प्रदेयत्वेन तिष्ठति।

एवंविधप्रभावश्चण्डसेनो न सारल्येन पर्य्यलौकिकशक्तेर्जयः[8] किन्तु स वीवाहे[9] तां तुभ्यं दित्सति निजकौलीन्यस्य गौरवाद्[10]बद्धोऽमूल्यकन्यारत्नेन त्वां लोभयितुं तच्छिक्षणव्याजेन तत्राकारयति चेति।

इत्थमाकर्णितवासवदत्तोदयनोदयनः सपदि तदाहृतहृदयोऽपि निजमहाकुलीनपथाच्च स्तोकात्[11] प्रच्यचलत।

इतो दूतमुखश्रुतवत्सेशप्रतिश्रुतप्रतिवाचिक[12]श्चण्डमहासेनः कन्याप्रेषणे स्वला-

---

१. 'आसुरेरुपसंख्यानम्' इति ष्फे षित्वात् ङीष्। २. 'मामकनरकयोरुपसंख्यानम्'। ३. 'अन्तर्धौ येनादर्शनमिच्छति'। ४. वर्णदृढादिभ्यः ष्यञ्चेत्यत्र चादिमनिच्। ५. 'भुवः प्रभवः'। ६. 'प्रतिः प्रतिनिधिप्रतिदानयोः', 'प्रतिनिधिप्रतिदाने च यस्मात्'। ७. 'अन्यारादितरर्ते०'। ८. 'अपपरी वर्जने', 'पञ्चम्यपाङ्परिभिः'। ९. 'उपसर्गस्य' घञ्यमनुष्ये बहुलम्'। १०. 'विभाषा गुणेऽस्त्रियाम्'। ११. 'करणे च स्तोकाल्प०'। १२. 'वाचो व्याहृतार्थायाम्' इति स्वार्थे ठक्।

घवम् ऋते वत्सेशात्[2] स्वकन्याविषयाभिलाषापूरकानुकूलवरान्तरमपश्यन् उदयनं प्राध्वंकृत्य[3] तत्रानयनमेव च कार्मणमाकलयन्[4] विहितस्वमन्त्रिपरामर्शो निजहस्तिनडागिरिसदृशम् दारुयन्त्रमयं महान्तं करिणमेकं कारयित्वा विन्ध्याटव्यां तमतिष्ठिपत्। अन्तःप्रच्छन्नसैन्यं विंध्याटव्यां च दारुमययन्त्रबलेनेतस्ततः सञ्चरन्तं गजमालोक्य तद्बन्धनरसासक्तोदयनोपजीविनः सत्वरमागत्य देव, विन्ध्यवनादाराद्[5] अमद्विरस्माभिरेको जङ्गमोऽचल इव मितङ्गमो[6]ऽपूर्वोऽवलोकित इति व्याजहुः। समाकर्णितचारुचारचर्चो[7] विचारदृगपि तदानीमविचारदृगिव देवो वत्सराजः सुवर्णलक्षेण ताँश्चारान् सन्तोष्य 'नडागिरिप्रतिमल्लं तं लभेय चेच्चण्डसेनो ध्रुवमस्मद्वशम्वदतां स्वीकुर्यात्' इति तत्प्राप्तिचिन्तापर[8] एव तां निशामनैषीत्। प्रातश्च गजलिप्सयाऽनालोडितमन्त्रिगालोडितः[9] ससैन्यः पुरस्कृततत्पथकचारो[10] बहिर्नगरान्[11] निर्गत्यागत्य च विन्ध्याटवीमिभक्षोभाशङ्कया दूरापसारितसकलसैनिकः, घोषवतीं वीणां दधच्चारमात्रसहायो विवेश विविधानोकहलतागुल्मादिविस्तीर्णामरण्यानीम्। तत्रोपवीणयन्[12]नेकाकी तद्गजबन्धनविचाराशान्तस्वान्तः संध्याध्वान्तवशादपरिलक्षितमायागजो गीतरसाभिभूतेनोत्कीर्णतालेनोपेत्योपेत्य विचलता च कृत्रिमगजेन तत्सहायैः[13] पृथक् कृत्वा चण्डमहासेनसाम्राज्यसीमायाः[14] सुदूरमाकृष्टोऽकस्मात्तत्र यन्त्रमयाद् गजान्निःसृत्य सन्नद्धैः पुरुषैः परिवारितः सन्नाकृष्टासिरप्रस्थानलयन्[15]नपि पश्चादागत्यान्यैः सैन्यै र्निगृहीतश्चण्डसेनान्तिकमानीयत। चण्डमहासेनोऽपि चावगततदुदन्तो, निजयुक्तेः[16] सुहितः, सतां[17] गत-

---

१. 'इगन्ताच्च लघुपूर्वात्'। २. अन्यारादितरर्ते०। ३. 'प्राध्वं बन्धने' (प्राध्वमित्येतदव्ययं बन्धनेनानुकूल्येवर्तते)। ४. 'तद्युक्तात्कर्मणोऽण्' इति स्वार्थे अण्, वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः। ५. अन्यारादितरर्ते०। ६. गमश्चेति खच्। ७. 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इति युचोऽपवादोऽङ्। ८. चिन्तिपूजि०। ९. गालोडितं वाचां विमर्शः। १०. तत्र कुशलः पथः इति वुन्। ११. 'अपपरिबहिरञ्चवः पञ्चम्ये'ति समासविधानसामर्थ्यात् 'बहिर्योगे पञ्चमी। १२. वीणयोपगायन्। १३. 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्'। १४. 'दूरान्तिकार्थेभ्यो द्वितीया च। १५. 'कर्तृकरणाद्धात्वर्थे' इति गणसूत्रेण असिनाहन्तीति विग्रहे णिचि, शतृ। १६. पूरणगुणसुहितार्थेति समासनिषेधः। १७. 'षष्ठी शेषे'।

मनुसरन्नच्छगत्यौच्छोद्य[1] च विनीतवचनं, कृतवत्सराजादरादरो, वत्सेशेन[2] समम् प्राविशदुज्जयिनीम् ।

इतस्तदार्जवाद्बद्धाः पौरा लत्वाद्[3] बद्धमिव वत्सेशमाकर्ण्य प्राणपणेनापि तन्मोचनकृतनिश्चयाः समवेत्य राजद्वारं समागत्य केन हेतुना[4] वत्सेशो निगृहीत इति कोलाहलं कुर्वाणा नितरामक्षुभ्यन् । किन्तु चण्डमहासेनो न मया वत्सेशो हन्तव्योऽपि तु सन्धातव्य इति तान् समाश्वास्य तत्क्षणमेव स्वसुतां वासवदत्तां तस्मै गान्धर्वशिक्षाया[5] हेतोः समार्पयत् । उवाच च वत्सेशम्—'शिक्षयमाणो गन्धर्वविद्यां त्वमेनकां[6] मे न कां भूतिं समवाप्स्यसीति मा वृथा विषादं कृथाः । उदयनोऽपि च तदेव तत्कालोचितं मन्यमानः शिष्यत्वेन[7] वासवदत्तां स्वीकृत्य तां तद्गतेक्षणो गापयन्, स्वसमयं यापयन्, तदवलोकनोपजातस्नेहो, विस्मृत-चण्डसेनकृतमन्युजन्यमन्युः, प्रासादमुत्तरेण[8] तस्य[9] निकटमेव निर्मापितगान्धर्व-शालमध्युवास[10] । वासदत्ताऽपि च तत् परिचर्यापरायणा गन्धर्वविद्याया[11] ज्ञानस्ये-[12]शाना विस्मृतान्यव्यापारा वीणावादनकलाया[13] विशेषेण नाथते स्म ।

इतो वत्सराजानुचरेषु परावृत्य कौशाम्बीमायातेषु सर्वं तदनुरागपरायणं तद्राष्ट्रं स्वप्रभुं बद्धं बुद्ध्वाऽतिक्रुद्धं सच्चण्डमहासेनस्योज्जयिन्यामुज्जासनं[14] वत्सेश-स्योज्जसनं चैव स्वप्राणानां[15] सत्पणनमाकलयति स्म । किन्तु माऽमूल्यानां प्राणानां[16] दीव्यत, मा च स्वतनूनां मांस्यसृञ्जि च छागस्य वपाया मेदसो[17] यथा चञ्चन्द्र-हासाहवाहावाय प्रेष्यतेति बहुकृत्वस्तस्य क्षणस्य[18] ब्रुवाणेन रुमण्वता सर्वं तद्रा-

---

१. 'अच्छगत्यर्थवदेषु' । २. 'सहयुक्तेऽप्रधाने' । ३. 'अकर्तर्यृणे पञ्चमी' । ४. 'सर्वनाम्नस्तृतीया च' । ५. हेतुशब्दप्रयोगे' 'षष्ठीहेतुप्रयोगे' इत्यनेन षष्ठी । ६. 'अव्ययसर्वनाम्नामकच् प्राक्टेः' । ७. 'त्वे च' इति टापो ह्रस्वः । ८. 'एनपा द्वितीया' । ९. 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' । १०. विभाषा सेनेतिनपुंसकत्वे 'उपान्वध्याङ्वसः' । ११. 'ज्ञोऽविदर्थस्य करणे' १२. 'अधीगर्थदयेशां कर्मणि' । १३. 'आशिषि नाथः' । १४. जासिनिप्रहण० ( जसु हिंसायां चुरादिः, जसु मोक्षणे दिवादिश्चेत्युभयोरत्र क्रमशः प्रयोगः ) । १५. 'व्यवहृपणोः समर्थयोः' । १६. 'दिवस्तदर्थस्य । १७. 'प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ( अत्र वपामेदसो-र्हविर्विशेषवाचकत्वेन षष्ठी, मांसासृक्शब्दयोश्च तथात्वाभावाद् द्वितीया । १८. 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' ।

ह्रियाः क्षोभान्न्यवार्यन्त। धीरो यौगन्धरायणश्चानुरक्तमेवं राष्ट्रमवलोक्य भवतु भवतां[1] स्थितिरिहैव, यूयं हि राष्ट्रस्य[2] रक्षितारः। वसन्तकद्वितीयोऽहं स्वया प्रज्ञया वत्सेशं मोचयित्वा निःसंशयं कौशाम्बीमानेता[3]। नास्त्याश्चर्यो वत्सेशस्य[4] निर्मोको मयका। विभित्सायां हि संजातायां प्राकारस्य[5], कस्यचिन्निगडस्य वाऽवलोक्यते तदानीमेव मे तस्य[6] भेदिका। विचित्रा च मे दर्शनस्य[7] शक्तिरिति ब्रुवाणो यौगन्धरायणो समर्थितो[8] मतो बुद्धः पूजितश्च, सध्रीचा वसन्तकेन कौशाम्ब्या निर्गत्य स्वप्रज्ञामिव सत्वाढ्याम् स्वनीतिमिव दुर्गमां विन्ध्याटवीं प्रविवेश। तत्र चाधोऽधोलतागहनवनवृक्षान्[9] गच्छन्निचिपञ्जितस्ततो दृष्टिं प्रतिष्कशं[10] वसन्तकं विविधारण्यरूपादिविषये इदं वातप्रम्यामासितम्[11], एतद् गवयानां शयितम्, तच्च गवां गतमेवं निर्दिशन् विन्ध्यैकदेशवासिनो वत्सेशस्य तद्गतिमविदुषः सजुषः पुलिन्दाख्यस्य पुलिन्दाधिपतेर्गृहमागतः सर्वञ्च तमभिधाय तेनैव च पथा समागमिष्यन्तं वत्सेशं रिरक्षिषुस्तत्र बहून् सज्जान् अरीन्[12] घातुकान् नियुज्ज्योज्जयिन्याः नरमांसाद्मरं[13] निःशङ्ककङ्ककुलसंकुलम्, अर्धदग्धचिताचक्र-सिमसिमायमानवसाविस्रविकटकटम्[14], आन्त्रतन्तुप्रोतकपालडाकिनीकलितप्रालम्बम्[15], महाकालश्मशानं प्राप्तवान्। तत्र च वत्सेशं[16] द्विषतः तदपहारकस्य[17] च जिष्णोरस्य दर्शनात् प्रीतो योगेश्वराख्यो ब्रह्मराक्षसस्समालेदिवान्, उवाच चैनं

---

१. 'कर्तृकर्मणोः कृति'। २. 'तृजकाभ्यां कर्तरि' इति समासनिषेधः।
३. 'गुणकर्मणि वेष्यते' ४. 'उभयप्राप्तौ कर्मणि' इति षष्ठी तस्याश्च 'कर्मणि च' इति समासनिषेधः। ५, ६. 'स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः'
७. 'शेषे विभाषा'। ८. मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्ते 'क्तस्य च वर्तमाने' इति षष्ठी तस्याश्च 'क्तेन च पूजायाम्' इति समासनिषेधः। ९. 'धिगुपर्यादिषु त्रिषु' इति द्वितीया। १० 'प्रतिष्कशश्च कशेः'। ११. 'अधिकरणवाचिनश्च' इति षष्ठी, 'अधिकरणवाचिनाचेति' समासनिषेधः। १२. न लोकाव्ययेति षष्ठीनिषेधः। १३. 'सृघस्यदः क्मरच्'। १४. सिमसिम इति शब्दं कुर्वत्या वसया मेदसा, विस्रः आमगन्धिः, विकटः भीषणः, कटः शवः, यत्र 'अव्यक्तानुकरणे डाचि बहुलं द्वे भवतः' इति द्वित्वे 'लोहितादिडाज्भ्यः क्यष्', ततः 'वा क्यषः' इत्यात्मनेपदे शानच्। १५. 'खलादिभ्य इनिर्वाच्यः'। १६. द्विषः शतुर्वा। १७. 'शेषे षष्ठी', न लोकेत्यस्य कारकषष्ठ्या एव निषेधात्।

'वत्सेश रक्षार्थमुज्जयिनीं[1] गामिना त्वया नूनं रूपपरिवृत्तिर्विधेयेति'। तदुपदि-
ष्टया यौगन्धरायणः सद्य एव परिवर्तितस्वरूपः कुब्जः, खलतिः, पलितः, चुल्लोऽ[2]-
वटीटश्चैवमतिहाससञ्जननः[3] संवृत्तः। तथैव च युक्त्या तेन वसन्तकोऽपि सिरा-
नद्धपृथूदरस्तुन्दिभः[4], दन्तुरः[5], प्रज्ञुर्[6]विंग्रश्च[7] विहितः।

एवं रूपपरिवर्तनपूर्वकमुज्जयिनीं प्रविश्यादौ यौगन्धरायणो वसन्तकमेव
राजकुलद्वारम् प्रैषयत्। स्वयं च विक्षिप्तेन[8] सदृशः स्वानुरूपं नृत्यन् गायन् यन्नि-
तस्ततः प्रयोजनं[9] मे सिध्यात्, शं सुखञ्च वत्सेश[10]स्य भूयादित्येवं ध्यायन् कौतुका-
वलोकनपटुभिर्वटुभिः परिवृतो राजगृहमाययौ। तत्र राजावरोधानां कृतकौतुकः
कर्णाकर्णि वासवदत्तया स्वश्रवसोरतिथित्वमानीतः, चेटिकां प्रेष्य सत्वरं संगीत-
शाले समाहूतः प्रविश्य च तत्र गृहीती च्छद्मवेशो, कार्यसाधने[11] साधुर्यौगन्ध-
रायणो बद्धं वत्सराजमवलोक्य विगलद्बाष्पः संकेतेनैव तस्मै स्वपरिचयं ददन्निज-
युक्तिबलाद् राज्ञैव केवलेन दृश्यमानः सान्तःपुरपरिजनवासवदत्ताचक्षुरलक्षितः
'क्वासुकोऽकस्मादस्मादुन्मत्तो गत'—इति वदन्तीः स्वावरोधवनिता विस्मयोद-
[12]न्वति न्यमज्जयत्।

उदयनश्च कौतुकमेतदवलोक्य सर्वमेतद्यौगन्धरायणयोगबलकृतमेव इत्य-
वधार्य वासवदत्तां सवयस्यां सरस्वतीवरिवस्यां कर्तुं विससर्ज। इत्थमवाप्तावसरो
यौगन्धरायणो वत्सेश्वराय निगडभञ्जनयोगान्, वीणातंत्रीनियोजितान् वासव-
दत्तावशीकरणयोगाँश्च समर्पयन् द्वारि स्थितं परिवर्तितवेषं वसन्तकं स्वस्यान्तिके[13]
स्थापयितुञ्च विज्ञाप्य इदानीं तिष्ठ, विस्रम्भमायातायाञ्च वासवदत्तायां यदहं
वदयामि तत्त्वया कर्तव्यम्। एवमुक्त्वा सत्यपि[14] वत्सेशविप्रयोगनिबन्धनदुःख-
बन्धने मंक्षु तस्मान्निर्ययौ।

स्वल्पकालानन्तरमवसायितसपर्या वासवदत्ता सङ्गीतशालामनुप्राविशत्।

---

१. 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीनिषेधः। २. 'क्लिन्नस्य चिल्पिल्ल-
श्चास्य चक्षुषी,' 'चुल् च'। ३. नते नासिकायाःसंज्ञायां टीटच्०। ४. 'तुन्दिवलि-
वटेर्भः'। ५. 'दन्त उन्नत उरच्'। ६. 'प्रसंभ्यां जानुनोर्ज्ञुः'। ७. 'वेर्ग्रोवक्तव्यः'।
८. 'तुल्यार्थैरतुलोपमाभ्यां तृतीया च'। ९., १०. चतुर्थी चाशिष्यायुष्य०।
११. 'साध्वसाधुप्रयोगे च'। १२. 'उदन्वानुदधौ च', ततोऽधिकरणे 'सप्तम्यधिकरणे
च' इति सप्तमी। १३. दूरान्तिकार्थैः षष्ठी०। १४. 'यस्य च भावेन भावलक्षणम्'।

ताञ्च वत्सेशोऽवदत् अन्तरस्मिन्[1] द्वारि तिष्ठत्येको विप्रः। सोऽस्मिन् सरस्वतीपूजने दक्षिणार्थं प्रवेश्यताम्। तदाकर्ण्य तया धृतविरूपाकृतिर्वसन्तकस्तत्रानाय्यत। स च वत्सेशमवलोक्य शुचा नात्मनीश्वरो[2] रोदितुमारेभ इति रहस्यसंरक्षणार्थमुदयनस्तमुवाच ब्रह्मन् मा रोदीः त्वमिहैवायुक्तो मत्सेवायां[3] ममान्तिकं तिष्ठ, त्वं हि नृणां[4] श्रेष्ठो ब्राह्मणः, अहं हि तव सर्वं वैरूप्यं निवारयामि इति। सोऽपि च देव, महाँस्ते प्रसादो भविष्यतीति तं प्रति निजगाद। किञ्चित्क्षणानन्तरं तथाभूतं वसन्तकमवलोक्य वत्सेशः स्मेरमुखो बभूवेति परिकलिती[5] तद्भावे वसन्तकोऽद्भुतविरूपाननविकृतो मूर्तिमद्धास्यरसादपि[6] हासकतरोऽधिकाधिकं हसन् वासवदत्तामपि च हासयन्नतिशयं तोषयामास। ततः कां त्वं[7] कारिं कारिकां क्रियां कृतिं वा जानासीत्यनुयुक्तो वसन्तको देवि, शिक्षाविषये त्वहं गणिं, गणिकां गणनामपि न वेद्मि। सन्नपि द्विजः पात्रेसमित इति पाचिं पाचिकाम् पचां पक्तिमपि न जानामि तथापि कथाप्रियोऽहमुत्तमकाथिकं[8] इति ब्रुवन् कथाश्रवणे[9] उत्सुकया तत्कथने व्यापारितः काश्चित् कथाः अहर्मुखे, काश्चिच्च सायाह्नि, एवमहरहः श्रावयितुमनुज्ञातो विविधाभिः हास्यवैचित्र्यसरसाभिरुपज्ञातो निजकथाभिरधिवत्सेशहृदये वासवदत्तायाञ्चानुरञ्जयंस्तत्र तौ, तस्थौ।

अथ शनैः शनैर्वत्सेशे[10] प्रसिता वासवदत्ता गाढं सद्भावं बबन्धेति यौगन्धरायणस्तत्रागत्य वसन्तकसमक्षं[11] रहसि तं व्यजिज्ञपत् 'राजन्, स्वकार्यसाधकानां[12] पटुरयं चण्डमहासेनो मायया बद्ध्वा त्वामिहानाय्य ससम्मानं सुतां च दत्त्वा भवन्तं मुमुक्षतीति स्वयमेतां हृत्वा गच्छामः। एवं हसस्यास्य प्रतीकारं कुर्वतामस्माकं लाघवमपि न स्यात्। तत्रोपायश्चायम् यदनेन वासवदत्तायै करेणुकैका भद्रवती नाम्नी प्रदत्ता। सा च न नडागिरिमतिरिच्यान्येन दन्तिनाऽनुगन्तुं

---

१. 'अन्तरं बहिर्योगोपसंव्यानयोः' इति बहिर्योगे सर्वनामता। २. 'स्वामीश्वराधिपति०'। ३. 'आयुक्तकुशलाभ्यां चासेवायाम्'। ४. 'यतश्च निर्धारणम्' इति षष्ठी 'न निर्धारणे' इति समासनिषेधः। ५. 'इष्टादिभ्यश्च इतीनिः', 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्'। ६. 'पञ्चमीविभक्ते'। ७. 'विभाषाख्यानपरिप्रश्नयोरिञ्च'। ८. कथायां साधुरिति 'कथादिभ्यष्ठक्'। ९., १०. 'प्रसितोत्सुकाभ्यां तृतीया च'। ११. 'अव्ययीभावे शरत्प्रभृतिभ्यः' इत्यत्र 'प्रतिपरिसमनुभ्योऽक्ष्णः' इति टच्। १२. 'यतश्च निर्धारणम्'।

शक्या। सोऽपि च तामवलोक्य युद्धपराङ्मुखो जायते मया च तस्या महामात्र आषाढकः सोत्कोचीकृत्यानुकूलकीकृत[1] इति तां करेणुकां वासवदत्तया सहारुह्य नक्तं गुप्तं सायुधेन त्वया इतोऽपयातव्यम्। अहमितो मार्गरक्षार्थं तव सख्युः पुलिन्दस्य पार्श्वमुपसर्पामि एवमुक्त्वा यौगन्धरायणो जगाम।

वत्सराजश्चैतत्सर्वं यौगन्धरायणोक्तं वासवदत्तायै शशंस। तथेतिप्रतिपन्नायाञ्च तस्यामुपात्तनिजवीणो वसन्तकसहितो गृहीतवासवदत्तोपनीतप्रहरणः, यौगन्धरायणप्रत्तयोगसाधनस्रंसितनिगडबन्धनः, करेणुकामारुह्य, स्वरहस्यधारिण्या-काञ्चनमालया तत्सख्या सह वासवदत्ताञ्चाप्यारोह्य, परिरक्षिताया अपि च सिमि[2]स्याः सीमायाः, यथास्थानं स्थितेषु च सिमिकेषु[3] यामिकेषु, प्राकाररक्षकतालभटवी-रबाहुनामकयामिकविशसनपूर्वकं मत्तेभभिन्नप्राकारवर्त्मना हस्तिपकपञ्चमो रात्रा-वुज्जयिनीतो निरव्राजीत्। क्षुभितेभ्यश्चतुररक्षिभ्यो हृतवासवदत्तं वत्सराजं पला-यितमवबुध्य, चण्डमहासेनो निजसूनुं गोपालकाख्यं नडागिरिमधिरुह्य तदैव तदनुपदिको[4] भवितुमादिदेश किन्तु किञ्चिद्दूरमनुसरन् बाणैर्युध्यमानश्च गोपालकः परावर्तिष्टेति विस्रब्धं वत्सेशः पुरोऽतन् त्रिषष्टि योजनेभ्यः म[5]ध्याह्ने[6]ऽन्येद्युर्विन्ध्या-टवीमवाप। किन्तु तत्रोपगिरि[7]मुदन्यन्त्याः[8] करेण्वा अवतीर्ण एव सवासवदत्ते वत्सेशे, कणेहत्य[9] पयःपानानन्तरं कुञ्जरी सा निर्जरीभूतशरीरा स्वरारुरोह। वासवदत्तया सहाथातिविषण्णो वत्सेशो, गगनचारिण्या वाण्याऽभिहितो, यद्राजन्, प्राग्जन्मनि मायावती नामाहमवशीभूता[10]ऽपि विद्याधरवशीभूताऽगोवशीभूता शापवशीभूतेह जनुषि वशीभूता। त्वामद्यैवमुपकृत्य निजां गतिमापन्ना भवि-ष्यन्तं तव पुत्रमप्युपकरिष्यामि। इयं त्वदीया भार्या वासवदत्ताऽपि न

---

१. अनुकूलं वर्तते इति विग्रहे 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इति ठकि ङिवः। २., ३. षष्ठीचानादरे। ४. अनुपदं धावतीतिविग्रहे 'माथोत्तरपदपदव्यनुपदं-धावति' इति ठक्। ५–६. सप्तमीपञ्चम्यौ कारकमध्ये ( कर्तृकर्मशक्त्योर्मध्ये इमौ देशकालौ)। ७. 'गिरेश्च सेनकस्य'। ८. उदकमिच्छतीति विग्रहे 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु' इतिक्यजन्ताच्छतुर्ङीप्। ९. 'कणेमनसीश्रद्धाप्रतीघाते'। १०. वशाशब्दस्य बन्ध्या, स्त्री, हस्तिनी चेतित्रयोऽर्था अत्र निहितास्तेन अवशीभूता अबन्ध्या विद्याधरपत्नी अहम् इन्द्रियपारवश्येन शापं प्राप्ता इह जन्मनि करिणी जातेत्यर्थः।

मानुष्यपि[1] तु भूमाववतीर्णा दैव्या[2]। एवमाकर्ण्य प्रहृष्टो वत्सेशो वसन्तकोक्तसन्देशो विन्ध्यसानुसद्मं द्रुतं निजसुहृदं पुलिन्दकमात्मागमनमधिगमयितुमग्रे वसन्तकं प्रेष्य, दयिताद्वितीयः पादचारी यावदेव तदभिमुखमेखितुमना बभूव तावदेव रुक्षैर्विपक्षैः पारिपन्थिकैः[3] पूर्वपक्षैः सिद्धान्तमिव युद्धाय पर्यस्रियत। शरासन-सहायो वत्सेशस्तदानीं, साहसिकानां तेषां पञ्चोत्तरशतं वासवदत्तायाः समक्ष-मेवाक्षाययत्। एतस्मिन्नेव काले वसन्तकपुरस्सरः सयौगन्धरायणः तत्सुहृत्पु-लन्दकोऽप्यायात इति दस्यूनन्यान्निवार्य प्रणिपातपूर्वकं सदयितं तं निजपल्ली-मनैषीत्। एवमुपत्यका[4]पद्या[5]क्षतांगुष्ठया दर्भपाटितपादया वासवदत्तया सह तत्र गत्वा निवसन्तं वत्सेशं प्राग्यौगन्धरायणेन दूतं सम्प्रेष्य सूचितः सकटकः सेनापती रुमण्वान् आयादिति तं कटकं प्रविश्योज्जयनीवार्ताजिज्ञासापरो विन्ध्याटवीभुवमधितष्ठौ वत्साधीशः।

द्वित्रदिनाभ्यन्तर एव यौगन्धरायणसुहृदेको वणिगुज्जयिन्याः समागत्य सूचितवान्, देव, चण्डमहासेनेनातिप्रीतेन त्वदन्तिकं प्रतीहारः प्रेषितः। स चागच्छन् पश्चात्तिष्ठति। अहञ्चेह देवं विज्ञापयितुं प्रच्छन्नः समायातः। एतदा-कर्ण्यातिहृष्टेन वत्सेशेनावगताखिलोदन्तीकृता वासवदत्ताऽपि सातिशयं जहर्ष; वसन्तकेन कथ्यमानाः, भर्तृभक्तिविवर्धिनीर्विविधाः कथाश्चाकर्णयमाना निजपितृ-प्रहितप्रैष्यञ्च प्रतीक्षमाणा, वत्सेश्वरैकतानमानसा, वल्लीपल्लवतल्पजनिजवल्लभसुहृ-द्भिल्लपल्लीं[6] समया समयाचकार[7]।

अचिरादेव च तत्र चण्डमहासेनरूप्येण[8] प्रैष्येण प्रणामपूर्वकं वत्सेश इत्थ-मुक्तः देव, देवश्चण्डसेनो भावत्ककार्यमभिनन्दन् मन्मुखेनेत्थं सन्दिशति यद् वासवदत्तामेवं हरता भवता समीचीनमाचरितम्[9]। तदर्थमेव च त्वमिह मयाऽऽ-

---

१. 'मनोर्जातावञ्यतौ षुक् च' इत्यञन्तत्वात् टिड्ढेतिङीप्, जाति-लक्षणा वा ङीष्। २. देवस्यापत्यं दैव्या (देवाद्यञञौ इति यञः प्राग्दीव्यतीयत्वेना-पत्याधिकारस्थत्वाभावान्न 'यञश्च' इति ङीप् प्रवृत्तिः)। ३. 'परिपन्थञ्च तिष्ठति' इति ठक् (चौरः)। ४. 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकनि 'त्यक-नश्च निषेधः'। ५. 'विध्यत्यधनुषा', 'पद्यत्यतदर्थे'। ६. समया शब्दयोगे अभितः परितः-इति द्वितीया। ७. 'समयाच्च यापनायाम्'। ८. चण्डमहासेनादागतेन (हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः)। ९. 'विभाषाञ्चेरदिक् स्त्रियाम्' इति खे 'समः समि' इति सम्यादेशः।

सीरानीतः किंतु संयताय तुभ्यं प्रदत्ता वासवदत्ताऽस्मान्न प्रीणीयादिति विशङ्किभिरस्माभिर्न तथाकृतम् । इदानीं वैवाहिकविधिसम्पादनार्थं मत्सुतो गोपालकोऽचिरेणैव समागमिष्यतीति ।

एतत्सर्वं वत्सेशमाख्याय प्रैष्यः स वासवदत्तायायपि सर्वं निवेदितवान् । एतेनानन्दितः सोऽतिनन्दितया चण्डसेननन्दिन्या कौशाम्बीं विव्रजिषुर्गोपालकागमनप्रतीक्षणार्थं स्वश्वाशुरप्रैष्यनिजसुहृदं पुलिन्दकं तत्र संस्थाप्य, प्रातरेव परेद्युरपरिमितनिजबलपरिवृतो, मनुजपरिवृढो[2], वत्सेशो, देव्या वासवदत्तया सह स्वपुरीं प्रति प्रतस्थे । पञ्चषैरेव च दिनैर्मार्गोत्सुकोन्मुखजनाम्, विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन पौरनारीलोचनरोचिषा कवचितराजपथाम्, कौशाम्बीमागत्य सेवासमागतनृपाकीर्णं, मागधोद्गीतसङ्कुलं, राजगृहं प्रविवेश ।

अचिरादेव च वासवदत्ताभ्राता तत्रायातः सप्रतीहारपुलिन्दको गोपालक इति सविधि निर्वर्तितविवाहौ वधूवरौ स्वावासवेश्म विवशतुः । वत्सराजविवाहोत्सवमुपलक्ष्यप्रहितदूताहूताः समागताश्च प्राघुणिकाः सरुमण्वद्यौगन्धरायणसत्कृताः स्वस्वावासं गताः । रुमण्वद्यौगन्धरायणवसन्तकादयोऽपि च राजकुलपरिजनाः वस्त्राङ्गरागाभरणग्रामग्रामैर्[3]वत्सेशेन विशेषेण सम्मानिताः ।

एवं सुसम्पन्ने शुभोद्वाहे कतिपयदिवसान् तत्र स्थित्वा वत्सेशमापृच्छ्य स्वँगृहं गमी[4] गोपालकोऽप्युज्जयिनीमभिप्रतस्थे। ततो रुमण्वन्तं सैनापत्ये, यौगन्धरायणञ्च मन्त्रित्वे, एवमन्यानपि यथायथं तत्तदुचितपदेषु अधिकृत्याधिकौशाम्ब्यां[6] वत्सेशो नवोढवासवदत्ताविलासासक्तैकमानस उवास ।

॥ इति कौमुदीकथाकल्लोलिन्यां कारकनिर्देशात्मको द्वितीयः कल्लोलः ॥



१. श्वशुरस्यायं श्वशुरादागतो वेत्यण् । २. 'प्रभौ परिवृढः' । ३. समूहैः । ४. 'गमेरिनिः' इत्यौणादिके इनि 'गम्यादीनामुपसंख्यानम्' इति समासः । ५. विभाषा कृञि इत्यधेः कर्मप्रवचनीयत्वम् । ६. अधिरीश्वरे इति कर्मप्रवचनीयत्वे 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' ।

# समास-स्त्रीप्रत्ययनिर्देशात्मकस्तृतीयः कल्लोलः

मृगयार्थमुदयनस्य लावाणकगमनं, तत्र वासवदत्तादाहप्रवादः पद्मावत्या सह विवाहश्च

एवमधिकौशाम्बि[1] राज्यं कुर्वति वत्सेशे, सर्वत्र सुसज्जनविद्वज्जनम्[2], दुर्दुर्जनप्रजापीडनकम्[3] इति ब्राह्मणानां निर्विघ्नं[4], साक्षरं[5], ससाङ्गं[6] वेदोपनिषच्छास्त्राद्यध्ययनम्, चावलोक्यते स्म किन्त्वेतेनैव सन्तुष्टम्, अजिगीषुम्, वासवदत्ता-मद्य-मृगयाऽऽसक्तमानसमवलोक्य तस्य मुख्यामात्यो यौगन्धरायण एकदा सेनापतिं रुमण्वन्तमेवमुवाच 'वत्सेशो हि पाण्डवानामन्वयजातः । सर्वमेदिनीराज्यमेतद्वंश्यरूप्यम्[7] । किन्त्वविजिगीषेणैतेन सर्वं परित्यक्तमिति कौशाम्बीमतिरिच्य सर्वमस्यारिभिर्गृहीतम् । अतोऽस्माभिर्यावच्छक्योपायं[8] स्वबुद्धया राजहिताय तथा प्रयसनीयं यथा यथासम्भवमयं[9] परम्परीणमखिलं[10] राज्यं पुनरासादयेत् । एवं कृते एवास्माकं मन्त्रित्वसाफल्यम्, स्वाभिभक्तिप्रदर्शनञ्च । अत्रैको मगधेश्वरः प्रद्योत एवास्माकं शत्रुः । अतो वासवदत्तां स्वबुद्धया प्रच्छन्नं स्थापयित्वा [11]शर्वर्यां तदावासञ्चेन्धनौघधग्ज्वालामालावलीढं विधाय 'देवी दग्धेति' सर्वत्र निगदेलिमम् । नान्येनौप[12]यिकेन मगधाधिपः पद्मावतीरूपं स्वकन्यकारत्नं[13] वत्सेश्वराय दास्यति । एतदर्थं पूर्वं प्रार्थितः स उक्तवान् यद्वत्सेशो वासवदत्तायां सातिशयमासक्त इति चक्षुषस्तारकामिव[14] प्रेष्ठां प्राणाधिकां स्वपुत्रिकां[15] नाहं तस्मै दातुं समीहे । सत्याञ्च वासवदत्तायां वत्सेशोऽपि नान्यां परिणेष्यतीति तद्दग्धताख्यातावुदयनेन परिणीतायां पद्मावत्यां

---

१–६. 'अव्ययं विभक्ती'त्यादिनाऽव्ययीभावसमासः । ७. पितृपितामहाद्युत्पादकप्रबन्धो वंशस्तत्र भवो वंश्यः ( दिगादिभ्यो यत् ) ततः 'तत आगत' इत्यधिकारे 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' इति रूप्यप्रत्ययः । ८. 'यावदवधारणे' । ९. यथार्थेऽव्ययीभावः । १०. परांश्च परतरांश्चानुभवतीति विग्रहे परोवरपरम्परे' ति खः । ११. 'वनोरचे'ति ङीप्, रश्चान्तादेशः । १२. उपाय एव औपयिकः 'विनयादिभ्यष्ठक्' 'उपायो ह्रस्वत्वञ्चेति' ह्रस्वश्च । १३. 'क्षिपकादीनाञ्च' । १४. 'तारका ज्योतिषि' । १५. 'सूतकापुत्रिके'ति ङीन इवर्णस्य पक्षेऽकारः ।

सम्बन्धी मगधेश्वरोऽस्माकं सर्वथा सहायकः स्यात्। तत्साहाय्येन च पूर्वं प्राचीं[1] ततः क्रमशश्चान्या दिशो विजित्याखिलं भुवं वत्सेश्वरस्य वशतामानयाम। उद्योगपरेषु चास्मासु वत्सेशोऽवश्यं सार्वभौमो भवेदिति दिव्यया वाचोद्घोषितचरम्[2]। अतो नास्मिन्नुद्योगसाफल्ये सन्देहं[3]प्रति वर्तते।

अषडक्षीणोऽस्मिन्[4] विमर्शे, यौगन्धरायणादेतदाकर्ण्य पद्मावतीहेतोः करिष्यमाणे[5] चास्मिन् साहसे संदिहानो रुमण्वान् उवाच—'अभीष्टवनिताविप्रयोगार्तिर्विवेकशालिनमपि दुःखाकरोतीति वासवदत्ताविरहदुःखापन्नो[6] नृपतिर्न कथमहि सुखप्राप्त[7]श्चेत्कर्त्तव्यमार्गसीमात्यस्ता[8]स्तद्दुःखदुःखिताश्च वयं न निजयुक्तिफलानां सुहिताः[9] स्यामेति नीतिनिपुणेनापि[10] भवता कथमस्मिन् सौवस्त्यं[11] निश्चीयते। एतदाकर्ण्य यौगन्धरायणो रावणोच्छित्तये सीतावियोगस्य[12] सोढारं राममुदाहृत्य विजिगीषोर्नृपस्य कार्यवशात्क्लेशसहिष्णुतां प्रमाणीकृतवान् किन्तु दिव्यावतारस्य रामस्य सर्वं सहत्वेऽपि[13] मनुष्याणां विषये पुनरपि सन्दिहानं रुमण्वन्तं धैर्यजलधिर्धीमान् यौगन्धरायणो वत्सेशमुद्दिधीर्षुः पुनरुवाच यद्विजिगीषोदासीनानि तु बहूनि बहूर्जि च राजकुलानि विनष्टानि किन्तु विजिगीषूणां कृते सर्वदैतादृशि राजनीतिकार्याणि सम्बोभुवति—उज्जयिन्यामेकदा पुण्यसेनाभिधानीयकः[14] कश्चिन्नृप आसीत्। स कदाचिदेकेन बलिना नृपेणाभियुक्त इति धीरास्तन्मन्त्रिणो दुर्जयं प्रबलतमं तमरिमध्यात्ममेवधार्य[15] राजा स्वर्गत इति मिथ्याप्रवादं सर्वतः प्रसारयन्तो राजानञ्च वहीराजभवनं सङ्गोप्य राजार्हं विधिना कञ्चिदन्यं शवं दग्ध्वा अराजकानामस्माकं भवानेव नृपतिर्भवत्विति

---

१. 'उगितश्च'। २. 'भूतपूर्वेचरट्'। ३. 'सुप्प्रतिना मात्रार्थे'। ४. अविद्यमानानि षडक्षीणि यस्मिन्निति विग्रहे 'अषडक्षाशितंग्वलमि'ति खः (द्वाभ्यामेवकृते इत्यर्थः)। ५. 'तौ सत्,' 'लृटः सद्वा'। ६, ७, ८. द्वितीयाश्रितातीतेति समासः। ९. 'पूरणगुणसुहितार्थे'ति षष्ठीसमासनिषेधः। १०. नीत्या निपुण इति विग्रहे 'पूर्वसदृशसमोनार्थे'ति समासः। ११. स्वस्तिभावः इति विग्रहे 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'ति ष्यञि स्वस्तिशब्दस्य द्वारादिषु पाठाद् 'द्वारादीनाञ्चे'त्यैच्। १२. 'तृजकाभ्यां कर्तरि' इति समासनिषेधः। १३. 'पूःसर्वयोर्दारिसहोः' इति खच्। १४. 'योपधाद् गुरूपोत्तमाद्वुञ्'। १५. आत्मनीत्यव्ययीभावे 'अनश्चे'ति टचि 'नस्तद्धिते' इति टिलोपः।

दूत्ये[1] नियुक्तेन पुरुषेण तमर्थं सन्दिदिशुः सन्तुष्टेन निर्भयेन च तेन राज्ञा मिलिता अन्तःकूटभावाः ससैन्या मन्त्रिणस्तत्कटकं निजसैन्यभिन्नं कृत्वा निजनैपुण्येन[2]आतं पुण्यसेनं प्रकाश्य तं शत्रुमञ्जलिति देवीदाहप्रवादेना[3]पद्मावतीविवाहाद् धृत्वा वयं कार्यं कुर्मश्चेन्नासाफल्यभयम् । निश्चितमतेर्यौगन्धरायणस्य निश्चितिमित्थमवगत्य रुमण्वान् जगाद यदेतन्निश्चप्रचं चेत्तदा वासवदत्ताया भ्रातरं सम्मन्त्र्यैतत्सर्वं विधीयताम् । इत्थं ताभ्यां द्वाभ्यां परस्परमन्त्रणापूर्वकमाकारितो गोपालको वेदितात्मचिकीर्षितीकृतस्तत्कालकर्णकटुकामपि शुभोदर्कां तन्मन्त्रणां स्वस्वसृ-सुखाय अनुमेने । किन्तु देवीं दग्धामवगत्यासून् विजिहासुः कथमवनीयोऽ-वनीपतिरिति विचारसदुपायादिसामग्रीकस्यापि तन्मन्त्रणस्य मुख्याङ्गभूता सर्विका[6] तद्विनिपातप्रतिक्रियाऽप्यवश्यं विमर्शनीयेति सम्मतिमान् रुमण्वान् समालोचिताशेषकार्येण यौगन्धरायणेनोक्तो यद्यत्र विचिकित्सालेशोऽपि यत्प्रे-यस्या वासवदत्तायाः शोकेनातिमात्रं तपन्न मुहूर्तं[7]सुखमवाप्स्यति वत्सेशः किन्त्व-दग्धा देवी जीविका[8] भवेदिति मन्वानोऽवश्यं कथंचिद्धैर्यमवाप्स्यति, किञ्च, उत्तमान्वयो नृपतिराशु पद्मावत्या सह परिणीतोऽचिरेणैव देव्या संगतो भविष्य-तीत्येतत्सर्वं विनिश्चित्य त्रयोऽपि ते देव्या वत्सेशेन चानुमगधं[9] लावाणकं गन्तुं तत्राखेटव्याजेन नृपतिमसन्निधाप्य देवीं वासवदत्तां पद्मावतीगृहे निक्षिप्य स्वचिकीर्षितं साधयितुं च रात्रौ मन्त्रयित्वाऽपरेद्युर्वत्सेशमूचुः—'देव, निःश्वा-पदीकृता मृगययेहत्यिकाः[10] भूमयः इति लावाणकं गतानामस्माकमतिशयमनुरञ्जनं स्यात् । अनिर्वचनीयं हि तत्रत्यं रामणीय[11]कम् । वर्तन्ते च यत्र निविडा[12] नड्वलाश्च[13] सुरम्याः[14] आखेटभूमयः, शोभनाश्च तत्र शाद्वलाः[15] प्रदेशाः; किन्तु बहुपदातिहस्त्यश्व-

१. दूतस्य भावः कर्म वेतिविग्रहे 'दूतवणिग्भ्याञ्चे'ति यः । २. 'कर्तृ-करणे कृता बहुलम्' । ३. 'आङ् मर्यादावचने', 'पञ्चम्यपाङ्परिभिः' । ४. 'पञ्चमी भयेन' । ५. 'न षट्स्वस्रादिभ्यः' । ६. सर्वा एवेति विग्रहे 'अव्ययसर्वनाम्ना-मि'ति स्वार्थेऽकचि 'प्रत्ययस्थादितीत्वम्' । ७. 'अत्यन्तसंयोगे चेति समासः ! ८. 'जीवतिभवतिभ्यामाशिषि चे'ति वुनोऽकादेशे 'आशिषि वुनश्च ने'तीत्वा-भावः । ९. 'अनुर्यत्समया' । १०. अव्ययात्त्यपि, कनि 'त्यकृत्यपोश्च' इतीत्वम् । ११. 'योपधाद्गुरूपोत्तमाद् वुञ्' । १२. नेर्बिडज्बिरीसचौ । १३. 'नडशादाड्ड्वलच्' । १४. 'पोरदुपधात्' । १५. 'नडशादाड्ड्वलच्' ।

रथकट्यानैकट्यान्मगधेश्वरस्तत्सर्वं बाधते इति तदूतये[1]ऽनुभूतये च विनोदानन्दस्यावश्यमस्माभिस्तत्र गमेलिमम्[2], एतदाकर्ण्याखेटक्रीडैकलालसेन वत्सेशेन स्वीकृतौ दत्तायां, परिकल्पिते च गमनलग्नेऽकस्माद्धरिकथापारायणप्रवीणो वीणोद्भावितमधुरगगनगुण[3]प्रसारणविशारदो नारदोऽटन्नितस्ततस्तत्राजगाम तथा अनुसम्पादितविधिवत्सपर्यायातिप्रह्वाय नृपाय पारिजातमयीं स्रजं दत्त्वा विद्याधराधिपं कामदेवांशपुत्रं शुभंयिकायायार्यिकायायाशंसन्नुवाच—'देव, युधिष्ठिरादयस्ते पूर्वजा मम सुहृद आसन्निति तत्प्रीत्याऽहमिहायातः। अचिरेणैव त्वमाप्स्यसि महतीमृद्धिं किन्तु कञ्चित्कालं सुखान्तं दुःखं ते भविष्यति, तथापि न कर्तव्या धीर, धैर्यावधीरणा, न चाप्यमाङ्गलिकं कर्त्तुं स्वदेहस्याध्यवसेलिमम्। गरिम्णि महामहिमवतो हिमवतः सदृत्तस्य भवादृत्तस्य महत्यामपि विपत्त्यां वैयात्येन भवितव्यम्' इत्युक्त्वा भङ्गिसूचनविशारदे नारदे दिवमुद्गते सम्भावितचिकीर्षितस्विकसिद्धयः[7] प्रयत्नपरा यौगन्धरायणादयः पूर्वोक्तयुक्त्या ससेनापरिच्छदं, हेषितहयम्, करटिगमनभारविविधस्थलाधरीकृताधरम्, रथकट्याऽटाट्या[8] संचूर्णितधराधरम्, समवाप्स्यमानाञ्च मन्त्रिचिकीर्षितसिद्धिमिव सम्मूर्च्छताऽनेकवाद्यघोषेणाभिव्यक्तीकुर्वन्तं वत्सेशं सवासवदत्तं लावाणकमानिन्युः। नातिदवीयसी च यत्रत्याऽटवी, [10]स्वरूपैराढ्यङ्करणी[11], शरणीकृतबहुहरिणी, रमणीयतरुणी[12]व तन्मनोहर्तुं प्रावर्तत।

एकस्मिन् दिने मृगयार्थं गते वत्सेशे, गोपालकसमन्वितो यौगन्धरायण-

---

१. 'ऊतियूति०' इत्यादिना साधु। २. 'केलिमर उपसंख्यानम्'। ३. गगनगुणः शब्दः। ४. स्त्रीप्रत्ययाकाराभावात् 'उदीचमातः स्थाने०' इति वैकल्पिकेत्वाप्रवृत्तौ 'प्रत्ययस्थादि'ति नित्यमित्वम्। ५. आर्याशब्दात् स्वार्थे के, 'केऽणः' इति टापो ह्रस्वे 'उदीचामातः-स्थाने यकपूर्वाया' इति वैकल्पिकमित्वम्। ६. 'प्रयोजनम्' इति ठञ्। ७. 'प्रत्ययस्थादि'तीत्वम्, आत्मीयसिद्धय इत्यर्थः। ८. रथानां समूह इति विग्रहे खलगोरथादिति सहकारेण 'इनित्रकट्यचश्चे'ति रथशब्दात् कट्यच्, ततष्टाप्। ९. 'परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानम्'। १०. निजप्राकृतिकरूपैः, पशुभिश्च। ११. 'आढ्यसुभगस्थूले'ति ख्युन्, 'नञ्स्नञ्ईकक्' इति ङीप्। १२. 'नञ्स्नञ्' इति ङीप्।

स्तप्त[1]रहसे वासवदत्तायाः सामीप्यमासाद्य तद्भ्राता प्रवोधित[2]चरीं तामवगतकर्तव्यामकरोदिति कार्यस्य तस्य वल्लभवियोगक्लेशदायित्वेऽपि स्वस्वामिसमुन्निनीषया भर्तृभक्तकुलाङ्गनानुरूपं साऽन्वमन्यत । ततो महामतिर्मन्त्री रूपपरिवर्तनयोगेन तां ब्राह्मणि[3]रूपाम् , वसन्तकञ्च वटुकरूपिणं काणम्, आत्मानञ्च स्थविरब्राह्मणाकृतिं विधाय, प्रति मगधा[4]न् अभिप्रतस्थे ।

इतो निर्गतेषु च तेषु रुमण्वांस्तदावासमाशुशुक्षणिनाशु सुसन्दीप्य, हा ! हा !! वसन्तकयुता देवी वासवदत्ता दग्धेत्यघोषयत् । किञ्चित्कालानन्तरञ्च शनैः शनैः शान्तेष्वाशुशुक्षणौ, तत्रत्यजनक्रन्दनं चिराय मानवहृदयमतिशयं सन्तापयामास । यौगन्धरायणस्तु वासवदत्तां पुरस्कृत्य वसन्तकेन च सह मगधाधिपपुरं प्राप्योद्यानगतां पद्मावतीं, तद्रक्षकमुखेन भर्तृदारिके, भवद्दिदृक्षया कश्चिद् ब्राह्मणबालिकाकाणबटुसहितो ब्राह्मण इह प्रविविक्षुरुद्यानद्वारि तिष्ठतीति सूचयन् , राजकन्यया निजनिकटमाकारितः पृष्टश्च, 'ब्राह्मण, केयं ते बाला ? किमर्थञ्च त्वमिहायात' ? इति । तच्चाकर्ण्य स वाचमित्थमुत्थापयामास– देवि, इयमावन्तिकाभिधा मम सुता । भर्ता चास्या व्यसनी, चिर[5]ण्टीमपि स्वव[6]धूटीमिमां परित्यज्य क्वापि गत इति गत्वेतस्तमन्विष्य यावदिहानयामि तावदियं तव हस्ते रक्षार्थं निक्षिप्यते । अयं काणवटुरस्या भ्रातापीहैव स्थास्यति येनासावस्मद्वियुक्तैकाकिनि[7] त्वदुःखं नानुभवेत् । स्वीकृतायाञ्चात्रभवत्यैतस्यां ममाऽभ्यर्थनायां सा[8]मिसिद्धं ममोद्देश्यं स्यात् । एतदाकर्ण्य तथेति प्रतिपन्नवचसं पद्मावतीमामन्त्र्य विचारश्ल[9]क्ष्णो मंत्री लघूभूतमुहूर्ताकूतो यथाव्यवसितमनुष्ठातुं निजनीडोड्डयनोद्यताण्डजकुलक्रियमाणतरुमधुररवे, आदिवसं गोचरमभिसञ्चर्य पालितपशुपरित्यज्यमानदवे, धरणीगीर्वाणगणसम्पाद्यमानसायन्तनाभिषवे, आयतीगवे[10], लावानकमुपानक ।

इतो वासवदत्तासम्पर्कसमकालमेवातिप्रीता पद्मावती कृततत्कालोचितसत्कृत्या सकाणवटुकया वासवदत्तया सहोद्यानान्निजभवनमागता सर्वथा तत्सुखे सावहिता

१. 'अन्ववतप्ताद्रहसः' । २. प्रबोधिता भूतपूर्वा, 'भूतपूर्वेचरट्', 'तसिलादिष्वाकृत्वसुचः', 'टिड्ढे'ति ङीप् । ३. 'प्रशस्ताब्राह्मणी'ति प्रशंसायां रूपपि 'घरूपकल्पे'ति ङ्योपो ह्रस्वः । ४. 'लक्षणेनाभिप्रती आभिमुख्ये' । ५., ६. 'वयस्यचरम इति वाच्यम्' । ७. 'स्वे च' । ८. 'सामि' इति समासः ( सामीत्येतदव्ययमर्धशब्दपर्यायः ) । ९. 'पूर्वसदृशसमोनार्थे'ति समासः । १०. 'तिष्ठद्गुप्रभृतीनि च ।

बभूव। तत्र स्थिताया वासवदत्तायाः कल्पनातीतेन[1] सौकुमार्येण शयनासन-शरीरसौष्ठवसौरभादिना च आत्मसदृशीं[2] तामवलोकयन्ती निश्चिन्वती च ताम-दृष्टप्रेरणयाऽमरपुरपतिताम् इव, त्रिलोकीविजिहीर्षया यथाकाममवनीमवतीर्णामिव, हस्तस्पर्शमात्रम्लेयाम्, अनुपमेयाम्, शिष्टविशिष्टोपचारैरुपाचरत्।

एकदा पद्मावतीप्रसाधनप्रसङ्गे वासवदत्ताकृतौ वत्सेशशिक्षितपूर्वाविम्लानमालातिलकाववलोक्य पद्मावतीं तस्या माता पप्रच्छ 'केनेमौ विहिताविति' तदनु तन्मुखान्निजमन्दिरस्थितामावन्तिकानामधेयाम् ब्राह्मणसुतां तत्कारिणीं ज्ञात्वा 'या ईदृशी सर्वगुणसम्पन्ना[3] न सा मनुषी[4] कदापि भवितुमर्हति' एवं तामुपह्वरे व्याहृत्य ततोऽप्यधिकसम्मानपूर्वकं तद्व्यवहरणम् आदिदेश। इत्थं तदादेशानुसारं सत्कृता वासवदत्ता पद्मावतीगृहे सुरक्षिताऽवर्तत। तत्र च तिष्ठन्त्यास्तस्या न कस्मादप्यकस्माद् धर्षकभीतिः[5], नापि च अपसद्भयम्[6]। विप्रकृष्टाद् आगतामपि[7] स्वहृदयाभ्याशाद्[8] आगतां सद्विचारसन्ततिमिवामन्यत पद्मावतीत्यनल्पकल्पनापोढं[9] सुखमनुभवन्ती सा निशीथपद्मिनीव निजप्रियतमोदयनसंयोग-सुप्रात-सुदिनाहं[10][11] प्रतीक्षमाणा तस्थौ।

अत्रान्तरेऽतिदूरभूमिषु मृगयां कृत्वा सायाह्ने लावाणकमायातो वत्सेशो भस्मीभूतं स्वावासमवलोक्य तत्र सवसन्तकां वासवदत्तां मन्त्रिभ्यो दग्धां चाकर्ण्य

---

१. द्वितीयाश्रितातीते'ति समासः। २. 'समानान्ययोश्चेति वक्तव्यम्' इति दृशेः कञि 'दृग्दृशवतुषु' इति समानस्य सादेशे कञन्तत्वात् टिड्ढाणञि'ति ङीप्, ततः 'पूर्वसदृशसमोनार्थे'ति समासः। ३. 'पूर्वकालैकसर्वजरत्०' इत्यादिना समासः। ४. 'मनोर्जातावञ्यतौषुक् चे'ति निष्पन्नान्मनुष्यशब्दात् 'योपधप्रतिषेधे हयगवयमुकयमनुष्ये'ति वार्तिकसहकारेण जातिलक्षणे ङीषि 'हलस्तद्धितस्य' इति यलोपः। ५-६. 'पञ्चमी भयेन, भयभीतभीतिभीभिरिति वाच्यम्'। ७-८. 'स्तोकान्तिकदूरार्थे'ति समासे 'पञ्चम्याः स्तोकादिभ्य' इति पञ्चम्या अलुक्। ९. 'अपेतापोढे'ति समासः। १०. शोभनं प्रातरस्येति विग्रहे 'सुप्रातसुश्वेत्या'दिनाऽच्प्रत्ययान्तो निपातितः। ११. सुदिनं पुण्यञ्च तदेवाहः इति विग्रहे प्रशस्तवाचकसुदिनशब्देन कर्मधारये 'राजाहः सखिभ्यष्टच्', 'अह्नोऽह्न एतेभ्य' इति प्राप्ते 'उत्तमैकाभ्याञ्चेति निषेधे 'अह्नष्टखोरेवे'ति नियमेन 'नस्तद्धिते' इति टिलोपे 'रात्राह्नाहाः पुंसी'ति बाधित्वा 'पुण्यसुदिनाभ्यामह्नः क्लीवतेष्टे'ति नपुंसकत्वम्।

निश्चेतनोभूत्वा भूमावपतत्। अदहच्च तस्य देहं दहन इव दारु, दारुणो दयिता[1]दाह सम्वादः। क्षणादुपलब्धसंज्ञश्च हा! प्रियतमे, क्व मामशरणं त्यक्त्वा गता! एहि! एहि!! इत्युच्चैरुच्चरन् विलिखिताम् इव दिक्षु विदिक्षु च उत्कीर्णाम् इव चक्षुषि, निखातामिव हृदये, वासवदत्तामाह्वयमानो मोहाविष्टचेतसाऽतिकरुणं विलपँस्तद्वियोगज्वालाजालावलीढः प्राणपरित्यागप्रवणो बभूव। किन्तु तदानीमेव स्वविषये स्मृतनारदवचनः, स्मृततपस्विनिर्देशश्च शुभोदर्कं तर्कयँस्तद्वियोगं स्वल्पशोकगोपालकमनतिदुःखितं यौगन्धरायणञ्चावलोक्य सम्भावितवासवदत्ताजीवितो मन्त्रिनीतिभाविदेवीसमागमो मन्त्रिभिर्बोध्यमानो धैर्यं दधे।

इतो लावाणकस्थेभ्यश्चारेभ्यो मगधराजो विदितसर्ववृत्तो वृत्त इति कालज्ञोऽसौ स्वसुतां पद्मावतीं यौगन्धरायणादिमन्त्रिभिः प्रार्थितचरीं वत्सेशस्य जीवनसहचरीं चिकीर्षुः स्वेप्सितं यौगन्धरायणाय सन्दिदेश। सोऽपि च तत्सन्दिष्टं सर्वमुररीकृत्य ततः सप्तमेऽहनि निर्धारितोद्वाहलग्नोऽह्नाय मगधराजाय प्रतिदूतं प्रजिघाय। दूतमुखाच्च संवादनकमाकर्ण्य स्वसुतास्नेहनिजविभवानुरूपसंयोजितोद्वाहसम्भारो नृपाणां[2] श्रेष्ठो मगधेश्वरस्तत्तद्देशस्थितान् सर्वान्निजसम्बन्धिनः सुहृदश्च निमन्त्रयितुं सादिनः प्रैषयत्। वत्सेशोऽपि तथैवाकरोदिति निश्चितोद्वाहदिवसे वरतः[3] समायातानां नैषध्यानाम्[4], आवन्त्यानाम्[5], पाण्डयानाम्[6], पौराणाम्[7], पाञ्चालानाम्[8], कन्यातश्चायातानाम्, मागधानाम्[9], वाङ्गानाम्[10], सकुथकुञ्जर[11]क्रमेलकाश्वीय[12] बृंहणहेषणादिविक्षोभितेतररथ्या[13], वात्र[14]-पाण्डुकम्ब[15]लिद्वैप[16] वैयाघ्ररथ्याऽऽश्वरथ[17]-

---

१. 'षष्ठी'त्यनेन समासः।२. 'न निर्धारणे'। ३. षष्ठ्या व्याश्रये' इत्यनेन वरतः कन्यातश्चोभयत्र षष्ठ्यन्तात्तसिः वरस्य कन्यायाश्च पक्षत इत्यर्थः। ४. कुरुनादिभ्यो ण्यः। ५. 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इतीदन्तत्वादपत्ये ञ्यङ्। ६. 'पाण्डोर्ड्यण्'। ७. 'पूरोरण् वक्तव्यः'। ८. पंचालानां राजेति विग्रहे 'क्षत्रियसमानशब्दादि'ति वार्तिकेन 'अवृद्धादपि बहुवचनविषयात्' इति वुञं बाधित्वा अञ्। ९.-१०, 'द्व्यञ्मगधे'ति राजन्यपत्ये वा अण्। ११. कुञ्जो हस्तिहनुः सोऽस्त्यस्मिन्निति 'रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्' इति रः। १२. अश्वानां समूह इति विग्रहे 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्'। १३. 'तद्वहतिरथयुगप्रासङ्गम्'। १४. परिवृतो रथः। १५. 'पाण्डुकम्बलादिनिः'। १६. 'द्वैपवैयाघ्रादञ्', रथानां समूहः इत्यर्थे 'खलगोरथात्' इति यः। १७. 'पत्रपूर्वादञ्'।

रथ्या[1]कीर्णरथ्या, भेरीझर्झरमृदङ्गपणववेणुकरतालादिवाद्यव्यग्रपरिजनादिचरणश-
तसंक्षोभचलितक्षितितला, विचित्राभिरपि सचित्राभिः पताकाभिः प्रतिभवनमु-
द्भास[2]माना, समाना दिवा, दिवारात्रं सम्पाद्यमानानेकसमुत्सवा, महाजनसम्म-
र्दाऽभून्मगधाधिपराजधा[3]नी । अथ प्राप्ते शुभंयौ लग्ने, यथायथं स्थितेषु च
शुभग्रहेषु, गायत्सु सुतरां गायकेषु नृत्यन्तीषु च पौरपुरन्ध्रीषु आमुक्तकौतुकाम्,
सयौतकाम्, विश्राणितबहुसूत्या[4]भोज्य[5]भुजिष्याम्, स्वविभूत्यनुरूपं महार्हालङ्का-
रैरलंकृत्य मगधेश्वरप्रदत्ताम्, पद्मावतीम्—सम्पाद्यमानतद्विवाहाया दिव्यावम्लान-
मालातिलकौ दृष्ट्वा वासवदत्तावियुक्तोऽपि पुनस्तदुपलब्ध्याशातन्तुसमवनद्धहृदयो
वत्सेशः—पाणौ[6]कृत्यापि न तत्याज हृदयात् क्षणमपि तत्रालक्षितस्थिताम्
वासवदत्ताम् ।

अथ विवाहानन्तरं मगधेश्वरेण श्राणा-संयाव-पेटक-कूर्चिका-कुण्डलिनी-फाण्ट-
रसगोलक-त्रिकोणक-मोदकैः, यवागूशष्कुलीघृतचौरिकचौरीण्डरिकापूपपर्पटैः, शु-
क्तासुततेमनैः, रामठजीरकादिविविधाभिघार्यप्राज्याज्यसुगन्धितद्रव्याभिघारित
सहरिद्रशतपुष्पैलाकुस्तुँ[7]म्बुरुमरिचलवङ्गतुवरिकामाषमूल्य[8]मुस्तकचणकसतीनक-
सूपैः, उग्रगन्धाराजकर्णिकासोपस्करकरवेल्लपटोलमहाफलासप्तलापालकवास्तुक-
कोशातकीमूलिकाकर्कारुबिम्बिकावृन्ताकालुप्रभृत्यनेकशाकैः, स्वादिष्ठभिस्साकर-
पट्टिकादधि[9]बटकादिविविधवर्णनातीतषड्रसव्यञ्जनैः, विविधैरार्तवफलैरन्यैश्च त-
त्कालोपलब्धानार्तवफलैः, द्राक्षादाडिमादिरसैश्च यथाकालं स्वादुं[10]कारं मूलकोपदं[11]-
शश्च सुसम्पादितेऽखिलै[12]र्श्नीतपिबतप्रीतिभोजनादौ चतुरो यौगन्धरायणो मन्त्रभि-
[13]दाभिया 'वत्सेशोऽद्यैवास्माद्यास्यतीति' मगधेशमुक्त्वा कन्यास्नेहपाशबद्धादपि

---

१. 'रथाद्यत्' । २. उत्पूर्वकाद्भासधातोः शानचि 'लाश्रयमनुबन्धकार्यं
नादेशानामि'ति लटष्टित्वेऽपिङीबभावे टाप् । ३. राजाधीयतेऽस्यामिति
'करणाधिकरणयोश्चे'ति ल्युटि टित्वात् ङीप् । ४. 'सूतयुवत्याम्' इति ष्यङ्,
'यङश्चाप्' । ५. 'भोजक्षत्रिये' । ६. 'नित्यं हस्ते पाणावुपयमने' ।
७. 'कुस्तुम्बुरूणि जातिः' । ८. 'मूलमस्याबर्हि', मूलमाबर्हि येषां ते मूल्या मुद्गाः ।
९. 'अन्नेन व्यञ्जनम्' । १०. 'स्वादुमि णमुल्' 'असैवाव्ययेन' । ११. 'उपदंशस्तृ-
तीयाम्', 'तृतीयाप्रभृतीन्यन्यतरस्याम्' । १२. 'आख्यातमाख्यातेन क्रियासा-
तत्ये' । १३. 'षिद्भिदादिभ्योऽङ्' ।

तस्मात्कथञ्चिदुदञ्चितानुमतिः[1] सवत्सेशः पद्मावतीं वधूयानमारोह्य त्वरमाणो बध्वा सह सपरिच्छदागन्तुकराजन्यो लावाणकमुपेत्य परेद्यवि समागतप्राघुणिकान् सबहुमानं सत्कृत्य[2] विसर्जितवान्।

इतः सैन्यस्य पृष्ठतः कृतरूपविवर्तं वसन्तकं पुरस्कृत्य[3] वासवदत्ताऽपि पद्मावतीपितृगृहान्निर्गता लावाणकमासाद्य सायाह्ने[4] गोपालकगृहं प्रविवेश। तत्र प्रदर्शितानल्पादरं सोदरं निजभ्रातरं साक्षात्कृत्य[5] कण्ठे गृहीत्वा रुदत्या वाष्पव्याकुललोचनायाश्च तस्याः वत्सेशविश्लेषदुःखं व्यपोढुमागत्य यावदेव सरुमण्वत्को यौगन्धरायणः प्रयतते तावदेव पद्मावती सकाशात्प्राप्ता महत्तरास्तामूचुः—'देवि, अस्मास्विह समायातेषु राजभवनमपहायावन्तिकेहायाता राजपुत्रस्य गोपालकस्य गृहे वर्तते। एतदाकर्ण्य किञ्चित्साशङ्का पद्मावती ताँस्तत्र प्रहिण्वती वत्सेशस्याग्रे एवं सन्दिष्टवती—'आवन्तिके, त्वं हि मे निक्षेप इति नापरत्र कुत्रापि स्थातुं ते प्रयोजनम्। अतो यत्राहमस्मि तत्रैव त्वयाऽऽगन्तव्यम्।'

एतदाकर्ण्य प्रयातेषु तेषु 'केनेमौमालातिलकौ कृतौ' इति जिज्ञासापरं रहसि राजानं पद्मावती प्रत्युवाच 'मद्गेहे विप्रेणैकेन न्यस्ता यैषाऽऽवन्तिकाऽभिधा, तस्याः प्रथमशिल्पमेतदिति श्रुत्वैव वत्सेशो नूनं सा वासवदत्तैव भवेदिति चिन्तयन् महत्तरसनाथितद्वारमन्तःस्थदेवीगोपालकमन्त्रिद्वयवसन्तकं गोपालकगृहं प्रविश्य निजविश्लेषपाण्डुरगात्रीं[6] क्षामक्षामां चान्द्रमसमूर्तिमिव वासवदत्तां ददर्श। पारस्परिकसाक्षात्कृतिसमनन्तरमेव च शोकविकलेन्द्रियावुभौ शोकदीनौ चिरं रुरुदतुः। दम्पत्योश्च तथाभूतामवस्थामवलोक्य यौगन्धरायणोऽपि वाष्पाकुलितनेत्रोऽवरुद्धकण्ठश्च संजात इतीत्थं सर्वतः प्रवृत्ते कोलाहलेऽतिव्याकुला पद्मावत्यपि तत्रैवाजगाम। व्यतिकरञ्च सर्वमिममाकर्ण्य तुल्यावस्थायाः पद्मावत्याः प्रत्यक्षं[7] भृशमाक्रोशन्ती वासवदत्ता भर्तृदुःखदायिन्या[8] मे जीवितेन किं प्रयोजनमित्यात्मानं न्यक्कुर्वती सातिशयमन्तस्तापमाप।

---

१. ण्यन्तादञ्चतेःक्ते, 'यस्य विभाषा', 'अञ्चोऽनपादाने' इत्युभयोरप्रवृत्तिः। २. 'आदरानादरयोः सदसती'। ३. 'पुरोऽव्ययम्' इति गतित्वे 'कुगतिप्रादयः'। ४. अह्नः सायः इति विग्रहे 'संख्याविसाये'ति ज्ञापकादेकदेशिसमासः। ५. 'साक्षात्प्रभृतीनि च'। ६. पाण्डुशब्दात् 'नगपांशुपाण्डुभ्यश्चेति' रः ततः गात्रशब्देनबहुव्रीहौ 'अंगगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीष्। ७. 'प्रतिपरिसमनुभ्योऽक्ष्णः'। ८. 'ऋन्नेभ्यो ङीप्'।

एवमात्मनिन्दापरवशां वासवदत्तामालोक्य 'मगधेशसुतालाभेन तव साम्राज्यलाभः' इत्यभिकांक्षिणा मया सर्वमेतत्कृतमिति सर्वथाहमेवात्रापराध्यामि न देवीति वत्सेशं विश्वास्य देव्या वासवदत्तायाः शुद्धतामात्मनो निःस्वार्थराज्यभक्तिञ्च प्रमाणयितुमाचम्य प्राङ्मुखोपविष्टो यौगन्धरायण उवाच—'यद्यहं राजशुभेच्छुः, समुत्कृष्टबुद्धिमती देवी वासवदत्ता च शुद्धिमती तदा हे लोकपालाः, सर्वमेतद् युष्माभिरुचेलिमम्[1]। येन युष्माकं वाचमुपनिषत्कृत्य[2] राजा सर्वथा विश्वासपरो भवेत्। अन्यथाद्यैवाहमात्मतनुमतनूष्मणि तनूनपाति पातयित्वा भस्मसात्करोमि। एवंलोकपालान् स्वार्थराजशुभैषणयो र्मध्येकृत्य[3]ोक्तवचसि राजभक्तिपरायणे यौगन्धरायणे निर्वचनेकृत्य[4] स्थिते सति, समुदभूद् दिव्या वागेवम्[5]—राजन्, धन्यस्त्वम्, यस्यैवं भूतो मंत्री यौगन्धरायणः, जीवनसहचरी[6] च यस्यैवंभूता सर्वथा विशुद्धा निर्दोषा चेति।

एतदाकर्ण्य गोपालकसहितो वत्सेशो 'मन्त्रिन्, धन्यस्त्वम् य एवं स्वनीतिशक्त्या यथावसरमुपाजेकृत्य[7] पद्मावतीमनुनेतुं मगधान् गतस्तत्रापरिगणिताशिताशितो[8] यथेष्टं कारिकाकृत्य[9] मामुपकर्तुं वासवदत्ताया आत्मनश्च चरित्रमेवमुदात्तं प्रदर्शितवान्' एवं यौगन्धरायणाचरितं सर्वं प्रशंसन् गोपालकगृहाद् वासवदत्तामात्मावासमानाय्य मूर्तिमतीभ्यां रतिनिर्वृतिभ्यामिव वासवदत्तापद्मावतीभ्यां सहाकुतोभयो[10] लावाणके परमोत्सवेनोवास।

अन्येद्युः स्नानानन्तरं तन्त्रकतान्तवांशुकसुवो[11] वत्सेशः सम्पादितभोजनादि-

---

१. वचधातोः केलिमरि सम्प्रसारणम्। २. 'जीविकोपनिषदावौपम्ये'। ३. 'मध्ये पदे निवचने च'। ४. वाचन्नियम्येत्यर्थः। ५. 'क्विब्वची'ति क्विब् दीर्घे सम्प्रसारणञ्च। ६. पचादिषु चरडिति पाठात् ङीपि सहेन समासः। ७. 'उपाजेऽन्वाजे' (दुर्बलस्य बलमाधायेत्यर्थः)। ८. अशितञ्च अनशितञ्चेति 'क्तेन नञ्विशिष्टेनानञ्' इति तत्पुरुषसमासेऽपरिगणितशब्देन बहुव्रीहिः। ९. 'कारिकाशब्दस्योपसंख्यानम्'। १०. नास्ति कुतोभयं यस्येति मयूरव्यंसकादित्वात्समासः। ११. 'तन्त्रादचिरापहृते' इति कन्, तन्तूनां विकारः इति विग्रहे 'ओरञ्' इत्यञ्, एवं सुष्टु वस्ते इति सुवः, धातुत्वादत्वसन्तेतिदीर्घाभावस्ततस्तन्त्रकतान्तवांशुकस्य सुवः इति समासः।

दैनिकृत्यो वासवदत्तापद्मावतीभ्यां सह विविक्ते पानलीलासंसक्तो गोपालकम्,
रुमण्वन्तम्, यौगन्धरायणं वसन्तकञ्चाहूय विभिन्ना वि-
कौशाम्बोपरावर्तनम् स्रम्भिणीः कथाः कथयन् यौगन्धरायणेनोक्तः, देव,
पत्युर्हितैषितैव सत्पत्नीलक्षणम्, न तु प्रियकारित्व-
मात्रम्। एवं राज्यकार्यभारैकचिन्तनं राजच्छन्दानुरोधनञ्चोपजीविलक्षणमिति
शत्रुरूपेण मगधराजेन सह सन्धित्सया पृथिवीविजयहेतुना चाप[1]न्नजीविकैरस्मा-
भिरित्थं प्रायासि अतो हे देव, भावत्कभक्त्यनुभूतासह्यवियुक्तिर्देवी न कथमप्य-
पराध्यति, सा तु भवन्तं पूर्णतयोपाकार्षीत्। एतदाकर्ण्य वत्सेशः, मन्त्रिन्
भावत्कं सर्वं चातुर्यमहं जाने। देव्याः शीलौदार्येण चारित्रेण च नाहमल्पं परि-
चितोऽस्मि तथापि भवदनुरागमनसा प्रणयाधिक्येन वा किञ्चिदसमञ्जसमुक्तं
मर्षणीयम्। एवं प्रायैरालापैस्तद्दिनं वासदत्तया सहैव नीतवान्।

परद्यवि मगधेशेन प्रेषितो दूतः समागत्य वत्सेशमेवंविज्ञापितवान् यत्त्वदीय-
मन्त्रिभिर्वयं वञ्चिताः। किन्तु त्वयाऽधुनैवं विधेयं येन पद्मावतीविषयकशोकेना-
स्माकं जीवनं शोकमयं न भवेत्। वत्सेशश्चैतदाकर्ण्य तं दूतं पद्मावतीपार्श्वं
प्रेषितवान्। सापि चातिनम्रतया दूतं स्वसन्निधावाकार्य तस्मात्स्वपित्रोरनामयं
पृच्छन्ती तेन सर्वथा तत्रत्यं वा[2]र्तमभिहिता—'पुत्रि] व्याजेनचास्मान्नीतायास्तेपति-
मन्यासक्तमनुचिन्तयन्नहं न[3]क्तंदिवमनुतपामि' एवमुक्तपितृसन्देशं सन्देशहरञ्चोवाच
पद्मावती 'भद्र, तातोऽम्बा च मद्वाचा वाच्यौ यन्नकोऽपि विषयोऽनुतापस्य। आर्य-
पुत्रो हि मयि सातिशयं दयोदयः, वासवदत्ता चापि मयि स्वस्वसरीवसातिशय-
सस्नेहेतिलेशमात्रेणापि शोकेनालम्। एवं प्रतिसन्दिश्य सत्कृते दूते मगधान् प्रति
निवर्तितेऽन्तिकंप्राप्तो वसन्तको विभिन्नकथाभिर्वासवदत्तापद्मावतीमनोऽनुरञ्जयन्
'युवामुभे शापच्युते पूर्वजन्मभगिन्यावित्यस्मिन्नपि जन्मनि युवयोरन्योन्यहित-
कृद्धृदयं वर्तते एवं विज्ञापितवान्। येन सपत्नीत्वनिबन्धनं तत्पारस्परिकेर्ष्या-
लेशमप्यदर्शनतां नयन् सर्वथा तयोर्विशुद्धभावव्यवहारः पारस्परिकप्रेमोपचितेः
कारणतां ययौ। विगतेषु च कतिपयदिवसेषु प्राप्तपद्मावतीसन्देशवचनेनाति

---

१. प्राप्तापन्ने च द्वितीयया' इति समासे 'परवल्लिंगं द्वन्द्वतत्पुरुषयोः' इति प्राप्ता परवल्लिंगता 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्य' इति निषि-ध्यते। २. 'वृत्तेश्च' इति णः। ३. 'अचतुरविचतुर–' इत्यादिना साधु।

तुष्टो मगधेश्वरो वासवदत्तां प्रति सर्वथा सन्तोषं प्रकटीकृतवान् । तथैव चण्डमहासेनोऽपि पद्मावतीं प्रति निरतिशयं स्वकीयं स्नेहभावं दूतमुखेनाभिव्यक्तवान् । एवं श्वशुरद्वयसन्तोषप्रवर्द्धितप्रमोदो वत्सेशो यौगन्धरायणपरामृष्टयाऽन्येद्युर्जराजीर्णदेहमपि महाबलसम्पन्नम्, मागध[1]मप्यविगीतप्रशस्तिम्, पद्मावतीपितरमामन्त्र्य विविधान्यदुर्लभवसुधान्यसमेधितवसुधान् मगधान् परित्यज्य वर्णका[2]प्रावारितधृतकर्णिका[3]वर्णिका[4]स्तूयमानमृडानीम्[5], क्वचिदुदुपाध्याया[6]ध्याप्यमानकठी[7]बह्वृचीम्, इतरत्र पौरपुरन्ध्रीवर्गाश्वास्यमानाशिश्वीम्[8], अतिरतिरूपाङ्गनोपहस्यमानवृषाक[9]पायीम्; स्वीयपातिव्रत्यशीलशैत्यशस्यमाना[10]ग्नायीम्, सामाजिकनियमनिरूपणविदुषितरा[11]धरीक्रियमाणमना[12]यीम्, अकाण्डामपि सद्वि[13]काण्डाम्, विलसद्बहुपुरुषामपि [14]सद्विपुरुषाम्, स वृषलीमप्य[15]वृषलीम्, [16]गोपीमप्यश्वपालिकाम्,

---

१. मागधोबन्दीति विरोधः, मगधे भवं मगधानां राजानमिति वा विरोधपरिहारः।
२. वर्णकया प्रावारविशेषेण प्रावारिता तथा धृता कर्णिका कर्णालंकारः यया एवं भूता या वर्णिका स्तोत्रकर्त्री तया स्तूयमाना मृडानी यस्यां ताम्, 'वर्णकातान्तवे'।
३. कर्णललाटात्कनलंकारे। ४. स्तोत्रकर्त्री। ५. 'इन्द्रवरुणभवशर्व'–इत्यादिना ङीप् आनुगागमश्च। ६. या तु स्वयमेवाध्यापिका तत्र वा ङीष्। ७. शाखाध्येतृवाचित्वेन जातिलक्षणा ङीष्। ८. न वर्तते शिशुर्यस्या इति विग्रहे 'सख्यशिश्वीति भाषायाम्। ९, १०. 'वृषाकप्यग्नि'–इत्यादिना उदात्त ऐकारो ङीप् च।
११. विदुषीशब्दात्तरपि 'उगितश्चे'ति वैकल्पिकह्रस्वः। १२ 'मनो रौ वे'ति वैकल्पिकैकारः। १३. न काण्डो दुर्घटना यस्यामपि सद्विकाण्डामिति विरोधः 'काण्डान्तात्क्षेत्रे इति ङीपो निषेधे द्विकाण्डया क्षेत्रभक्त्या सहितामिति परिहारः।
१४. बहुपुरुषामपि द्विपुरुषामिति विरोधः 'पुरुषात्प्रमाणेऽन्यतरस्याम् इति वैकल्पिकङीबभावे द्विपुरुषया परिखया युक्तमिति परिहारः। १५. 'जातेरस्त्रीविषयादयोपधात्' वृषं धर्मं लान्ति गृह्णन्तीति वृषला धार्मिकास्तेषां स्त्रियो वृषल्यस्ताभिर्युक्तामपि अविद्यमाना वृषल्यो वृषलपत्न्यो यत्रेति विरोधपरिहारौ। १६. 'पुंयोगादाख्यायाम्' तथा 'पालकान्तान्ने'ति उदाहरणपक्षे विरोधः, गाः पातीति' गोपूर्वकात् पिबतेः के जातिलक्षणा ङीष्, एवं पालयतीति पालिका अश्वानां पालिका तथोक्ता ताम्, गवां रक्षिका अश्वानामपि पालिकेति विरोधपरिहारः।

सवामोरु[1]भार्यामप्यवामोरुभार्याम्, देवमा[2]तृकामपि मानुषपितृकाम्, [3]सशिवामप्यशर्वाणीम्, वर्तमान[4]गौरीमप्यभ्यर्च्यमानकालीम्, विद्यमानसुना[5]सिकामप्यनासिकाम्, सत्सु[6]पदीमपि पङ्गूम्, सदा[7]क्षीमप्यदाक्षीम्, सद्ब[8]हुवर्यवर्यामपि चासद्बहुवर्यवर्याम्, मन्दुराबद्धबहुसुखरश्रृङ्खलकर्षित[9]स्तम्बेरमवनायुदेश्यवाहाम्, गृहपालि[10]तैणीखुरंखर्ज्यमानकर्ण[11]जाहाम्, [12]शतक्रीतीभिर्घटोध्नीभि[13]रनड्वा[14]हीभी राजमहि[15]षीभिः, प्रजा[16]भिरजाभिस्तथा देवमण्यादिगुण[17]क्रीताभिर्बह्वीभिः[18]

---

१. 'संहितशफलक्षणवामादेश्चे'त्यूङि वामोरूः, तथा भूता भार्या येषां ते वामोरूभार्याः 'स्त्रियाः पुम्वद्भाषिते'त्यत्र अनूङ् इति निषेधेन पुम्वद्भावाभावः, तैः सहितामपि अविद्यमाना वामाः कुटिलाः उरुभार्याः बहुभार्याः यत्र तामिति विरोधपरिहारौ। २. वृष्टयम्बुजीविनीमपि मानुषाणाम् मानुषा वा (मनोर्जातावव्यतौ षुक् च ) पितरो यत्रेति विरोधपरिहारः। ३. कल्याणयुक्तामपि पार्वतीभिन्नाम्। ४. गौर्यो गौरवर्णस्त्रियः ( षिद्गौरादिभ्यश्च ) काली ( 'जानपदकुण्डे'ति ङीष् ) गौरी कालीति विरोधः गौरवर्णस्त्रीदेवीवाचककालीशब्दाभ्यां परिहार्यः। ५. सुनासिकेत्यत्र 'नासिकोदरौष्ठजङ्घे'ति वैकल्पिको ङीष्, अनासिकेत्यत्र च 'सहनञ्विद्यमानपूर्वाच्चे'ति निषेधः, स च विरोधः, अविद्यमाना आसिका अकर्मण्योपवेशो यस्यामिति व्युत्पत्त्या परिहार्यः। ६. शोभनाः पादाः यासाम् 'संख्यासुपूर्वस्ये'ति समासान्ते लोपे 'पादोऽन्यतरस्याम्' इति वैभाषिको ङीप् ततः भत्वात् 'पादः पत्' इति पदादेशे जसि सुपद्यः, ततः सत्यः सुपद्यो यस्यां किन्तु स्वयं पङ्गूम् ( नगरीम् ) 'पङ्गोश्च' इत्यूङ्। ७. दक्षस्य भावः कर्म वेति ष्यञि पित्वान्ङीषि 'हलस्तद्धितस्ये'ति यलोपः, तया युक्तामपि दाक्षी ( इतो मनुष्यजातेः ) भिन्नाम्। ८. सन्तो बहवोऽर्यवर्याः श्रेष्ठाः स्वामिनो वैश्याश्च यत्र ( अर्यः स्वामिवैश्ययोः ) तथा असत्योऽविद्यमाना बहुवर्यवर्याः अप्रतिबन्धेन स्वपतीन् वरीतुं योग्याः श्रेष्ठाः कन्यका यत्र ९ 'तत्पुरुषे कृति बहुलम्' १०. मृगी। ११. तस्य पाकमूले-इति जाहच्। १२. 'क्रीतात्करणपूर्वात्' १३. 'ऊधसोऽनङ्', 'बहुव्रीहेरूधसो ङीष्। १४. 'आमनडुहः स्त्रियां वा'। १५. महिषाणां स्त्रीभिः राजपत्नीभिर्वा। १६. प्रकृष्टेन जायन्ते इति प्रजाः, न जायन्ते इत्यजाः इति विरोधः ( 'उपसर्गे च संज्ञायाम्', 'अन्येष्वपि दृश्यते' इति च जनेर्डः ) अजाभिर्बर्करीभिरिति परिहारः। १७. 'क्रीतात्करणपूर्वादि'ति ङीषः क्वाचित्कत्वादत्र न ङीष्। १८. 'बह्वादिभ्यश्च'।

कल्याण[1]क्रोडाभिः [2]द्विक्रमेलकाभिः सदागतिस[3]म्मुखीभिरप्यपरपतिपराङ्मु[4]-खीभिः, सदानभोगमयीभिरिव [5]हयीभिर्युक्ताम्, कौशाम्बीमनुप्रतस्थे। कतिपयैरेव चाहोभिर्वत्सराजो दयितायुतोऽयुतोच्छ्रितरक्तपताकाम्, दूरस्थापितमङ्गलो[6]दकुम्भाम्, आनन्दसंलापपरपुरजनकोलाहलबहुलाम्, उशीरचन्दनद्रवसिक्तपिच्छि[7]लरथ्याम्, राजधानीम् [8]अश्वषड्गवसमूढरथमारूढो वामाङ्गविभूषितदयितः, वसन्तकादि-निजहितैषिसहितः, पौरकन्याविकीर्यमाणलाजापुष्पप्रकरैरवकीर्यमाणः सविविध-वाद्यघोषं मागधजनोच्चरदालोकः, समन्तात्सध्र्यक्सामन्तलोकः, राजधानीं प्रविवेश।

यत्र च प्रसाधितना[9]गनिभकबरी[10] यथेच्छं [11]शोणीं, [12]रोहिणीं, नीलां[13], [14]कल्माषीं वा शाटीं परिदधाना स्त्रैणी[15] मृद्वी, [16]मृद्वीकानीकाशवाचा वत्सेशदयिता प्रेमसौजन्यं [17]खरुमालपति। यत्रत्या हि नरपुङ्गवा महिषीवल्ल[18]भा अपि वृषो-

---

१. 'न क्रोडादिबह्वचः'। २. द्वाभ्याम् क्रमेलकाभ्यां क्रीताभिः, तेन क्रीतमिति विहितस्यार्हीयष्ठकः अध्यर्धपूर्वाद्द्विगोरिति लुकि अपरिमाणविस्ताचितेति ङीपो निषेधः। ३. सदा सर्वदा गतिसम्मुखीभिः अथवा सदागतेर्वायोः सम्मुखीभिः, सती आगतिः सदागतिस्तत्सम्मुखीभिर्वा, सती 'समीचीना या आसमन्ताद्गतिस्तत्सम्मुखीभिर्वेति विग्रहः, अपरेषां पतीनाम् रथकाणाम् अपरासां पतीनां वा पराङ्मुखीभिः ( दिक्पूर्वपदान्ङीप् )। ४. दानभोगप्राचुर्ययुक्ताभिः सदा न भोगमयीभिः, नभसि गच्छतीति नभोगो वायुः, सदा नभोगमयीभिर्वायुनिर्मिताभिरिव तीव्रजवाभिः, दानञ्च भोगश्च तत्प्राचुर्यसहिताभिरिति वा। ५. 'योपधप्रतिषेधे हयगवयेति सहकारेण जातिलक्षणा ङीष्। ६. 'एकहलादौ पूरयितव्येऽन्यतरस्याम्। ७. 'पिच्छादिलच्', रथेभ्यो हिता रथ्या-खलयवमाषतिलेति सूत्रे चाद्यत् टाप्। ८. षट्त्वे षड्गवच् ९, १०. 'जानपदकुण्डे'ति साधु। ११. 'शोणात्प्राचाम्'। १२. 'वर्णादनुदात्तात्तोपधात्तो नः'। १३. नील्या रक्तां शाटीम्। १४. अन्यतो ङीष्। १५. तस्य समूह इति समूहार्थस्य धान्यानां भवने क्षेत्रे खञ्' इत्यन्तर्गतत्वात् 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादि'ति सामूहिके नञि, वृद्धौ, नञ्स्नञिति ङीप्। १६. 'वोतो गुणवचनात्'। १७. 'खरुसंयोगोपधाच्च' (खरुः पतिं वरा कन्या)। १८. महिषा अपि वृषभोत्पादिन इति विरोधः, राजदेवीप्रिया अपि धर्मपरायणा इति परिहारः।

त्पादिनः । या च नगरी प्रातिभेन[1] ब्रह्मसूत्रणेन, उपनिषदा गोष्ठ्या, गीतया गीत्या, सुवर्णमयेनालङ्कारेण, प्रकृष्टेनच्छन्दानुरोधेन प्रसादकेन गुणेन, हास्येन च रसेन, सुमधुरया भाषया, आन्वीक्षिकीभिः प्रस्थानत्रयीमयीभिरिव साहित्य-विग्रहिणीभिरप्यविग्रहिणीभिः, [2]अजतनयाभिरप्यनजातनयाभिः, [3]निर्जरायुत-नयाभिरिति [4]द्व्यहीन [5]मासीनद्वि[6]समीनतनयाभिः, [7]युवतिभिर्जरतीभिः, युव-[8]जरतीभिः कुमारीभिः[9], सप्रतीहारीभिर्ना[10]रीभिश्चोपजहासेव [11]विश्वामित्रकृत्रि-[12]मन्त्रिविष्टपम् ।

यत्र पुंगवा एव [13]गेहेनर्दिनः, निक्षेप्यपदार्था एव पात्रे समि[14]ताः न नरपुङ्गवाः, उदयनैकनाथायाम् सुधाधवलिताकलितसादायाम्, [15]द्वित्रभूमप्रासादायाम् बहुवा-ग्मि[16]कायाञ्च यस्यां, [17]महावैयाकरणाः न मध्यवैयाक[18]रणा नापि च वैयाकरणखसू[19]चयो व्याकरण[20]काः, पुराणमीमांस[21]का न मीमांसक[22]दुर्दुरूटाः निरवच्छिन्नावच्छेदकावच्छि-

---

१. प्रतिभोत्पन्नज्ञानेन ब्रह्मणः सूत्रणेन सूक्ष्मचर्चया, समीपस्थया गोष्ठ्या, हाटकालंकारेण ( सच्छन्दालङ्कारेण वा ) सदाशयानुरोधेन, आन्वीक्षिकीभिः सूक्ष्मदर्शनाभिः, ब्रह्मसूत्रोपनिषद्गीतामयीभिः, साहित्यशरीरधारिणीभिः अपि विग्रह ( कलह ) रहिताभिः । २. अजानाम् वर्कराणाम् तनयाभिरपि अन-जानाम् अजाभिन्नानां तनयाभिरिति विरोधः, अजाः अनुत्पन्नास्तनया यासां तथाभूताभिरपि न अजातः नयो नीतिर्यासां ताभिर्नययुक्ताभिरिति भावः । ३. निर्गता जरायास्तन्नामकराक्षस्या अयुतनयाः असंख्याका नीतयो याभ्यः ( छलच्छिद्रादिरहिताभिरिति भावः ) निर्गता जरायुभ्यो गर्भाशयेभ्यः तनयाः यासाम् । ४. 'राज्यहःसम्वत्सराच्च । ५. 'मासाद्वयसि यत्खञौ' । ६. 'द्विगोर्वा' । ७. 'यूनस्तिः' । ८. 'युवाखलतिपलितवलिनजरतीभिः' । ९. 'वयसि प्रथमे' । १०. 'नृनरयोर्वृद्धिश्च । ११. 'मित्रे चर्षौ' । १२. 'क्त्रेर्मम्नित्यम्' । १३. 'पात्रे समितादयश्च' । १४. सत्पात्रे सम्यक् इताः संस्थापिताः । १५. 'कृ-ष्णोदकपाण्डुसंख्ये'त्यच् । १६. 'अनिनस्मन्'–परिभाषया इनः स्त्रियाम् । १७. 'सन्महत्परमोत्तमे'ति समासे 'आन्महतः समानाधिकरणजातीययोः' । १८. 'असाम्प्रतिके' इत्यप्रत्ययनिष्पन्नस्य मध्यशब्दस्य 'पूर्वापरप्रथमचरमे'ति समासः । १९. 'कुत्सितानि कुत्सनैः' । २०. 'अवक्षेपणे कन्' (व्याकरणेन गर्विता इत्यर्थः ) । २१. 'पूर्वकालैकसर्वजरदि'त्यादिना समासः । २२. 'कुत्सितानि कुत्सनैः' ।

न्नतर्कनिर्भिन्नानेकप्रतिवादिशङ्का नव्यनैयायिका न जरन्नैयायिका[1], प्रदत्तवाग्बन्धा न निगडबन्धाः[3], प्ररूढनिद्रारूढखट्वा न खट्वारूढाः[4], विहिताविहितविचारशालिनो देवब्राह्मणाः[5] न ब्राह्मणब्रुवाः[6], गुरुजनाभीष्टदेवप्रिया न देवानां प्रियाः[7], विविधदूणार्शकालिक[9]–क्षेत्रियामयागदङ्काराः[10, 11] सद्वैद्या[12] न भिषक्पाशाः,[13] [14]प्रात्यहिकभूतबलिसन्तर्पितध्वांक्षा न तीर्थध्वांक्षाः[15], घटशरावादिविविधमृत्स्नासद्भाण्डनिर्माणकुशलाः कुलालाः न आणककुलालाः[17], पादसंवाहनादिविविधसेवाऽऽसन्नाः सन्नापिता न पापनापिताः[18, 19], सर्वयाज्ञिकाः नववेदपाठकाश्च[20] प्राप्तजीविका[21] विद्वांसो निजवंशानुरूपानुसृतकृत्याश्च भृत्याः। न केवलं कौशाम्बीसिद्धा[22] अपि तु विश्वप्रसिद्धा दानशौण्डाः[23]। याञ्च विविधराजकार्यकर्तृकां[24] पुरीं प्रविशति दर्शनीयतमभार्ये[25] वत्सेशे हर्म्यस्थमनोरमरामाननशतैर्देवीद्वयमुखविजितविधोरसेवासमागतसैन्यैरिव समपूरि समन्तान्नभः। गवाक्षजालाग्रलग्नपक्ष्मललोचनैश्चानिमेषक्षणमीक्षमाणाः काश्चित्तु विकसिताम्भोजसरःशङ्कामुदपीपदन्। नववधूदर्शकानां कासाञ्चित् सम्भ्रमच्छिन्नहारमुक्ताकणास्तत्तद्धृदयहर्षबाष्पाम्बुसी-

---

१. 'पूर्वकालैकसर्वजरत्०'। २. 'सिद्धशुष्कपक्वबन्धैश्चे'ति समासे 'नेन्सिद्धबध्नातिषु च' इति सप्तम्या नालुक्। ३ 'बन्धे च विभाषा'। ४. 'खट्वा क्षेपे। ५ देवानां पूजका ब्राह्मणा इति विग्रहे 'याजकादिभिश्च' इति समासानन्तरं शाकपार्थिवादिसमासे मध्यमपदलोपः। ६. ब्रूधातोः पचाद्यचि वच्यादेशगुणाभावनिपातनेन निष्पन्नस्य ब्रुवशब्दस्य चेलडादित्वाद् वृत्तिविषये कुत्सनवाचित्वेन 'कुत्सितानिकुत्सनैः' इति समासः। ७. देवानां प्रिय इति च मूर्खे। ८. 'दुरोदाशनाश'– इति वार्तिकेन साधु। ९. प्रकृष्टः कालः अस्येति कालिकः 'प्रकृष्टे ठञ्'। दीर्घकालचिकित्स्य इति भावः। १० 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः'। ११.'कारे सत्यागदस्य' १२. सन्महत्परमोत्तमेति समासः। १३. 'याप्ये पाशप्'। १४. अहनि अहनि, प्रत्यहम्, ततः कालाट्ठञ्, ततो वलयन्ततत्पुरुषस्य ध्वाङ्क्षान्तेन बहुव्रीहिः। १५. 'ध्वाङ्क्षेण क्षेपे'। १६. सन्नौ प्रशंसायाम्। १७, १८. 'पापाणके कुत्सितैः। १९, २०. 'पूर्वकालैकसर्वजरत्०। २१. 'प्राप्तापन्ने च द्वितीयया'। २२. 'सिद्धशुष्कपक्वबन्धैश्च' 'नेन्सिद्धबध्नातिषु च'। २३. 'सप्तमी शौण्डैः'। २४. 'नद्यृतश्च'। २५. दर्शनीयतमा भार्या यस्येति तमपि 'तसिलादिष्वाकृत्वसुचः', ततः 'स्त्रियाः–पुंवदि'ति पुंवद्भावः।

करा इवाबभुः । क्रमशश्चैवं जनतानुभूतामन्दानन्दोत्सवं वहति द्वारि, पौरपुरन्ध्रीणां नीरन्ध्रनगवाक्षैः कटाक्षैः सौन्दर्यवञ्चिततापिच्छैः, पिच्छातपत्रायमाणधवलातपत्रः,सुहृद्दुर्हृद्[1]धृदयेषु सौहृर्द्य्यं[2] हृल्लासञ्च[3] एकपद एवोत्पादयन् सम्पादिताशेषमङ्गलाचारं निजमन्दिरमाविवेश । क्षणादेव च तदगणितभूपालमौलिमङ्गलोपायनैरपूरि इति सम्मानिताखिलराजलोको वत्सराजोऽश्नीतपिबतोद्धरो[4]त्सूजादिक्रियाकलापैर्दिनशेषं निःशेषं चकार ।

इति कौमुदी-कथाकल्लोलिन्यां समासस्त्रीप्रत्ययनिर्देशात्मकस्तृतीयः कल्लोलः ।



१. 'सुहृद्दुर्हृदौ मित्रामित्रयोः' । २. सुहृदयस्य भावः कर्म वेति विग्रहे ष्यञि 'वा शोकष्यञ्रोगेषु' । ३. 'हृदयस्य हृल्लेखयदण्लासेषु' ( हृत्कम्पनम् ) । ४. 'आख्यातमाख्यातेन क्रियासातत्ये' ।

## समास-तद्धितनिर्देशात्मकश्चतुर्थः कल्लोलः

**उदयनस्य राजसिंहासनारोहणम्**

द्वितीयस्मिन् दिने सुधर्मा[१]नवमेनसभ[२]मण्डपच्छायगतस्य नृपस्य द्वारि समागतो ब्राह्मण एकोऽब्रह्मण्य[३]मुद्घोषयन्नाह—देव, विविधपशुशरण्ये[४]ऽरण्ये पापैर्गोपालकैरकारणमेव मत्पुत्र[५]स्य पादच्छेदो विहितः। एतदाकर्ण्य द्वित्रान्[६] गोपालकानाहूय राजा द्विजव्यथाकरं व्यतिकरं तं पप्रच्छेति तेषामन्यतमः सविस्तरं वर्णयितुं गिरमित्थमुत्थापयामास—देव, गोपालका भूत्वा क्रीडतामस्माकं मध्ये देवसोमाख्यो गोपालकः 'अहं युष्माकं राजाऽस्मीति निगदन्नोऽनुल्लङ्घितशासनोऽनुशास्ति। अद्य तेनैव वर्त्मना विप्रस्यास्यायं तनयस्तमप्रणम्य गच्छन् एहीडया[७]गिराऽऽकारितोऽप्यस्मानवधूय हसन्नग्रे प्रचलितः इत्यविनीतं तं पादच्छेदेन निग्रहीतुं समाज्ञप्तैर्गोपालकेनास्माभी राजाज्ञोल्लङ्घनात्तमैर्धाविस्वाऽस्य पादच्छेदो विहितः। एवं गोपालकैर्विज्ञप्तो राजा रहसि यौगन्धरायणेनोक्तः 'देव नूनं निधानादियुक्तेन तत्स्थानेन भुवेलिमम्, यत्प्रभावेण गोपालकोऽप्येवमाष्टे अतोऽविलम्बं तत्र गन्तव्यम्। मन्त्रिणेत्थमुक्तस्तद्गोपालकपुरस्सरः ससैन्यस्तत्र गतो राजा यावदेव भूमिं परीत्य कर्मिभिः खानयति तावदेव शैलाकृतिर्यक्ष एकोऽधस्ता[८]दुत्थायेत्थमाह-राजन्, स्वपितामह[९]निखातं[१०] शेवधिमिममङ्गीकुरुष्व' एवमुक्त्वा स्वीकृतवत्सेशविहितसपर्ये यक्षेऽन्तर्हितेऽवटाज्झटिति तस्मात् समहार्हसिंहासनो-

---

१., २. शोभनो धर्मो यस्य ( धर्मादनिच् केवलात् ) तस्मात् अनवमा अनिम्नकोटिका या इनसभा ( सभाराजाऽमनुष्यपूर्वा ) इति नपुंसकत्वम्, ततः इनसभमण्डपस्य च्छाया इति विग्रहे 'विभाषा सेनासुराच्छाये'ति नपुंसकत्वे क्तान्तेन समासः। ३. 'खलयवमाषतिलवृषब्रह्मणश्चे'ति यति 'ये चाभावकर्मणोरि'ति प्रकृतिभावः। ४. 'तत्र साधुः'। ५. प्रत्ययोत्तरपदयोश्चेत्यस्मदो मदादेशः। ६. द्वौ वा त्रयो वेति विग्रहे 'संख्ययाऽव्यये'ति बहुव्रीहौ, 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच्। ७. एहि ईड इति यस्यां गिरि सा एहीडा तया, 'एहीडादयोऽन्यपदार्थे'। ८. 'दिक्शब्देभ्यः'—इति अस्तातिप्रत्यये 'अस्तातिचे'त्यधरशब्दस्य अधादेशः। ९. 'मातृपितृभ्यां पितरि डामहच्'। १०. 'जनसनखनां सञ्झलोरि'ति दीर्घः।

महान् निधिराविरभूत् इतिकृत्स्नं तन्निधानमरुणमणिग्रावकिरणप्रसरैः प्रसरिष्यदुदयनप्रद्योतप्रतापद्योतकं रौप्याङ्कुरमुखप्रोतमुक्तासन्ततिदन्तुरमत्यधिकविस्मयस्मेरतारैर्मन्त्रिभिरुद्वीक्ष्यमाणं सिंहासनञ्च समाददानः प्रशासितगोपालको वत्सेशो निजनगरीमागत्य प्रजाताडितानन्ददुन्दुभिध्वानैः सह प्रजाभिर्दृश्यमानं तत्सिंहासनमन्तर्निजप्रासादमतिष्ठिपत् । मन्त्रिणोऽपि चैतेन राज्ञः सर्वथाऽऽमुखापातिकल्याणं ज्ञात्वा निरतिशयोत्सवेन तद्दिनं निन्युः ।

परस्मिन् दिने वत्सेशाभिप्रायं जिज्ञासुर्यौगन्धरायणस्तमुवाच 'राजन् एतत्कुलक्रमायातं सिंहासनं भवता समासादितमित्येतदारुह्य सनाथीक्रियताम्' । एवमुक्तो वत्सेशो विजिताऽऽसमुद्रक्षितिभिर्मदीयपूर्वजैरारूढचरमेतत्सिंहासनं कथमेकपद एव मयाऽऽरुह्यताम्' इत्यभिजातानुरूपमकृत्रिमाभिमानपूर्वकमभिदधत्ससाधुवादं मन्त्रिणा चैतेन प्रशस्यमानः प्राच्यादिदिग्विजयायोद्योक्तुमवाचि । तथापि बहुविघ्ना वाञ्छितकल्याणसिद्धयो न हि शम्भुप्रसत्तिमन्तरेण प्राप्या इति तदर्थं मे शम्भोराराधयिषा भवद्भिरनुमन्यतामेवमुक्त्वा मन्त्रिभिरनुमतं देवीभिः सह तपस्यन्तं त्रिरात्रोपोषितं [1] भूपमतिसन्तुष्टः शिवोऽपररात्रे [2] निर्विघ्नं तद्विजयमचिरात्सर्वविद्याधराधीशपुत्रावाप्तिञ्च समादिशत् । अतः शम्भुप्रसादपरीततपःक्लान्तिकमनीयः, प्रजाजननमनीयः पार्थिवचन्द्रः [3] कल्ये साकल्येनापररात्रदृष्टं तत्सत्स्वप्नं सचिवान् व्रतोपवासक्लान्ते कान्ते पद्मावतीवासवदत्ते च श्रावंश्रावं तर्पयित्वोत्सवव्यग्रपौरां व्रतपारणां व्यदधात् ।

परेद्यवि यौगन्धरायणो राजानमागत्यावोचत्—'राजन् धन्यो भवान् भगवान् भवो भूत्यै यस्यैवं प्रसन्नः । तदिदानीं शत्रून् विजित्य स्वभुजार्जितां लक्ष्मीं प्रनष्टमपि चिरभूमिष्ठं [4] स्वपूर्वजसम्भृतमिदानीं प्राप्तमक्षय्यनिधिं सिंहासनञ्च भजस्वेति ।

इत्थममात्यमुख्येनोक्तो वत्सेश्वरो भयानकसायकनिकायवर्षिणाममर्षिणा दर्पेण यवीयसां पापीयसां विसरमुत्सारयितुं दिग्विजयप्रयाणारम्भमादिशत् । सम्पन्ने च यात्रासंरम्भे श्रेणीभूतेषु च श्रेणीकृतसैनिकेषु [5] विजयाशंसिभिर्निमित्तैरतिप्रीतः

---

१. तिसृणां रात्रीणां समाहारस्त्रिरात्रम् तद्धितार्थे समासे 'अहः सर्वैकदेशे'-त्यच् । २. अपरं रात्रेरितिविग्रहे 'पूर्वापराधरोत्तरे'ति समासे 'अहः सर्वैकदेशे'त्यच् । ३. 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' । ४. 'सुपि स्थः' इति स्थाधातोः के 'अम्बाम्बगोभूमि—इति सस्य षः । ५. श्रेण्यादयः कृतादिभिः' ।

कीर्तिपार्थिवः[1] शुभेऽह्नि गजता[2]श्वीय[3]पदिक[4]धानुष्का[5]सिक[6]प्रासिक[7]पारश्वधिक[8]शाक्तीक[9]या-
ष्टीकादिविविधपरिच्छदसुसज्जितः पूर्वं[11] प्राचीं विजिगीषयाऽभ्युज्जगाम[12] अभ्यमित्रीणो
[13]वाराणसेयं ब्रह्मदत्तम्। जिते च तस्मिन् क्रमेण वायुर्वृक्षानिवान्यानपि तत्सहा-
यान् शमयन्नमयन्शत्रून्, उन्मूलयँश्च काँश्चित्कठोरानन्यान् किंराजन्यान्[14], वङ्गा-
ब्धिवेलातटे स्थापितनिजविजयस्तम्भो भूपतिकुञ्जरः[15] करदीकृतान् कलिङ्गान्
अवनमय्य [16]महेन्द्राभिभवाद्भीतैरिव समवेतैर्गजैः इभयुवतिभिश्च[17] विन्ध्यारण्यानीं
जित्वाऽवाचीं दिशं ययौ, तत्रत्यपर्वतीयशत्रून्[18] सम्मर्दयन् कावेरीमुल्लङ्घमानश्चो-
लकेश्वरकीर्तिं चुलुकीकृत्य प्रमदामिव नर्मदां नर्मदामुत्तीर्य विगतराजान्तर[19]भयेन
चण्डसेनेन सत्कृत उज्जयिनीं प्रविवेश, तत्र च वासवदत्तया, पद्मावत्या च समा-
गतोऽतिप्रीणश्चण्डसेनोऽनुभूतामन्दानन्दोऽभूदित्यतिप्रीतियुक्तो वत्सेशः कांश्चि-
न्निशास्तत्र विश्रम्य श्वाशुरसैन्यै[20]रन्वितः प्रतीचीं दिशं जगाम। तत्र ईषद्रक्त[21]-
नेत्रार्ति[22]वाचाटान् लाटान् अवनमयन्तं तमवलोक्य मा मामयमब्धिमुन्मन्थितु-
मुन्मूलयेदिति संशीत्या भीत्या तद्व्याजावधूतवनव्याजेनावेपत मन्दरधराधरः। इत्थं
भास्वद्विलक्षणोदयनस्तेजस्वी उदयनः प्रतीच्यामपि प्रकृष्टमभ्युदयं प्राप्नुवन्
कुबेरतिलकामलकासङ्गशंसिनीं कैलासहाससुभगामुदीचीं ककुभमभिससार। तत्र

---

१. कीर्तिः प्रिया यस्मै स कीर्तिप्रियः स चासौ पार्थिव इति शाकपार्थिवादित्वात्समासः। २. 'गजसहाभ्याञ्चेति वक्तव्यम्'। ३. 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्'। ४. पादाभ्यां चरतीति पदिकः 'पर्पादिभ्यष्ठन्,' 'इके चरतावुपसङ्ख्यानम्' इति पादस्य पदादेशः। ५–७. 'प्रहरणम्'। ८. 'परश्वधाट्ठञ्'। ९-१०. 'शक्तियष्ट्योरीकक्'। ११. 'उगितश्च'। १२. अमित्रमभिलक्षयेति विग्रहे 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावे 'अभ्यमित्राच्छ च'। १३. 'नद्यादिभ्यो ढक्' १४. 'राजश्वशुराद्यत्', 'ये चाभावकर्मणोः' ततः कुत्सिताः राजन्या इति 'किं क्षेपे' इत्यनेन समासः। १५. 'वृन्दारकनागकुञ्जरैः पूज्यमानम्'। १६ महाँश्चासाविन्द्रः, 'सन्महद्'ति समासे 'आन्महतः समानाधिकरणे'ति आत्वम्। १७. इभी चासौ युवतिश्चेत्यत्र 'पोटायुवती'त्यादिना समासे 'पुंवत्कर्मधारये'ति पुंवद्भावः। १८. 'तप्पर्वमरुद्भ्याम्' इति निष्पन्नात्पर्वतशब्दात् 'पर्वताच्चे'ति छः। १९. अन्यो राजा राजान्तरम्, मयूरव्यंसकादित्वात्समासः। २०. श्वशुरस्येमे ( तस्येदम् ) सेनायां समवेताः ( सेनाया वा इति ण्यः ) तत उभयोः कर्मधारयः। २१. 'ईषदकृता', 'ईषद्गुणवचनेनेति वाच्यम्'। २२. 'आलजाटचौ बहुभाषिणि'।

वत्सराजराज[1]वर्चसम् असहमानमाहवे चात्मनः श्वोवसीयस[2]ममन्वानमपि प्राती[3]-पिकं सिन्धुराजं स्वकीयतेजोविशेषेण आन्वीपिकं[4] कुर्वाणस्तत्रत्यान् म्लेच्छानुच्छिन्नसच्छीलान् सद्यश्छिन्नगलगलच्छोणितच्छुरितकौक्षेय[5]केण खण्डशः कुर्वन् तुरुष्क-तुरगव्रातान् निजविकटकरटिघटाभिर्दलयन् च[6]ञ्चत्कबृहत्कस्व[7]कीयकरवालेन च पारसीकपतिं शैर्षच्छेदिकं[8] विधाय शत्रुसैन्यकवो[9]ष्णासृङ्निधौ निदधौ। हूणहानिकृतश्च तस्य मुखरीकृतदिङ्मुखा कीर्तिरपरा तुङ्गतरङ्गा गङ्गा इव हिमाचले विचचार। भयस्तिमितविद्विषोऽस्य दन्तिनां नदन्तीनां च चमूनां प्रतीपो नादः केवलं गिरिगह्वरेषु शुश्रुवे।

इत्थं निजबलजलनिधिवीचीनीचीकृतविविधभूभृद्भुजदम्भविजृम्भः, समुन्मथितप्राति[10]पथिको वत्सेशो वसुधां विजित्य मगधभूभृतः पद्मावतीपितुः पुरं प्राप्य तत्राविज्ञात[11]ज्ञातां वासवदत्तामधिकप्रश्रवास्पदं मन्वानेन [12]स्वागतिकेन राज्ञा, पद्मावतीसहितो नैकध्य[13]मतिसत्कृतो निजबलभरेणावनमितातलो लावाणकं जगाम। ततो मन्दरनगायमाननिजबलावलोडितारिनक्रमकरायमाणप्रतिभट-संगरावारपारीणकीर्तिरन्येद्युर्लावाण[14]कात्कौशाम्बीं प्रतिप्रस्थितः सपरिच्छदः क्षितीशः स्वामिविजयोत्सवेनोत्पतत्पताकाभुजलताभिर्नृत्यन्तीमिव राजधानीमागत्योच्चैश्चारणैरुद्गीयमानः, वन्दिभिः स्तूयमानः, कापुरु[15]षैरीर्ष्यमाणः, वि[16]द्वद्वृन्दारकैराशीभिरभ्यर्च्यमानः, नरदेवैश्च प्रणम्यमानो निजमन्दिरमाससाद। तत्र च निवसन्

---

१. 'पल्यराजभ्यां चेति वक्तव्यम्' इत्यच्। २. 'श्वसोवसीयः श्रेयसः'।
३-४. 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इति ठक् (प्रतीपान्वीपशब्दौ प्रतिकूलानुकूलप-
र्यायौ)। ५. 'कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु' इति ढकञ्। ६. 'चञ्चद्बृहतोरुप-
सङ्ख्यानम्' इति स्वार्थे कन्। ७. स्वस्यायमिति विग्रहे गहादित्वाच्छः, 'स्वस्य चे'ति
कुक्। ८. 'शीर्षच्छेदाद्यच्चे'ति ठकि तद्योगे शिरसः शीर्षभावः। ९. 'कवञ्चोष्णे'।
१०. पथि पथि इति वीप्सायामव्ययीभावे 'ऋक्पूरब्धूःपथामानक्षे' इति समा-
सान्ते 'नस्तद्धिते'इति टिलोपे 'प्रतिपथमेति ठंश्चेति' ठक्। ११. पूर्वमविज्ञाता पश्चाज्ज्ञा-
तेति पूर्वकालैकसर्वजरदिति समासः। १२. 'तदाहेतिमाशब्दादिभ्यः उपसंख्यानम्'
इति सहकारेण 'प्राग्वहतेष्ठक्', 'स्वागतादीनाञ्च' इत्यैजभावः। १३. 'संख्याया विधार्थे
धा', 'एकाद्धो ध्यमुञन्यतरस्याम्' ततः सुप्सुपेति समासः। १४. 'सद्यःपरुत्परारीति'
सिद्धिः। १५. 'विभाषा पुरुषे'। १६. 'वृन्दारकनागकुञ्जरैः पूज्यमानम्'।

विनम्रेषु राजसु शासनमधिरोप्य तौर्यमङ्गलतारधीररवप्रतिरवैः, तन्मन्त्रिमुख्यपरितोषितलोकपालप्रतिदिशप्रदत्तसाधुवादैः सह निधानाधिगतं कुलोचितं सिंहासनमारुरोह। वीतलोभश्च सन् वसुधाविजयार्जितं च वसुवासवोपमः सत्कृत्य द्विजेभ्यो वितरन्, सात्ममन्त्रिलालाटिक[1]क्षितिपतिमण्डलश्च कृतमहोत्सवोऽकृत कृतार्थम्।

इत्थं कौशाम्ब्यां रुमण्वद्यौगन्धरायणाधिकृतराज्यभारः कदाचिन्मार्दङ्गिकै[2]रन्यदा झार्झरिकैः[3] कदाचिच्च माड्डुकिकैर्विनोद्यमानः, कदाचिद्वासवदत्तयाऽन्यैश्च स्वानुजीविसभ्यै[4]सङ्गीतप्राचार्यै[5]र्वीणां वादयन् पद्मावत्या च सह कुशलकुशीलवकुलशीलितविचित्रवादित्रकलशीरवविवशीकृतमनाः, सङ्गीतकं वा सेवमानः, समयमत्यवाहयत्। कदाचित्पर्य्यध्ययनो[6] विविधविबुधैः सह शास्त्रसागरममन्थत्। सन्नद्धपलाशश्यामवारवाणो[7] गृहीतधनुर्बाणोऽतिपुष्पबाणोऽश्वोरसमारुह्य[8][9] निष्कौशाम्बिर्मृगान्[10] मृगयमाणोऽसौ कदाचिदारण्यकान्[11] वशमानयमानो मृगयारसमास्वादयन्नतिभयानकान् चित्रकान्, वृकान् व्याघ्रकांश्च सपत्राकरोत्[12]। कदाचिदुपात्तभल्लो भल्लूकानभल्लत्। अन्यदा चालंपुरुषीणोऽतिमल्लो[13][14] मल्लशाले मल्लितमलमल्लकमतल्लिको मल्लकैरवल्लत्।

एवं सुखोपभोगेषु वर्तमानं तमेकदाऽऽस्थानस्थितं समागतो मुनिर्नारदः स्वीकृतातिप्रह्वीभूततत्सम्पादितातिथ्यः समुवाच—'वत्सेश्वर, संक्षेपेण ते किञ्चिद्विवक्षुं मामवधेहि—आसीत् पुरा पाण्डुनामा त्वदीयपूर्वपितामहो महौजा राजा। तस्य कुन्ती माद्री चेति द्वे भव्ये भार्ये बभूवतुः। [15]प्रातिपौरुषिकोन्मथितप्रमाथी स नदीनमेखलां महीमहीनो विजित्य जित्वरो[16]ऽवमत्य

*नारदस्य नरवाहनदत्तोत्पत्त्युपक्रमः*

---

१. 'संज्ञायां ललाटकुक्कुट्यौ पश्यति'। २. 'शिल्पम्'। ३. 'मड्डुकझर्झरादणन्यतरस्याम्'। ४. 'सभाया यः'। ५. 'प्रादयो गताद्यर्थे प्रथमया'। ६. परिग्लानोऽध्ययनायेति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या'। ७. सन्नद्धः पलाशश्यामवारवाणेनेति 'अवादयः क्रुष्टाद्यर्थे तृतीयया'। ८. पुष्पवाणमतिक्रान्त इति 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया'। ९. अश्वानामुर इव इति विग्रहे 'अग्राख्यायामुरसः'। १०. निष्क्रान्तः कौशाम्ब्या इति 'निरादयः क्रान्ताद्यर्थे पञ्चम्या'। ११. 'पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्' इति वुञ्। १२. 'सपत्रनिष्पत्रादतिव्यथने'। १३. अखडक्षाशितङ्ग्वलम्–इति खः। १४. मल्लानतिक्रान्तः। १५. मनोज्ञत्वाद् वुञ्, अनुशतिकादीनाञ्चेत्युभयपदवृद्धिः। १६. 'इण्नशजिसर्तिभ्यः क्वरप्।'

किं[1]राज्ञः सर्वथा[2] सुखी निजौरसप्रजा इव प्रजाः शासद्राज्यमकरोत्। मृगयाव्यसनी स चैकदा[3] वनं गतो मृगरूपधारिणं स्वभार्यया सह कन्दर्पकेलिकारिणं कन्दर्पनामानं मुनिं पञ्चशरविद्धमपि व्याध इव शरेणानुविव्याध। परित्यक्तनिजरूपो मुनिः कण्ठगतोत्क्राम्यदसुरतिविषण्णमपि निषण्णं पुरो मुक्तोच्छ्वासं मुक्तनिःश्वासं शशाप पाण्डुम्–'निरपराधोऽप्युद्दामकामवामासक्तोऽविमृष्टकारिणा यत्त्वयाऽहं हतस्तस्मात्त्वमप्यहमिव[4] मृत्युमवाप्स्यसीति'। इत्थमवाप्तशापः पाण्डुस्तद्भीत्या मुक्तभुक्तिस्पृहः सपत्नीक एकान्ते शान्ते निशान्ते निवसन्नपि निशान्ते निजप्रियामेकदा माद्रीमकस्मात्कामयमानोऽज्ञानोपहतचेताः प्रेताधिपपुरीपान्थो[5]ऽभवत्। एवं मृगयेयं मृगानिवागणितनृपानमारयन्मारयति मारयिष्यति चेतीयं घोरनादा पललाभिलाषा रेणुरूक्षोर्ध्वमूर्धजा, कुन्तदन्ती[6], रात्रिञ्चरीव[7] न कथमपि[8] जानाति भद्रङ्करणम्[9]। अतो जहिहि, जहीहि, जहाहि फल्गुफलायासं मृगया[10]रसम्। त्वं हि मे त्वत्पूर्वजप्रीत्या प्रेयानिति कल्याणभाजन, सभाजनमिहार्हसि मत्तः। यथा च कामांशस्तव पुत्रो भविता तदपि संक्षिप्त्याऽऽकर्णय—अनङ्गसम्भूत्यै स्तुतिभिरर्चितो रत्या पुरा पुरारातो रहसि तामित्थ[11]मुवाच, 'निजांशेन भूमाववतीर्य सुतीयन्ती[12] सती मामाराध्य स्वयं कामं जनयिष्यति अतश्चण्डसेनसुतारूपेणावतीर्णा सा वासवदत्ता ते भार्या सँवृता। सैषा समाराधितकामारिः कामांशं सुतं सविष्यते सर्वविद्याधरसम्राजम्। एवमुक्त्वाऽन्तर्हिते नारदे संजातजातेच्छया वासवदत्तया सह तद्दिनं निनायोदयनः।

परेद्युरास्थानवर्तिनं राजानं नित्योदिताख्यप्रतीहारी व्यजिज्ञपत्, 'देव, दारकद्वयसंयुक्ता दुर्गता काचिद् द्विजदयिता देवदिदृक्षया द्वारमध्यास्ते। तदाकर्ण्यैव महा[13]राजेन प्रवेशायाभ्यनुज्ञाता कृशपाण्डुरधूसरा सा ब्राह्मणिरूपा[14]ऽङ्के बिभ्रती

---

१. 'किं क्षेपे' इति समासे 'किमः क्षेपे' इति समासान्तनिषेधः। २. 'प्रकारवचने थाल्'। ३. 'सर्वैकान्यकिंयत्तदः काले दा'। ४. 'इवेन सह समासो विभक्त्यलोपश्च'। ५. 'पन्थो ण नित्यम्'। ६. 'नासिकोदरौष्ठेति' ङीष्। ७. 'रात्रेः कृति विभाषा'। ८. 'किमश्च'। ९. 'उष्णभद्रयोः करणे'। १०. 'परिचर्यापरिसर्यामृगयेति' साधुः। ११. 'इदमस्थमुः,' 'एतेतौ रथोः'। १२. सुतमिच्छन्तीति क्यजन्ताच्छतरि ङीप्। १३. 'सन्महत्०' 'आन्महतः'-'राजाहःसखिभ्यष्टच्'। १४. प्रशस्ता ब्राह्मणीति विग्रहे प्रशंसायां रूपपि 'घरूपकल्पेति' ह्रस्वः।

दुःखदैन्यदेहाविव द्वौ दारकौ, विदारकौ हृदो दर्शकस्य तद्दैन्यदशायाः, सहवास-जन्यसहजदोषेणेव सूत्रदारिद्र्येण युक्तेन, तन्मानेनेव विशीर्णवाससा विधुरीकृता, अन्तः प्रविश्य प्रदर्शितोचितसमुदाचारा राजानमुवाच—'देव कुलीनाऽहं ब्राह्मणी-दर्शी दुर्गतिं गता। अस्यामेवावस्थायां मम नियमसंयमाविव यमाविमौ द्वौ तनयौ सञ्जातौ। कुललज्जया प्रातिद्वारिकिं[1] याचितकं[2] कर्त्तुमपारयन्ती नाहमुदौदन[3]मप्युदर[4]-पूरं भोक्तुं लभे। दध्योदनस्य[5] गुडधानाया[6] सूपगन्धिनो[7] वाऽशनजातस्य तु वार्त्तैव दूरेऽपास्ताम्। अतो निराहाराया मम स्तनयोरेतन्नवाहर्जात[8]शिशुपालनार्थं स्तन्य[9]-प्रति न वर्त्तते। संजातदयोदयेन मम प्रतिवेशिमहोदयेन स्वोपभोगावशिष्टेन कथं कथञ्चित्किञ्चिद्दत्तेनाजक्षीरेणाद्यावधीमौ[10] स्तनन्धयौ[11] परिरक्षितावित्यतिकृपणाऽ-हमशरणा शरणागतवत्सलं भवन्तं प्राप्ताऽस्मीति श्रुत्वा देवः प्रमाणम्। एतदा-कर्ण्य सदयोदयोज्ज्वलो वत्सेशः प्रतीहारमादिश्य तां देव्या वासवदत्तायाः समीपे प्रैषयत्। सा पि च तां राज्ञा प्रेषितां बुद्ध्वा तस्या [12]हृदिस्पृग्भिर्वाग्भिश्च द्रवी-भूता तया सह समालपन्ती समचिन्तयत्—अहो! वामैकवृत्तिताऽवस्तुनि भक्तिश्च विधेः। यो नाद्यावध्येकमपि मत्तः सुतं समुत्पाद्य दुर्गताया अस्या इमौ यमलावुत्पादितवान्। एवमात्मसन्तानविषयकानेकचिन्तासन्तानवितानैकताना सिस्नासुराशु समुत्थिता द्विजदयितां तां स्नपयितुं चेटिकाः समादिशत्। स्नातां[13]-नुलिप्तां च तां निष्प्रवाणिं[14] [15]सर्वश्वेतां शाटीं सम्वास्य मनोहत्य[16] विविधाशनजात-माशयदिति ब्राह्मणी सा सलिलसिक्ता तप्ता भूरिव समुच्छ्वसन्ती क्षणानन्तरं देव्या वासवदत्तया निजवृत्तान्तं वक्तुमनुरुध्यमानाऽञ्जसा वक्तुमित्थमुपचक्रमे—

१. 'ठगायस्थानेभ्यः,' 'तत आगत' इति वा ठक्। २. 'अपमित्ययाचिताभ्यां कक्कनौ'। ३. 'मन्थौदनविन्दुवज्र०'। ४. 'चर्मोदरयोः पूरेः'। ५. 'अन्नेन व्यञ्जनम्'। ६. 'भक्ष्येण मिश्रीकरणम्'। ७. 'अल्पाख्यायाम्'। ८. नव अहानि जातयोः ययोः—'उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम्'। इति सहकारेण 'कालाः परिमाणिना,' इति समासे 'अह्नोऽह्न एतेभ्यः'। ९. स्तनयोर्भवं स्तन्यम्, 'शरीरावयवाच्चेति' यति स्तन्यस्यलेशः स्तन्यप्रति 'सुप्प्रतिना मात्रार्थे'। १०. 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्'। ११. 'नाडीस्तनयोर्ध्माधेटोः'। १२. 'हृद्युभ्याञ्चेति' सप्तम्या अलुक्। १३. 'पूर्वकालैकसर्वजरत्०'। १४. 'निष्प्रवाणिश्चेति कबभावः'। १५. 'सर्वनामसंख्ययोरुपसंख्यानम्' इति। १६. 'कणेमनसी श्रद्धाप्रतीघाते'।

देवि, अस्ति विविधै वैंतनिकैः[१], वस्निकैः[२], क्रयिकैः[३], विक्रयिकैः[४], यथाकालं यथासमयं[५] यथावश्यकं क्रय्याणि सत्यांकुर्वद्भिश्च[६] क्रयविक्रयिकैः, आपमित्यक[७] व्यावहारिकैः, आपूपिकैः[८], लावणिकैः[९], गान्धिकैः[१०], कौटतक्षैः[११], आष्ट्रमिन्धैः[१२], भास्त्रिकैः[१३], शीर्षभारिकैः[१४], वीवधिकैः[१५], परिपूर्णो बहिर्नगरै[१६] न्युष्टिनिष्ट्यो[१७]ऽप्यन्तर्नगरन्युषितै[१८]शिष्टविशिष्टै[१९]दैष्टिको मालवदेशः। तत्रत्यस्य चाग्निदत्ताभिधद्विजस्य त्रयः पुत्रा उत्पन्नाः। मध्यमं[२०]स्तेषु जनुषान्धो[२१] बाल्य एव शमनसदनमसदत्। ज्यायांस्तेषु शङ्करदत्ताख्यः, कनीयांश्च[२२] शान्तिकरः। शान्तिकरो बाल एव विद्याभिलाषुकोऽकस्मात्पितुर्गृहान्निर्गतोऽद्यावध्यज्ञातकुत्रत्यः। तस्य ज्येष्ठो भ्राता तत्रत्यस्य यज्ञदत्तस्य तनूजां मामुपायच्छत। कालेन तस्य वर्षीयान् पिता पतिभक्तिनिष्ठया वर्षिष्ठया निजभार्यया सह स्वर्गत इत्यन्तर्वत्नीं[२३] निजपत्नीं[२४] मां विरहय्य तीर्थोद्देशेन गतो मे भर्ता निजजननीजनकशोकसन्तप्तः सरस्वतीपयःपूरे तनुमत्याक्षीत्। तत्सहयायिभिश्चागत्योदिततदुदन्तीकृताऽहं तमनुगन्तुमना अप्यन्तःसत्त्वेति तथाकर्त्तुं नासादयं स्वं[२५] बान्धवं[२६] सम्मतिमानम्। प्रत्यग्रशोकाभिभूताया अपि मेऽकस्मात् साग्रहारो निवासो दस्युभिर्लुण्ठित इति शीलभ्रंशभिया तिसृभिर्ब्राह्मणीभिः सह

---

१. 'वेतनादिभ्यो जीवति'। २–४. 'वस्त्रक्रयविक्रयाट्ठन्'। ५. यथाप्रतिज्ञम्। ६. 'सत्यादशपथे'। ७. 'अपमित्ययाचिताभ्यां कक्कनौ', व्यवहारेण चरतीति ठकि स्वागतादीनाञ्चेत्यजभावे वृद्धिः। ८. 'तदस्य पण्यम्'। ९. 'लवणाट्ठञ्'। १०. 'तदस्य पण्यम्'। ११. 'ग्रामकौटाभ्याञ्च तक्ष्णः'। कुट्यां भवः कौटः स्वतन्त्रः स चासौ तक्षा अचि 'नस्तद्धिते' इति टिलोपः। १२. 'आष्ट्रान्योरिन्धे'। १३-१४. 'भस्त्रादिभ्यः ष्ठन्'। १५. 'विभाषा विवधात्'। १६-१७. नगराद्बहिरिति विग्रहे 'अपपरिबहिरञ्चवः पञ्चम्ये'ति समासस्तत्र न्युष्टिः (निपूर्वकवसतेः क्तिनि यजादित्वात्सम्प्रसारणे 'शासिवसिघसीनां चे'ति षः) येषामेवंभूता निष्ट्याः चाण्डालादयः ('निसो गते' इति त्यपि 'ह्रस्वात्तादौ तद्धिते' इति षः) यत्र। १८. 'वसतिक्षुधोरिट्'। १९. 'अस्ति नास्ति दिष्टं मतिः।' २०. 'मध्यान्मः'। २१. 'पुंसानुजो जनुषान्ध इति च'। २२. 'युवाल्पयोः कनन्यतरस्याम्'। २३. 'अन्तर्वत्पतिवतोर्नुक्'। २४. 'पत्युर्नो यज्ञसंयोगे'। २५. 'प्रज्ञादिभ्यश्चेति' स्वार्थेऽणि 'ओर्गुणः'। २६. 'वेर्यातलाभमतिमनःशारदानाम्' तथा 'समो मतिमनसोः' इति गणसूत्राभ्यां वर्णदृढादित्वादिमनिच्।

समुपात्तस्वल्पवस्त्राऽहं ततः पलाय्य दवीयसि देशेऽयाथाकाम्म्या[1] मासं कृच्छ्रकर्मोपजीविनीतस्ततो निवसन्ती दीना, कर्णपरम्परया वत्सेशं श्रुत्वा शरण्यं शीलैकपाथेया[2]ऽऽत्मसंरक्षणमात्रैकध्येयाऽहमिहायाता। आस्थानमण्डपगतस्य च राज्ञोऽभ्यर्णं[3] गत्वा शरणं याचितस्यादेशेन त्वच्चरणान्तिकमासादितवतीत्येष एव मे वृत्तान्तः। आबाल्याग्निक्रियाधूमैर्मदीये दृशावीषत्पिङ्गले[4] इति पिङ्गलिकानाम्ना प्रसिद्धाऽहम्। एवमुदितवृत्तान्तां तां देवी वासवदत्ता कुलीनेयमिति मनसिकृत्य[5] प्रीत्यैवं जगाद इह[6] स्थितो वर्तते शान्तिकराभिधोऽस्माकं पुरोहितो वैदेशिकः। स्यात्, स ते देवरः।

एवमुक्तयात्युत्कया शान्तिकरमानाययितुं प्रार्थिता वासवदत्ता प्रतीहारद्वारा तमाकार्यानुयुक्तपरिज्ञाततदन्वयाभिजनादिः अपीयं ते प्रजावती? इत्युक्त्वा तं तां ब्राह्मणीमदीदृशत्। एवं तयोः परस्परं परिज्ञप्तौ संजातायां ज्ञातबन्धुविनाशः शान्तिकरो भ्रातृजायां निजनिवासमानीय पितरौ भ्रातरञ्च यथोचितमनुशोच्य दारकद्वितयान्वितां तां भृशमाश्वासयामास। देवी वासवदत्ता चापि तस्या द्वावपि ज्येष्ठकनिष्ठौ पुत्रौ बहुसम्पत्तिवितरणपूर्वकं क्रमशः शान्तिसोम–वैश्वानरनामानौ कृत्वा भाविनः स्वपुत्रस्य कुलहितौ पुरोहितौ परिकल्पितवती।

इत्थं तत्र सर्वेषु संगतेषु लब्धविभवेषु च दिनान्यतिवाहयत्सु शान्तिकरादिष्वेकदा तत्र स्वकीयैः पञ्चभिः सुतैः सह शरावान् समादायागतामेकां कुम्भकारीमालोक्य पार्श्ववर्तीयां[7] पिङ्गलिकां वासवदत्तोवाच—सखि, समालोकयेमाम्। इयं हि पुत्राणाम् पात्रम् इति पञ्चास्याः पुत्राः। नाद्यापि ममैकोऽप्यत ईदृशी[8] अपीयं न मादृशी[9] अननुभूतात्मीय[10]सन्ततिमुख[11]तीय[12]शोभासुखोद्भूतसन्तापसन्तप्ता वर्तते। एवमुक्ता पिङ्गलिकाऽब्रवीत्—देवि, पापभूयिष्ठा प्रेष्ठा प्रजेयम् दरिद्रेष्वेव भूयसी। युष्मादृक्षेषु च जनेषु कश्चिदुत्तमपुण्यात्मैव जान्मिकं[13] इति त्वरयालम्। अत्र भवत्यप्यचिरादेवावाप्तोचितसुतसुखा भविष्यतीति।

---

१. ब्राह्मणादेराकृतगणत्वात् ष्यञि हलस्तद्धितस्येति यलोपः षित्वान् ङीष् ततो नञि अयाथाकाम्या ( असम्मनिम्ना ) औदासीन्येनेति भावः। २. पथ्यतिथिवसतीतिढञ्। ३. 'अभेश्चाविदूर्ये'। ४. 'ईषदकृता'। ५. 'अनत्याधान उरसिमनसी'। ६. 'इदमो हः,' 'इदम इश्'। ७. पुंयोगलक्षणा ङीष्। ८. 'मुखपार्श्वतसोर्लोपश्च'। ९. 'त्यदादिषु दृशोऽनालोचने कञ्च,' 'इदंकिमोरीश्की,' टिड्ढेति ङीप्। १०. आ सर्वनाम्नः। ११. 'वृद्धाच्छः'। १२. 'मुखपार्श्वतसोर्लोपश्च'। १३. 'तदर्हति इति ठञ्'।

पिङ्गलिकयेत्थमुक्ता सुतजन्मोत्सुका तच्चिन्ताक्रान्तमानसा च वासवदत्ता तत्क्षणमागतेन वत्सेशेनोक्ता—'देवि, गिरिशाराधनप्राप्यं पुत्रं नारदोऽस्मभ्यमभ्यधादित्यस्माभिरवश्यं वश्यं नेयः समाराधनेन वरदो गिरीशः । इत्थमुक्ता देवी चाशुतोषमाशु तोषयितुं विधिवद्[1] व्रतं कर्त्तुमारेभे । आत्तव्रतायाञ्च तस्यां समन्त्रिको वत्सेशोऽपि शङ्करसमाराधनसंलग्नः संजात इति त्रिरात्रोपोषितयोस्तयोः स्वप्ने स्वयं शम्भुः समादिशत्—'युष्मत्समाराधनयाऽतितुष्टोऽहमिति' भावत्क[2]पुत्रकाम्यासिद्धये मदीयोऽस्तु[3]ङ्कारः । जनिता च युवयोर्मारांशावतारः कुमारः, भविता च स मत्प्रसादेन विद्याधराधारः । इत्थमुदितगिरि गिरिशेऽन्तर्हिते च, सपदि समधिगतवरसम्मदमवाप्य कृतार्थौ दम्पती प्रातरुत्थाय निर्वर्तिताह्निककृत्यौ सर्वाः प्रजाः तत्स्वप्नसूचनसुधासिञ्चनेन सन्तर्पयन्तौ निजव्रतपारणां विदधतुः । कतिपयदिवसापगमे च स्वप्नजे वासवदत्तायै कश्चिज्जटिलो वर्णी[4] समुपेत्य फलमेकमदयिष्टेति स्वाभीष्टसाधकमाङ्गलिक[5]स्वप्नेन सुतविषयकमनोरथपूर्तिमदूरगां गणयन् गण[6]रात्रम् अगमयद्वत्सेशः ।

अथ वासवदत्ता दधार मारांशावतारससारगर्भम् । अतो येषु येषु वस्तुषु दोहदिनी सा यद्यदेवाभिललाष सर्वं तत्तद्वत्सराजेन पूर्णीकृतमलभत । एकदा प्रसङ्गोपनतासु मन्त्रसाधनसन्नद्धसाधकेन्द्रकथासु दोहदिनी गर्भवती वासवदत्ता सा स्वप्ने सरसारब्धसंगीतविद्याधरवराङ्गनाभिरुपस्थाप्यमानामात्मानमवलोक्य प्रबुद्धा साचात्तल्लचयभूतलकौतुकं नभःक्रीडाविलसितमभिललाष । तच्च यौगन्धरायणो यन्त्रमन्त्रेन्द्रजालादिप्रयोगैरित्थं सम्पादितवान् यद्गगनस्थिता सा सर्वमेव तद्वास्तविकमिवान्वभवत् ।

एकदा च तस्या हृदि समुदपादि दोहदो विद्याधरोदारकथाशुश्रूषाया इति तत्पूर्त्तयेऽभ्यर्थितो यौगन्धरायणः शृण्वत्सु तत्रत्यसर्वपारिषद्येषु हृद्यां कथामिमां वर्णितवान्—

अस्ति गिरीणां गुरुर्नगेन्द्रो[7] हिमवान् । विद्याधरनिवासे च तस्मिन्नुवास

---

१. 'तदर्हम्' (विधिमर्हति) इति वत् । २. 'भवतष्ठक्छसौ' । ३. 'अस्तोश्चेति वक्तव्यम्' इति कारे मुम् । ४. 'वर्णाद् ब्रह्मचारिणि' । ५. 'प्रयोजनमिति' सूत्रेण ठञ् । ६. गणानां बह्वीनां रात्रीणां समाहारः, 'बहुगणवतुडतिसंख्या', अहःसर्वैकदेश० । ७. 'नगोऽप्राणिष्वन्यतरस्याम्' ।

राजा जीमूतकेतुर्नाम विद्याधराधिपः। तस्य गृहे पितृक्रमादागतः सर्वमनोरथसाधकः कल्पवृक्ष आसीत् इति सतीष्वपि अन्यविविधसम्पत्तिषु पुत्ररत्नाभावात्खिन्नोऽपुत्रो राजैकदा सर्वाभीष्टप्रदायकं तमवाप्य तस्माद् गुणान्वितं पुत्रमयाचत् इति तस्मै स समुत्पत्स्यमानं जातिस्मरं दानैकवीरं सार्वं[1] सुतं प्रतिश्रुतवान्। तदाकर्ण्यातिप्रहृष्टो राजा कल्पवृक्षं प्रणत्यानन्दप्रदायकस्वरसमाचारेण तेन निजदेवीमानन्दयामास। अचिरादेव च पुण्याहं[2] तदायातं यदा स राजा सुतमलभतेति स जीमूतवाहननाम्ना तमलञ्चकार।

कालक्रमेण सहजया सर्वभूतानुकम्पया सह वर्द्धमानो जीमूतवाहनोऽतिक्रान्तशैशवो महासत्त्वः सम्पन्न इति लोकम्पृणं[3] तं राजा यौवराज्येऽभिषिक्तवान्। एकदा च स परिचर्याप्रसादितं पितरमुवाच, तात, भवेऽस्मिन् सर्वे भावा भङ्गुराः[4]। चिरं स्थिरञ्चोपकृतिसम्भूतमेकममलं यश एव। सौदामनीव[5] चञ्चला सम्पच्चेयं जनान् निजचाकचक्येन चिल्लान्[6] विदधती लीलालये लीयते। अनयाश्रितः[7] को न वानरो भूत्वा नृत्यति। को न वा विकल्पो जायते। को न वा रणशरणो यथेष्टमाचरति। को न वाजिधुरं वहति। को न वानरवृषभनन्दनोऽवलोक्यते विवेकी। तदेष कामदकल्पतरुः परार्थे विनियुज्येत चेद्वयमपि प्रजापा[8] ब्राह्मणा इव समवाप्ततदवाप्तिजन्मसाफल्याः स्यामेति। एवं विज्ञापनेन समवाप्ततदस्तुङ्कारोऽभ्यर्थित-

---

१. 'सर्वस्मै हितम्' 'सर्वाण्णो वेति वक्तव्यम्' इति सहकारेण 'सर्वपुरुषाभ्यां णढञौ'। २. पुण्यं च तदेवाहः ( राजाहःसखिभ्यष्टच् ) 'अह्नोऽह्न एतेभ्य' इति प्राप्तोऽह्नादेशः 'उत्तमैकाभ्यां चेति' निषिध्यते तथा च टिलोपे 'रात्राह्नाहाः पुंसीति' प्राप्ते 'पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा'। ३. 'लोकस्य पृणे'। ४. 'भञ्जभासमिदो घुरच्'। ५. 'तेनैकदिक्' (सुदाम्ना अद्रिणा एका समाना दिक्) इत्यण्, अन् इति प्रकृतिभावे वृद्धौ ङीप्। ६. 'क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषीति' क्लिन्नस्य चिलादेशो लश्च प्रत्ययः। ७. अनया लक्ष्म्या आश्रितः अनयेन अनीत्या वा आश्रितः। नरो भूत्वा, वानरो भूत्वा च; अविना ईषदूनः, को न वा विकल्पः सङ्कल्पः, विगतः कल्पः सिद्धान्तो यस्येति वेत्यर्थः। वारणो हस्ती शरणे गृहे यस्य, रणं शरणं वा यस्य, आजिधुरं, वाजिधुरञ्च, नरवृषभो नरश्रेष्ठस्तस्य नन्दनः, वानरवृषभनन्दनः, को न वा नरो ऋषभनन्दनः ( सर्वश्रेष्ठपुत्रः ) विवेकी अविवेकी चेतिच्छेदः। ८. प्रकृष्टो जापो येषाम्।

जनातिदयालुर्हृदयालु[1]र्जीमूतवाहनः कल्पद्रुमं गत्वाऽखिलामिलामदरिद्रां कर्त्तुमभ्यर्थितवान् इति स प्रभूतभूतिवृष्ट्याऽखिलाः प्रजाः प्रमोदयामास। किन्तु एतेन प्रथितयशसं तम्प्रति पुत्रप्रथाबद्धमूलराज्या विकुर्वाणास्तद्गोत्रजाः अभीष्टसिद्धिकारककल्पवृक्षमुक्तास्पदं तं निष्प्रभावत्वात्सारल्येन जय्यमवधार्य युद्धाय बद्धबुद्धयो बभूवुरित्येतदवलोक्य जीमूतवाहनो निजपितरमुवाच—'शरीरमेतज्जलबुद्बुदवन्नश्वरम्, श्रियश्च प्रवातदीपवन्निर्वाणावसाना इत्येतत्कृते स एव गोत्रजैः सह युध्येत य ऐहलौकिक[2]सुखमतिरिच्य नान्यदुत्सुक[3]ः, यो वा परदुःखदूढ्य[4]ः, न वा यस्य हस्तमलकल्पाद्धनाद् ऋतेऽन्यद[5]ास्था भवेत्। अतो हे तात, न मयैतैर्गोत्रजैः सह योद्धव्यम्। आसतामेते कृपणा इहैव, मया तु क्वापीतो वनं गमेलिममित्युक्त्वा [6]हीनहीनजीनजननीजनकं मलयाचलाय चलितमवलोक्य समुच्छून[7]शोको जीमूतकेतुः 'किं तदा ममापि शुष्क[8]तृणवत्परित्यक्तराज्यस्य, परिपक्व[9]वयस्कस्यातिक्षामस्य[10] स्थित्येह प्रयोजनम्, अहमपि त्वामेवानुगच्छामीत्युक्त्वा सभार्यस्तमनुवव्राज; मलयाचलञ्चावाप्यैकस्मिन्नाश्रमे सिद्धावासमन्ववसिते[11] त्रयोऽपि ते वसतिं चक्रुः। तत्र च पितृपरिचर्यापरं तदाश्रममध्यूषुषो[12] जीमूतवाहनस्य सिद्धाधिराजविश्वावसोः सुतो मित्रावसुः सुहृत्समपद्यतेति जातु जीमूतवाहनो जन्मान्तरनिजजायां मलयवतीं तत्कनीयसीं स्वसारं रहस्यपश्यदित्यन्योन्यदर्शनेन यूनोरनयोर्मनो मनोजशरशरव्यतामगमत्।

अकस्मादेकस्मिन् दिने स्वयंप्रीतो[13] मित्रावसुः स्वस्वसारमादाय जीमूतवाहनमभ्यधात्—'एषा कन्या मदीया कनीयसी स्वसा। एनामहं तुभ्यं दित्सामी-

---

१. 'हृदयाच्चालुरन्यतरस्याम्'। |२. 'तत्र भवः' 'अनुशतिकादीनाञ्च' ३. अषष्ठ्यतृतीयेत्यादिना उत्सुके ढुक्। ४. दुःखेन ध्यायतीति 'आतश्चोपसर्गे' इति ध्यायतेः के 'दुरोदाशनाशदभध्येषूत्तरपदादेः ष्टुत्वञ्च' इति'दुगागमः। ६. जहातेः क्ते 'घुमास्थेती'त्वे 'ओदितश्चेति' नत्वम्। ५. 'अषष्ठ्यतृतीयेजीन इत्यत्र च ज्याधातोः क्ते 'ग्रहिज्ये'ति सम्प्रसारणे 'हलः' इति दीर्घे ल्वादित्वान्नत्वम्। ७. उच्छून इत्यत्र श्वयतेः क्ते यजादित्वात्सम्प्रसारणे दीर्घे ओदितत्वान्नत्वम्। ८. 'शुषः कः'। ९. 'पचो वः'। १०. 'क्षायो मः'। ११. 'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयता। १२. अधिपूर्वकाद् वसतेः 'भाषायां सदवसश्रुवः' द्वित्वहलादिशेषसवर्णदीर्घाः, ङसि भत्वात् 'वसोः सम्प्रसारणम्'। १३. 'स्वयं क्तेन'।

तीच्छामिमां मामकीनां माऽन्यथा कृथाः।' एतदाकर्ण्य जीमूतवाहनो जगाद–एषा मदीया पूर्वजन्मजाया, त्वं च मदीयमभिन्नहृदयं जन्मान्तरीयं मित्रमित्येतत्सर्वं जातिस्मरोऽहं जानामि। एतेन तत्पूर्वजन्मकथाश्रवणसञ्जातकौतूहलेन मित्रावसुनाऽभ्यर्थ्यमानो जीमूतवाहन एवं तस्मै स्वपूर्वजन्मकथां वक्तुमारभत—

पुरा व्योमचरो विद्याधरोऽहं हिमवच्छृङ्गमार्गेणैकदा गच्छन्नधःस्थितं गौर्या सह क्रीडन्तं शिवमपश्यमिति तच्छृङ्गोल्लङ्घनक्रुद्धो रुद्रो मन्युलिङ्गैः स्फुलिङ्गैर्दहन्निव मां मर्त्ययोनौ पतितुं तत्र विद्याधरीं भार्यामवाप्य स्वसुतं तत्पदे नियोज्य स्मृतजातिं पुनर्वैद्याधरीं योनिञ्चावाप्तुमभिशशापेति झटित्यहं बलभीनाम्न्यां नगर्यां वणिजां कुले वसुदत्ताभिधानो महाधनवणिक्सुतः संजातः। कालेनावाप्तयौवनोऽहं पितृप्रेरणया कृतपरिच्छदो वणिज्यार्थं[1] द्वीपान्तरं गतः। ततः प्रत्यागच्छन्तमटव्यामप्रतिष्कशं[2] मुमुषिषवस्तस्करा[3] हृतसर्वस्वं मामाबध्य स्वपत्न्या चण्डिकामन्दिरे देवीं पूजयतः पुलिन्दकाख्यस्य निजप्रभोरन्तिकं देव्युपहारार्थमनयन्। किन्तु मामवलोक्य संजातदयोदयोऽसौ शबरो बन्धनान्मोचयित्वाऽऽत्मोपहारेण सपर्यासमापनमभ्यलषदिति तत्क्षणमेव 'मैवं कृथाः, प्रसन्नास्मि ते, वृणीष्व वरम्' इत्युक्तो दिव्यया गिरा प्रहृष्टः स वणिग् जगाद–'प्रसन्नायां त्वयि न कोऽप्यन्यो वरोऽभ्यर्थ्यते तथापि जन्मान्तरेऽप्ययमेव वणिङ् मे मित्रं स्यादित्येतत्तावदस्तु। तदनन्तरमेवमस्त्वित्युक्त्वा विरतायां वाचि प्रत्तसविशेषवित्तो[5]ऽतिप्रसत्तिचित्तो मदीयः पिता मृत्युमुखात्परिच्युतं मामवधार्य महोत्सवं कृतवान्। ततः कालेन सार्थावलुण्ठनादवष्टभ्य राज्ञाऽऽनायितः स एव शबराधिपो महीपतिं विज्ञाप्य स्वर्णलक्षप्रदानेन वधनिग्रहान्मया मोचितः प्राणदानोपकारार्थं प्रत्युपकृतो गृहमानीय परया प्रीत्या सत्कृतश्च स्वां पत्नीं प्रति प्रहीयमानस्तदानीं स्वाधिकृतमुक्ताकस्तूरिकादि मत्प्रत्युपकारप्राभृतार्थमल्पं मन्वानः प्रेमपेशलहृदयः स्वावासमगात्। ततश्च मदर्थं सातिशयं मुक्तासारमवाप्तुं धृतधन्वा[6]ऽऽरण्यकमौक्तिककरिरित्सया[7] हिमालयं गतस्तत्र भ्रमन् विकसितसरसिजैकमहासरोऽन्ववसिते देवागारे हरमर्चयितुमाग-

---

१. 'दूतवणिग्भ्यां च'। २. 'प्रतिष्कशश्च कशेः'–सहायः पुरोयायी वा प्रतिष्कशः स न विद्यते यस्य। ३. 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च'। ४. ग्रहवृदनिश्चिगमश्चेत्यप्। ५. 'वित्तोभोगप्रत्यययोः'। ६. 'धनुषोऽनङ्'। ७. 'राधो हिंसायां सनीस् वाच्यः', 'अत्र लोपोऽभ्यासस्य', 'सः स्यार्धधातुके,' 'अप्रत्ययात्'। ८. 'सप्तम्यां जनेर्डः', 'तत्पुरुषे कृति बहुलम्'।

तामपरां भवानीमिव सिंहारूढां महाजातीयां[1] कन्यामेकामपश्यत्। तदवलोकनसमकालमेव विस्मयाक्रान्तमना मनाक् स शबरोऽचिन्तयत्—'चतुर्युगे[2]ऽपि त्रिभुवना[3]सम्भावितैतादृशरूपरूपा[4] केयं स्यात्! यदीयं मानुषी[5], कथं सिंहवाहिनी! यदीयं दिव्या, कथं मादृक्षैरीक्ष्या! तदयं भ्रमो वा स्वप्नो वेति तथ्यजिज्ञासयाऽहमिमामुपसर्पामि। इमां हि स्वमित्रेण संयोजयितुं शक्नुवतो ममापूर्वोपकृतेः सुदिनाहं तद्भवेत्।' इत्यालोच्य स मे सुहृत्तदन्तिकमुपगतः। एतस्मिन्नन्तरे सैकत्र तरुच्छायप्रदेशे सिंहादवरुह्य तज्जलसरस[6]सरोजान्यवचेतुमारभत। तदन्तिकमुपगत्य कृताननतिरपूर्वातिथिप्रीत्या व्याहृतस्वागतवचनया तया जिज्ञासितकौतस्त्यादि[7]श्च शबरः स्वं शर्वाणीचरणैकशरणं शबरं मातङ्गमुक्तावाप्तिहेतोस्तत्र निजागमनं चाचक्षाणोऽब्रवीत्—'देवि, भवतीमवलोक्यैतर्ह्य[8]हं निजसुहृत्सार्थवाहसुतं श्रीमन्तं वसुदत्तं स्मृतिपथमवतारितवान्। स हि रूपेण यौवनेन च त्वमिवाद्वितीय इति कन्या सा धन्या यस्याः करो मैत्री[9]दानदयार्जवनिधिना, वैवाहिकविधिना तेन गृह्येत। एषा त्वं तादृशेन न युज्येश्चेद्विधेरेतादृशोत्तमरूपसम्पादनविशारदि[10]मा विलाभि[11]मानमावहेत्। इत्थमाकर्णितमर्मावि[12]द्वचना कन्दर्पमोहमन्त्राक्षरैरिवापहृतमानसा साकूतैः शरा[13]रुभिर्मारशरैरिव विद्धहृदया क्व ते सुहृत्? तं तावदानीय मह्यं[14] प्रदर्शयस्वेति' तं शबरमुवाच। तदाकर्ण्य कृतार्थमिवात्मानं

---

१. महती प्रकारवती—'प्रकारवचने जातीयर्' ततः 'पुम्वत्कर्मधारय'—इति पुंवद्भावे 'आन्महतःसमानाधिकरणजातीययोरि'त्यात्वम्। २, ३. चतुर्णां युगानां त्रयाणां भुवनानां च समाहारः इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे चेति' समासे 'संख्यापूर्वो द्विगुः', 'स नपुंसकमिति' बाधित्वा 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति प्राप्ते 'पात्राद्यन्तस्य नेति निषिध्यते। ४. 'प्रशंसायां रूपप्। ५. 'मनोर्जातावञ्यतौ षुक् चे'त्यञन्तान्ङीप्। ६. 'अनोश्मायः सरसां जातिसंज्ञयोः' इति टच्। ७. कुतो भवः कुतस्त्यस्तस्य भावः। ८. 'इदमोर्हिल्'। ९. मित्रस्य भावः इति ष्यञि षित्वान्ङीपि यलोपः। १०, ११. 'वैयातलाभमतिमनःशारदानाम्' इति सहकारेण वर्णदृढादित्वादिमनिच्, टेरिति टिलोपः। १२. मर्माणि विध्यतीति क्विपि 'नहिवृतिवृषिव्यधी'ति पूर्वपददीर्घः। १३. शृवन्द्योरारुः। १४. 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्।

मन्यमानः शबरः स्वपत्नीं प्राप्य भूरिभारहार्यमुक्तामृगमदादियुक्तोऽस्मद्गृहमायातोऽतुलितवस्निकं[1] प्रभूतं तत्प्राभृतं मत्पित्रे न्यवेदयत् ।

सोत्सवं[2] मतीते तद्दिने रात्रौ रहसि मामवगततत्कन्यादर्शनाशेषवृत्तान्तं कुर्वाणस्तत्र गन्तुं भृशमुन्मनीभूतं[3] मामादाय स शबरेशस्तद्दिशमुद्दिश्यापरिक्लिश्य निश्येवाशिश्रियत् । प्रातश्च सशबरेशं मां ततः क्वापीतमवगत्य तत्प्रीतिप्रतीतो मत्पिताऽवलम्बितधृतिस्तस्थौ । तरस्विना[4] तेन चाहं शबरेण क्रमात्तुषाराद्रिं नीत इति तस्मिन् सरसि स्नानानन्तरं स्वच्छसरःसलिलं पीत्वा पीलुकुण[5]कमनीयकानने निष्कुला[6]कृतस्वादिष्ठ[7]फलाशितंभव[8]योरावयोर्विकीर्णकुसुमास्तरणं भृङ्गीसङ्गीतसुन्दरं शुभगन्धवहं ज्वलितौषधिदीपकं तत्काननमेव निशि विश्रान्त्यै वासवेश्माभूत् ।

अन्येद्युः प्रतिपदं तत्तदुत्कलिकाभृता, तन्मार्गानुधाविना मनसा प्रत्युद्गता इव स्फुरद्दक्षिणचक्षुषा च सूचितागमना इव, सटाल[9]सिंहपृष्ठस्था शरदम्भोधरोत्सङ्गसङ्गिनी निशीथ्या[10]नाथकलाभिरैन्दवीकला इव तत्रागता सा सुभ्रूर्विलसद्विस्मयौत्सुक्यसाध्वसाभ्यां चक्षुर्भ्यां मयाऽवलोकिता । सा चापि सिंहादवतीर्यावचितपुष्पा सरसि स्नाता तत्तीरगतहरमर्चयतिस्म । समापितसपर्यां च तामुपेत्य मत्सखः[11] शबरः सप्रणाममात्मानमावेद्य ममानयनसूचनपुरस्सरं तत्र मामुपस्थापयितुं तदनुमतिमजिज्ञासत । विदिततदभिप्रायेण च शबरेण तत्र नीतं मां प्रणयपरिपूर्णेन नेत्रेण तिर्यगालोकयन्ती मदनावेशवशगा शबरमभ्यधात्–'सुहृत्ते मर्त्यो नायं ना, यं [12]दर्शं दर्शं यदीदृशी दशा मे संजाता । नेयमाकृतिर्मर्त्यानाम् । अयं तु मद्वञ्चनाय समागतः कोऽपि दिव्य इति निःसांशयिकम्[13] ।' एतदाकर्ण्य

---

१. वस्नं हरति वहत्यावहति वेति 'वस्नद्रव्याभ्यां ठन्कनौ' । २. उत्सवेन युगपदिति यौगपद्येऽव्ययीभावे–'अव्ययीभावे चाकाले' । ३. 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चेति' च्विसलोपौ, 'अस्य च्वा'वितीत्वम् । ४. 'अस्मायामेधास्रजो विनिः' । ५. पीलूनां फलानां पाकः–'तस्य पाकमूले'–इति कुणप् । ६. निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहौ 'निष्कुलान्निष्कोषणे' इति डाच् । ७. अतिशयेन स्वादु, 'अजादी गुणवचनादेवे'तिसहकारेण 'अतिशायने तमबिष्ठनौ,' टेरिति टिलोपः । ८. 'आशिते भुवः करणभावयोः' इति खच् । ९. 'प्राणिस्थादातोलजन्यतरस्याम्' । १०. रात्रिः । ११. 'राजाहःसखिभ्यष्टच्' । १२. 'आभीक्ष्ण्ये णमुल् च', 'नित्यवीप्सयोः', 'कृन्मेजन्तः' इत्यव्ययत्वम् । १३. 'संशयमापन्नः' इति ठञन्ताद्बहुव्रीहिः ।

तां प्रत्याययितुं स्वयमहमुक्तवान्—'सुन्दरि, सत्यमहं जनुषा वपुषा च मनुष्यः। किमार्जवे जने व्याजेन। वलभीवासिनो महाधनाभिधानस्य सार्थवाहस्य महेश्वरवरार्जितो वसुदत्ताभिधः पुत्रः। अयं च देशान्तरगतेन मया प्राप्तपूर्वः[1] कृच्छ्रैकबन्धुः शबराधीशो मम सुहृत्। एष च संक्षेपेण मदीयः परिचयः।'

एवमुक्त्वा विरते मयि लज्जावनतमुखी साऽब्रवीत्—'हरमर्चितवतीं मामद्य संतुष्टशिवस्स्वप्ने समादिशत्—श्वः स्वभर्तारमवाप्स्यसि इति सम्भवति भवान् मे भर्ता, भ्राता चायं भक्तः शबरः। एवं वाक्सुधया मामभिषिच्य विरतया तया साकं यथाविधिविवाहाय कृतनिश्चयः समित्रोऽहं निजगृहं गन्तुं निश्चयमकार्षम्। ततः संकेतसमाहूतस्ववाहनसिंहा[2] सा सुन्दरी सिंहं तमारोढुं मामभाषतेति तदाग्रहेण निजोत्सङ्गगृहीतदयितः सिंहमारुह्य सुहृदा तेन शबरेणानुयातः कृतकृत्यो[3] वलभीं सम्प्राप्तवान्। तत्र सिंहसमारूढं सवल्लभं मामवलोक्य प्रत्युद्गतो मदीयः पिता सहर्षं मृगेन्द्रादवतीर्णं निजपादावनतं च मामवलोक्य सञ्जातविस्मयोऽभ्यनन्दत। अद्वितीयसौन्दर्यसौकुमार्यकमनीयां कृतपादाभिवन्दनाममानुषोचितप्रभाभिरोचितां ममोचितां भार्यां पश्यन्नमन्दानन्दसन्दोहनिर्भरश्च मन्दिरं प्रवेश्य परिपृष्टाभ्यनन्दितास्मद्वृत्तान्तः शबराधीशसौहार्दमभिप्रशंसन् मौहूर्तिकादेशेन स्वविभवानुरूपमखिलबन्धुभिः सह विवाहमहोत्सवमचीकरत्। समवलोकितास्मद्विवाहो मद्वधूवाहो व्याघ्रः पश्यत्स्वेव सर्वेषु पुरुषाकृतिः सम्पन्नः। किमेतदिति सर्वेषु विभ्रान्तेषु दिव्यवसनाभरणः स मां नमन्नेवमब्रवीत्—'अहं चित्रांगदो नाम विद्याधरः। इयमपुत्रस्य विगतभार्यकस्य[4] मेमनोवती नाम प्राणाधिकप्रिया कन्या। सदैनामङ्के कृत्वा विपिने भ्रमन्नहमेकदा दक्षिणोत्तरोभयतटतपोवनां गंगां प्राप्तवान्। तत्र तपस्विजनसमुदाचारोल्लङ्घनभिया तदीयं[5] दक्षिणतारमुत्तरतीरञ्च[6] विहाय मध्येगङ्गेन[7] गच्छतोऽकस्मान्मे माला तदम्भसि निपतिता। सा चान्तर्जलस्थितस्य नारदस्य पृष्ठे पतिता ममौद्धत्येनेत्थं सञ्जातमिति बुद्ध्या क्रुद्धः

---

१. पूर्वं प्राप्तः प्राप्तपूर्वः 'सुप्सुपेति' समासः। २. स्वस्या वाहनम्; 'सर्वनाम्नो वृत्तिमात्रे पुम्वद्भावः'। ३. 'विभाषाकृवृषोः' इति कृधातोः क्यपि, तुकि, कृत्यम्, ततः कृतं कृत्यं येनेति बहुव्रीहौ 'निष्ठा' इत्यनेन निष्ठान्तस्य पूर्वनिपातः। ४. 'स्त्रियाः पुम्वद्भाषित०', 'शेषाद्विभाषा', 'आपोऽन्यतरस्याम्'। ५. 'त्यदादीनि च', 'वृद्धाच्छः'। ६. 'दिक्शब्देभ्यस्तीरस्य तारभावो वा'। ७. 'पारेमध्ये षष्ठ्या वा'।

स हिमाचले मां सिंहो भवितुं पृष्ठे तां सुताञ्च वोढुं शपन् अस्या मम सुताया मनुष्येण सहोद्वाहदर्शनं तच्छापमुक्तिं निर्दिष्टवान्। इत्थं तन्मुनिशप्तोऽहं हिमाचले सिंहो भूत्वा हरपूजापरामेतां तनयां पृष्ठेन वहन् अद्यावध्यासम्। अनन्तरसम्पच्च शबराधिपोक्तं विदितचरमेव भवतेति तन्मुनिवाणीप्रमाणो[1]ऽहमधुना[2] यथेच्छं गच्छामीत्युक्त्वा स विद्याधरो नभोऽभ्युदपतत्। श्लाघ्यसम्बन्धसंतुष्टो मदीयः पिता चापि नन्दत्स्वजनबान्धवैः सह बहुकर्तृकं[3] महोत्सवं कुर्वाणः सर्वमटवीराज्यं सद्बहुवृक[4]धूर्तहास्ति[5]कं शबराधिपतये प्रादात्।

एवं शबराधिपेन स्वमित्रेण तत्रैव मया सह निवसता दर्शनीयतम[6]या मनोवत्या सह सुखिनो मे भूयाननेहाऽहास्त। क्रमेण मनोवत्याः समुत्पन्ने मम तनयेऽतिक्रान्तशैशवे, कृतविद्ये परिणीते च तस्मिन्, अवलोकितजीवितफलो वृद्धो मे पिता देहमुज्झितुं सदारो भागीरथीं प्रायात् इति पितृशोकार्तस्यापि स्वबान्धवधारितधृतेः समालोडितपरम्परागतपूर्वजकृतेः याथाकथाचेन स्वगृहभारं वोढुं प्रतिपन्नस्य मे सत्पुत्रसानन्दाः, सुकलत्रमनोरमाः, सुहृत्समागमसुखा दिवसा अतिक्रान्ताः। कालक्रमेण चावाप्तवर्षीयस्त्वः पतितजम्भः[7] पलितकचकूर्चः सहसोत्पन्नवैराग्योऽहं कौटुम्बिकभारोद्वहननियोजिततनयः, मत्स्नेहात्परित्यक्तप्राज्यराज्येन शबरराजेन सह कालञ्जरं गतः आत्मीयां वैद्याधरीं योनिं, समाप्तविधिं स्वशापंशापच्च सहसा स्मृतवान् इति मनुतनुजनुषं तनुमेतां तित्यक्षुः तत्सर्वं भार्यायै मनोवत्यै, स्वमित्राय शबराय चाख्याय, 'अन्यस्मिन्नपि जन्मनि इमे एव मे भार्यामित्रे स्याताम्' इति हृदि कृत्वा शंकरं स्मरन् तस्माद्गिरितटान्निपत्य ताभ्यां स्वपत्नीमित्राभ्यां सह शरीरकर्ममुञ्चम्।

स एवाहं जातिस्मरो जीमूतवाहन इदानीं[9] विद्याधरकुले समुत्पन्नः। त्वञ्च पञ्चमुखप्रसादाज्जातः सिद्धानां राज्ञो विश्वावसोः[10] सुतो मित्रावसुर्मे भूतपूर्व-

---

१. प्रमीयतेऽनयेति करणे ल्युटि ङीपि प्रमाणी; तन्मुनिवाणी प्रमाणी यस्य 'अप्पूरणीप्रमाण्योः' इत्यप्। २. अस्मिन् काले इति विग्रहे इदम्शब्दात् 'अधुना' इत्यनेन अधुनाप्रत्यये 'इदम इश्' ततः 'यस्येति च' इतीकारलोपः। ३. 'नद्यृतश्च'। ४. 'पोटायुवति०'। ५. 'हस्ताज्जातौ' इति हस्तशब्दाज्जात्यर्थे इनि हस्ती, स्त्रियां ङीप्, हस्तिनीनां समूहः इति विग्रहे 'अचित्तहस्तिधेनोष्ठक्', 'भस्याढेतद्धिते', 'नस्तद्धिते'। ६. 'तसिलादिष्वाकृत्वसुचः' इति पुम्वद्भावः। ७. पतितदन्तः। ८. 'कुत्सिते'। ९. 'दानीं च', इदम इश्'। १०. 'विश्वस्य वसुराटोः'।

सुहृच्छबरेन्द्रः। सेविकाभार्यस्य[1] मम सा भार्या मनोवती च, वलयवतीनाम्ना ते स्वसा समुत्पन्ना एवमेषा मे भूतपूर्वजाया[2] भावत्कभगिनी। भवानपि च मदीयं भूतपूर्वं मित्रम् इतीमां परिणीतपूर्विणो[3] मेऽसाविदानीमवश्यं परिणेतव्या। किन्त्वेतत्सर्वमवगतसर्ववृत्तान्ताभ्यामस्मत्पितृभ्यामेव कृतं स्यादितीतो गत्वा पूर्वं तत्स्वीकृतिं लभस्वेत्थमुक्तो मित्रावसुस्तत्पितरावुपगम्य सर्वं तन्निवेदितवान्। समुपलब्धतत्स्वीकृतिश्चोद्वाहसंगलसमालम्भनानि विरचय्य सिद्धराजपुरस्कृतेन जीमूतवाहनेन सह सम्मिलत्सिद्धसङ्घाते वल्गद्विद्याधरोद्धुरे, चञ्चद्द्युचरचारणे विधिवत्स्वसुरुद्वाहं सम्पादितवान्।

इत्थं निष्पादितविवाहो जीमूतवाहनो महार्हेण विभवेन मलयाद्रौ समुद्रस्य वेलावनान्यवलोकयितुमेकदा श्वशुर्येणामितवसुना मित्रावसुना सह गतः हा पुत्र, इति विक्रोशन्तीं मातरं निवर्तयन्तं कञ्चित् यविष्ठं पश्यन्नतिष्ठत्। कस्त्वम्? किमीहसे? किं च माता ते शोचति? इत्थं पृष्टः स इत्थं वक्तुमारभत—

पुरा कद्रूर्विनता च द्वे कश्यपभार्ये बभूवतुः। कथाप्रसङ्गेन विवदमानयोस्तयोराद्या सप्तसप्तिसप्तीन् श्यामान् अपरा च तान् कर्कानन्योन्यदासभावपणेनावादीत्। ततो जयार्थिनी द्विरसनजननी कद्रूर्निजात्मजैर्नागैरर्कांश्वान् विषफूत्कारैर्मलिनान् कारयित्वा तांश्च तथाभूतान् विनतां दर्शयित्वा छद्मना तां दासीचकार। वैनतेय एतदवगत्यागत्य कद्रूं साम्ना मातृदासित्वमुक्तिमयाचत। किन्तु काद्रवेयास्तदानीं सुरारब्धमन्थनक्षीराब्धिलब्धसुधातः तन्मातृमुक्तिं प्रतियन्तुमैच्छन्निति तार्क्ष्यः क्षीराब्धिं गत्वा सुधार्थमुरुपौरुषं प्रदर्शयामास। अतः प्रीतो हरिः 'तुष्टोऽस्मि ते, वृणीष्व कञ्चिद् वरम्' इति वैनतेयमभाषत। तदा मातृदास्येन कोपितो वैनतेयः 'नागा मे भक्ष्या भवन्त्विव'त्ययाचत। 'तथास्त्विति' इत्युक्तो हरिणा निजपराक्रमार्जितामृतो गरुडस्तदा स्वात्मपक्षपरिरक्षणदक्षेण तक्षकविपक्षर्क्षभुक्षणोक्तो यत् यथा नागैरियं सुधा न भुज्येत, त्वदीयं कार्यमपि सिध्येत्, एतदहं करोमि। त्वमेतामादाय तत्र गच्छ, अहञ्चैतां तेभ्यः प्रत्याहरिष्यामीति।

---

१. 'न कोपधायाः'। २. 'सुप्सुपा'। ३. 'कर्तृकर्मणोः कृति' इति कृद्योगे कर्मणि षष्ठीविधानादत्र तद्धितस्य इनो योगे न षष्ठी। ४. 'राजश्वशुराद्यत्'। ५. 'त्वे च'। ६. 'प्रतिः प्रतिनिधिप्रतिदानयोः', 'प्रतिनिधिप्रतिदाने च यस्मात्' इति प्रतिदाने सुधायां पञ्चमी ततः 'प्रतियोगे पञ्चम्यास्तसिः'। ७. 'स्त्रीभ्यो ढक्' 'किति च'। ८. 'ऋत्यकः', 'भस्य टेर्लोपः'।

एवमुक्तो वैनतेयस्तथेत्युक्त्वा समुपात्तकीलालकलशः काद्रवेयान्[1]उपेत्य हरिवर-प्रभावाद्भीतान् तान् उवाच यदेतदमृतं मयाऽऽनीतम् । तच्च ममाम्बां मुक्त्वा गृह्यताम् । अयञ्चेदहमेतद्दर्भसंस्तरे संस्थाप्याम्बाञ्चोन्मोच्य गच्छामि, यूयमितोऽमृतमेतत्स्वीकुरुत । 'तथास्तु' इति उक्तेषु नागेषु, गरुडः पवित्रे कुशास्तरे कीलाल-कलशमाधत्त । तेऽपि च तन्मातरं मुमुचुरिति दास्यमुक्तया मात्रा सह गते गरुडे, यावदेव विगतभीताः काद्रवेयास्तदमृतमाददते तावदेव स्वशक्तितो नागान् विमोह्य शक्रः कीलालकलशं कुशसंस्तराज्जहारेति पीयूषस्यापि[2] स्युः एत-द्धिया कुशसंस्तरमेव लेलिह्यमाना विषण्णा नागाः पाटितजिह्वाः द्विजिह्वतां ययुः । समवाप्तहरिवरस्तार्क्ष्यश्चानुदिनं निपत्य तान् भक्षयितुं प्रारभतेति कृत्स्नं नागलो-कमेकदैव नष्टं मन्यमानो भुजगेश्वरो वासुकिः, प्रार्थनापूर्वकमेकैकं नागं तदाहारार्थं प्रेषयितुं प्रतिज्ञाय, नागलोके तत्प्रवेशं निषिषेध । तथेति प्रतिपन्ने वैनतेये वासुकिस्तदाहारार्थमनुदिनम् एकैकं नागं प्रेषयितुं प्रारभत । एतेन च क्रमेण संख्यातीताः[3] फणिनो विनाशमफणन् ।

अहञ्च शंखचूडाख्यो नागो निजवारक्रमेण नागराजनिदेशतोऽद्येमां वध्य[4]-शिलामायातः इति सद्यो[5] निधनं गमिष्यतो[6] मे शोकेनाम्बा परितपति । एतदा-कर्ण्यातिदुःखितो जीमूतवाहनस्तमभाषत—'अहो अस्थाने वासुकेरेष क्रमो यन्निः-सत्त्वेनेव स्वहस्तेनैव स्वप्रजा रिपोरामिषतां नीयन्ते । कश्यपापत्यस्य तार्क्ष्य-स्यापि अकल्यवर्तिदेहार्थमित्थंकरणं न युज्यते । तदद्य त्वं तावत्प्रसीद, मा विषीद, गृहमितो गत्वा निषीद । अहं त्वामद्यैकं स्वशरीरप्रदानेन रक्षामि । एवमाकर्ण्य शंखचूडोऽपि धैर्येणेत्थमुवाच, 'भगवन्, शान्तं पापम् । मैवं पुनरि-त्थमभिधत्थाः । अहं निजकुलं कलङ्कपङ्किलं कर्त्तुं नेहे; नेहेत्थं काचस्येव मम शरीरस्य कृते मुक्ताकणेरिव भवादृशस्य क्षतिर्जातु युक्ता ।' इत्थमुक्त्वा स साधु-

---

१. 'संज्ञायाम्' इति कद्रुशब्दादूङि 'द्व्यचः' इत्यपत्ये ढकि 'ओर्गुणः' । २. 'अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु' इत्यनेन अप्रयुज्यमानबि-न्दुपदार्थद्योतकतायाम् अपेः कर्मप्रवचनीयत्वात् 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति अस्तेः सस्य न षत्वम् । ३. द्वितीयाश्रितातीतेति समासः । ४. 'हनो वा यद्वधश्च वक्तव्यः' । ५. 'सद्यः परुदिति' निपातनात्साधु । ६. 'तौ सत्', 'लृटः सद्वा' । ७. उपसर्गे च संज्ञायाम्' इति डः ।

जीमूतवाहनं निषिध्य क्षणान्तरगामिनीं गरुडागमनवेलामवगत्य वारिधितीरवर्तिनो गोकर्णाख्योमापतिं नमस्कर्तुं ययौ । गते च तस्मिन्नन्यतृप्रा[१]लुर्दयालुर्जीमूतवाहनोऽवसरपरिरक्षणविचक्षणः, क्षणभङ्गुरनिजदेहप्रदानेन तत्त्राणायोपलब्धावसरमात्मानममनुतेति स्वयुक्त्या कार्यापदेशान्निजश्वशुर्यं मित्रावसुं गृहं प्रेष्य समासन्नतार्क्ष्यपक्षानिलेनाहिरिपुमायान्तमवबुध्य वध्यशिलामध्यरुक्षत् । स्वपक्षच्छायाच्छादितान्तरिक्षस्तार्क्ष्यश्च क्षणान्निपत्य स्वभक्षणार्थं तमुज्जहार । बृहत्कचञ्चत्कचञ्चुञ्चु[२]ः, शिखरे गिरेरारेभे च परिस्रवदसृग्धारमभ्यवहर्त्तुम् । एतस्मिन्नेव काले नभस्तलान्निपतिता पुष्पवृष्टिः 'किन्न्वेतदिति' विमृशन्तमश्नन्तं तं तार्क्ष्यं व्यस्माययत् ।

एतावत्यामेव वेलायां कृतगोकर्णनतिरायातः शंखचूडो रुधिरासारसिक्तं वध्यशिलातलमालोकमानः 'धिङ्माम्, यदर्थं महात्मना तेनात्मा तृणीकृत्य दत्त' इति दूयमानमानस इतस्ततो जीमूतवाहनावाप्तीच्छयेक्षमाणस्तद्रक्तधारामनुससार । अत्रान्तरे आशीविषामिषाशी गरुडोऽशिकर्मीक्रियमाणमपि जीमूतवाहनं प्रहृष्टवदनमवलोक्य, परिहृततदनः, सविस्मयमचिन्तयत् 'कच्चिदयमन्य एव यो भक्ष्यमाणोऽपि मोमुद्यमानोऽवलोक्यते' एवं विमृशन् स तार्क्ष्यस्तदानीं निजाभीष्टसिद्ध्यै तथाभूतेनापि जीमूतवाहनेन जगदेकदानवीरेण निजगदे–'पक्षिराज, मम शरीरे सत्यपि समांसशोणिते भवदसुहितेऽसुहितोऽपि भवान् कथमकस्मात्स्वभोजनान्निवृत्तः ।' एवमुक्तस्तार्क्ष्यस्तमुवाच, 'त्वं तावन्न नागोऽनागोऽनागाः कस्त्वं भवानिति मां ब्रूहि ।' एतदाकर्ण्य नाग एवाहमस्मीति स्वोदर[३]पूरं भुञ्जानो यथारब्धं समापयेति यावज्जीमूतवाहनस्तं प्रतिवक्ति तावत्तत्रायातश्शङ्खचूडो दूरात्तमभाषत–गरुत्मन्, नैष नागो, नागोऽहं ते भागो बुभुक्षाशान्त्यर्थमिह प्रेषितः इति मा ते भूद् बम्भ्र[४]मा । एतदाकर्ण्य खगेश्वरोऽतीव विभ्रान्तो जीमूतवाहनश्च स्वाभीष्टासिद्धिखेदखिन्नोऽवि[५]न्नोत्कृष्टहृष्टिदृष्टिरलक्षयत ।

एवंभूते व्यतिकरेऽन्योन्य[६]संलापेन विद्याधराधिपं शङ्खचूडभ्रान्त्या भक्षितमवगम्य गरुत्मानात्मानमतिपाप्मानं मन्यमानोऽसह्यात्मग्लानिस्तत्पापविशुद्धये वह्निं

१. शीतोष्णतृप्रेभ्यस्तदसहने' । २. 'तेन वित्तश्चुञ्चुप्चणपौ' । ३. 'चर्मोदरयोः पूरे' । ४. भ्रमतेर्यङ्लुगन्ताद् अ-प्रत्ययः । ५. विद्धातोः क्ते 'नुद्विदोन्दे'ति वैकल्पिको नः । ६. 'असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्यः' ।

प्रविविक्षुर्जीमूतवाहनेनाभिहितः—'पक्षीन्द्र, सत्यं चेत्त्वं पापाद्बिभेषि नातः परं त्वयेमे भुजङ्गाः भक्षयाः। पूर्वं भुक्तेषु च तेषु भोगिषु अनुशयो विधेयः। एषा एवास्मात्पापात् यथार्था विशुद्धिर्नान्येति'। भूतानुकम्पिना तेनेत्थमुक्तो गरुत्मान् गुरूपदेशमिव तन्निदेशं हृद्देशे निवेश्यावशिष्टानस्थिशेषानाशीविषान्, क्षताङ्गजीमूतवाहनञ्च प्रत्युज्जीवयितुं प्रजवी[1] नाकं ययौ।

एतदनन्तरं जीमूतवाहनभार्याभक्तिसन्तुष्टया गौर्या सुधया सिक्तो जीमूतवाहनोऽधिकतरोद्भूतकान्त्यङ्गः समपद्यत। एवं तस्मिन् स्वस्थतामासादितेऽम्बराह्नीतममृतं कृत्स्नं वेलातटेऽभिवर्ष्य विपन्नान् पन्नगान् सर्वान् प्रत्युज्जीवयामास गरुडः। ततोऽक्षयेण देहेनामरकीर्त्या च विराजितं जीमूतवाहनं बन्धुजनोऽभ्यनन्दत्। गौर्यां दृढाभक्तिः[2] स्तद्भार्या चाप्यतिहृष्टाऽभूत्। शङ्खचूडोऽपि च तद्विसृष्टो रसातलं प्रविवेश। जीमूतवाहनोऽपि च मलयाचलान्निजनिलयं तुहिनशैलतटं गत्वा मित्रावसुना मलयवत्या निजपितृभ्यां च सहितो विद्याधरचक्रवर्तिपदं बुभुजे'।

इत्थं यौगन्धरायणमुखाद् विद्याधरकथामाकर्ण्य गर्भभरोदारदोहदिनी वासवदत्ता, निरतिशयं मोदमाना, मागधी[3] भार्यस्य वत्सेशस्य समीपे वर्तमाना भाविविद्याधरेन्द्रनिजतनूजविषयकविविधाभिर्वार्ताभिस्तद्दिनमनैषीत्।

परस्मिन् दिने सचिवैर्युक्तं समीपस्थं वत्सराजमुवाच—'आर्यपुत्र, यतः प्रभृति गर्भोऽयंमयाधृतस्तदा प्रभृत्येव तीव्रा तद्रक्षाचिन्ता मां बाधते। अद्य तच्चिन्ताक्रान्तैव सुप्ताहं निशि कयाचित् भस्माङ्गरागसितया, पिशङ्गजटाकलापया, शूलहस्तया च मूर्त्याऽनुकम्पासम्पादनपुरस्सरमहमुक्ता, 'पुत्रि गर्भस्य कृते न त्वया चिन्ता कार्या। स मयैव दत्त इति मया तस्य रक्षा क्रियते' एवमुक्त्वाऽन्तर्हितायां तन्मूर्त्तावहं प्रबुद्धा, तमिस्रा चाप्यरुणकिरणैरपसार्यमाणा, रसातलशरणमशिश्रियत्।

एवमित्यादिभिरन्यैरपि भविष्यन्निजतनुजसम्बद्धैरालापैरतिवाह्यमानेषु दिवसेषु, सर्वेषां मन्त्रिणां शुभलक्षणाः, भाविकल्याणसूचकाः, क्रमेण पुत्राः उत्पन्नाः। प्रथमं तावत् यौगन्धरायणस्य मरुभूतिरिति विश्रुतस्तनयो जातः। ततो रुमण्वतो हरिशिखः, वसन्तकस्य तपन्तकः, नित्योदिताख्यस्य, इत्यकापरसंज्ञस्य

---

१. 'प्रजोरिनिः'। २. भक्तिशब्दस्य प्रियादिषु पाठात् स्त्रियाः पुंवदित्यस्याप्रवृत्तिः। ३. 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे'।

प्रतिहाराधिकारिणो गोमुख इति पुत्रो जातः। तेषु च जातेषु महोत्सवे वर्तमाने नभसोऽशरीरिणी वागुदपद्यत 'भाविनश्चक्रवर्तिनो वत्सराजसुतस्य मन्त्रिणोऽमी वैरिवंशदावाग्नयो भविष्यन्ति' इति।

**नरवाहनदत्तोत्पत्तिः**

अतिक्रामत्सु संख्यातरात्रेषु[1], समासन्नप्रसवोदया देवी वासवदत्ता, साकंशमीसंरचितगवाक्षकम्, पुरन्ध्रीपरिष्कृतम्, विचित्रचित्रचित्रितम्, मन्त्रिभिरनेकाभिमन्त्रितयंत्रतंत्रादिसुरक्षितम्, गर्भरक्षाक्षमम्, दुरितदुर्जयदुर्गमिव दुग्धदूर्वादधिमधुप्राज्याज्यभ्राजितम्, विविधरत्नदीपप्रभाभासितम्, एकतः संस्थापितविविधायुधम्, प्रसूतिकागृहमध्यास्त। असूत च सा काले तत्र, द्यौर्निर्गच्छदच्छामृतमयद्युतिकुमुदिनीकान्तमिवैकान्तरमणीयं द्वितीयं मारमिव कुमारम्। जातेन च येन तत्प्रसूतिकागृहं सान्तःपुरवासिजननीहृदयेन सह प्राकाशीति प्रसरत्प्रमोदादाभ्यन्तरगृहादागत्य वत्सेशाय कुमारोत्पत्तिप्रियनिवेदिने, दिने तस्मिन्, किञ्चिदपि माहेयं[2] स्वापतेयं[3] नादेयं[4] दूडाशं[5] वाऽभूत्। ततोऽन्तःपुरमुपेत्यौत्सुक्याकृष्टचेतसा रक्ताधरायतदलं, साम्राज्यलक्ष्मीलीलाम्बुजमिव चारुचिबुकचञ्चुष्कम्, आयतललाटं, सद्यःसमुत्पन्नशिशुमवलोक्य वात्सल्यस्नेहेन स्रवतीव सम्राजि वत्सेशे, नन्दत्स्वपि च यौगन्धरायणादिषु मन्त्रिषु, गगनगीरियमुदीरिताऽश्रूयत—'राजन्नयं तवात्मजः कामांशावतारः। नरवाहनदत्तमेनमाख्यया, सर्वविद्याधरेन्द्रभाविचक्रवर्तिनञ्चावेहि'। एवमुक्त्वाविरतायां नभोवाचि, दुन्दुभिध्वानसहितायां सञ्जातायाञ्च त्रिविष्टपात् पुष्पवृष्टाविष्टावासिहृष्टो राजा स्वविभवानुरूपं बहुशो[6] भोजनम्, अनेकशो[7] वस्त्रादिकं, माषशः[8] सुवर्णं प्रस्थशो[9] धान्यं प्रत्यभ्यागतदीनम्, तथा पञ्चनिष्ककिकां[10] पञ्चमोदकिकाञ्च[11] प्रतिप्रतिष्ठितप्रज्ञं तत्क्षणं वितीर्य मासिकमहोत्सवं कर्तुमाज्ञापयामास।

व्रजत्स्वथदिवसेषु वलक्षपक्षेन्दोरिवान्वहं वर्द्धमानस्य नरवाहनदत्तस्य स्फुरन्मसृणमुग्धनखप्रभाणि द्वित्राणि खचद्दन्ताङ्कुराणि दृष्ट्वा स्खलद्वाक्यपदानि च

---

१. 'अहःसर्वैकदेश॰' इत्यच्। २. 'नद्यादिभ्यो ढक्'। ३. 'पथ्यतिथिवसतिस्वपतेर्ढञ्'। ४. न अदेयम्। ५. दुःखेन दाश्यते (दीयते) इति 'ईषद्दुःसुषु॰' इति खल् 'दुरोदाशनास'–इति उत्वष्टुत्वे। ६. 'बह्वल्पार्थात् छस्॰'। ७–९. 'संख्यैकवचनाच्च वीप्सायाम्'। १०. 'दण्डव्यवसर्गयोश्च'। ११. 'पादशतस्य'–इति सूत्रे पादशतग्रहणस्यानर्थकत्वेनान्यत्रापि वुनि, पञ्चमोदकिकाम्।

निशम्यातितरां तुतोष। अथ मन्त्रिवराः समागत्य शिशवे राजसून विनवेय-गौरवपुषो विधृतवपुषो हृदयानन्दान् स्वसुतान् समर्पयामासुः। इत्थं यौगन्ध-रायणिर्मरुभूतिः रौमण्वतो हरिशिखः, ऐत्यकिर्गोमुखः, वासन्तकिस्तपन्तक इत्यादयस्तस्य भाविसहचारिणः पिङ्गलिकाया यमजौ पुत्रौ चेत्थं महोदयहेतुभूतैः षड्भिर्गुणैरिव युक्तं क्रीडाकलितललिताव्यक्तनर्माभिलाषं प्रीतिप्रवणमनसां नृपाणामङ्कतोऽङ्कं यान्तं सबहुमानं विराजद्वीरलक्ष्मीविभूमानं[1] स्मेराननसरसिजं सप्रमोदं पश्यतो द्वितीयाभार्यस्य[2] भार्याद्वितीयस्य[3] वत्सेशस्य, सानन्दा[4] दिवसा व्यतिजग्मुः।

तत्रैकदा कश्चिद्दिव्यः, किरीटी, खड्गी, स्रग्वी[5] च पुरुषस्समागतः। भूपालश्च सम्पादितसत्कृतिं, प्रणतं च सकौतुकं, कस्त्वं, किञ्चेह ते समागमनेन प्रयोजन-मित्यभ्यदधात्। सोऽब्रवीत् 'देव, अहं मर्त्यो भूत्वा शक्ति-

शक्तिवेगकथा

वेगाख्यो विद्याधरः सम्पन्नः इति प्रभूतारिरहं स्वकीयभावि-चक्रवर्तिनं भवतस्तनयं द्रष्टुमिहायातः। एतदाकर्ण्यातिहृष्टो वत्सेशः कथं विद्याधरत्वमवाप्यते, कीदृग्विधं च तत्, कथं वा त्वया तदवाप्तम् इत्यपृच्छत्। राज्ञस्तद्वचनमाकर्ण्यातिविनयावनतो विद्याधरः शक्तिवेगः इत्थं प्रत्युत्तरीतुमारभत–'राजन् विद्याधरपदं शङ्कराराधनसाध्यम्। तच्चानेकविधं, किन्तु मया यथा तदवाप्तं तुभ्यं तदुदीर्यते।' एवमुक्त्वा वासवदत्तायां शृण्वन्त्यां स स्वसम्बद्धां कथां वक्तुमित्थमुपाक्रमत–आसीत्पुरोत्तरपूर्वस्यां[6] दिशि, भूतलललाम-भूतं वर्द्धमानाख्यं नगरम्। तत्र बभूव परन्तपः परोपकारी नाम नृपतिः। महत्त्वाभिकाङ्क्षिणस्तस्य कनकप्रभाभिधा महिषी बभूव। रतिरूपोपमर्दनाय इव धात्रा विनिर्मितां सैकां कन्यां सुषुवे। कालेन शनैः शनैः वर्द्धमाना सालोकलोचन-चन्द्रिका 'कनकरेखा' इत्यभिधां दधे। अतिक्रान्तशैशवामतिशयसुन्दरीं ताम-वलोक्य पितुर्हृदि तदुपयुक्तवरेण सह तदुद्वाहचिन्ता समुदपद्यत। किन्तु तदर्थं परामृष्टा तत्पत्नी समवोचत्—'कनकरेखाविवाहार्थं देव एव इत्थं चिन्तातुरो

---

१. बहुशब्दात् पृथ्वादित्वादिमनिचि 'बहोर्लोपो भू च बहोः'। २. 'द्वेस्तीयः', 'संज्ञापूरण्योश्च'। ३. भार्यासहायस्य। ४. 'तेन सहेति तुल्ययोगे' इत्यत्र तुल्ययोगस्य प्रायिकत्वात्समासे 'वोपसर्जनस्य' इति सहस्य सादेशः।

५. 'अस्मायामेधास्रजोविनिः'। ६. 'दिङ्नामान्यन्तराले'।

वर्तते। परम् अद्यैव 'पुत्रि कदा ते विवाहमहं द्रक्ष्यामी'त्युक्ता सा मामेवमभाषत—'अम्ब, कन्यैवाहं शोभनास्मि। मा मां कस्मैचिदपि विवाहे देहि। मृतामेवान्यथा मामवगच्छ यतो हि वर्ततेऽत्र किंचित्कारणम्'। अतोऽनभीष्टविवाहायास्तस्या वरविचारणयालम्।' राज्ञीमुखादेतदाकर्ण्य सपत्नीकेन कन्यान्तःपुरं प्राप्तेन भूपतिना विवाहनिषेधहेतुमनुयुक्ता राजात्मजा पितुः पार्श्वे क्षणमवाङ्मुखीवावाङ्मुखी स्थितापि निर्बन्धपरं पितरं प्रत्येवमात्ममौनमुद्रामभनक्—'तात, साम्प्रतमनभीप्सितविवाहाया मे विवाहार्थं तातेन न कथमपि चिन्ताऽऽग्रहो वा विधेयः।' एतदाकर्ण्य स्वप्रतापानलदग्धनिजारी राजा परोपकारी पुनरेवमभाषत—'पुत्रि, बन्धुपराधीना कन्या नानुकामीना[1]; जनन्यैव[2] हि जाता[3] जनन्यादिभिः परार्थं रक्ष्यते। पतिरेव च गतिर्नारीणाम्। अतस्तं विना कन्यायाः पितृसद्मनि स्थितिः पितृसद्मनीवाशोभनतरा[4]। पितृगृहे ऋतुमत्यां हि कन्यायां, तद्बान्धवा अधोगच्छन्ति। एवमुक्ता कनकरेखा स्वपितरमेवसात्मगतमुदैरयत् 'यद्येवं हे तात, तदा येन ब्राह्मणेन, क्षत्रियेण वा कनकपुर्याख्या नगरी दृष्टा भवेत् तस्मा एवाहं देया[5] नान्यस्मा इत्येतन्मदीयम्प्रार्थनीयं न त्वया कथमपि कदर्थनीयम्।'

एवं तया विवाहप्रसङ्गेऽङ्गीकृते, राजा मनस्यचिन्तयत् नूनमेषा काचिद्देवी मद्गेहेऽवतीर्णा नान्यथैषा बाला भूत्वापि विज्ञातुमेवं शक्नुयात्। एवं विचिन्त्य सुतां 'तथास्तु' इत्युक्त्वासम्पादितपूर्वाह्णिककृत्यो राजा स्वास्थानगतः सर्वान् स्वसभ्यानेवमवादीत्—युष्मासु केनचित्कनकपुर्याख्या नगरी दृष्टा चेत्स मामभिदधातु। यतो हि समवलोकितकनकपुरये ब्राह्मणाय, क्षत्रियाय वाऽह्नायाविचारितजातिभेदं, स्वकन्यामहं कनकरेखां सयौवराजयौतकां दित्सामि इति। किन्तु एतदाकर्ण्य ते 'देव, दर्शनं तु दूरेऽपास्ताम्—नास्माभिः कर्णातिथित्वमप्यनाय्येषा पुरीति जगदुः। अतो राजा प्रतीहारमाकार्य कृत्स्ने पुरे पटहघोषणामकारयत् यद् यः कश्चित् विप्रः क्षत्रिययुवा वा कनकपुरीं नगरीं दृष्टवान् सोऽत्रागत्य मम तनयां यौवराज्यञ्च स्वीकरोतु। पौरास्तत्पटहघोषणामाकर्ण्य सञ्जातविस्मया केयं कनकपुरी नाम याऽस्माकं पूर्वजैरप्यदृष्टश्रुतपूर्वेत्यन्योन्याननदर्शनपूर्वकमगदन्। किन्तु शक्तिदेवाभिधस्तत्रत्य एको द्यूतेन निर्धनीभूतो व्यसनी, स यौवराज्यराज-

---

१. 'अवारपारात्यन्तानुकामं गामी' इति खः। २. जन्मनैव। ३. कन्या। ४. 'तसिलादिषु॰'। ५. 'अचो यत्', 'ईद्यति'।

जातावाप्तिसंजातोत्कटाभिलाषानासादितस्ववृत्त्यन्यदाशापाशो[1] नाशोन्मुख इव को मामदृष्टतन्नगरिं कथयेत्। केन कदा वा सा दृष्टा। कदाचिदित्थं कुर्वतो मेऽन्धचटकन्यायेन राजसुतासमागमः सम्पद्येत। एतत्सञ्चिन्त्य नृपतिर्नैदेशिकानामग्रेऽवलोकितकनकपुरिमात्मानमघोषयत् इति प्रतीहारेण सत्कृतो राजान्तिकमनीयत। तत्रापि च निर्भयः सँस्तथैव ब्रुवन्नात्मोक्तं ढंढीकर्त्तुं[2] राज्ञा कनकरेखान्तिकं प्रहितः। सः 'कच्चित्त्वया सा नगरी नयनातिथीकृता' इत्यनुयुक्तः 'आम्, विद्याभ्यासार्थं भुवं भ्रमता मया सा दृष्टा' इति तामवदत्। केन पथा त्वं तत्रैः[3] ? तत्रत्यैश्च कथं ते समागमः ? कीदृशी च सेति भूयः परिपृच्छ्यमानो विप्रः प्रत्युवाद—'अहमितो हरपुरनगरं गत्वा क्रमादनुगङ्गं[4] वाराणसीञ्चावाप्य[5] ततः कतिपयैर्दिवसैः पौण्ड्रवर्धनं नगरमतिक्रम्य कनकपुरीं नगरीमगमम्। सा सुकृतिनां भोगभूमिरमरावतीवातीवरमणीया। तत्र कतिपयदिवसान् निवसन्नधिगतविद्यो विद्यातितान्तःकरणः कर्णपरम्परया श्रुतचरशोभाविभवामभवं कृतकृत्यस्तत्साक्षात्कृत्येति[6] तत्रत्यैर्भद्रव्यक्तिभिर्विद्वद्भिश्च सहासम्। सहासं सर्वथैवमनल्पजल्पितकपोलकल्पितं तं द्विजन्मानं धूर्तमवगत्य राजपुत्री सा, निजचेटीभिर्बहिर्निरसारयत्। पितुरन्तिकमुपढौकिता च 'किमसौ द्विजः सत्यमाह' इति पृष्टा स्पष्टमाचष्ट, 'तात, प्राप्तनिस्त्रिंशो[7] निस्त्रिंशोत्सारितारातिरपि च भवान् कथमेवमनालोडितयाथातथ्यः इव 'वक्तयं[8] तथ्यमेव न विकत्थत' इति सद्योऽवद्यगद्यमपि प्रत्यैत्। किमेतन्नाविदितमत्रभवतो यदिहानेकाकाराः बकधूर्ताः धरायां धीवरा इव जालोपजीविनस्तैस्तैः सूत्रशतैर्जिह्वाजालानि विस्तारयन्तः ऋजुवृत्तीन् वराकान् प्रतारयन्ति। अन्यतमस्तेष्वेष विप्रोऽप्यासीदिति भवन्तं विवञ्चयिषुरवगततत्फल्गुवल्गितया मया चेटीभिर्निःसारितः मद्विवाहस्यकृतेऽतो भवतैतावती त्वरा न विधेया, विधेयापि ते स्थितास्मि तावदनू[9]-

---

१. 'अषष्ठ्यतृतीयास्थस्यान्यस्येति' दुक्। २. 'दृढः स्थूलबलयोः'। ३. तत्र अगमः। ४. 'यस्य चायामः'। ५. वरञ्च तदनश्चेति वरानः, श्रेष्ठोदकम् ( अनः क्लीबं जले शोके–रुद्रभसौ ) तस्य अदूरे भवा 'अदूरभवश्चे'त्यण् वृद्धौ पूर्वपदात्संज्ञायामग इति णत्वे ङीप्। ६. 'साक्षात्प्रभृतीनि च', 'च्व्यर्थ इति वाच्यम्'। ७. निर्गतानि त्रिंशतः इति निस्त्रिंशानि वर्षाणि, 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासे 'संख्यायास्तत्पुरुषस्य वाच्य' इति डच् त्रिंशद्वर्षेभ्योऽधिकानि इति भावः, तस्य प्राप्तशब्देन बहुव्रीहिः। ८. जल्पभिक्षेति षाकन्। ९. वहतेः क्ते सम्प्रसारणे ढत्वलोपदीर्घाः।

ढैव ।' जलजाद्या[1] कन्यकया कनकरेखयेत्थमुक्तः परोपकारी तामभ्यभाषत 'जाते, जाते यौवने, न युज्यते जातुचिच्चिरं कन्यकाभावः । लोको हि विशेषेण कुल्य-[2] जातिकुल्याकलङ्कपङ्कोत्पादक इति गुणमत्सरा दुर्जना अनादीनवमपि जनं नवा-दीनवं कुर्वन्ति । अतो यदि त्वं मां विशल्ययितुमिच्छसि तदोन्मिषन्नवयौवनया नयार्जवयुक्तया त्वया, नदुर्जनदुष्प्रवादसौलभ्यकन्यकात्वं चिरमासेवितुं युज्यते ।'

नरपतिनैवं पित्रोक्ता कनकरेखा पुनः स्वप्रतिज्ञां निजपितरं स्मारयन्ती प्रत्यु-वाच यत् येन विप्रेण क्षत्रियेण वा कनकपुरी समवलोकिता तमाशु गवेषय समर्पय च तस्मै मामिति मयोक्तपूर्वमवधार्य तदनुकूलं मया स्वीकृतमवधारय ।

इत्थं जातिस्मरां तां कन्यां हृदयपेटिकासुरक्षितनिजनिश्चयमणिमवधार्य ततः प्रभृति अनुदिनं नवागन्तुकान् प्रष्टुं स भूमिपतिः प्रात्यहिकपटहप्रोद्घोषणमादि-शन्नपि न कमपि समवलोकितकनकपुरीकम्[3]लभत ।

अत्रान्तरे मनसाऽऽज्ञायी[4] स आक्षिक[5]पुरोयायी शक्तिदेवो द्विजयुवा नृपकन्या-वासविमाननातिदूयमानमानसः सुनसो[6]ऽपि विख्य[7]मिवात्मानं मन्यमानो नासौ नृपकन्यका मयाऽऽसादितेति किं मम जीवितेनातो मया प्राणपणेनापि नगरी नूनमन्वेषणीया सेति प्रतिजानानो वर्धमानपुराद्दक्षिणपुरमालम्ब्य प्रतिष्ठमानो निजवाञ्छामिव गहनायितां विंध्यमहाटवीं प्रविष्टस्तत्रैकस्य नीलकाचमणिप्रतिम-स्वर्पः[8] सरसः उत्तरेण[9] स्थिते आश्रमे वर्षीयांसं मुनिमेकमपश्यत् । तत्र कृतप्रणतये मुनये फलपुष्पाद्युपहारीकृत्यावासतत्प्रसादो मुनिना च 'कुतस्त्यस्त्वं ? कुत्र च गन्तुममाः ?' इति पृष्टः 'वर्धमानपुरात्प्रतिज्ञया कनकपुरीप्रेप्सया भगवन्नहमिहा-यातः । किन्तु क्व सा वर्तते इति नाहं वेद । अतो वेत्ति चेत्, अजानन्तं मां तन्मा-र्गमादिशतु भवान्' इत्यगदत् । मुनिश्च तदाकर्ण्याह 'आश्रमपदेऽस्मिन् निवसतो

---

१. 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' । २. 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' इति कुलशब्दात् यत् । ३. 'नद्यृतश्च', 'केऽण' इति प्राप्ते 'न कपि' इति निषेधः । ४. 'आज्ञायिनि च' । ५. 'तेन दीव्यति खनति जयति जितम्', ठक् । ६. 'उपसर्गाच्चे'ति नासिकाया नसादेशः । ७. 'ख्यश्चे'ति नासिकायाः ख्यादेशः । ८. शोभना आपः यस्मिन् 'न पूजनात्' इति समासा-न्तनिषेधः । ९. उत्तरशब्दात् 'एनबन्यतरस्यामदूरेऽपञ्चम्या' इत्येनपि तद्योगे 'एनपा' इति योगविभागात् षष्ठी ।

मे वर्षाणामष्टशती व्यतीता न किन्त्वद्यावध्यस्मत्कर्णगोचरीभूता एवंभूता कापि नगरी।' एतेन सातिशयं विषादमापन्नं तं क्रमेणावगततदखिलवृत्तान्तोऽतिशान्तो दान्तो मुनिरभाषत, 'स्थिरयुवा कल्याणधर्मा[1] च त्वं प्रतीयसेऽतः यदि ते निश्चयस्तदा मदादेशमचिरमाचर। इतो योजनानां शतत्रय्यां काम्पिल्यनामा विषयस्ततोऽग्रे गिरिरुत्तराख्यस्तत्र दीर्घतपानामको मदीयज्येष्ठो भ्राता वसति, त्वं तदन्तिकमुपसर। स जातु जानीयात्तां पुरीम्।' एतदाकर्ण्य नान्यदास्थस्तत्र व्यतियापिततन्निशस्ततः प्रातः समुत्थाय प्रस्थितः शक्तिदेवो दुःखातिक्रान्तकान्तारशतः, काम्पिल्यविषयमवाप्योत्तरगिरिमारुरोह। तत्र चाश्रमवर्तिनं दीर्घतपसं मुनिं प्रणम्य प्रत्ततदनुजसूर्यतपःपरिचयो निजगन्तव्यपुरीपथमजिज्ञासत। किन्तु चित्रीयमाणचेताः स मुनिरेतावता वयसा न सा पुरी मया श्रुतपूर्वा द्यावाक्षामयोरिति ब्रुवाणः क्वचिद्दवीयसि द्वीपान्तरे सुपदामपि[2] द्विपदामतिगत्या[3] तया भाव्यम् इति तर्कयन्नेतमुपायं तमवोचत्—'अस्ति मध्येसमुद्रम् उत्स्थलसंज्ञकद्वीपे सत्यव्रताख्यो वसुपतिर्निषादाधिपतिः। द्वीपद्वीपान्तरं यातायातं विदधता तेन जातुचित् सा नगरी दृष्टा श्रुता वा स्यात्। अतोऽर्णवोपकण्ठप्रतिष्ठितं विटङ्कपुरनामकनगरं गत्वा ततः केनापि वणिजा समं प्रवहणेनात्माभीष्टसिद्धये तन्निषादासादमासादय।'

तेन मुनिनेत्थमुच्यमानः, उत्कर्षकीर्तिस्पृहयालुः शक्तिदेवः तमृषिमामन्त्र्य ततः प्रचलितोऽन्वहं क्रोशान् देशानुल्लङ्घमानोऽर्णवतीरतिलकं[4] विटङ्कपुरमाससाद। तत्रोत्स्थलद्वीपं जिगमिषुणा समुद्रदत्ताख्येन वणिजा सख्यं[5] विधाय तत्प्रवहणमारुह्य पाथोधिपथेन प्रतस्थे। किन्त्ववशिष्टाल्पदेशे गन्तव्ये विभ्राड्[6] विद्युल्लताललल्लोलजिह्वो गर्जन् पर्जन्यराक्षसोऽशङ्कितमुत्तस्थौ। लघून् भावानुन्नमयन्, गुरूंश्चावपातयन् विधेरारम्भ इव प्रतिकूलवलूल[7]-वातूलो[8] ववाविति फेनायमाने[9]ऽब्धौ तत्प्रवहणमुदञ्चद्वीचीभिरनीचीभिः क्षणमूर्ध्वं, क्षणञ्चाधो नीयमानं क्षणान्तर एव

१. 'धर्मादनिच् केवलात्'। २. शोभना पादा येषां 'संख्यासुपूर्वस्य'। ३. अत्यादयः क्रान्ताद्यर्थे द्वितीयया। ४. अर्णसो लोपश्च। ५. सख्युर्यः। ६. 'भ्राजभास'–इत्यादिना क्विप्। ७. वलादूलः। ८. वातस्य समूह इति विग्रहे 'वातात्समूहेच' इत्यूलः। ९. 'फेनाच्चेति वक्तव्यम्' इति सहकारेण 'बाष्पोष्मभ्यामुद्वमने' इति क्यङ्।

समभज्यत। भग्ने[1] च तस्मिन् पोते तत्स्वामी फलकमेकमारुह्य चिराद् वहनान्तरमवाप। शक्तिदेवस्तु पत्राम्निपतितोऽपरिचितसर्वाङ्ग एव व्यात्त[2]मुखकन्दरेणैकेन महाम्भसिकेना[3]म्भसि निगीर्णः। स च तिमिङ्गिल[4]गिलस्तत्कालं स्वेच्छयोच्छलदच्छजलमध्येन चरन्नदृष्टनियोगादुत्स्थलद्वीपं समया, समयात्, दैवात्तत्र तस्यैव कैवर्तपतेः सत्यव्रतस्य [5]मैनिकैरगृह्यत चेति महाकायः स कौतुकादाकृष्य निजस्वामिनोऽन्तिकमानीतः। सः कौतूहलेन च तेनापि स्वभृत्यैः पाटितात्तस्मात्पाठीनोदरात् जीवन् शक्तिदेवो विनिर्गमितः। तथाभूतं निर्गतं तं विलोक्य सत्यव्रतो दाशोऽनुभूतापराश्चर्य[6]गर्भवासस्य तस्य तथाभूतशफरोदरशयनाद्भुतवृत्तान्ताकर्णनोत्सुककर्णोऽभ्यर्णोपस्थितं तमभ्युच्चचू बभूवेति समवगततदभिप्रायेण शक्तिदेवेनादितः सर्वस्मिन् तस्मा अभिशंसिते सति, 'अहमेव सत्यदेवः एतदेव च तद्द्वीप[7]म् किन्तु त्वदभिप्रेता नगरी द्वीपान्तरेष्वपि न श्रुता। तथापि मा गास्त्वं निराशताम्' इति वदता ददताऽस्मायाश्वासनमासनञ्च नेदीयस्येवैकस्मिन् मठे तच्छयनार्थं प्रबन्धोऽकारि। तत्र कथाप्रसङ्गतस्तद्देविलेन[9] देवलेन पृष्टः समासतस्तस्मै निजकुलं कृत्स्नं वृत्तान्तञ्चाभिदधौ। तत्सर्वमाकर्ण्य विष्णुदत्तो द्रुतमुद्द्रुत्यैनं वचसा परिरभ्य हर्षवाष्पाम्बुघर्घराक्षरमाचचक्षे—अहो, दिष्ट्या त्वं मे मातुलपुत्रः। अहञ्च बाल एव तत इहायातः। तस्मात्त्वमिहैवास्व। द्वीपान्तरागच्छद्वणिक्कर्णपरम्परया अचिरादेव तेऽभीष्टसिद्धिर्भविष्यतीत्युक्त्वाऽऽवेदितनिजान्वयो विष्णुदत्तो, यथोचितैस्तात्कालिकोपचारैस्तमुपाचरत्। शक्तिदेवोऽपि च विदेशे बन्धुं धन्वदेशेऽमृतनिर्झरमिवासाद्य निजाभीष्टसिद्धिमभ्यर्णवर्तिनीं मन्वानस्त्रियामां तामनैषीत्।

प्रभाते च तत्र मठस्थितं तं शक्तिदेवं सत्यव्रतो दाशेन्द्रः समुपागत्याब्रवीत्—'ब्रह्मन्, त्वदभीष्टसिध्यर्थं मयोपायश्चिन्तितः। मध्येसमुद्रं रत्नकूटाख्यं द्वीपवरमस्ति। तत्राब्धिना प्रतिष्ठापितो भगवान् हरिरास्ते। आषाढशुक्ल-

---

१. 'ओदितश्च' इति क्तस्य नः। २. 'अच उपसर्गात्तः'। ३. 'ओजः सहोऽम्भसा वर्तते' इति ठक्। ४. तिमीनां गिलगिल इति विग्रहे 'गिलगिले च' इति मुम्। ५. 'पक्षिमत्स्यमृगान् हन्ति' इति ठक्। ६. 'आश्चर्यमनित्ये'। ७. 'आद्यादिभ्य उपसंख्यानम्'। ८. 'ऋक्पूरब्धूः पथामानक्षे', 'द्व्यन्तरुपसर्गेभ्योऽप ईत्'। ९. सदाचारिणेत्यर्थः।

द्वादश्यां यात्रोत्सवे तत्र सर्वद्वीपेभ्यो जनास्तत्पूजायै समायान्ति। तत्रागतेन केनचिज्जातु सा पूर्ज्ञाता[1] भवेदिति तत्तिथेः प्रत्यासन्नतया, प्रसन्नतया त्वमेहि, तत्र गच्छावः।' एवं सत्यव्रतेनोक्तः शक्तिदेवो गृहीतविष्णुदत्तोपकल्पितगुडधानाशष्कुलि-[2]पाथेयः समारूढसत्यव्रतोपस्थापितवहनस्तेनैव साकं वारिधिवर्त्मना त्वरितं प्रातिष्ठत। गच्छँश्च दूरतः स महारोहपरिणाहं किमपि वस्तूदधौ निरीक्ष्य किमेतदिति सत्यव्रतं पप्रच्छ। सोऽवादीत्–एष वटवृक्षः। अस्याधस्तात् वडवा-मुखमिति श्रूयतेऽतो परिहृत्यैवैतं प्रदेशं गन्तव्यम्। अन्यथैतदावर्तनिपतितानामुद्धारो न सम्भवति। सत्यव्रते एवं ब्रुवत्येवाम्बुवेगतः तत्प्रवहणं तामेव दिश-मुद्दिश्य गन्तुं प्रववृते। एतदालोक्य सत्यव्रतः शक्तिदेवमुवाच—ब्रह्मन्, पश्या-कस्मादावर्ताभिमुखं प्रवहत्प्रवहणमेतन्न कथमप्यवरोद्धुं शक्यते इति मृत्युमुख इव गभीरावर्तेऽतिदुःखावहे वर्तावहे। एवंभूते व्यतिकरे न मे नश्वरशरीर-चिन्ताऽपितु कृच्छ्रेणापि परिश्रमेण ते मनोरथो न सिद्ध इत्येव परीतापः।[3] अतो यावदहमेतत्प्रवहणं वारयामि तावत्त्वमस्य वटकुटस्य शाखामविलम्बेनावल-म्बेथाः। कदाचित् एतेन ते जीवरक्षा भवेत्। धीरसत्त्वस्य सत्यव्रतस्यैवं जल्पत एव तत्पत्रं तरंगतारतम्येन तत्तरुतीरमभजदिति साहसिकः[4] शक्तिदेवः कृतो-त्फालः पृथुलामेकां तत्सलिलनिधिशाखिशाखामग्रहीत्। परोपकृतिकृतव्रतः सत्यव्रतस्तु प्रवहता प्रवहणेन शरीरेण च वडवामुखनिपतितः परार्थपरित्यक्त-प्राणोऽभवत्। शक्तिदेवश्च समाश्रिताब्धिवटशाखिशाखोऽपि सुहृद्विनाशसमु-द्विग्नोऽचिन्तयत् 'न मया तावत्सा कनकपुरी दृष्टा। दाशेन्द्रेणापि चापद्येव विरहित इति न केनापि भवाब्धावस्मिन् भवितव्यता भङ्क्तुं शक्यते। तदवस्थानुकूलमित्थं चिन्तयत एव तस्य तत्तरुस्कन्ध एव तद्दिनं व्यत्यगात्।

अथ वासरसञ्चरणसञ्जाततापनिनीषयेव समवतरति पश्चिमसिन्धौ[5] कमलबन्धौ, ध्वान्तेन च निरुध्यमाने दिविषदध्वनि निजपृथुपक्षोद्भूतवातविधूतार्णवोर्मिभि-रभिहन्यमानं तं तरुमाश्रयतामतिप्ररूढबहिर्लोमानां[6] पक्षपातिनामप्यपक्षपाति-

---

१. भ्राजभास्० इति क्विप्। २. गुडेन मिश्रिता धानाः 'भक्ष्येण मिश्रीकर-णम्' इति समासे गुडधानाश्च शष्कुल्यश्चेति द्वन्द्वे 'जातिरप्राणिनाम्' इत्येकवत्, तत्पाथेयं यस्येति बहुव्रीहिः। ३. उपसर्गस्य घञीति दीर्घः। ४. ओजः सहोऽम्भसा वर्तते इति ठक्। ५. अग्रादिपश्चाड्डिमच्। ६. 'अन्तर्बहिर्भ्यांश्च लोम्नः' इत्यप्।

नाम् तद्दिनचरणस्थानविषये मानवगव्या[1] मिथः संलपतां तेषां वर्णनं पत्रनिचयच्छन्नकायः[2] स समश्रृणोत्। तेन च कश्चिद्द्वीपान्तरं, कश्चिद्गिरिम्, कश्चिद्दिगन्तरं चरितुं गत आसीत् इति निरधारयत्। एकश्च वृद्धविहगस्तेषां मध्य एवमभाषत यदहमद्य विहर्तुं कनकपुरीमगमम्। अतीवरमणीया सा पुरी पद्मगन्धीनि[3], विमलापानि[4] च तत्रत्यानि सरांसि, पक्षिपेयाः[5] पयस्विन्यः, विविधभक्ष्यद्रव्यपरिपूर्णा च वसुधा, कल्याणधर्माणो[6] बहुश्रेयस्यः[7], प्रशस्तभ्रातरः[8], सुप्रजसः[9], सुमेधसः, सुशक्ताश्च[10] तत्रत्या जनाः। सुराजायाश्च[11] तस्यां न गच्छति कोऽप्यपथम्[12], न वदति कोऽप्यनर्थकम्[13], न चाचरत्यपार्थकमिति[14] सुप्राते[15] श्वोऽहं तत्र प्रस्थाता। पक्षिणश्च तस्याकस्मिकसुधासारसदृशवचसा शान्तसन्तापः शक्तिदेवोऽचिन्तयत्, 'दिष्ट्यासैवास्ति ममाभीष्टा नगरी'। तत्र गन्तुमतोऽयमेव पतत्री पत्रीकरणीय[16] इति सुप्तस्य तस्य पृष्ठपक्षान्तरे शनैर्न्यलीयत। प्रातस्तरां यथेच्छमितस्ततोऽभ्युत्पतितेष्वन्येषु विहगेषु स विहङ्गो विधिरिव प्रदर्शिताश्चर्यपूर्णपक्षपातोऽलक्षितं शक्तिदेवं पृष्ठे वहन् निर्विघ्नं तां कनकपुरीं पुनः चरितुमचिरमवाप। तत्रोद्यानान्तर एकस्मिन् तस्मिन्नुपविष्टे विहङ्गमे, शक्तिदेवस्तत्पृष्ठान्निभृतमवातरत्। अपसृत्य च तत्पार्श्वात् यावदेव स इतस्ततो भ्राम्यति तावत्पुष्पावचयव्यग्रे द्वे सुदत्यौ[17] युवत्यौ निरैक्षतेति तदवलोकनविस्मिते ते समुपगम्य 'कोऽयं प्रदेशः? के वा भद्रे युवाम्' इत्यपृच्छत्। तदाकर्ण्य विद्याधरास्पदं कनकपुर्याख्येयं पुरी। एतस्यामास्ते चन्द्रप्रभाख्या

---

१. मानवानां गौः, वाणी इति मानवगवी 'गोरतद्धितलुकि' इति टचि' ङीप्। २. चिधातोर्घञि शरीरेऽर्थे कुत्वम्। ३. 'उपमानाच्च'। ४. 'ऋक्पूरब्धूःपथामानक्षे'। ५. 'कृत्यैरधिकार्थवचने'। ६. 'धर्मादनिच् केवलात्'। ७. 'ईयसश्च' इति कबभावः, 'ईयसो बहुव्रीहेर्नेति वाच्यम्' इति 'गोस्त्रियोरुपसर्जनस्य' इत्यनेन ह्रस्वाभावः। ८. 'वन्दिते भ्रातुः'। ९. 'नित्यमसिच्प्रजामेधयोः'। १०. नञ्दुः-सुभ्यो हलिसक्थ्योरन्यतरस्यामित्यत्र शक्त्योरिति पाठान्तरेण साधु। ११. शोभनः राजा यत्रेति विग्रहे 'अन उपधालोपिनोऽन्यतरस्याम्' इति ङीबभावपक्षे 'डाबुभाभ्यामन्यतरस्याम्' इति डाप्। १२. अपथं नपुंसकम्। १३. 'अर्थान्नञः' इति नित्यं कप्। १४. 'शेषाद्विभाषा' इति वैकल्पिकः कप्। १५. सुप्रातसुश्वसुदिवेत्यच्प्रत्ययान्तो निपातः। १६. पत्रं वाहनम्, तेन वाहनीकरणीय इत्यर्थः। १७. 'वयसि दन्तस्य दतृ', ततः 'उगितश्च' इति ङीप्।

विद्याधरी। आवाञ्चोद्यानेऽस्मिन् तदुद्यानपालिके[1] तदर्थं सुमनांस्यवचिनुव इति तमूचतुः। तदाकर्ण्य तत्स्वामिनीदर्शनार्थमभ्यर्थयमानः शक्तिदेवस्ताभ्यामुद्यान-पालिकाभ्यामभ्यन्तरं राजमन्दिरस्य नीयमानस्तत्रत्यप्रतीहारीमुखेन चन्द्रप्रभायै सूचितः। सा चाप्यविलम्बितं तं द्विजं निजनिकटं प्रवेश्य कृतातिथ्यं[2] प्रदत्ता-विप्रकृष्टविष्टरोपविष्टं सकुतूहलं तज्जन्मभूम्यादिकं मानुषागम्यतद्भूम्यागमन-प्रकारञ्चाप्राक्षीत्। शक्तिदेवोऽपि चात्मदेशजात्यादिनिवेदनपुरस्सरं कनकरेखाख्य-राजकन्यकाप्राप्तिपणभूततत्पुरीक्षणप्रकारं सर्वमादितस्तस्यै न्यवेदयत्। समाक-र्णिततदखिलोदन्ता, दन्ताच्छप्रभाभासितनिजप्रकोष्ठचतुर्दिगन्ताऽऽगन्तारं प्रति क्षणं किञ्चिद्ध्यात्वा, सनिःश्वासमेवमवादीन्निजाननाधरीकृतपूर्णचन्द्रप्रभा, चन्द्र-प्रभा, 'सुभग, अहं किञ्चिद्विवक्षुरस्मि तदवधेहि अस्त्यस्यां विद्याधरधरायां शशि-खण्डाख्यो विद्याधराधिपतिः। वयं तस्य चतस्रो दुहितरः क्रमशो जाताः। तासु ज्येष्ठाहं चन्द्रप्रभा, मदनुजा चन्द्ररेखा द्वैतीयीकी[3], तदनुजा शशिरेखा तार्तीयीकी[4], शशिप्रभा च तुरीया कनिष्ठा। अभ्रातृमत्यो वयमिह पितुर्गृहे वृद्धिं गताः। कन्या-व्रतस्थायां मय्येकदा तास्तिस्रो मत्स्वसारः सिस्नासवस्सरित्तटमाटन्। तत्र यौवन-सुलभचाञ्चल्यारब्धजलकेलयो जलस्थम् उग्रतपोनामकं मुनिं व्यात्युक्षन्त्योऽत्यति-निर्बन्धिन्यस्ता मुनिना मर्त्यलोकेऽखिलाः कुकुमारिका जायध्वम्' इति शप्ताः। अस्मदीयेन पित्रा तदा, तदाकर्ण्य तदन्तिकमुपगत्य विविधविनम्रवचनस्तवैः प्रसादितो मुनिस्तासां पृथक् पृथग् यथायथं शापान्तं मर्त्यभावेऽपि दिव्यविज्ञा-नोपबृंहितजातिस्मरत्वञ्चादिदेश। ततस्तासु तनूस्त्यक्त्वा मर्त्यभूयमितासु, पिता सुखसम्पत्तिपराङ्मुखः खेदादस्मदीयो मदीयोत्तराधिकारित्वे नगरीं गरीयसी-मेतामतिसमृद्धिसमेतां परित्यज्य वनमगमत्।

इह निवसन्तीञ्च मामम्बिका स्वप्ने समादिशत्—'पुत्रि, मानुषस्ते भर्ता भविता। इति हेतोस्ताँस्तान् विद्याधरानवमत्याद्यावध्यहं कन्यकैवावस्थिता। इदानीञ्चामुनाऽश्चर्यमयेन त्वदागमनेन, वपुषा च, वशीकृता तुभ्यमेव समर्पिताऽस्मि

---

१. पालकान्तान्न। २. अतिथेर्ञ्यः। ३. द्वेस्तीयः, 'तीयादीकक् स्वार्थे वाच्यः', 'नव्स्नञीकक्०' इति ङीप् 'किति च'। ४. 'त्रेः सम्प्रसारणं च' इति त्रिशब्दात् तीयः, सम्प्रसारणञ्च, ततः तृतीयशब्दात्स्वार्थे ईककि ङीप्, वृद्धिः।

इत्यागामिन्याम् उप[1]पौर्णमासचतुर्दश्याम् इतो भवत्कृते तातं विज्ञापयितुमृषभाख्यं महागिरिं गमिष्यामि। तत्र हि, तस्यां तिथौ, प्रतिवत्सरं त्र्यम्बकमञ्चितुमञ्चन्ति सम्यञ्च[2]स्सर्वे विद्याधराः। अमुमुईचां[3] तातोऽप्यन्यतम इति तदनुज्ञामवाप्येहायातां मां त्वं परिणयेथाः। एतदुक्त्वा प[4]क्त्रिमैरनुप्त्रिमैर्विविधफलैर्विद्याधरोचितैरन्यैश्च नानाविधैर्भोगैरुपचरिते ससु[5]खं च तत्र तिष्ठति शक्तिदेवे, प्राप्तायां निर्दिष्टचतुर्दश्यां, चन्द्रप्रभा शक्तिदेवमुवाच–अहं भवत्कृते साखिलपरिजना पितरमुपसर्पामि, त्वया चेहैकाकिना द्वित्राणि दिनानि तिष्ठता दुःखिना न भुवेलिमम्। मध्यमभूमिश्चास्य प्रासादस्य न कदाप्यारोढव्येति। एवमादिश्य तदीयचित्तानुगतायां गतायां चन्द्रप्रभायामेकाकी शक्तिदेवस्तत्र स्थितो महर्द्धिसमेधितसौन्दर्यस्थानेषु मनो विनोदयन् विद्याधरनिषिद्धामपि जातकौतूहलो मन्दिरस्य मध्यमां भूमिमेकदाऽऽरुरोह। तत्र च स गुप्तांस्त्रीन् रत्नमण्डपान् अवलोक्य समुद्घाटिततद्द्वारकमेकं प्रविवेश। तत्र प्रविष्टश्च परिस्तीर्णतूलिके सद्रत्नपर्यङ्के पटावगुण्ठिततनुं कञ्चिच्छयानमपश्यत्। यावत्स समुत्क्षिप्तपटस्तदन्वीक्षते तावन्मृतां परोपकारितनयां ( कनकरेखाम् ) अपश्यत्। तामवलोक्य सोऽचिन्तयत्–किमेतदाश्चर्यम्। स्वप्नो[6] वा भ्रमो वा मासकीन एषः? जाग्रदस्मि स्वपिमि वाऽहम्! यस्याः कृतेऽहमपरिगणितैतावत्क्लिष्टा[7]क्लिशितप्रवासः सैवेहापगतप्राणाऽप्यम्लानातिकान्तिस्तत्र देशे प्राणितीति निस्संशयं विधात्रा केनापि हेतुना विततमिन्द्रजालम्। एतत्सञ्चिन्तयन् निर्गत्य तावन्यावपि मण्डपौ क्रमात्प्रविश्य स तद्वदेवान्यकन्यके[9] अपश्यत्। ततोऽपि च साश्चर्यो निर्गतः स मन्दिरैकभागे समुपविष्टोऽधस्तादेकस्या उत्तमाव[10]तारवाप्यास्तीरे रत्नपर्याणिमश्वमेकमवलोक्यारुरुक्षया तत् पार्श्वमुपगतोऽ-

---

१. पौर्णमास्याः समीपे इति समीप्यार्थकाव्ययीभावे 'नदीपौर्णमास्याग्रहायणीभ्यः' इति टच्। २. सम् अञ्चन्तीति विग्रहे 'ऋत्विग्दधृक्०' इति क्विनि 'समः समि'। ३. अमुमञ्चन्तीति विग्रहे क्विनि 'विष्वग्देवयोश्च टेरद्र्यञ्चताव-प्रत्यये' 'अदसोऽसेर्दादुदो मः' सुत्यस्यासिद्धत्वान्न यण्। ४. ड्वितः क्त्रिः, 'क्त्रेर्मम्नित्यम्' ५. 'अव्ययीभावे चाकाले'। ६. 'स्वपो नन्'। ७. न परिगणितः एतावान् क्लिष्टाक्लिशितप्रवासो येन सः, 'क्तेन नञ्विशिष्टेनानञ्'। ८. 'संयोगादेरातो धातोर्यण्वतः'। ९. द्विवचनान्तत्वात्, प्रकृतिभावः। १०. 'अवे तॄस्त्रोर्घञ्'।

श्वपश्चात्पादाहतस्तस्यां वाप्यां निपतितः। निमग्नश्च तत्र स क्षिप्रं वर्धमानपुरे निजोद्यानदीर्घिकामध्यात्ससम्भ्रममुन्मग्नो निजजन्मभूमिवापीजलस्थितमपि चन्द्रप्रभां विनाऽतिदीनं कुमुदमिवात्मानमन्वभवत्। एतेन क्वेदं वर्धमानपुरं ! क्व सा वैद्याधरी पुरी !! नूनमहं मन्दभाग्यः केनापि वञ्चितोऽथवा भगवती भवितव्यता सर्वथा अपरिज्ञेयेत्यादि विचिन्तयन् वापीमध्यादुत्थाय पितुर्गृहमगात्। तत्र पित्रा स्वजनैश्चाभिनन्दितागमनस्तिष्ठन्नपरेद्युर्गृहाद् बहिर्निर्गतः पुनः सपटहं घोष्यमाणम्—

'विप्रक्षत्रियमध्यात्, कनकपुरी येन तत्त्वतो दृष्टा।
वक्तु, स तस्मै तनयां, सयौवराज्यां ददाति नृपः॥'

इत्यश्रौषीत्। एतदाकर्ण्य स तान् पटहोपघोषकानुपगत्य मया सा पुरी दृष्टेति पुनर्ब्रुवाणस्तूर्णमभ्यर्णमानीतो भूपतेः, पूर्ववदेव वितथवादी बुद्धः। किन्तु सर्वान् प्रत्याययितुमिदानीं सोऽब्रवीत् 'न मया सा नगरी दृष्टा चेच्छरीरस्य निग्रहेण पणो वर्तते। अद्य राजपुत्री यथेच्छं मामनुयुङ्क्ताम्।' तस्मिन्नित्थमुक्ते राजा स्वसुतां तत्रानाययामास। किन्तु दृष्टपूर्वं तं विप्रमवलोक्य क्षिप्रम् अयम् पुनरपि किमपि मिथ्यैवाभिधास्यतीति वदन्तीं तां शक्तिदेवोऽब्रवीत्, 'अहमवितथं वितथं वा वच्मी'त्येतदविचारणीयम्। किन्तु राजसुते, कनकपुर्यां पर्यङ्के विगतप्राणाऽपि प्राणतीह दृश्यसे कौतुकमेतन्मे त्वमपनय। शक्तिदेवेन साभिज्ञानमित्थमुक्ता कनकरेखा पितरमुवाच—'तात, सत्यमेष महात्मा ब्रवीत्यधुना अचिरेणैव तत्रस्थाया मेऽयं भर्ता भविता। तत्रत्याश्चान्या अपि मदीयास्तिस्रः स्वसृरयं परिणेष्यति। तस्यां पुरि विद्याधराधिराज्यञ्चाधिकरिष्यति। अतो मुनिशापादिहोत्पन्नया मया स्वतनुः पुरी च प्रवेष्टव्या। एतदवधिश्चासीन्मदीयः शापः इति मानुष्येऽपि जातिस्मराधुना सुखजाता[1]ऽहं निजविद्याधरीपदं प्रतिनिवर्ते।

एतत्कथनानन्तरं परित्यक्ततन्वामन्तर्हितायाञ्च राजकन्यायां, राजमन्दिरे महानाक्रन्दः समुदपद्यत। शक्तिदेवोऽपि चोभयतो भ्रष्टमात्मानं निन्दन्नसम्पूर्णमनोरथो निरानन्दथू[2] राजभवनान्निर्गत्य कनकरेखयोक्तां भाविस्वाभीष्टसिद्धिमनुचिन्तयन्, पुनरपि कनकपुरीं जिगमिषुः, स्वपुरान्निर्गत्य, जलनिधिपुलिनस्थितं विटङ्कपुरं पुनरवाप। तत्र च सम्मुखमायान्तं समुद्रदत्तनामानं निजपरि-

---

१. जातं सुखं यस्याः इति बहुव्रीहौ 'जातिकालसुखादिभ्यः परे निष्ठा वाच्या'। २. द्वितोऽथुच्'।

चितचरं तं वणिजमपश्यद्यस्य पत्रमब्धौ भग्नमासीत्। तमवलोक्य यावदेव स तत्समीपमुपसर्पति तावदेव स वणिगपि तं कण्ठे गृहीत्वाऽतिहृष्टः पृष्ट्वा च तस्मात् सर्ववृत्तान्तं, स्वस्य चापि प्रवहणभङ्गव्यतिकरमादितः सर्वं तमुक्त्वा, निजगृहमनैषीत्। तत्र साधुना सोऽधुना साधुतरसम्पादितसत्कारो व्यतियापिततत्त्रियामोऽन्येद्युस्तद्वणिग्व्यवहारिणां यानमारुह्य तैः सहोत्स्थलद्वीपमवाप्य पूर्ववदेव स्वबन्धुविष्णुदत्तगृहे तिष्ठासया यावद्विपणीमध्येन गन्तुं प्रावर्तत तावद्दैवाद्दाशपतेः सत्यव्रतस्य सुतास्तमवलोक्यैवमब्रुवन्, 'ब्रह्मन् तातेन साकं कनकपुरीं मृगयमाण इतो गतोभवान् कथमेकक एवाद्यापद्यत। एतदाकर्ण्य शक्तिदेवस्तानब्रवीत्, 'युष्मत्पिताऽम्बुराशावम्बुभिराकृष्टवहनो दहनोदरे निपतितो वाडवस्य, वश्यतां यमस्य गतोऽनश्यत्। तद्बुद्ध्वाऽतिक्रुद्धा दाशपतिसुताः स्वसेवकानब्रुवन् 'बध्नीत दुरात्मानमेनम्; पितरमयमस्माकं हतवान्, कथमन्यथैकपोतस्थयोर्द्वयोरेकतरस्तत उत्तरेदितरश्च फेनिलोदन्वद्वाडवाग्नौ[1][2] निपतेत्। अतोऽस्मत्पितृघात्ययमित्यस्युद्यतैरस्माभिः[3][4] श्वः पशूकृतेनानेन[5] चण्डिकादेवीबलिरुपहर्तव्यः इति'। ततो बद्ध्वा दाशपुत्रैश्चण्डिकामन्दिरमानीतः शक्तिदेवः स्वजीविते संशयानो रात्रौ देवीं चण्डीं स्वरक्षायै हार्दिकवेदनया प्रार्थयमानः कथञ्चित्किञ्चिल्लब्धनिद्रः स्वप्ने तद्गर्भगृहनिर्गतां काञ्चिद् योषितमपश्यत्। सा चाकृत्या दिव्या, प्रकृत्याऽत्यार्जवजुष्टेनमुपसृत्याभाषत 'शक्तिदेव, मा भैषीः, न तेऽनिष्टं कथमपि भविष्यति। एषां दाशपुत्राणां विन्दुमती नामधेया स्वसाऽऽस्ते, श्वस्सा तेऽभिरूपमालोक्य त्वां निज भर्तृत्वार्थमभ्यर्थयिता। तदभ्यर्थनासिद्धिस्त्वयाऽवश्यं करणीया। सा च न धीवरी[6] अपि तु शापतो मर्त्यत्वमुपेता दिव्या स्त्रीति सा त्वामस्मान्मोचयिष्यति। एतच्छ्रुत्वा स प्रबुद्धः।

प्रातस्तद्दाशकन्या, देवीमन्दिरमागतौत्सुक्यपूर्णमानसैनमुपसृत्यावोचत्—'अहमितस्त्वां मोचयिष्यामि तत्त्वं ममेप्सितं कुरु। भ्रातृसम्मताः प्रख्याता अपि बहवोऽवरा वरा मया प्रत्याख्याताः किन्तु त्वयि दृष्टे मदीये हृदि काऽप्यनिर्वचनीया नैसर्गिकप्रीतिरुत्पन्नेति त्वं माम् भजस्व।' एवमुक्तः शक्तिदेवः स्वप्नं स्मरन्नति

१. फेनादिलच। २. उदन्वानुदधौ च। ३. 'कर्मणि हनः' इति णिनिः। ४. उद्यता असयो यैः 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ। ५. च्वौ च। ६. 'वनो र च' इति ङीप् रश्चान्तादेशः।

प्रहृष्टस्तस्याः प्रार्थनां स्वीकुर्वाणो बन्धनान्मुक्तः स्वप्नलब्धदेव्यादेशैस्तद्भ्रातृभिर्विहितेप्सितां तां सुमुखीं परिणीतवान् ।

रूपान्तरोपागतया दिव्यया भार्ययैकदा प्रासादपृष्ठस्थः शक्तिदेव ऊढगोमांसभारकं मार्गागतं निष्टयमेकमवलोक्य निजप्रियामब्रवीत्—'त्रैलोक्यवन्द्या या धेनवस्तासामपि पललं पापकृदयमश्नातीति कोऽन्योऽस्मात्पापकृत्तमो भवेत्' एतदाकर्ण्य विन्दुमती निजपतिमवदत्—आर्यपुत्र, अचिन्त्यमत्र पापम् । स्वल्पापराधैवाहं गवां प्रभावेण दाशकुलेऽस्मिन्नुत्पन्नेति काऽत्र निष्कृतिः । एतदाकर्ण्यातिनिर्बन्धपरः शक्तिदेवो निजदाशकुलोत्पत्तिकारणं तामनुयुञ्जान एवमुक्तः-यदि त्वं मम वचनं कर्तुं प्रतिजानीषे तदाऽतिगोप्यमप्येतत्तवाहं ब्रवीमि । तदाकर्ण्य शपथोत्तरं तथा कर्तुं प्रतिज्ञाते शक्तिदेवेन, साऽऽदावेवं तं स्वसमीहितमुक्तवती यदिहैवापराऽपि तेऽधुना भार्या भवित्री । सा चाचिरादापन्नसत्त्वा भविष्यतीत्यष्टमासंजातस्तस्या गर्भस्तदुदरं पाटयित्वा त्वया निर्घृणमाकृष्टव्यः । एवमाकर्ण्यातिविस्मितं शक्तिदेवं भूयो दाशपुत्री जगाद, एतावन्मात्रं त्वया कस्यापि हेतोर्मनोक्तं कर्तव्यम् । अथ यथा मे दाशगृहे जन्म तद् ब्रुवन्त्या मत्तः सावहिति समाकर्णय—जन्मान्तरेऽहं काऽपि विद्याधरी समभवम् । तस्याश्च मे दन्तैश्छित्त्वा वीणासु तन्त्रीर्योजयन्त्या शुष्केण गवां स्नायुना वदनं स्पृष्टमित्येषाऽधोगतिर्मयोपलब्धा । एवं ब्रुवन्त्यां तस्यां ससम्भ्रममेकतमस्तद्भ्राता समागत्य शक्तिदेवमभाषत—उत्तिष्ठ महत्तरोऽयं सूकरः क्वाप्युत्थाय हतानेकजनः सदर्पमित एवागच्छति । तदाकर्ण्य रचणैयत्नव्यस्तः शक्तिहस्तः शक्तिदेवोऽश्वारूढो वराहं तं प्रजहार किन्तु नैकनिरसूकरः सूकरः स सेर्ष्या पलायय सत्वरं सुषिरमेकमविशत् । शक्तिदेवोऽपि च विलं प्रविश्य तमनुसरन् एकस्मिन्नुद्यानेऽद्भुताकृतिं कन्यामेकामपश्यत् । ससम्भ्रमं तेन 'का त्वम्' इति पृष्टा साऽभाषत—सुभग, अहं दक्षिणदिङ्नाथस्य चण्डविक्रम-

---

१. 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति क्विप् ततस्तमप् । २. अष्टौ मासा जातस्य यस्येति विग्रहे 'कालाः परिमाणिना' इतिसमासः । ३. 'शुषःकः' । ४. 'एकाच्च प्राचाम्' । ५. यजयाच० इत्यादिना नङ् । ६. हस्ते शक्तिर्यस्येति विग्रहे 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' । ७. 'वाऽऽहिताग्न्यादिषु' । ८. 'ऊषसुषिमुष्कमधोरः' ।

नरनाथस्य विन्दुरेखाऽऽख्या कन्याऽस्मि । अकस्मात्कस्माच्चिदुपगतो ज्वलितलोचनो दैत्य उपधिना[1] पितुर्गृहान्मामपहृत्येहानीतवान् । स च क्षुधार्त्त आमिषाशी, दर्पामयावी[2], मायावी, धृतवराहरूपो बहिर्गतोऽद्यैव केनचिद्वीरेण शक्त्या विद्ध इह प्रविश्य पञ्चत्वमित इत्यदूषितकौमारा[3]ऽहं वाराहं तच्छवं पतितं तत्रावलोक्य पलायमानेहायाता याता ते दृष्टिगोचरताम् । तच्छ्रुत्वा 'मयैव निजाप्रतिहतशक्त्या शक्त्या वराहो, वरारोहे, व्यापादितोऽहञ्च शक्तिदेवाख्यो विप्र एवं परिचायितनिजाभिधानीयकः 'तर्हि त्वमेव मे भर्ता निर्दिष्टः' इति तयोक्तस्तयैव सह बिलद्वारेण निर्गतो निजभवनमासाद्यालौकिकरूपवत्यै तत्सर्वं विन्दुमत्यै झटित्यावेद्य तच्छ्वद्धितः कुमारीं तामिन्दुलेखामिव विन्दुरेखामुदवहत् ।

तत्रैवं कृतकार्यस्य द्विभार्यस्य पत्नीपरिजनादिक्रियमाणसेवस्य शक्तिदेवस्य द्वितीया पत्नी विन्दुरेखाऽन्तर्वत्नी सञ्जातेति गर्भस्याष्टमे मासे स्वैरं समुपेत्य विन्दुमती शक्तिदेवं स्मारिततद्भार्योदरविपाटनरूपप्रतिज्ञं कुर्वाणा निजप्रणपालनार्थं व्यजिज्ञपत् । प्रतिज्ञापाशबद्धः शक्तिदेवः स्नेहपर्याकुलोऽनुत्तरोनिर्गत्य विन्दुरेखाऽन्तिकमुपगतस्तत्र विज्ञापितसर्ववृत्तान्तस्तयोक्तः 'विन्दुमतीहितं हितं तेऽवश्यं करणीयम् । माऽत्र वृथा कृथा घृणाम् । न चाप्यस्यां कृतौ वर्तते काऽपि नृशंसता । इत्येवमभिदधत्यां विन्दुरेखायां पापशङ्किते शक्तिदेवे दिवो भारतीयमुदभूत्, 'शक्तिदेव, त्वया गर्भोऽयमवश्यमाकृष्यताम् । कण्ठे मुष्टया गृहीतोऽसौ ते खड्गो भविष्यति' । एवमाकर्णितदिव्यवाणिः, शस्त्रपाणिः[4], शक्तिदेवस्तस्याः पाटितोदरं गर्भमाकृष्य करेण कण्ठतोऽग्रहीत् । गृहीतमात्रश्च स तद्धस्तगः खड्गः सञ्जातः । विप्रश्च क्षिप्रं विद्याधरोऽभूत् । विन्दुरेखा च विद्युद्रेखा इव तत्क्षणमदर्शनतामिता । एतत्सर्वमवलोक्य तथाविधः स स्वद्वितीयपत्न्यैन्यवेदयदिति सा तामाह, 'नाथ वयं कनकपुरीतः शापच्युतास्तिस्रः स्वसारः । तास्वेका कनकरेखा यस्याः शापान्तस्त्वया वर्धमानपुरे दृष्टः । साऽपि स्वपुरीं गता। अहञ्च तासु तृतीया । ममापि शापः काल्य[5] इति मयाऽद्यैव निजनगरी गरीयसी

---

१. 'उपसर्गे घोः किः' । २. आमयस्योपसंख्यानं दीर्घश्च । ३. 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' । ४. शस्त्रमित्यत्र 'दाम्नीशस०' इत्यादिना ष्ट्रन् ततः प्रहरणादित्वात्सप्तम्याः परत्वम् । ५. कालः प्राप्तोऽस्येति 'कालाद्यत्' ।

गमेलिमा[1]। तत्रैवास्माकं विद्याधरशरीराणि, ज्यायसी भगिनी चन्द्रप्रभा च वर्तन्ते इत्येतस्य प्रभावतः कौक्षेयकस्य प्रभावान्मया सहाशु कनकपुरीं गच्छ। तत्रावगतसर्वोदन्तेन वनस्थेन पित्रार्थिताश्च तस्तोऽप्यस्मान् भार्यात्वेनावाप्य विपुलसम्पत्त्यां तस्यां पुर्यामनापद्राज्यं कुरु। एवमुक्तस्तथेति स्वीकृत्य विन्दुमत्याः साहाय्येन[2] गगनपथेन कनकपुरीमापन्नः शक्तिदेवो मण्डपत्रयदृष्टचरकनकरेखायाः स्वात्मभिरनुप्रविष्टास्तिस्रोऽपि निजप्रियाः, तज्ज्येष्ठामुपरचितमङ्गलामुत्सुकया दृष्ट्या तत्र वर्तमानां, चतुर्थीं चन्द्रप्रभां चावलोकितवान्। तत्र यथानियोगव्यापृतपरिजननिजवनिताभिनन्दितागमनोऽधिवासगृहं नीतः स चन्द्रप्रभया निजगदे 'सुभग' या त्वया वर्धमानपुरे कनकरेखा राजसुता समवलोकिता सेयं मे चन्द्ररेखाऽऽख्या भगिनी। उत्स्थलद्वीपे च या प्रथमं त्वया परिणीता दाशाधिपपुत्री विन्दुमती सेयं मे शशिरेखाख्या स्वसा। तदनु या दानवानीता विन्दुरेखा राजसुता ते भार्याऽभूत्सेयं शशिप्रभाऽभिधाना ममानुजा। तदिदानीमस्माभिः सहारण्यस्थास्मत्पितुरन्तिकमेहि तेन प्रत्ताश्चाखिला अस्मान् परिणयस्व।

एव मुक्तश्शक्तिदेवोऽनुवनमचिरं[3] गत्वा प्रमुदितेन-विद्याधरेन्द्रेण प्रदत्तास्ताः-कन्या यथाविध्युपयम्य समुपलब्धकनकपुरीप्राज्यराज्यो विद्याधरेन्द्रदत्तेन शक्तिवेगाख्येन नाम्ना विद्याधरेषु प्रसिद्धः सपदि स्वाः सर्वाः विद्यास्तत्र वितरन् 'अतिप्रभावं भवन्तमन्यो न जेष्यति' युष्मासु वत्सेश्वराद्यश्चक्रवर्तीनरवाहनदत्तनामा समुदेष्यति। स एव ते भावी विभुरिति तस्यैव त्वं नतिं विदध्याः इत्युक्तवता विद्याधरेन्द्रेण स सत्कृति तपोवनाद्विसर्जितः शक्तिवेगः स्ववधूभिः सह कनकपुरीं प्रविश्य तिष्ठन्नतितरामुपलब्धनिर्वृत्तिर्विद्याधरसम्पत्तिं पुत्रपौत्रीर्णतामनयत्[4]।

इत्थमात्मीयविचित्रचरित्रमुक्त्वा शक्तिवेगो भूयो वत्सेश्वरमुवाच—'हे शशाङ्ककुलभूषण, स एवाहमुत्पत्स्यमानचक्रवर्त्तिभावत्कसुतचरणयुगलदर्शनलालसमानसोऽनुद्वेगः शक्तिवेगः। इत्थं मयेह मनुजेनापि शङ्करप्रसादाद्विद्याधराधिपतिताऽवाप्ता। स चाहमधुना प्रभुं दृष्ट्वा निजधाम प्रयामि। (इति शक्तिवेगकथा)

एवमुक्त्वा प्राप्ताभ्यनुज्ञे शक्तिवेगे क्षणादन्तरिक्षमुत्पतिते देवीभ्यां सहितः

---

१ केलिमर उपसंख्यानम्। २. 'सहायाद्वा'। ३. 'अनुर्यत्समया'।
४. 'परोवरपरम्परपुत्रपौत्रमनुभवति'।

शिशुतनयो वत्सेशो मन्त्रिभिः सहानिर्वचनीयो सम्मदमयीं दशामनुबभूव। तथा यथासमयसम्पादितान्नप्राशनमद्रा[1]करणादिसंस्कारो वात्सेश्वरिर्नरवाहनदत्तोऽभिवर्द्धमानस्तन्मङ्गलकामनया हरिह[2]रादिदेवपूजापरायणाभ्यां दम्प[3]तीभ्याम्, देव्या वासवदत्तया पद्मावत्या चानिशं सस्नेहं पाल्यमानोऽष्टवत्स[4]रजातो गुरुभिर्विनीयमानः सद्वंशजेन गुणैरापूर्यमाणेन धनुषा इव वपुषाऽतिशयशोभासम्पन्नो मन्त्रिपुत्रैः सह रमणीयात्मारामेषु रममाणोऽवर्तत।

**कलिंगसेनाकथा मदनमञ्जुकोत्पत्तिश्च**

अस्मिन्नेव काले वितस्तातीरे निवसदनेकदक्षतक्षा, रक्षारचितातिसुदृढानेकप्राकारकक्षा, वितस्तामन्ववसितप्रासादभित्तिसम्पर्कप्रवहन्नीलकान्तप्रतिमाच्छजलक्रीडदनेकफर्फरायमाणतिमिङ्गिला[5], किलासीत्तक्षशिलाऽभिधानं दधाना नगरी। प्राज्यराज्यप्रथितनिजनिष्पत्तना[6]यः, सौन्दर्यविहसिताकायः, राजकार्याविहितात्मोदयपरज्या[7]निस्तारादत्ताजानिः, निजौरसप्रजा इव प्रजाः पालयिता, ईशकृ[8]ष्णभक्तिरप्यपरिमितशक्त्यनुरक्तिः, आध्यात्मिकतेजोऽसिर[9]कृतलौकिकबन्धनलूनिरपि पार्थिवतेजःप्रसराहर्दिवोत्पादितदुर्हृद्धार्दिकधूनिः[10], मस्क[11]रिणां नमस्करिणामूर[12]पि द्विषन्निरङ्कुशकरिणां मू[13]:, तस्यामभूत्कलिङ्गदत्तनामा नृपतिः। जायया तया सह वर्तमानस्य सुखिनस्तस्य शच्या सह वर्तमानस्य शचीपतेरिव दिवि भुवि दिवसा जग्मुः। इतस्त्रिदिवे त्रिदिवौकसां प्रवृत्ते ऐन्द्रम[14]हिके नृत्यगीतादावेका सुरभिदत्ताऽऽख्या वराऽप्सरा नादृश्यतेति सप्रणिधानेन कुध्रा[15]रिणा दृष्टा सा केन-

---

१. 'मद्रात्परिवापणे'। २. 'द्वन्द्वे घि'। ३. 'धर्मादिष्वनियमः', 'राजदन्तादिषु परम्'। ४. अष्टौ वत्सरा जातस्य यस्येति 'कालाः परिमाणिना' इत्यनेन उत्तरपदेन परिमाणिनेति सहकृतस्तत्पुरुषः, ५. गिलेऽगिलस्य। ६. नायः प्रापकः उपायः, नीतिर्वा; आद्ये 'दुन्योरनुपसर्गे' इति णः, द्वितीये भावे घञ्। ७. ज्यानिः, क्षयः (औणादिकोऽयं शब्दः; क्तिनि तु ल्वादित्वान्नत्वे सम्प्रसारणापत्तेः)। ८. 'अजाद्यदन्तम्'। ९. असिराः अंशवः शराश्च, १०. ल्वादित्वान्नत्वम्। ११. 'मस्करमस्करिणौ वेणुपरिव्राजकयोः'। १२. ऊः रक्षकः। १३. मूः बन्धकः उभयोः 'ज्वरत्वर'–इत्यादिना सिद्धिः। १४. इन्द्रमहः प्रयोजनमस्येति 'प्रयोजनमि'ति ठञ्। १५. कुं धरन्तीति कुध्राः पर्वताः, 'मूलविभुजादिभ्यः कः', तेषामरिणा इन्द्रेणेति भावः।

चिद्विद्याधरेण सह रममाणा नन्दनवनेऽवाप्यतेत्यतिवेलमन्युना शतमन्युना मदनान्धे पापे, प्राप्नुयाः मानुष्यं जन्म, प्राप्य चायोनिजां निजां कन्यां विहित-दिव्यकर्त्तव्याऽऽयाहि दिवमिमामिति शप्ता। अत्रान्तरे ऋतुमती कलिंगदत्तभार्या तारादत्ता स्वप्ने निजोदरं प्रविशन्तीं नभोभ्रष्टां ज्वालां ददर्शेति सविस्मयोषसि स्वप्नं तं स्वभर्त्रे विनिवेदयन्ती प्रीतेन तेन निजगदे, जगदेकनेत्रेऽस्मिन् देवि, देवादिशापकलापवापिता दिव्या अपि यवंजीवा[1] उत्पद्यन्ते। तज्जाने, गर्भेऽर्भकोऽयं कोऽपि देवजातीयः। अथ कालेन देवी दध्रे दौहृदे दम्भोलिकरशापाद्दिवः परिच्युतामप्सरसं सुरभिदत्ताम्। प्रासोष्ट च यथासमयं स्वरूपोपहसितरति-रूपाम्, अनन्यसदृशीमवन्यां कन्याम्। कलिंगदत्तोऽपि च जातां, ज्ञातां तां तादृशीमवलोक्य, दिव्यां तां सम्भावयन्नप्युत्कटपुत्रकाम्यः[2], शोककन्दानन्दनन्दनयोः सुतासुतयोर्[3]महदन्तरमनुभवन् तत् कन्याजन्यूत्पन्नमन्युः केनापि वृद्धेन द्विजन्मनो-चे—'राजन् शुचाऽलम्, ऐहिकामुष्मिकशिवायोत्पन्ना कन्या राज्यादिसम्पत्ति-लुब्धपुत्रोत्पत्तिं सर्वथाऽतिशेते। कुन्तिभोजाद्याः कुन्त्यादिकन्यागुणैरेवैवं ख्यातिं भुवि गताः। सुतादानस्यान्यदानं नार्हति षोडशीमपि कलाम्। किञ्च, भवादृशाणां गृहे दिव्यानामेव, न तु सामान्यपुण्यानां जन्मसम्भवीति शापच्युतैषा नूनं काचित् कन्या दिव्या तव गृहे समुपलब्धजननिर्जननीसन्तानासद्भाव-सन्तापसंहारिणी, चमत्कारिणी निजकुलस्येत्येतज्जन्मना न मनागपि सन्तप्तव्यम्। कलिंगदत्तो निजगृहवृद्धद्विजन्मनो मुखादेतदाकर्ण्य कर्णसुखदमतिसंतुष्टस्तदानी-मपगतचिन्तासन्ततिरपि दिव्यसुतासन्ततिर्नयनानन्ददायिनीं तां कलिंगसेनेति नाम्नाऽलंचकार। तां च राजपुत्रीं विहितमनःप्रसादप्रासादे, सेनाविरामनिः-सरत्सामन्तसंकुले, उपान्तकृतमणिमन्दुरामन्दिरनिबद्धस्निग्धपोषणोत्कर्षहर्षहेषित-राजवल्लभतुरंगमे, प्राङ्गणोत्संगरंगक्रीडाकुरंगविहंगमे, अभंगांगरक्षिरक्षितकक्षा-न्तरे, सूक्ष्ममुक्ताफलरचिततरंगरम्यरंगरेखाराजिराजिताजिरे, उत्तुङ्गश्रृङ्गसंगत-मंगलध्वजे, पितृवेश्मनि वर्धमानां हेमन्तशिशिरवसन्तेषु[4], अविरलगलन्मधु-मञ्जरीपुञ्जपिञ्जरितसरससहकारवननिकुञ्जपुञ्जितपक्षिकुलकलरवरमणीये, क्रीडो-

---

१. 'ऋदोरप्'। २. 'अप्रत्ययात्' इति निष्पन्नस्य पुत्रकाम्याशब्दस्य उत्क-टापुत्रकाम्या यस्येति बहुव्रीहिः। ३. 'चार्थे द्वन्द्वः'। ४. 'ऋतुनक्षत्राणां समा-क्षराणामानुपूर्व्येण'।

द्यानेऽनेकविधाभिः क्रीडाभिः विहरन्तीं हरन्तीं पित्रोर्मनांसि, केलिसमासक्तां, कदाचिद् व्योमचारिणी मयासुरसुता सोमप्रभाभिधाक्षिलक्ष्यीकृतवतीति किमियमैन्दवीकला, कामविरहिता रतिर्वेति संदिहाना साऽकारणं संस्निह्यता मनसा निर्जरमानवोत्कृष्टया[1] तया सह जन्मान्तरप्रीतिमनुचिन्तयन्ती बालायास्तस्यास्त्रासशङ्कयाऽलक्षमुतीर्य मनुष्यकन्यकामतल्लिकाभावेन मुनिमानसमोहिनीम्, अनवद्यपाणिपादाद्यवयवां[2] तामुपससर्प। कलिंगसेनाऽपि भूरिदिव्यभव्याभरणावरणरमणीयरूपां सोमप्रभामवलोक्यैव सञ्जातातिप्रीतिः, प्रदर्शितादरादरा, तां समुपवेश्यान्वयनामनी मनीषिणी च तस्या अनुयुञ्जाना, विदधाना च नानाविधानन्यान् सविस्रम्भालापान्, विलम्बमपास्य पास्यत एव ते कर्णौ श्रुतिमधुरमस्मदीयोदन्तजातम् 'इत्यभिहिता, हितातिप्रेयस्या वयस्यया तदानीं तदीयमखिलं परिचयमनवाप्यापि तया सत्रा तत्रालापैरेव मधुरैः परां कोटिं मुदोऽवाप। अथ प्रतीचीं ककुभमभिमुखीभूते भगवति भास्वति, सोमप्रभा कलिङ्गसेनाम्, 'सखि चिरमतिष्ठम्' अवसायप्रायो[3]दिवसः, इतः षष्टियोजन्यां[4] मदीयं गृहम्' इत्युक्त्वा व्योमपथेन[5] निजवसतिमुत्पपात। कलिंगसेना च न वेद्म्यहं सखी मदीयासकौ का! दिव्यौकाः काचिदप्सरा विद्याधरी वा। यतो हि विशेषस्नेहाहृता दिव्या अपि मानुषीभिः सङ्गतिं यान्ति एवेत्यतर्कितोपनतामिमां प्राप्य धन्याऽहम्। प्रातरागतां तामवश्यं तदन्वयनामनी प्रक्ष्याम्यहमित्यादि चिन्तयन्ती यामिनीमनैषीत्।

प्रातश्च कलिंगसेनाविनोदोपपादनचिकीर्षयो[6]पात्तदारुमयानेकमायायन्त्रपुत्तलिकापूर्णकरण्डिका सोमप्रभा, तथैव गगनगत्या तदन्तिकमाययौ। कलिंगसेनाऽपि च तामालोक्य, विगलदमन्दानन्दास्रा समुत्थाय कण्ठे गृहीत्वा निजपार्श्वासीनां च तां विधाय 'सखि, तावकीनाननपूर्णेन्दुदर्शनं विना तमोमयीत्रियामाऽऽयामे, शतयामेव मयाऽतिवाहितेत्यवश्यमावयोः केनचिज्जन्मान्तरसम्बन्धेन भवितव्यम्। वेत्सि चेदवबोधिततत्सम्बन्धां मां कुरु।' एतदाकर्ण्यास्मिन् विषये प्रकटितनिजा-

---

१. 'अभ्यर्हितञ्च' इति निर्जरशब्दस्य पूर्वनिपातः। २. 'द्वन्द्वश्चप्राणितूर्यसेनाङ्गानाम्'। ३. अवपूर्वकात्स्यतेर्घञ्। ४. 'संख्यापूर्वो द्विगुः,' 'अकारान्तोन्तरपदो द्विगुः स्त्रियामिष्टः, 'द्विगोः'। ५. 'ऋक्पूरब्धूःपथामानक्षे'। ६. करोतेः सन्नन्तादप्रत्यये टाप्।

विज्ञाना सोमप्रभा प्रणयप्रणतशिरसा रसास्वादनलोलुपया, प्रेमविस्रम्भपेशलया कलिंगसेनया पुनस्तदन्वयनामनी, करण्डिकोपादानहेतुम्, तत्रत्यं वस्तुजातं च पृष्टाऽतिहृष्टा, 'यद्येवं सुन्दरि, समुपविश्यतामिहावधीयताम्, श्रूयताञ्च, विस्रब्धम् 'इत्युक्त्वा क्रमादेवं वक्तुमारभत—

अस्ति त्रिलोकी[1]विख्यातो मयो नामासुरः। स चोत्कृष्टासुरस्वभावः शौरिशरणमाश्रित्याभयत्वं लेभ इति दैत्या देवपक्षीयं तं मत्वा तस्मै चुक्रुधुरतस्तद्भयं[2]भीलु[3]कोऽसौ विन्ध्याद्रौ बह्वाश्चर्यमयमसुरागम्यं मायाविवरमन्दिरमेकमरचयदिति तदीयावावां द्वे दुहितरौ। ज्येष्ठा स्वयंप्रभा नाम कुमारी ब्रह्मचारिणी तद्गृहस्थिता; कनिष्ठा चाहं सोमप्रभा नाम कुबेरसूनवे नलकूबराय प्रदत्ता। पित्रा चाहमनेकधा मायायन्त्राणि निर्मातुं शिक्षितेति स्वत्प्रीत्या तत्पूर्णेयं करण्डिका। एवमुक्त्वा करण्डिकामुद्घाट्य सा नैकानेककौतुका मायायन्त्रपुत्तलिकाः कलिङ्गसेनामदर्शयत्। तासु च काचित् कीलिकाहतमात्रेण भूमिं विहाय, सा विहायसा गत्वा, तदाज्ञानुसारेण सुमनःस्रजमादाय द्रुतमाद्रुता। अन्या च तथैव काचित् पानीयमानीयेदानीमेतदादानीयमिति भावं प्राकटीत्। काचिन्ननर्त, चकर्त चापराऽपरस्याः शिरोऽवगुण्ठनेनेत्यादिभिर्महाश्चर्यैः काश्चित्कालकलास्तां विनोद्य, सुरक्षितस्थापितयन्त्रकरण्डिका सोमप्रभा, समु[4]त्कां कलिंगसेनामामन्त्र्य, भर्तृपराधीनाऽध्वनीना विहायसा निजभवनमभजत्।

कलिंगसेना चात्राश्चर्यदर्शनसञ्जातातिमुत्, ध्वस्तक्षुत्, अनिर्वर्तिततदहराहारा तस्थौ। तां तथाऽवलोक्य रोगशङ्किनी तज्जनन्यानन्दाख्यमगदङ्कारं कलिङ्गसेनानाडीं निरूपयितुमाज्ञप्तवती। स च सोत्फुल्लनेत्रहसद्वक्त्रनिदानेनोक्तवान् यन्नीरुजोऽप्येतस्याः कस्याप्यपूर्वस्य हर्षस्य हेतोः क्षुन्नाशस्य[5] रोगस्य रुजा वर्तते। तदाकर्ण्य वास्तविककारणमनुयुक्ता कलिंगसेनाऽप्यामूलमखिलमात्महर्षहेतुं यथावृत्तं निजजननीं जगाद। श्लाघ्यसखीसंगसंहृष्टाञ्च तां तन्माताऽभिनन्द्य, यथोचितमभ्यवहारयामास।

---

१. त्रयाणां लोकानां समाहारः इति तद्धितार्थे समासे, 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः', 'द्विगोः' इति ङीप्। २. एरजित्यत्र भयादीनामुपसंख्यानम् इति साधु। ३. 'भियः क्रुकुकनौ' इति लुकन्। ४. 'उत्क उन्मनाः'। ५. 'रुजार्थानां भाववचनानामज्वरेः'।

अन्येद्युः पुनरायाता सोमप्रभा क्रमेणावगताखिलवृत्तान्ता, रहसि कलिंगसेनामुवाच—सखि, मया त्वत्सख्यं निजपतिमावेद्य विदितयथार्थतस्तस्मात्तव पार्श्वेऽन्वहमागन्तुमनुज्ञोपलब्धेति त्वमपि पितृभ्यां सर्वं निवेद्य तदनुज्ञाता भव येन मया सह विहारे तवानुकामीन[1]त्वं न विहन्यात्। एवमुक्ता कलिंगसेना सोमप्रभया सह स्वपित्रोः पार्श्वं समासाद्य तावाख्याततदन्वयनामधेयावकरोत्। तावपि च दुहितृस्नेहार्त्तां महासुरसुन्दरीं सत्कृत्य कलिंगसेनाञ्च तद्धस्ते समर्प्य तयोः स्वैरविहारमनुमोदयामासतुः। एवमनुज्ञाते ते, कलिंगसेनापितृभ्यां[2] सह राजोद्यानविहाराय निरीयतुरानिन्यतुश्च तत्र तन्मायायन्त्रकरण्डिकामिति सोमप्रभा तत्रत्यान् साधुजनानर्चयितुं यमुपयुक्तसामग्रीमानेतुं प्रहिणोतिस्म स रभसा नभसा दूरमध्वानमतिक्रम्य मुक्तासद्दलहेमाम्बुरुहादिकामावश्यकसामग्रीमादाय निववृते। एतदालोक्यातिविस्मयस्तिमितनेत्रो, महिषीद्वितीयो राजा कलिंगदत्तस्तद्यन्त्रचेष्टितमन्वयुङ्क्त। सोमप्रभाऽपि च प्रकृतेः बम्भ्रम्यमाणस्यास्य पञ्चभूतात्मकजगद्यन्त्रस्येव स्वमन्त्रवैशिष्ट्यं पार्थक्येनेत्थमभिदधौ—'महाराज' पार्थिवमेतद्यंत्रम्, द्वारादि पिधत्ते, तत्पिहितं द्वारं न केनाप्यपरेणोद्घाटयितुं शक्यते। एतद्धि आपं यन्त्रम्, यत्रोत्थ[3] आकारः सजीव इवावलोक्यते। तैजसं हि यन्त्रं ज्वालाः परिमुञ्चति, एवं वायवीयं यन्त्रं गमनागमनादिकं घटते। नाभसञ्च स्पष्टमाचष्टे। एतानि यन्त्राणि मया निजपितुरवाप्तानि। किन्त्वमृतस्य रक्षकं यन्त्रमेकं तात एव जानाति नापरः। एवमभिदधत्यां तस्यां, विभूषिते च मध्यमनभोभागे भगवता भासुरभासा भास्वता, सर्वत आपूर्यमाणानां शंखध्मा[4] शंखानां ध्वनिमाकर्ण्य समुचिताहारविश्रामादिनिर्वर्तनानन्तरं राजाऽवाप्ताज्ञा सोमप्रभा, विसृष्टा च सानुगा सपाथेया, कलिंगसेनां यन्त्रनिर्मितविमाने संस्थाप्य, गागनेन मार्गेण माता[5]पितृगृहे स्थिताया ज्येष्ठायाः स्वसुरन्तिकमुपगन्तुं प्रतस्थे। ददर्श च क्षणेनैव विन्ध्याद्रिवर्ति तत् पितृमन्दिरमवाप्योपासर्पजटालाम्, समुपात्तलम्बाक्षमालां, वरवर्णिनीं, वर्णिनीमुपसम्वीतश्वेततन्त्रिकाम्, सर्वतोऽवकीर्यमाणावदातसुप्रभाम्, स्वयंप्रभाम्। सा अपि चातिथेयी प्रणत्यवनतमस्तकां

---

१. 'अवारपारात्यन्तानुकामं गामी'। २. 'पिता मात्रा'। ३. उत्पूर्वकात् तिष्ठतेः 'स्थः क च' इति कप्रत्यये आकारलोपः। ४. 'आतो धातोः'। ५. 'आनङ् ऋतो द्वन्द्वे'।

तां कलिंगसेनां पक्त्रिमपीलून्यभ्यवहृत्यै ददाना, 'सखि, भुक्तैरेतैः फलै रसासार-पूर्णैर्न विस्रंसा रूपविनाशिनी ते भविष्यतीति' कलिङ्गसेनामुवाच। साऽपि च तानि भुक्त्वा सद्यः सुधासारसिक्ताङ्गीवेतस्ततस्तत्र कौतुकाद् भ्रमन्ती विकचकाञ्चन-कह्लारवापीके, सुधास्वादिष्ट फललसत्सालसच्छायापरिकिरमाणविष्किरकुले[2], अनहिन-कुले[3] उद्याने विहरन्ती जले स्थलधियं स्थले च जलधियं कारयन्मयमायाविनि-र्मितमद्भुतपुरमवलोक्य विस्मितां कलिङ्गसेनां यन्त्रे समारोप्य स्वयंप्रभामा-पृच्छ्य सोमप्रभा तत्तशिलास्थं स्वमन्दिरमाजगाम।

इत्थं तयोर्गच्छत्स्वहस्सु सोमप्रभैकदा कलिङ्गसेनामवोचत्—'त्वत्परिणयाव-ध्येवावयोः सख्यम्। ततः पश्चात्[4] तव गृहे मदीयागमनं न सम्भवति। तदानीं हि श्वश्रूः स्नुषाम्, वृकी अविमिव पीडयति। अस्मिन् प्रसङ्गे सत्स्वपि बहुषूदाह-रणेषु केवलमेकमवयुत्यानुवादरूपेण तव पुरः स्थापयामि—

पाटलिपुत्राख्ये पुरे धनपालितनामा कश्चिद्धनी वणिगासीत्। अप्रतिमरूपवती तस्य कीर्तिसेनानाम्नी जाताऽजनि। तां स मगधेषु स्वसमानधनाय देवसेना-भिधाय वणिजेऽददात्। आसीच्चातिसद्वृत्तस्य बाल्यविपन्नजनकस्य तस्याति-दुर्जनजननी गृहस्वामिनी। सा स्वस्नुषां कीर्तिसेनां पतिसम्मतां पश्यन्ती निजपुत्रपरोक्षे नितरामभर्त्सयत्। कुटिल-श्वश्रूपरायत्ता कीर्तिसेना तन्निज-पतिमभिधातुमपारयन्त्यप्येकदा वाणिज्यार्थं[5] वलभीं पुरीं गन्तुं प्रवृत्ते पत्यावति-प्रह्वया जिह्वया तमेवं वक्तुं साऽसाहसयत् 'आर्यपुत्र इयच्चिरं न मया किञ्चित्तु-भ्यमुक्तम्। एषा तवाम्बा त्वय्यत्र स्थितेऽपि तव परोक्षे मां भर्त्सयति। प्रोषिते तु त्वयि किं मे कुर्यादित्यहं न वेद्मि। एतदाकर्ण्य कर्णकटु, देवसेनस्तत्प्रेम-विह्वलीकृतचेता मातरमुपगत्य सभयमाह—'मातः, कीर्तिसेनाऽधुनाऽधीना ते वर्तते। 'कुलीना तनयाऽसावि'ति नावमाननीया यथा सम्भवं लालनीया च'। इमे वर्णाः कर्णाक्षिप्तवारिबिन्दव इव तन्मातरमपीडयन्निति सोवाच—किं मया

१. 'अपाच्चतुष्पाच्छकुनिष्वालेखने'। २. 'विष्किरः शकुनौ वा'। ३. 'येषां च विरोधः शाश्वतिकः'। ४. 'पश्चात्' इति सूत्रेणापरस्य पश्चभावः आतिश्च प्रत्ययः। 'अचः परस्मिन् पूर्वविधौ' इति सूत्रे भाष्ये 'ततः पश्चात्स्रंसते' इति प्रयोगदर्शनादत्र पश्चाच्छब्दस्य समासाभावः। ५. ब्राह्मणादित्वात् ष्यञ्।

कृतम् ? अहं तूभाभ्यामपि युवाभ्यां समानव्यवहृतिर्न वाङ्मनसाभ्यामपि[1] कदाप्येनां तुदे; मुदे नुदेऽपि तु एवास्याः सर्वं कर्तुं दासीदासमपीति[2] गृहभेदकरीयं त्वामेवं प्रेरयत्यप्रत्ययश्चेदाहूय सा पृच्छ्यताम् । तन्निशम्य शाम्यमुपेतो देवसेनोऽन्येद्युर्वलभीं प्रतस्थे । तद्वियोगविधुरा कीर्तिसेना च कथञ्चिद्धैर्यं धरन्ती शीतोष्णं[3] सुखदुःखे[4] च समानं गणयन्ती तूष्णीकामास्त । किन्तु बहिर्निर्गते एव देवसेने तात्कालिकतद्विरहक्लेशजुषमपि कीर्तिसेनामेनां स्वचेट्या सह सम्विदं कृत्वाऽऽभ्यन्तरमानाय्य रहसि विवस्त्रीकृत्य पापीयसि, पैशुन्येन मम तनयमेवमन्यथयसि[5] इत्युक्त्वा केशाकर्षणपूर्वकं निजचेट्या पादैर्दण्डैर्मुष्टिभिश्च पशुमारं मारयित्वाऽभ्युद्धृताशेषपूर्वसञ्चितवस्तुजाते दृढार्गलकपाटेऽध्यन्तर्वेश्मे[6] न्यचिक्षिपत् । न्यदीधपच्च तत्र तज्जीवनयात्रायै भक्तार्द्धशरावकमात्रं दिवसावसाने । अचिन्तयच्च यद्दूरस्थे पत्यावेवं मृतामिमामतो व्युत्थाप्य कैश्चिद्दिवसैः स्वैरं क्वापि गतामिमां जनेषूद्घोषयिष्यामि । सुखार्हा कीर्तिसेनैवमतिनिर्दयया श्वश्र्वाऽध्यन्तर्वेश्मनि क्षिप्ता, सत्यप्यन्यसर्वसुखसाधने, केवलं श्वश्रूनिमित्तां तथा भूतामात्मदुर्गतिं चिन्तयन्ती तत्र द्वित्राण्यहान्यत्यवाहयत्[7] । एकस्मिंश्च दिने सा, पूर्वसञ्चितयावद्वस्तुरिक्तीकृतेऽपि तस्मिन् भूगृहे, विधिवशात्तत्रावशिष्टं खनित्रमेकमलभतेति[8] शनैः शनैः पिपीलिका-प्रयासेनायसेन तेन साधनेन विरचितसुरुङ्गा दैवात्स्वावासवेश्मन उत्तस्थौ । तत्रोपात्तकतिपयस्वपत्यात्माभरणवसना क्षीणभूयिष्ठायां[9] निशायां गुप्तमेकाकिनी 'अपि दद्याद् दयोदन्वान् दीननाथो दीनार्थं[10] मे दयमानो दयितेन मदीयेन सङ्गतिमिति' चिन्तयन्ती नगराद्बहिर्निर्जगाम । किन्त्वेवंविधाया मे पितुर्वेश्मगमनमयोग्यम् । यतो हि सर्वे एव ममाचरणे सन्देग्धयन्तीति किं

---

१. अचतुरविचतुरेति–अजन्तो निपातः । 'न दधिपय आदीनि' इत्येकवद्भावाभावः । २. 'गवाश्वप्रभृतीनि च' तेन 'पुमान् स्त्रिया' इत्यस्य बाधः । ३, ४. 'विप्रतिषिद्धं चानधिकरणवाचि' इत्येकत्रैकत्वमन्यत्र चेतरेतरयोगः । ५. 'तत्करोति तदाचष्टे' । ६. वेश्मनि इत्यन्तर्वेश्मम् विभक्त्यर्थेऽव्ययीभावे, 'नपुंसकादन्यतरस्याम्' इति टचि, 'नस्तद्धिते' ततः, अन्तर्वेश्मे इत्यध्यन्तर्वेश्मम्, सप्तम्याश्च 'तृतीयासप्तम्योर्बहुलम्' । ७. द्वौ वा त्रयो वा 'संख्ययाऽव्ययासन्ने'ति बहुव्रीहौ 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् । ८. अर्तिलूधूसूखनसहचर इत्रः । ९. 'निष्ठायामण्यदर्थे' इति दीर्घे 'क्षियो दीर्घात्' । १०. 'अधीगर्थदयेशां कर्मणि' इति षष्ठी ।

तेभ्यो मया निजनिःसरणकारणं निर्देश्यं स्यादतो निज[1]पतेरन्तिकमेव मे गमनं श्रेयः इत्थंकृतनिश्चया तत्रैकस्मिन् सरसि स्नाता निजपतिपटैः कृतराजपुत्र-वेषाऽऽपणं गत्वा किंचिद्धनेन स्वर्णाभरणमेकं विक्रीयैकस्य वणिजो गृहेऽवशिष्टं तद्दिनं व्यत्ययगमयत्। अन्येद्युर्वलभीं गच्छता एकेन वणिजा कृतसंस्तवाऽभिन-वाकृतिराजपुत्रवेषाऽशेषाऽस्म[2]दंशक-दंशकप्रपीडितोऽहं त्वया सह बलभीस्थनिज-बान्धवान्तिकं चलामीति तमुवाच। तदाकर्ण्य स वणिक्पुत्रो भ[3]व्योऽयं कश्चिद्राज-पुत्र इति मत्वा सबहुमानप्रेमपर्य्यां परिचर्य्यां कुर्वन् स्वेन सहानैषीत्। किन्तु किञ्चिद्दूरगमनान्तरमेव स वणिक्सार्थो निष्कूजद्विविधविहङ्गमप्लक्ष[4]न्यग्रोधे, इतस्ततो धावमानरुरुपृ[5]षते, कु[6]शकाशावच्छन्नातिगभीरगर्ते, यत्र तत्र सञ्चरद्वन्य-गोम[7]हिषे, परिदृश्यमानवदरा[8]मलके, घोरेऽटवीमार्गे, [9]लुण्टाकैः परिवेष्टित इति 'इतो व्याघ्रस्ततस्तटी' एवमात्मापत्तिमनुचिन्तयन्ती सा मनस्यकरोत्—तस्करै[10]-र्यद्यहमाहता तदा पापिनी मदीया श्वश्रूर्मत्पतिमभिधास्यति यदन्यासक्ता सा क्वापि निर्गता। जीवन्ती चाप्यपहृतवस्त्रान्तरा केनापि स्त्रीयं पुंवेषेति ज्ञाता-चेत्तदा तथाशीलविप्लवापेक्षया मृत्युरेव मे श्रेयान् इति सुहृद्वणिजमेनमुपेक्ष्य रक्ष्यो निजात्मैवेति निश्चित्येतस्ततो निजरक्षासाधनं परिपश्यन्ती विधिवशात्तरु-मध्यगं गर्तमेकमपश्यत्। प्रविश्य च तत्र तृणप[11]र्णादिभिस्तनुमाच्छाद्य पतिसंग-माशां धारयमाणा तस्थौ। दस्युसंघश्च वणिक्सार्थं सर्वतः पर्यवारयदतोऽभूदभूत-पूर्वं दण्डादण्डि, बाहू[12]बाहवि, केशाकेशि, तुमुलं युद्धमिति दस्यवः सानुगं समुद्र-सेनं वणिक्पतिमायोधनधरणीरुधिरधुन्यां निक्षिप्योपात्तवित्ताः पलायाञ्चक्रिरे। कीर्तिसेना च तदानीं तद्बलयुद्धकोलाहलमाकर्णयन्ती कम्पमानहृदया नासुभि-र्व्ययुज्यतेत्यत्र विधिरेव हेतुः। विगतायाञ्चावशिष्टत्रियामायामुदितेंऽशुमालिनि, सा तस्माद् गर्तान्निस्सृत्याग्रे प्रचलिता, काक[13]तालीयदर्शनेनैकेन तापसेन पृष्टोदन्ता,

---

१. 'पतिः समास एवे'ति घि संज्ञायां 'घेर्ङितीति' गुणे 'ङसिङसोश्चेति' पूर्वरूपमेकादेशः। २. 'अंशंहारी'। ३. 'भव्यगेयप्रवचनीये'त्यनेन साधु। ४–७. 'विभाषा वृक्षमृगे'त्यादिना साधुत्वम्। ८. 'फलसेनाङ्गवनस्पतिमृगे'त्यादिना सिद्धिः। ९. 'जल्पभिक्षेति०' षाकन्। १०. 'पारस्करप्रभृतीनि च संज्ञायाम्', 'तद्बृहतोः करपत्योः०। ११. 'फलसेनाङ्गवनस्पतिमृगशकुनिक्षुद्रजन्तु-धान्यतृणानाम्०'। १२. 'तत्र तेनेदमिति सरूपे' 'इच्कर्मव्यतिहारे' 'ओर्गुणः', 'अन्येषामपि दृश्यते'। १३. 'समासाच्च तद्विषयात्'।

ससमाश्वासं प्रदत्तकामण्डलवजला, तत्तापसप्रदर्शितपथेन प्रतस्थे । अथैवमादिवसमतन्ती सच्छत्रोपानहा[1]ऽनोकहाकम्पितशाखाप्र[2]पर्णपरिच्छन्नवन्याध्वन्यह्नोऽवसाने महतोऽरण्यवृक्षस्य मूलकोटरमेकमाससाद । निषण्णा च तत्र सा, प्रदोषे सुरा[3]पीतीमिव लोहिता[4]क्षीमुष्ट्र[5]सां, द्विमू[6]र्धैस्त्रिमूर्द्धैश्च स्वबालकैः सहागतां, तैश्च सह किमपि म्लि[7]ष्टं संलपन्तीं, श्याव[8]दन्तीं, नक्तंचरीमेकां ददर्श । तामवलोक्य तीर्णान्यापद्यहमद्यानया भक्षितेति यावच्चिन्तयति तावत्सा निशाचरी तद्वृक्षमारुरोह । तत्पुत्राश्चापि तामन्वसरन्नब्रुवँश्च तत्राम्ब, 'देहि किञ्चिन्नो भक्ष्यमिति' । प्रार्थिता चैवं सा निजपुत्रानब्रवीत्, 'अद्य महाश्मशानं गत्वाऽपि किञ्चिद्भक्ष्यं नासादितम् । निजभागं याचितोऽपि डा[9]किनीसंघो न मे मे भागमददात् इति तत्खेदखिन्नया मया विज्ञप्तो भैरवो मदीयौ नामान्वयावनुयुज्यैवमादिशत्—'भय[10]ङ्करि, त्वं खरदूषणान्वयजासीति त्वमितो वसुदत्तपुरं व्रज । अपूर्वं हि तन्नगरं दिवस्पृ[11]थिव्योः । प्रत्युषा[12]सासूर्यं तत्र विधीयते धरणीगीर्वाणैः सन्ध्यावन्दनादिकम् । पाद्या[13]र्घ्यादिभिरनुदिनमनुशास्त्रमुपपाद्यतेऽग्निदैवत्यं[14] पितृदैवत्यम् । निष्पाद्यते यथावश्यकं यथासमयञ्चार्काश्वमेध[15]म्, अनुष्ठीयते चाग्निमा[16]रुतम्, निर्दिश्यते चाग्ना[17]वैष्णवम्, प्रस्तूयेते अ[18]ग्नीषोमौ चेति। अस्ति च तस्य परमधार्मिकोऽतिराजा[19] सुराजा[20] हरिगुरु[21]भक्तिः । सुखिनस्तस्य राज्ये निवसन्ति समानतया यथावृत्ति ब्राह्मण[22]क्षत्रियविट्शूद्राः । स एव कृत्स्नामेतामटवीमभिरक्षति । संगृह्णाति पदकक्रम[23]कशिक्षक-

---

१. 'द्वन्द्वाच्चुदषहान्तात्समाहारे' । २. 'प्रादिभ्योधातुजस्य वाच्यो वा चोत्तरपदलोपः' । ३. 'अस्वाङ्गपूर्वपदाद्वा' । ४. 'बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात्षच्' षिद्गौरादिभ्यश्च । ५. 'उपसर्गाच्च' । ६. 'द्वित्रिभ्यां ष मूर्ध्नः' । ७. अविस्पष्टमित्यर्थः, क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टेत्यादिना साधु । ८. विभाषा श्यावारोकाभ्याम् । ९. खलादिभ्य इनिर्वाच्यः । १०. मेघर्तिभयेषु कृञः । ११. दिवसश्च पृथिव्याम् । १२. उषासोषसः । १३. पादार्घाभ्यां यत् । १४. देवतान्तात्तादर्थ्ये यत् । १५. अध्वर्युक्रतुरनपुंसकम् । १६. अग्नामरुतौ देवतेऽस्येत्याग्निमारुतम् 'इद्वृद्धौ' इतीकारः । १७. 'विष्णौ न' इति इत्वनिषेधे आनङ् । १८. 'ईदग्नेः सोमवरुणयोः', 'अग्नेः स्तुत्स्तोमसोमाः' । १९, २०. 'न पूजनात्' । २१. 'अनेकत्र प्राप्तावेकत्र नियमोऽनियमः शेषे' । २२. 'वर्णानामानुपूर्व्येण' । २३. 'क्रमादिभ्यो वुन्' ततः 'अध्ययनतोऽविप्रकृष्टानाम्', ( शिक्षकशब्दो ण्वुलन्तो वा व्याख्येयः ) ।

विद्वज्जनान्, अनुगृह्णाति शरणागतान्, निगृह्णाति तस्करान्, तथापि दयाभावे स यूका[1]लिक्षामक्षिकमपीतरप्राणिसङ्घमखिलचयीकरोति । एवं तस्य राजवर्चसेन[2] प्रवर्धितं ब्रह्मवर्चसं[3] समधिकतरं दीप्रं[4]सद्राष्ट्रस्याखिलस्याज्ञानान्धतमसं[5]समपसारयत् पुरुषायुष[6]जीविनीनां तत्रत्यप्रजानां नक्तंदिवं[7] निःश्रेयसं विधत्ते ।

मृगयार्थमटवीमटतस्तस्य राज्ञः आश्रममेकमाश्रित्य सुप्तस्य श्रवणे समापन्नसत्त्वा शतपद्येका सन्निविष्टेति कालेन सा तस्यान्तःकरोटि कोटिशः शतपदीः प्रसूतवती । राजाऽसौ तद्रुजेदानीं परिशुष्कसर्वासृक्, परिदृश्यमानसर्वनाडि[9]रस्थिमात्रावशिष्टो वर्तते । वैद्याश्चास्य व्याधिं न विन्दन्ति । अन्येषु चाप्यज्ञास्यत्स्वेष स्वल्पैरेव दिवसैर्यशःशेषतां नेष्यते । तस्य मांसं त्वया भोक्तव्यम् । येन षण्मासिका[10] परितुष्टिस्ते यास्यसीति । एवं स्थिते, पुत्रकाः किमहं करोमि । एतदाकर्ण्य तत्पुत्रास्तामब्रुवन् 'अम्ब, किं ज्ञातापनीतरुङ्नृपतिर्जीविष्यति ? एवं चेत्करस्तद्रोगोपचारः ? एवमुक्ता सा तानित्थं तद्रोगप्रतीकारप्रकारं व्याजहार यन्मर्दितगोधूमचूर्णविनिर्मितालवालकं तच्छिरः सर्पिषाऽऽपूर्य कर्णकुहरनिवेशितशीतोद[11]कुम्भमुखस्थशरावच्छिद्रप्रविष्टनलिको राजा चिरमातपे समुपवेशितः स्यादित्यातपक्लान्ताः सर्वा अपि शतपद्यः शीताभिलाषिण्योऽमुष्य शिरसोऽन्तरालान्निर्गत्य कर्णरन्ध्रद्वारा वंशनलिकां प्रविश्य तस्मिन्नेव घटे निपतिष्यन्तीति नृपतिस्तन्महारोगात्सद्योऽगदिष्यति । एवमुक्त्वा विरतायां रात्र्यां, कोटरस्थिता कीर्तिसेना तत्सर्वमाकर्ण्य इतो निस्तीर्णा चेदहं तत्र गत्वा राजानमहमेतया युक्त्या समुज्जाघ्य श्लाघ्यपदञ्च तस्यावाप्य तत्रैव स्थिता भर्तुरागमनं प्रतीक्षिष्ये' एवं विचिन्तयन्ती कृच्छ्रादपनीततन्निशोष[12]स्यन्त्यां वेलायामपगतेषु सर्वरक्षस्सु तत्कोटरान्निरगात् । अटवीमध्ये पुरुषवेषेण गच्छन्ती चापराह्णे गोपालसाधुमेकं दृष्ट्वा 'कोऽयं प्रदेश' इति तमपृच्छत् । गोपालक उदतीतरत् 'पुरोवर्त्यैतद्वसुदत्तस्य भूपतेर्वसुदत्तनाम नगरम् । अस्याधीश्वरो महात्माऽऽमयेनाद्यश्वीन[13]मरणः ।

१. 'क्षुद्रजन्तवः' । २. 'पल्यराजभ्याञ्चेति वक्तव्यम्' । ३. 'ब्रह्महस्तिभ्यां वर्चसः' । ४. नमिकम्प्यस्मिेति दीप् धातोः रः । ५. 'अवसमन्धेभ्यस्तमसः' । ६–८. 'अचतुरविचतुर'- इत्यादिना साधूनि । ९. नाडीतन्त्र्योः स्वाङ्गे । १०. षड् मासान् भाविनी परितुष्टिः 'अवयसि ठँश्चे'ति ठन् । ११. एकहलादौ पूरयितव्येऽन्यतरस्याम् । १२. उषस् प्रभातीभावे । १३. 'अद्यश्वीनावष्टब्धे'इत्यत्र विजायते इत्यननुवर्तनात् आसन्नेऽर्थे खः ।

तदाकर्ण्य कीर्तिसेना तदामयनिवारणे निजशक्तिं तं गोपालकमुक्त्वा तेनैव सह राजद्वारमासाद्योक्तराजरोगनिवारणनिजशक्तिः प्रतीहारेण सह राजान्तिकं जगाम। तत्र च रोगग्रस्तो राजाऽद्भुताकृतिं तामवलोक्याश्वस्त 'इमां मदीयां रुजमपनेष्यसि चेद्राज्यार्द्धं ते प्रदास्यामीति' तां प्रतिजानानः, स्वप्ने मदीयपृष्ठात्काचित्स्त्री कृष्णकम्बलं जहार' इति भवती नूनं मदीयं रोगमपनेष्यतीति द्रढीयान् मे विश्वासः इत्थं तां व्याजहार। तच्छ्रुत्वा कीर्तिसेना 'देव, कृच्छ्राद् द्वैयह्निको[1]ऽयं व्याधिः। इदानीं किन्त्वस्तप्रायो द्युमणिरिति श्वस्ते रोगमपनेतास्मि माऽतोऽत्र-भवानधृतिपरवशो भूदेवं देवं ब्रुवन्ती तस्य मूर्द्धानं हैयङ्गवीनेना[2]भ्याञ्जिजत्। येन विगतवेदनो नरपती रात्रौ सुखेन न्यद्रासीत्। अपरेद्युश्च द्युमध्यमध्यारोहति हरितहये, मन्त्र्यादिषु सर्वेषु पश्यत्सु, रात्तस्युक्ताद्भुतविधिना कीर्तिसेना कर्णमार्गेण क्षितिपतिशिरसः सार्द्धं शतपदीशतं निस्सार्य घृतक्षीरादिसेकेन तमतर्पयत्। क्रमादेवं विगतामये महीपतौ, घटे तान् प्राणिनोऽवलोक्य सर्वोऽपि तत्रत्यो जनसमुदायो विस्मयविस्मृतविवेकोऽचाचिन्त्यचमत्कृतिचर्चितचेताः अवतस्थे। राजा चापि स्वशिरोनिर्गतांस्तान् कुकीटानवलोक्य पुनर्जन्मात्मनो मन्यमानः, समाज्ञापितमहामहोत्सवः, स्नातानुलिप्तः, राज्यार्द्धेन, 'अयमस्माकं प्रभुप्राणप्रदः पूज्यो भिषगिति कथयन्त्यो देव्यो हैमाभरणकौशेयौ[3]र्णकावरणादिभिः, मन्त्रिणश्चापि ग्रामैर्हस्तिभिरश्वादिभिश्च यथास्वं तां सदकुर्वन्। पुंवेषा कीर्तिसेना च सर्वं तत्कुप्य[4]मकुप्यञ्च तस्यैव राज्ञो हस्ते निधाय, व्रतोपधिना भर्त्रपेक्षिणी तैः सर्वैर्बहुमन्यमाना, कानिचिदहानि पुरुषवेषेण तत्रावतिष्ठमाना, तेनैव पथा बलभीतः समागतं देवसेनं निजपतिम्—लोकाच्छ्रुत्वेति भर्तारं निजमुपगम्य चिरौत्सुक्यसन्तापप्रविलायिनेव चित्तेनानन्दबाष्पेण दत्तार्घा तस्य पादयोरपतत्। सोऽपि च च्छन्नवेषाम्, विरहकृशानु-भावाम्, कृशानुभावाम्, भावसन्धुक्षणविचक्षणाम्, विलक्षणाकृतिचणाम्, अपि तां सुचिरं निरूप्य प्रत्यभिज्ञाय च किमेतदिति चित्रीयमाणचेताः क्षणमतिष्ठत्। विस्मयस्तिमिताद् वणिग्ग्रामाच्च सर्वं तद् बुद्ध्वा राजा वसुदत्तोऽपि तत्राजगाम।

तत्र तेन राज्ञा पृष्टा कीर्तिसेना स्वपतेः पुरोऽखिलं श्वश्रूक्रूरकर्मनिमित्तात्मो-

---

१. द्वाभ्यामहोभ्यां परिजय्यः इति तद्धितार्थे समासे, 'तेन परिजय्य'—'रात्र्यहः-सम्वत्सराच्चे'ति वा ठञि, ऐच्। २. 'हैयङ्गवीनं संज्ञायाम्। ३. 'कोशाड्ढञ्, 'उमोर्णयोर्वा' (वुञ्)। ४. सुवर्णरजतभिन्नं धनं कुप्यं तद्भिन्नमकुप्यम्।

दन्तमवर्णयत्। देवसेनोऽपि च सर्वं तदाकर्ण्य कोपक्षमाविस्मयहर्षाविष्टमानसः समजनि। एवंभूते व्यतिकरे कीर्तिसेना राजानमब्रवीत्, 'राजन्, तव हस्ते यन्मदीयः प्रीतिदायो वर्तते तत्सर्वं भर्त्रे प्रदीयताम्। इत्थमुक्तस्तया स भूपः सर्वं तद्देवसेनाय प्रददाविति नरपतिदत्तैर्वणिज्यार्जितैश्च[1] प्रचुरधनराशिपरिपूर्णकोषो देवसेनः परिहृतजननीकः, कीर्तिसेनां स्तुवन्नमुस्मिन्नेव पुरे तस्थौ।

इत्थं श्वश्रूननान्दृविहिता वधूनां बहवो दोषा भवन्तीति त्वदर्थमहं तादृशं भर्तृवेश्म कामये यत्र शठा पतिमाता, याता वा न भवेत्।

एवमसुरराजकन्यासोमप्रभामुखादद्भुतां कथामाकर्ण्य कलिङ्गसेना नितरां पर्यतुष्यत्।

कथावसाने च प्रतीची दिशमभिमुखीभूते भगवति मरीचिमालिनि, समालिङ्गितोत्ककलिङ्गसेना सोमप्रभा, स्वभवनं जगाम।

एवं स्वसद्मप्रस्थितायास्तस्याः स्नेहेन मार्गमवेक्षितुं हर्म्याग्रभागस्थितां कलिङ्गसेनां दैवाद् गगनगतो मदनवेगाख्यो युवा विद्याधराधिपोऽपश्यत्। कामैन्द्रजालिकपिच्छिकारूपायास्तस्या दर्शनमात्रेणैवातिक्षोभं गतोऽसंगतो दासीनामपि तामतिविद्याधरस्त्रियमत्यप्सरसं कामयमानो 'न यदीयं मदीयं कलत्रं स्याद् निष्फलमेव मे जीवनं भवे'दित्याकलयत्। किन्तु कथञ्चित्तत्प्राप्तिसम्भावनायामपि[2] कथमहं विद्याधरः सन्मनुषीसङ्गं कृत्वा विद्याधरवृन्दवृन्दारकमध्ये निवत्स्यामीत्युभयतः चिन्तासूत्रसन्दानितः प्रज्ञप्तिसंज्ञिकां विद्यां दध्यौ। धृताकारया च तयेत्थं निजगदे, 'जगदेकमात्रसौन्दर्यशोभास्तेना कलिङ्गसेनाभिधेयं सुभग, कलिङ्गदत्ततनयाऽनया रूपसम्पत्त्या तद्गृहमवतीर्णा तत्त्वतो न मनुषी प्रत्युत शापच्युताऽप्सराः। विद्ययैवमुक्तो विद्याधराधिपो निजभवनमासाद्यान्यकार्यपराङ्मुखोऽवाङ्मुख इवावाङ्मुखस्तिष्ठन्ननङ्गशरशीर्णोऽचिचिन्तत् 'स्त्रीणां हठोपभोगो हि मृत्युदः शाप इति हठादेतदपहरणं सम्प्रत्यसाम्प्रतिकम्'। अतोऽवाप्तयेऽस्याः प्रसादयामि प्रणतप्रियकरं भगवन्तं हरम्। एतन्निश्चित्यान्येद्युरासाद्यर्षभपर्वतमेकाङ्घ्रिकनिष्ठया भुवं स्पृशन् परित्यक्ताहारस्तपस्यन् प्रणतिपर्यस्तमस्तकः सतीपतिस्तुतिमकरोत्। एवं तत्तीव्रतपश्चर्ययाऽचिरात्सन्तुष्टः शङ्करो दत्तदर्शनस्तमादिदेश—'एषा कलिङ्गसेनाभिधा, भूतलविश्रुतस्वरूपाति

---

१. वणिज्यया अर्जितैः, ( वणिज्याशब्दः स्वभावात् स्त्रीलिङ्ग इति माधवः)

२. ण्यासश्रन्थो युच्।

सम्पदा चास्या न तुल्या काचिदन्या कन्या सदृशो वा भर्त्ता । केवलमेको वत्सराज एनामभिवाञ्छति । किन्तु वासवदत्ताभीत्या सोऽपि स्फुटं स्वकीयामीहां[1] नाभिव्यनक्ति। रूपलुब्धैषाऽपि सोमप्रभामुखात्तमाकर्ण्य स्वयं विवरिषतीति यावदस्या विवाहो न भवेत्तावदन्तरैव धृतवत्सेश्वरस्वरूपस्त्वं गान्धर्वेण विधिना कुलीनां तां निजभार्यां कुर्या इति सुन्दरी सा ते भार्या भवेत् । इत्थं शर्वादिष्टो मदनवेगः चितितलमिलन्मौलिमण्डलः पार्वतीपतिं प्रणिपत्य कालकूटगिरितटावस्थितं स्वभवनं जगाम।

अत्रान्तरे व्योमवाहिना यान्त्रिकयानेन प्रतिप्रभातं तक्षशिलापुरीमायान्त्या, प्रतिसायञ्च तेनैव निजमन्दिरं प्रति निवर्तयन्त्या सोमप्रभया सह क्रीडन्ती कलिङ्गसेनैकदा रहसि स्वसखीमित्थमुवाच—'सखि, मदीयो विवाहः सम्प्राप्तः। तत्सम्बन्धे बहुभिर्नृपतिभिः प्रेषितेषु दूतेषु श्रावस्तीश्वरप्रसेनजिन्नाम्नो भूपतेर्दूतो मम पित्रा सत्कृत इति जानेऽम्बाऽम्बालिकादिकुलोत्पन्नेन प्रसेनजिता सह ममोपयमो भवितेति । श्रुत्वैतद्वृत्तान्ता सोमप्रभा सातिदुःखमुवाच सखि, प्रसेनजिद् मया दृष्टचरो राजातिप्रवयाः पुत्रवाँश्चेति तेन सह चिरण्व्यास्ते संयोगो हिमशुभ्रेण हेमन्तेन पद्मिन्याः संयोग इव भविष्यतीति मे विषादः। हर्षस्तु तदैव मे भवेत् यदा वत्सेश्वरेणोदयनेन सह संयोगस्ते स्यादिति । यतो हि लावण्येन, कुलेन, शौर्येण, विभूत्या चान्यो न कश्चिद् भूपतिस्तत्तुलामारोहतीति । तेन भर्त्रा योजितायामेव त्वयि, विधातुर्लावण्यनिर्माणयत्नसाफल्यम् ।

एवमाकर्णितसोमप्रभावाक्या, वत्सेश्वरोत्का, कलिङ्गसेनाऽभिव्यक्तवत्सेश्वरविषयजिज्ञासा, सोमप्रभयाऽऽमूलं तद्वयोवंशादिकमुक्त्वा प्रत्तवासवदत्तावासवदत्तेयादिपरिचयीकृता सती, सर्वज्ञां सर्वप्रवीणाञ्च तत्कर्मालङ्कर्मीणां सोमप्रभां सवैनयिकं[2] तत्कार्यसाहाय्यमयाचत । सोमप्रभापि च 'दैवायत्तमेतत्कार्यमिति' निगद्य सद्यो वत्सेशसंगमसमुत्कमनसं कलिङ्गसेनां कथञ्चिद् विहाय निज गृहाय निरियाय ।

अथान्येद्युः प्रातरायातां सखीं सोमप्रभां कलिङ्गसेनोवाच 'तातो मदीयो दास्यति मां प्रसेनजिते राज्ञे' इत्यम्बातो मया ज्ञातम्; स च वृद्धस्त्वया दृष्टः। वत्सेशश्च यथाऽतिमानवरूपस्तथा त्वयैव प्रतिपादित इति श्रुतिमार्गेण मदीयहृदय-

१. 'गुरोश्च हल' इत्यप्रत्ययः । २. 'विनयादिभ्यष्ठक्' इति स्वार्थे ठकि, समासः ।

हारकस्य वत्सेशस्य समीपे प्रसेनजित्प्रदर्शनपूर्वकं मां नेतुमचिरस्य प्रयस्व। एवमुक्तवतीं कलिङ्गसेनां सोमप्रभाऽब्रवीत् यत् यदि तत्र गन्तव्यं तदा व्योमगामिना यन्त्रेण वयं तत्र गमिष्यामः किन्तु त्वमादौ सर्वं निजपरिकरं गृहाण यतो हि दृष्टवत्सेशा न त्वमिह पुनराजिगमिषिष्यसि न वा पितरौ, भ्रातरौ च स्मरिष्यसीति। किं बहुना, प्राप्तदयिता त्वं दूरस्थां मामपि विस्मरिष्यसि। तथा च सत्यहमपि तव भर्तृवेश्मनि न समागमिष्यामि। एतच्छ्रुत्वा निजसखीभाविवियोगसन्देहविक्लवा राजकन्याऽश्रूणि विमुञ्चन्ती तामभ्यभाषत सखि, एवञ्चेत्तर्हि वत्सेशं त्वमिहैवानय। त्वया विनाऽहमेकाहमपि स्थातुं न पारयामीति। विदित चरमेवैतत्ते यदनिरुद्धश्चित्रलेखयोषस्समीपं प्रापितः। त्वं तु ततोऽप्यधिकप्रभावाद्य[2] मेऽभिमतेत्यचिरमिहैव वत्सेशमानेतुं शक्नोषीति। एतदाकर्ण्य सोमप्रभाऽब्रवीत्— 'आसीच्चित्रलेखा सुरस्त्रीति सा तं समुत्क्षिप्य तथा कर्त्तुमशकत्। अहं तु न परस्पर्शं करोमीति वत्सेश इहानेतुमशक्यः। अतः पूर्वं त्वां प्रसेनजितं दर्शयित्वा वत्सेश्वरं प्रतिनयामि। एवमुक्त्वा सकोषां, सपरिच्छदां, तां मायाक्लृप्तयन्त्रविमानके समारोह्य तत्पित्रोरविदिता, कृतप्रास्थानिका श्रावस्तीमवाप्य मृगयानिर्गतं जरापाण्डुं[3] प्रसेनजितं दूरतो दर्शयामास। तं तथा जराविष्टमालोक्य समुपजाततद्वरणोपेक्षा सा, 'सखि, मामचिरमितो वत्सेशं प्रति नयेति कलिङ्गसेना सोमप्रभामुवाच। अतस्तेनैव व्योम-वाहिना यन्त्रेण ते कौशाम्बीमवापतुः। तत्रोद्यानगतं सख्युदीरितं वत्सेशं दूरादालोक्य कलिङ्गसेना तत्सङ्गमं विना क्षणमप्यवस्थातुमपारयन्ती 'सखि, अद्यैव मां वत्सराजं सङ्गमयेति सोमप्रभामुवाच। किन्तु-तदानीमुपलक्षितकिञ्चिदशुभनिमित्ता सा दूरं तद्गतागतं प्रतिषिध्य तद्दिनमलक्षितया तया तत्रैवोद्यानेऽतिवाहयितुं प्रातरागत्य च तत्संगमयुक्तिं सङ्घटयितुं प्रतिज्ञाय ततो निजभर्तृगृहमयासीत्। गतायामेव सोमप्रभायां शकुनज्ञया स्वसख्या निषिद्धपूर्वापि तत्रस्था कलिङ्गसेना वत्सेशसङ्गमस्वोत्कटेच्छां[4] प्रकटयन्ती यथातत्त्वं स्वसन्देशं निजमहत्तरमुखेन वत्सेशं प्राहिणोत्। सोऽपि च तत्र गत्वा प्रतीहारमुखेन वत्सेशं व्यजिज्ञपत् यत्तक्षशिलापतेः पुत्री कलिङ्गसेना त्वद्रूपाकृष्टा परित्यक्तबान्धवजना, सपरिजना, गुप्तचारिण्या मयासुरसुतया नलकूबरजायया सोमप्रभाख्यया निजसख्या व्योमगामिना यन्त्रेणेह समानीता। एतद्विज्ञापनार्थमह-

---

१. 'अनद्यतने र्हिलन्यतरस्याम्'। २. 'इदमोऽश् वाथ'। ३. 'षिद्भिदादिभ्योऽङ्', इत्यङि, टाप्। ४. 'इच्छा' इतिनिपातनात्साधु।

मिहायात इति तां त्वं स्वीकुरुष्व। महत्तरादेतत्सर्वमाकर्ण्याभिनन्दिततद्वचनो वत्सेशः प्रहृष्टो हेमवस्त्राद्यैस्तं सत्कृत्यामात्यमुख्यं यौगन्धरायणञ्चाहूय विदिताखिलवृत्तान्तं तं कृत्वा, कर्हि सा शीघ्रातिशीघ्रं परिणेयेति तदभिमतं जिज्ञासितवान्। वत्सेशेनेत्थं जिज्ञासितो मन्त्रिमुख्यः समालोचिततदा[1]त्वायतिहितापेक्षी क्षणमेवमचिन्तयत् यज्जगत्त्रयख्यातरूपां सुरैरपि स्पृह्यमाणां कलिङ्गसेनामवाप्य वत्सेशः सर्व[2]मन्यत्त्यक्ष्यतीति सम्भावितासुवियुक्त्यां वासवदत्तायामवश्यं भाविनि च नरवाहनदत्तीयविनाशे, दुष्करे च तेषां[3] स्नेहवञ्चिते पद्मावतीजीवने, व्यतिकरे चैतस्मिन् सम्भावितविनाशयोरन्योन्यपि[4]त्रोः, श्व[5]शुरयोश्च सर्वस्वनाशः सम्पद्येत। निषिद्धस्य चास्य राज्ञो व्यसनमेतदाधिक्यमाप्नुयादित्यनुप्रवेशस्यास्य संसिद्ध्यै कालमतियापयामि। एतदालोच्य यौगन्धरायणोवत्सेशमुवाच, 'देव, धन्योऽसि, यस्य ते समीपमेवंभूता त्रैलोक्यसुन्दरी स्वयं वरणार्थमागता। किन्तु महाकुलीनेयं कन्येति ज्योतिषि[6]कान् पृष्ट्वा सुलग्ने यथाविध्यस्याः पाणिग्रहणं विधेयम्। अद्य अस्याः स्वरूपानुरूपं वासो देयः।

मन्त्रिमु[7]ख्येनेत्थमुक्तो हृष्टहृदयो राजा तदभिमतमनुमतमनुतेति प्रदत्तदासावासादिका कलिङ्गसेना निजवासाधिवेश्यं प्रविश्य परां मुदमवाप। यौगन्धरायणोऽपि च राजकुलान्निर्गत्याशुभस्य कार्यस्य प्रायः कालहारमेव प्रतिक्रियां मन्वानः सर्वैस्तत्रत्यैर्मौहूर्तिकैः सम्विदं विधाय सुदूरलग्ननिर्देशाय तान् गुप्तं व्याजहार। कलिङ्गसेनासमाचारेण पद्मावतीतरसपत्नीभियाऽतिक्षुभितहृदयया वासवदत्तया चाकारितस्तदावासं गत्वा 'धीरे, मावधीरय धैर्यम्, न मयि प्राणिति सम्भवत्येतत्, इति चिन्तयित्वा खलु'। यथावसरसमीपागतं राजानं त्वमात्मनो मनोविकारं सम्वृत्य सविशेषोपचारैरुपचर। कलिङ्गसेनास्वीकारे चावाप्तपितृसहायस्य राज्यस्यापि वृद्धिं ब्रुवाणा साम्प्रतं तस्याः स्वीकृतिं त्वमनुमन्यस्व। एवं कृते ते विशालहृदयतामालोक्य त्वयि सविशेषप्रवृद्धस्नेहो वत्सेशः स्वयमेव कलिङ्गसेनामुद्वोढुं नोन्मनीभविष्यति। देवी पद्मावती चाप्येवमेव कर्तुं

---

१. तत्कालस्तु तदात्वं स्यात्, आयतिरुत्तरकालः। २. सर्वांश्च सर्वाश्च सर्वाणि च, 'नपुंसकमनपुंसकेनैकवत्'। ३. स च सा च स च ते, तेषाम्। ४. 'पिता मात्रा'। ५. 'श्वशुरः श्वश्र्वा'। ६. 'क्रतूक्थादिसूत्रान्ताट्ठक्'। ७. सुपः सुपा समासः। ८. सुपस्तिङा समासः। ९. 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा'।

त्वया निर्देशनीया। एवं कार्येऽस्मिन् नः कालक्षेपेण युक्त्या सर्वमभीष्टं निष्पद्येत। एवं प्रबोधयन् मन्त्री तदादृतस्तदावासतः सायं निजगृहं जगाम।

एवं पृथक्[1]-पृथक् निजनिजसद्मसु चिन्तासन्तानसन्दानितैस्तैस्तैर्व्यतियापितायां मायात्रियामायां, प्रातरेव समीपमुपगम्य 'कलिङ्गसेनाया देवस्य च विवाहमङ्गलाय कदा शुभावहो लग्नः? किन्नाद्यैव मौहूर्तिकाः समाकार्य पृच्छ्यन्ते'? इति मन्त्रिधूर्तेन यौगन्धरायणेनोक्तो वत्सेशः पुरोवर्तिनं[2] प्रतीहारं तत्कालमेवादिश्य मौहूर्तिकानानाययामास। किन्तु तेन पृष्टा महामन्त्रिपूर्वकृतसम्विदस्ते मौहूर्तिकाः षण्मासानन्तरमनुकूलं लग्नमाहुः। तदाकर्ण्य प्रदर्शितालीककोपो यौगन्धरायणः 'राजन्, अज्ञा इमे; योऽस्मावेषु ज्योतिर्विद्याचुञ्चुः सोऽद्य नागत इति तं पृष्ट्वा यथायोग्यं विधेलिमम्। एवमाकर्णितमन्त्रिवचा वत्सेशो गणकं तं दोलायमानमानसः शीघ्रमाकार्य पृष्टवान्। किन्तु सोऽपि तथैव कृतसम्वित् षण्मासान्ते व्यवस्थितं शुभावहं विवाहलग्नमब्रवीत्। तदाकर्ण्योद्विग्न इव यौगन्धरायणो राजानं तत्कालीनं कर्त्तव्यं पृच्छन्नस्मिन् विषये कलिङ्गसेना प्रष्टव्येति सुलग्नैषिणोक्तेन च तेनाभिहितस्तथाऽस्त्वित्युक्त्वा गणकद्वयेन सह कलिङ्गसेनाऽन्तिकमाससाद। उवाच च तत्र यत्ते विवाहलग्नं निश्चेतुमहमिहायातः अतो निजजन्मर्क्षमाचक्ष्व। तच्छ्रुत्वा तत्परिजनेन तज्जन्मर्क्षमुदितं किन्तु मन्त्रिकृतसम्विदौ गणकौ तत्रापि मासषट्कानन्तरमेव परिणयायाभ्यधाताम् इत्यत्युद्विग्नचेतसि कलिङ्गसेनायाम् तन्महत्तरकोऽब्रवीत् विवाहलग्नानुकूल्यमत्यावश्यकम्। कुलग्ने हि कृत उपयम उपयमं नयति वधूवरयोरन्यतरम् इति शिवततिं मतिं दधानैर्भवद्भिर्भवतिमङ्गलो[3]ऽनुकूल एव लग्नः प्रेक्षणीयो येन दम्पती चिरमजस्रं[4] च ससुखं निवसेताम्। श्रुतैतन्महत्तरवचस्सु, तत्रत्येषु, सर्वेषु साधु साध्विति च ब्रुवाणेषु, आम्, कुलग्ने कृते विवाहे सम्बन्धी कलिङ्गदत्तोऽपि खिद्येत्' इत्युक्तवति च यौगन्धरायणे' 'यथा भवन्तो जानन्ति, यच्च भवतामभिमतम्' इत्युक्त्वा विरतवचनायां कलिङ्गसेनायाम्, तस्यास्तदेव वचनं गृहीत्वाऽऽमन्त्र्य च तां सगणको यौगन्धरायणो राजप्रासादमाससाद। सर्वं च तद्वत्सेशमावेद्य प्रबोध्य च युक्त्या तं निजनिशान्तमायात्। तथा तत्रैकान्ते स्थित्वा स्वाभीष्टसिद्धये सिद्धकालातिपातो मन्त्री

---

१. 'सर्वस्य द्वे', 'नित्यवीप्सयोः'। २. सुबुत्पत्तेः प्राक् सुपो नाम्ना ( प्रातिपदिकेन ) समासः। ३. भवति मङ्गलं यस्मिन् लग्ने इति तिङः सुपा समासः। ४. नमिकम्पीतिसूत्रे निपातनाद्धातुना सुपस्समासः।

कार्यशेषपूर्तये योगेश्वराख्यं निजसुहृदं ब्रह्मराक्षसं सस्मार। स च स्मरणमात्रेणै-वोपस्थितः 'किमर्थं मन्त्रिन् स्मृतोऽहमिति' ब्रुवन् यौगन्धरायणेनामूलं कलिङ्गसेना वृतान्तं स्वाभीष्टञ्चोक्तो भूयोऽवाचि—अस्याः सदृशी नान्या नारीन्द्रपुरेऽपि वर्तते इति सिद्धविद्याधरादयोऽपि प्रच्छन्नरूपेणैनामुशन्ति। अतः केनापि सिद्धेन विद्याधरेण वा, सङ्गं चेत्सा व्रजेत्त्वञ्चावलोकयेस्तदा तद्दोषे त्वद्दृष्टितोऽस्माभिर्विलोक्य-माने तथोक्ते च भूपतौ, ततो विरक्तौ नितरामास्माकं[1]कार्यसिद्धिः संजायेत।

एवं मन्त्रिणादिष्टो ब्रह्मराक्षसः कलिङ्गसेनासदनमासाद्य प्रच्छन्नस्तस्थौ। अत्रान्तर एव तत्सखी मयासुरसुता सोमप्रभा तत्पार्श्वमायाता निजसखीकार्य-विघ्नशङ्किता हारायिताश्रुधारा तस्मिन् ब्रह्मराक्षसे शृण्वतीदमाह—अद्य पूर्वाह्ण एवा-हमिहायाता, त्वदासन्नं छन्नमासन्ना, सर्वं युष्मदालापमाकर्णितवतीत्यव्यपोढानि-मित्तकार्यस्य सर्वदाऽनिष्टकल्पकत्वान्मन्निषिद्धयापि त्वया वत्सेशसमीपमात्मग्र-हाय ह्योऽशुभे निमित्ते दूतं प्रेषयन्त्या त्वया नानुलोममाचरितम्। एवं हि रभ-सात्प्रवर्तमानानां कार्येषूपस्थितमनिमितं सिद्धिविलम्बाद्यनिष्टमुत्पादयतीति प्राज्ञ-वाक्यावमानिनोऽनुशयदावदहनदग्धा मुग्धाः शत्रूपहासास्पदतामायान्ति। तत्प्रा-र्थये सर्वविधातारं विधातारं तवाविघ्न[2]विवाहार्थम्। यतो हि नीतिनिपुणो मन्त्री यौगन्धरायणोऽपि राजव्यसनशङ्की कार्यमेतद्विहन्तुं शक्नोति। यथा कथञ्चिद् विहितेऽपि विवाहे धार्मिकः स मा विघ्नमुत्पादयतु तथापि सपत्न्यस्तु सर्वथैव चिन्त्या भवन्ति। तास्तु मृषैव बहुदोषानानयन्ति। त्वं कन्यासि, देवा अपि त्वामभिलषन्तीति तवायं प्रकर्ष एव कथञ्चित्कार्योन्माथी न भवेत्। त्वं हि पति-मन्दिरे स्थिताऽसीत्यतः परमहं भर्त्रा निवारिता नात्राहमागमिष्यामि। त्वदतिस्ने-हवशात् सुगुप्तमत्रागमनमप्यश्रेयस्करमकिञ्चित्करञ्चेत्यधुनाऽहं निजगृहं गच्छामि।

सोमप्रभा कलिङ्गसेनया सहैवं कृतालापा निजभवनं जगाम। यातायाञ्च तस्यां प्रियसख्यां परित्यक्तनिजदेशबान्धवा विलम्बितवत्सेशपाणिग्रहणमहोत्सवा कलिङ्गसेना, यूथपरिभ्रष्टसारङ्गाङ्गनाभङ्गीमङ्गीकुर्वाणा कथञ्चित्कञ्चित् कालमनैषीत्।

इतो वत्सेशोऽपि तदवाप्त्यौत्सुक्यविमना एकस्मिन् दिने मनो विनोदयितुं त्रिभूमं[3], विलसच्चतुर्दिग्बहुविचित्रावस्तार[4]गवाक्षं[5] वासवदत्तानिवासप्रासादमासा-

---

१. तस्मिन्नणि च युष्माकास्माकौ। २. घञर्थे कविधानम्। ३. 'कृष्णोदक्-पाण्डुसंख्यापूर्वाया भूमेरजिष्यते'। ४. अवेतृस्त्रोर्घञ्', (अवस्तारो जवनिका)। ५. 'अवङ्गोऽदर्शनात्', 'अवङ् स्फोटायनस्य'।

दयत्। तत्र पूर्वत एव सुचतुर[1]रमन्त्रिवरशिक्षिता सा विशेषतस्तदानीं निर्विकारा विविधोपचारैर्निजप्रेमपर्या परिचर्या प्रादर्शयत्। तदा तस्याः हृदयं जिज्ञासुना नृपतिना 'कलिङ्गराजसुता, सुतारनयननिर्जितेन्दीवरा, वरार्थिनी मम, स्वयमिहोपयाता तत्त्वया ज्ञातं न वेत्युक्ता वासवदत्ता 'मया सर्वं ज्ञातम्, हर्षस्यायं महीयसो विषयः। सा ह्यस्माकं गृहमायाता साक्षाल्लक्ष्मीः। एतदुपधिनाऽधिनाथे तत्पितर्यपि त्वद्वशगे निखिलापीयमिला त्वद्वशवर्तिनी भवेत्। अहञ्च त्वद्विभूत्या, त्वत्सुखेनैव च सुखिनीति नाविदितं ते। यस्या मे त्वमीदृशो भर्ता यो नृपान्तरैर्वाञ्छ्यमानाभिरपि राजकन्याभिरभिलष्यते सा कथं न धन्येति शुभकार्येऽहमस्मिन्क्षोवसीयसमीशतः समीहे।

वासवदत्तयेत्थमुक्तो वत्सेशोऽत्यन्तं सन्तुष्टस्तस्यां निशि तदावास एव शयानो निशि मध्येनिद्रं विनिद्रोऽचिन्तयत् यत् कलिङ्गसेनां भाविसपत्नीमेवमनुमन्यमानाऽपीयं महानुभावा या पद्मावतीविवाहेऽपि प्राणान्नाहासीत् कथमेतत्सोढुं शक्नुयात्। मदीयः सुतः, श्वशुर्यः, श्वशुरश्चैतदवलम्बना इति प्राज्यं राज्यं, परिजनो जीवितं चैतत्सर्वमस्यामेव निर्बिभर्ति। अतः कथं मया कलिङ्गसेना परिणेतव्येत्यादिविचारैरेव कृततन्निशान्तनिशान्तस्ततो निर्गतोऽपराह्णे पद्मावत्यावासमासादितवान्। साऽपि च वासवदत्तानिर्देशानुसारं वासवदत्तावदेव तं परिचरन्ती पृष्टा तथैवावददित्यन्येद्युस्तयोः साम्मनस्यं[2] शशंस वत्सेशो यौगन्धरायणम्। स चापि राजानं विचारनिमग्नमीक्षमाणस्तमुवाच—देव नैतावदेव; वर्ततेऽत्र तत्परहसम्[3]। पुरन्ध्रयो हि स्थापयन्ति प्रत्युरसं[4] निजपतीनां कृतेऽनश्लीलं शीलम्, अनाहार्यमौदार्यम्। उपबृंहयन्ति प्रेम, प्रकाशयन्ति च प्रियम्वदताम्, उद्योतयन्त्युदारताम् दर्शयन्त्यादरम्। आविर्भावयन्ति च सर्वभावम्। किन्त्वन्यासक्तेषूपरतेषु वा तेषु, ता एवादैन्यगाम्भीर्य[5]हृदयभावा निजवियोगकरपत्रधाराकर्तनदुस्सह[6]दुःखदून[7]मनसो न शोभनतरमात्मनीनं[8] जीवनमाकलयन्त्य

१. 'अचतुरविचतुरसुचतुर'–इत्यादिना साधु। २. 'समो मतिमनसोः' इति गणसूत्रसहकारेण वर्णदृढादित्वात्ष्यञ्। ३. 'अन्ववतप्ताद्रहसः'। ४. 'प्रतेरुरसः सप्तमीस्थात्'। ५. 'गम्भीराञ्ञ्यः'। ६. 'ईषद्दुःसुषु' इति खल्। ७. स्वादय ओदित इति 'ओदितश्चे'त्यनेन दूङ् धातोः परीभूतस्य क्तस्य नः। ८. 'आत्मन्विश्वजनभोगोत्तरपदात्खः, 'आत्माध्वानौ खे'।

आत्मतनूनामतनूष्मतनूनपातमेव शरणाश्रयणाय श्रेयस्करं, यशस्यं[1] स्वर्ग्यञ्चाव-[2]गच्छन्ति। अतो राजन्, प्रकृष्टस्य प्रेम्णो भङ्गो, विशेषेण मनस्विन्या वासवदत्तायाः, सुदुःसह इति भवता परिणीतायामस्यां कलिङ्गसेनायां निःसंशयं साऽसून् जह्यात्। देवी पद्मावत्यपि तथैव सम्भाव्यते। तयोश्च तथाभूतां गतिं गतयोस्तन्मात्रैकजीवितस्य नरवाहनदत्तस्य को सवेदाश्रय इति जानेऽहमेनामलपस्य कृते बहुहानिं प्रियाकान्तो[3] भवान्न सोढुं शक्नुयात्। देव्योरुक्तिगाम्भीर्यं हि तयोर्जीवितत्यागगाढनिश्चयनिस्पृहहृदयतामभिव्यनक्तीत्येकपद एव सम्भावितस्य सर्वविनाशस्य स्वार्थस्य रक्षा भवादृशैरसदृशैरवश्यं करणीया।

मन्त्रिवरादेवमाकर्ण्य सम्यग्विवेकपदवीमारूढो वत्सेशः कलिङ्गसेना परिणयसञ्जातौदासीन्यो मतिमन्मन्त्रिमुख्यसम्मतिमतिशयेन स्तुवन् 'प्रिये, त्वत्प्रेमैकजीवितोऽहमन्यस्या न नामापि ग्रहीतुमुत्सहे किमुत पाणिग्रहणरूपापथा[4]वलम्बनम्। किन्तु कलिङ्गसेना हठान्मदीयगृहमुपयातेत्युर्वशीवाञ्जसा[5]कृतमात्मस्वीकृतिविनयं प्रत्याचक्षाणाय पुंसानुजायार्जुनाय[6] षण्ढताशापं न मह्यं दद्यादिति चिन्तयता मया तदानीमेव न सहसा[8] निषिद्धा' एवमाश्वासयन् तां रात्रिं तत्रैवानयत्।

अत्रान्तरे कलिङ्गसेनावृत्तान्तज्ञप्त्यै नियुक्तो ब्रह्मराक्षसो योगेश्वरस्तस्यामेव निशि मन्त्रिवरमागत्याभ्यधात्—'कलिङ्गसेनासदने सदा सीदन्नहं बहिरन्तर्वा दिव्यानां मानुषाणां वा नागममपश्यम्। प्रच्छन्नोऽहमद्याकस्मान्नभसि सायममव्यक्तं शब्दं श्रुत्वा विज्ञातुं तमप्रभुर्भवन् कलिङ्गसेनालावण्यलुब्धस्याम्बरे भ्रमतो दिव्यप्रभावस्य कस्यचिदप्येष शब्द इति निश्चित्य तुभ्यमहमिह वक्तुमागाम् यदतः परमहं यथाबुद्धि यथाशक्ति च कलिङ्गसेनागतिं जिज्ञासिष्ये। एतावदुक्त्वा योगेश्वरो ब्रह्मराक्षसो जगाम।

---

१. यशसः निमित्तमित्यर्थः 'गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्', एवम् २. स्वर्गस्य निमित्तं स्वर्ग्यमित्यपि बोध्यम्। ३. कान्ताशब्दस्य प्रियादित्वान्न तस्मिन् प्रियाशब्दस्य पुम्वद्भावः। ४. 'पथो विभाषे'ति वैकल्पिकसमासान्तोऽच्। ५. 'अञ्जस उपसंख्यानम्' (आर्जवेन कृतमित्यर्थः)। ६. 'पुंसानुजो जनुषान्ध इति च'। ७. अयञ्च षण्ढताशापोबृहन्नलारूपेण विराटनगरेऽतिवाहितोऽर्जुनेनेति माहाभारती कथाऽत्रावसेया। ८. 'ओजःसहोऽम्भस्तमसस्तृतीयायाः' इत्यलुक्।

तदनन्तरं मदनवेगाख्यो विद्याधराधिपः पूर्वं कलिङ्गसेनामालोक्य पञ्चशर-शरार्दितस्तदवाप्तये कृततपश्चर्यासिशङ्करवरोऽप्यन्यासक्तामन्यदेशस्थां च ताम-लभमानो रजनीषु दिवि भ्रमन् स्वावासस्योपरि पर्यटन्तं वत्सेशं दृष्ट्वा दृष्ट्वा ताम्यन्तीं स्वहर्म्यगां कलिङ्गसेनामालोक्य तत्र अन्तरं लब्धुमेकस्यां रात्रौ धृतवत्सेशस्वरूपो मन्त्रिणां कालक्षेपमसहमानः स इव द्वारपालाभिवन्दितः कलिङ्गसेनाऽऽवासं प्रविश्य विश्वास्य च तां तेनैव रूपेण गान्धर्वेण विधिना स्वभार्यां चकार। तत्कालञ्च योगादलक्षितः प्रविष्टो योगेश्वरः सर्वमेतदाकलय्यातिपरितुष्टो हृष्टो-यौगन्धरायणमागत्य यथादृष्टं निवेदितवान्। तेनातिप्रीतो यौगन्धरायणः प्रातर्वत्सेशमागत्यानुषङ्गतोऽब्रवीत्—'देव, परमस्वच्छन्दैषा कलिङ्गसेना नार्हति-भवत्पाणिस्पर्शम्। स्वेच्छयैषा प्रसेनजितं द्रष्टुमायाता, जरापराहतलावण्यं तं वीक्ष्य ततो विरक्ता रूपलुब्धेहोपगताऽऽवासे स्वेच्छयाऽन्यपुरुषासङ्गं करोति। एतदाकर्ण्य कुलीनेयं कन्या कथमेवमाचरेत्, मदीयान्तःपुरं प्रवेष्टुं को वा शक्तो[1] भवेदित्थं सन्दिहानो राजा 'अद्यैव देव, त्वया प्रत्यक्षं सर्वं कारयिष्यामि। मानुषाणां न तथागतिर्भवेत् किन्तु तामव्याहतगतयो गन्धर्वादयोऽपि वाञ्छन्तीत्युक्तो मन्त्रिणा, रात्रौ सुप्तेषु सर्वेषु जनेषु कलिङ्गसेनाभवनमगमत्।

तत्रादृष्टप्रवेशो त्रिदशसुन्दरीसौन्दर्यमुद्रया निद्रयाऽप्यतिशय्य शय्यागृहे कृतसम्वेशायास्तस्याः समीपे सुप्तं स्वस्वरूपस्थं साहसिकं मदनवेगं जिघांसति वत्सेशे, प्रबुद्धः स स्राक् खमुदपतत्। कलिङ्गसेनाऽपि च प्रबुद्धा शून्यं शयनमा-लोक्य कथं पूर्वं प्रबुध्य वत्सेशो निद्रितां मामेवं हित्वा[2] जिहीते इत्युक्तवत्या-स्तस्यास्तद्वचनमाकर्ण्य यौगन्धरायणो वत्सेशमाह 'त्वद्रूपधारिणाऽनेन दूषित-चरित्रीकृतेति समुपलब्धयोगबलोऽहं त्वयासाक्षादकारयम्[3]। किन्तु दिव्य-प्रभावोऽयं हन्तुमशक्यः। एवमुक्त्वा वत्सेशेन सह कलिङ्गसेनामागत्य यौगन्ध-रायणेन राजकन्ये, त्वम् वत्सेशरूपधारिणा केनापि मायाविना सम्मोह्य परिणी-ताऽसि नामुना[4] मत्स्वामिनेत्युक्ताऽसि सम्भ्रान्ता बाणविद्धस्वान्ता इव दुरन्तां गतिं वैधीमाकलयमानाऽश्रुपरिप्लुतनेत्रा वत्सेशमुवाच—गान्धर्वेण विधिनाऽत्र त्वया-परिणीताऽहं कथंकारमिह[5] शकुन्तला दुष्यन्तेनेव विस्मये ! हृदिस्पृशं वाचमेता-

---

१. शक्लृधातोरनुकरणेऽनङ् ( प्रकृतिवदनुकरणम् )। २. 'जहातेश्च क्त्वि'। ३. 'हृक्रोरन्यतरस्याम्'। ४. 'अदसोऽसेर्दादु'० 'न मुने' इत्यादि। ५. 'अन्यथैवं कथमित्थमिति' कृञो णमुल्।

माकर्ण्यं तद्दोषोन्मेषणसङ्कुचितहृदयपुण्डरीकः क्षणमवाङ्मुखस्थितो वत्सेशः, सत्यं न त्वं मया परिणीताऽसि, अद्यैव अहमिहायातः' इत्युक्त्वा मन्त्रिणा सह राजमन्दिरमगात्।

एवं कृतकृत्य इव ततो निर्गत्य गते सवत्सेशे यौगन्धरायणे, गजनिपीडिता पद्मिनीव सम्भोगविदलत्पत्रमुखाब्जा परिक्षिप्तकबरीभ्रमरीका कलिङ्गसेना, विनष्टकन्यकाभावा, अभावादन्यस्योपायस्यान्तरिक्षनिक्षिप्तचक्षुः 'वत्सेशरूपिणा येनाहं परिणीता स प्रकाशताम्। स एव हि मे पतिः' इति दिविस्पृशं[1] वाचं व्याजहार। एवमुक्तवत्याञ्च तस्यां दिव्यरूपो हारकेयूरराजितो, विद्याधराधिपो, गगनादवतीर्णः 'को भवानिति तया पृष्टः, अहं तन्वि, मदनवेगाख्यो विद्याधराधिपस्त्वां पुरा पितृगृहस्थामवलोक्य त्वत्प्राप्तये कृततपाः कण्ठेकालाद्वरमवाप्याहार्यधैर्यः त्वां मार्गयमाणो वत्सेश्वरानुरक्तां त्वामिहासाद्यावृत्ततद्विवाहामेव युक्त्या-पर्यणयम्। एवं तद्वाग्लतालतिस्वरपल्लवतल्लजं निजकर्णमारोपयन्ती कलिङ्गसेनो-त्पन्नकतिपयालापप्रीतिः तत्रैव पुनरागमाय प्रतिज्ञाय द्यामुत्पतता मदनवेगेनाश्वा-सिता हृदयेवन्धसद्भर्तृभक्तिः, कलिङ्गसेनाऽऽलानबद्धा स्तम्बेरमेव तस्मिन्नेवावासे वस्तुं स्वान्तं स्थिरीचकार।

एकदा तु कलिङ्गसेनासौन्दर्यस्मृतिसमुद्भूतमन्मथावेगास्वस्थो वत्सेश्वरो निशायामुत्थाय खड्गपाणिर्मन्दिरमस्याः प्राविशत्। अनुनाथितवांश्च तत्र कृता-तिथ्यः तां भार्यार्थम्। किंतु परपत्न्यहमिति तया प्रत्याख्यातो भूयो भणितः 'परकलत्ररतिरपत्रपतामभिव्यनक्ति सद्गोत्रजातानाम्। त्वदर्थमिहायाताऽप्यहं त्वद्रूपधारिणा मदनवेगाख्यविद्याधरेण व्यूढेति स एव मे भर्ता। नाहं वेश्यायाः पुत्री पुंश्चली वेति विषयेऽस्मिन् नाहं मनसाऽऽज्ञायिनी; दृष्टाशकुनया च स्वसख्या निषिद्धाऽप्यहं त्वत्पार्श्वे प्रैष्यप्रेषणरूपमचर्यमचिरमचरमपराधं यत्, तेन मास-न्यथा मा मन्यथाः। बलात्कारेण चाभिकाम्यमानाऽहमिहैवापरिप्लुतचरित्रैवासून् परिहातुमभिकांक्षयेयेत्यपथि मत्प्राणहरणे वा वृथा मतिं मा कृथाः। अपि तु, जनमनुकूलप्रभञ्जन इवानुकूलकूलोपकण्ठं, परिभ्रष्टां नावमिव नयेथाः। इहाश्रि-ताया मे वसनेऽपि ते विप्रतिपत्तिश्चेदहमन्यतो गच्छेयम्। एतदाकर्ण्य धर्मज्ञो

१. 'हृद्युभ्याञ्च'। २. 'हलदन्तात्सप्तम्याः संज्ञायाम्'। ३. 'बन्धे च विभाषा'। ४. 'तत्पुरुषे कृति बहुलम्'। ५. न स्वस्मिन् तिष्ठतीत्यस्वस्थः 'स्थे च भाषायाम्', 'तत्पुरुषे कृति बहुलम्'। ६. 'षष्ठ्या आक्रोशे'। ७. 'आज्ञायिनि च'।

वत्सेशः समुत्पन्नविवेकातिरेको भर्त्रा सह निर्भयं तत्रनिवस्तुं तामनुमत्य स्वप्रासादमाजगाम। तत्सर्वमाकाशेऽलक्षितो मदनवेगः समालक्ष्य परां मुदञ्चासाद्य सद्यस्ततोऽवतीर्णः साधुवादेन स्वप्रियां सत्कृत्य च तस्यां निशायां तत्रैव न्युष्योषसि दिवमुत्पपात।

एवमागच्छता गच्छता च गविष्ठिरेण[1] विद्याधरेण रममाणा कलिंगसेना मर्त्यभावेऽपि दिविजान्[2] भोगान् भुञ्जाना, सुखान्विता, तमावासमध्यवसत्। वत्सराजोऽपि च मुक्तचिन्तो मन्त्रिवचः स्मरन् राज्यं पुत्रं च लब्धं मन्वानो नितरामानन्द।

अथ गच्छत्सु दिवसेष्वापन्नसत्त्वां कलिङ्गसेनामुपेत्यैकदा मदनवेग उवाच कलिङ्गसेने, प्राग्जन्माप्सरास्त्वं स्वाविनयेन शक्रशापतः साम्प्रतं मानुषयोनिमवाप्ता। दिव्यानामस्माकञ्चैष समयो यन्मानुषगर्भजातमिदमपत्यमिहैव त्यक्त्वाविदूरतो याम इत्यपत्यमेतत्त्वमभिरक्षेरहञ्च निजस्थानं गतोऽपि तव स्मरणक्षणे एव सन्निधास्ये, इत्थमश्रुविलोचनां तामाश्वास्यापरिमितं रत्नसञ्चयं च तस्यै दत्त्वा समयाकृष्टो विद्याधराधिपो निजवसतिमुदपतत्। कलिङ्गसेना च वत्सेशभुजच्छायायामवलम्बितपत्याशासूत्राऽमुत्राजस्रसंयोगाय व्रतमिवाचरन्ती तत्रैव दिनानि व्यत्यगमयत्।

अत्रान्तरे साङ्गपत्यवाप्त्यै तपः कृतवतीममर्त्यलोके निजाराधनतो जनिष्यमाणामयोनिजामनङ्गभार्यां रतिमम्बिकापतिर्दग्धपूर्वेण, वत्सराजगृहे कालेजेन[3] तत्पतिना संयोक्तुमादिदेश। अतो दग्धकामोऽपि निजोक्तिं

मदनमञ्चुकोत्पत्तिः पूरयितुकामः सतीवामः एतत्कार्यसिद्धये प्रजापतिमुवाच यत्कलिङ्गसेना दिव्यसम्भवं तनयं सोष्यते तं माययाऽपहृत्य तत्स्थले त्यक्तदिव्यतनुमिमां रतिं मानुषीं कन्यां निर्माय क्षिपेतीश्वराज्ञां शिरसि निधाय निर्गते विधातरि यथासमयं कलिङ्गसेनाप्रसूतं सुतं स्वमाययाऽपहृत्यालक्षितः सन् कन्यारूपिणीं रतिं तत्र न्यधादिति सर्वे एव जना जातामेव जातां तामलक्षन्त। कलिङ्गसेनाऽपि जातां तामसदृशीं सुतामवलोक्य समवाप्तपुत्रजननाधिकसन्तोषा, तोषानुरूपमुत्सवं वितन्वती मदनमञ्चुकेति नाम्ना तामाजुहाव। नृपोऽपि चाथ वत्सेश्वरः सदेवीकः समन्त्रिको जातां तादृशीमनु-

१. गवि वाचि स्थिर इति तथोक्तेन 'गवियुधिभ्यां स्थिरः' २. 'प्रावृट्शरत्कालदिवां जे'। ३. काले जातेन; 'प्रावृट्शरत्कालदिवां जे' इति सप्तम्या अलुक्।

पमां कन्यां समाकर्ण्याकस्माद्विधिप्रेरितो यौगन्धरायणे शृण्वति वासवदत्तामुवाच, 'जाने, कलिङ्गसेनैषा शापवशेन मर्त्यत्वमवाप्ता दिव्या स्त्रीति निजालौकिकरूपेण दर्शकानन्ददायिनी ऐतदायनी[1] अपि काचिद्दिव्यैवेत्यसौ मम तनयस्य नरवाहनदत्तस्य रूपेण तुल्या शीलसौन्दर्यस्नेहसुधाकुल्यो[2] इव कुल्या[3] महादेवीपदार्हा[4]'। एतदाकर्ण्य देवी वासवदत्तोवाच, 'महाराज, कस्मादकस्मादद्य चेतस्यास्पदमकरोदियं भावना भवतः? क्वोभयकुलविशुद्धः सौभागिनेयः[5] एष ते पुत्रः क्वासौ बान्धकिनेयी[6] कालिङ्गसेनेयी[7]?' श्रुत्वैतद्वचनो वत्सेशो विमृशन् वासवदत्तामुवाच नाहमात्मनैतद् ब्रवीमि अपि तु केनापि देवेन हृदिस्थितेन प्रेरितस्य मम मुखादिमा वाचो निःसरन्ति। इयं कन्या नरवाहनदत्तस्य भूतपूर्वभार्या। किञ्च, असावेकपत्नी[8] कलिङ्गसेना कुलीनाऽपि[9] कुलीना, पूर्वकर्मवशान्मानुषीत्वं गतेत्यशरीरिणीं वाचमिवाहं शृणोमि। इत्थमुक्त्वा विरतवचसि भूपतौ, मन्त्री यौगन्धरायणः प्राह, 'देव, श्रूयते निजधवे भवेन भूतिभूयं प्रापिते, रत्या तपश्चर्यया प्रसादितः शर्वो मर्त्यभावमागताया-स्तस्या मर्त्यलोकावतीर्णेन सशरीरेण तद्भर्त्रा सह सङ्गमाय वरमदात्। तव सुतश्च दिव्यया वाचा कामावतार उक्तपूर्वः। हराज्ञया च रत्या मर्त्यभावेऽवतरणीयमेवेति कलिङ्गसेनागर्भग्राहिकाऽद्यागत्य मामेवमभाषत यत्कलिङ्गसेनागर्भशय्यायां योऽर्भको मया दृष्टस्तदन्योऽयं मां प्रतिभातीत्येतदाश्चर्यजनकव्यतिकरेण जाने देवैः स्वमायया कलिङ्गसेनागर्भचौर्येण निर्मितैषाऽयोनिजा रतिरिति कामावतारस्य त्वत्पुत्रस्य दयिता भाविनी भार्या कलिङ्गसेनातनया। मन्त्रिणैवमुक्तो वत्सेशो वासवदत्तया सह तथास्त्विति कृत्वा तद्दिनमनैषीत्।

अथ गच्छत्सु दिनेषु क्रमेण रूपसम्पदा वयसा च वर्धमानां कलिङ्गसेनातनयां मदनमञ्चुकामाकर्ण्यैकदा वासवदत्ता कौतुकादात्मनोऽन्तिकमानाययामासेति निज-

---

१. एतस्या अपत्यमिति विग्रहे 'त्यदादीनां फिञ् वा वाच्यः' अथवा त्यदादीनां वृद्धत्वेन 'उदीचां वृद्धादगोत्रात्' इति फिञि अपत्यप्रत्ययान्तजातिलक्षणो ङीष्। २. लघु सरः। ३. कुले जाता, 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' इति यत्, टाप्। ४. 'अर्हः' इति कर्मण्युपपदेऽचि टाप्। ५. सुभगाया अपत्यम् 'कल्याण्यादीनामिनङ्' इति ढगिनङौ। ६. कल्याण्यादित्वाड्ढगिनङौ ततः ङीप्। ७. 'स्त्रीभ्यो ढक्' ततो ङीप्। ८. एकः पतिर्यस्याः, 'नित्यं सपत्न्यादिषु' इति नकारोऽन्तादेशस्तत्सन्नियोगशिष्टो ङीप् च। ९. भूमाववतीर्णाऽपि।

रूपोपहसितान्यवरयोषितं तामवलोक्य नूनमियं भुवमवतीर्णा रतिरेवेति तद्विषये स्वविचिकित्सामुत्सारितवती तथा जगन्नयनोत्सवं स्वकीयं सुतं तत्रानायितवती इति बालावपि[1] तौ सतीवरवरजवाक्पुपोषयिषयेवान्योन्यावलोकनेन[2] सञ्जातातिहर्षौ दृष्टिपाशैर्बद्धावपि ततः प्रभृति पृथक् स्थातुं न शेकतुः। एतदवबुध्य कलिङ्गसेना सानन्दं नरवाहनदत्ते जामातृ-प्रीतिं बद्ध्वा धृतिमादधौ।

एवमतिक्रामत्सु दिवसेषु वत्सेशो मारमिव निजकुमारं कवचहरं[3] कल्पमालोक्य सम्मन्त्र्य मन्त्रिभिः स्वपुत्रार्थं स्वस्येव पृथक् प्रासादं कारयित्वा[4] श्लाघ्यगुणाग्रहाग्रहिलस्य तस्य यौवराज्याभिषेकोपकरणाहरणाय परिजनान् समान् समाहूय समादिदेश। अभ्यषिचच्च तं यौवराज्ये सम्भृतेषु सर्वसम्भारेषु देवदुन्दुभिनिर्ह्रादानन्दतूर्यनिर्घोषप्रतिशब्दं माङ्गल्यमाल्यदिव्यपुष्पवर्षणपूर्वकम्, अपरिमितमानन्दमभिव्यक्तीकुर्वत्सु च नगरेवासिषु[5], न्ययूयुजच्च तद्बालसखान् स्वमन्त्रिपुत्रानाहूय तत्सचिवत्वे, तथाहि यौगन्धरायणिं मरुभूतिकं मन्त्रित्वे, रौमण्वतम् हरिशिखं सैनापत्ये, वासन्तकिं तपन्तकं क्रीडासखत्वे, ऐत्यकिं गोमुखं प्रतीहारत्वे, पिङ्गलिकासुतौ वैश्वानरशक्तिसोमौ च पौरोहित्ये इत्यादि। एवं भूभृताऽऽज्ञप्तेषु तत्तत्स्थानीयपुत्रसहायकाधिकारिपूद्भूतपुष्पवृष्टिपुरस्सरी दिव्या वाक् 'सत्स्वप्येतेष्वस्य सर्वार्थकार्यसाधकेषु, गोमुखोऽस्यात्मना[6] द्वितीयः शरीराभिन्नो भविष्यतीति'। दिव्यया वाचैवमुक्तोऽतिहृष्टो वत्सेशः सर्वान् वस्त्राभरणैस्सम्मान्यानुजीविभ्यो दारिद्र्यदारि द्रविणं विततार। एवं तौर्यत्रिकादिपूर्वकं विहिताभिषेके नरवाहनदत्ते, 'पूज्यन्तां द्विजन्मानो देवताश्च, विमुच्यन्तां बन्दिनः कारागारेभ्यः, मुच्यन्तां पक्षिणोऽपि पञ्जरेभ्यः,' इत्यादि श्रूयमाणेषु परितः परिजनालापेषु लास्योन्मादिनि, मृदुमङ्गलोद्गारमुखरे संचरितपुरपथेषु पौरनारीजने, स दिवसः सम्प्राप्तस्वर्गसुखस्येवास्वादितामृतरसस्येवानुभूतपरमानन्दस्येव राज्ञोऽतिचक्राम।

नरवाहनदत्तयौवराज्याभिषेकः

---

१. बालश्च बाला चेत्येकशेषः, एवं स च सा च तावित्यत्रापि। २. 'विभाषावर्षक्षरशरवरात्' इति सप्तम्या वैभाषिको लुक्। ३. 'वयसि च' इत्यच्। ४. 'न क्त्वा सेट्'। ५. 'शयवासवासिष्वकालात्' इति सप्तम्या अलुक्। ६. 'पूरण इति वक्तव्यम्' इति सहकारेण 'आत्मनश्च' इति तृतीयाया अलुक्।

प्राप्तायाञ्च निशायां सुतोद्वाहविमर्शिन्या कलिङ्गसेनया स्मृतमात्रैव निजपत्यभ्यनुज्ञाताऽऽयाता सोमप्रभा चिरोत्कण्ठितां सखीं कण्ठेनालिङ्ग्य कुशलमङ्गलप्रश्नपूर्वकं जगाद—'त्वं तावन्महर्द्धिना विद्याधरेण परिणीता। तव सुता च स्मरहरवरानुग्रहादवतीर्णा साक्षाद्रतिः, कामांशावतारस्यौदयनेर्नरवाहनदत्तस्य भूतपूर्वभार्या या चाकल्पं विद्याधराधिराज्यं करिष्यतस्तस्यावरोधेषु मूर्द्धन्या भविष्यति। त्वञ्च शक्रशापच्युताप्सराः सम्पादितावशिष्टकार्याऽधिगतशापमुक्तिरात्मपूर्वगतिं गमिष्यसीतिज्ञानवता मदीयेन भर्त्रा समाख्यातम्। अहञ्चेह त्वत्तनयाकृते त्रैलोक्याद्भुतमुद्यानं निर्मिमे।' एवमभिधाय निजकथनानुकूलं निजमायानिर्मितदिव्याद्भुतोद्याना सोत्कां कलिङ्गसेनामामन्त्र्य निजभवनमगमत्।

सोमप्रभायां जातायामथ प्रभातायाञ्च रजन्यां, विविधोत्फुल्लाप्स्व्य[1]भव्यतरुणतरतरुरामणीयकमन्दीकृतनन्दनवनवैभवमुद्यानमवलोक्य संजातातिविस्मयाल्लोकाद्वत्सेश्वरः समाकर्ण्य सपरिवारः ससचिवश्च तत्राजगाम। पप्रच्छ चातिथ्यव्यग्रां कलिङ्गसेनामुद्यानविषयकं वृत्तम्। येन सा विश्वकर्मावतारमयासुरसुताया निजसख्याः संस्तवं निर्दिश्य तया रात्राविहागत्योद्यानमेतत्कृतमिति ब्रुवाणा विदिताखिलसोमप्रभासंवादं तमकरोत्। तत्सर्वमाकर्ण्यानुभूतातुलमुत्, समुत्सारितसर्वविचिकित्सः, सभार्यापुत्रपरिजनादिर्वत्सेशः, स्वीकृतकलिङ्गसेनादत्तातिथ्यः सायाह्ने[2]काले निजमन्दिरमगच्छत्।

एवं गच्छत्सु दिवसेषु नरवाहनदत्तोऽवाप्ताखिलातोद्यविद्याकलादिर्दिवौकसानपि व्यस्मापयत्। इतो मदनमञ्जुकापि प्रतिकलमविकलेन्दुकलाभिरिवाविकलाभिरुपचितावयवोद्यानवर्तिनि नृत्यसंगीतवेश्मनि परं पारं नृत्यादिकलानामवाप। मध्ये-मध्ये च नरवाहनदत्तः स्वयं तदुद्यानसंगीतवेश्मनि समागत्य नृत्यन्त्याञ्च प्रियायां सर्वातोद्यानि वादयन् दैशान्[3] विविधचारणगन्धर्वान् अन्यविद्याविशारदाँश्च गजाश्वरथशस्त्रास्त्रचित्रपुस्तकादिकोविदान् ह्रेपयन् गायन्त्या नृत्यन्त्या च मदनमञ्जुकयाऽनुरज्यमानः स्वकान्त्या कौशलेन च तामनुरञ्जयन् दिवसाननैषीत्।

एकदा विलम्बकृतोत्कण्ठां प्रियां मदनमञ्जुकामवलोकयितुं गोमुखादिभिः सहोद्यानं गतो नरवाहनदत्तः कलिङ्गसेनयाऽभिहितः, चिरमनागतेऽत्रभवत्यत्यु-

---

१. अप्सु भवः दिगादित्वात् यत्; 'अपोयोनियन्मतुषु' ओर्गुणे वान्तादेशः। २. 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुक्। ३. दिग्भ्य आगतान् 'तत आगतः' इत्यण्।

त्सुका मदनुगता मदनमञ्जुका त्वत्पदवीमवलोकयितुं यावद्धर्म्याग्रमारूढा तावदेवैकः किरीटी, खड्गी, दिव्याकृतिः पुमान् नभसोऽवतीर्य मामब्रवीत्—'अहं मानसवेगाख्यः विद्याधरेश्वरः, त्वञ्च सुरभिदत्ताख्या भुवि शापच्युताऽप्सराः; तवेयं कन्या चापि दिव्येत्येतत्सर्वं मे विदितमिति सुतामेतां मत्सम्बन्धानुरूपां मह्यं देहीति।' एतदाकर्ण्य विहस्याहमेवमब्रवम् यत् सर्वेषां युष्माकं भाविचक्रवर्ती वासवदत्तेयोऽस्या भर्त्ता देवैर्निर्दिष्ट इति दुर्मनाः सोऽन्तरिक्षमुदपतत्। एतन्निशम्य, तत्क्षणं गोमुखोऽवादीत् 'अस्माकं स्वामिनीह जाते राजपुत्रेऽन्तरिक्षोक्त्या विद्याधरपतिमिममवगत्याधराशया विद्याधराः पापमाचरितुमुद्युक्ता अभवन्। किन्त्वयं शाम्भवैर्गणै रक्षित इतीयं नारदोक्तिस्तातेनोक्ता मया श्रुतेति विद्याधराः सम्प्रत्यस्माकं विरोधिनः'। एतदाकर्ण्य कलिङ्गदत्ताऽब्रवीत्—तर्हि मायया मदनमञ्जुकावञ्चनादर्वागेव राजपुत्रेण सह विवाहायोद्योगः किं न क्रियते? तच्छ्रुत्वा गोमुखादयः 'एतदर्थं तर्हि वत्सेशः प्रार्थ्यताम्' इत्युक्तवन्त इत्यन्येद्युः[1] कलिङ्गसेना स्वयं स्वभवनस्थं वत्सेशं गत्वा तार्द्रायनिना[2] नरवाहनदत्तेन सह लोकलोचनलोभनीयायाः स्वसुताया उद्वाहरूपं निजाभीष्टं व्यजिज्ञपत्। स चापि तां विसृज्य सर्वान्निजमन्त्रिणः समाहूय देव्या वासवदत्तायाः समक्षं कलिङ्गसेनाभीष्टमनुषज्य प्रसेनजितं परित्यज्येहागताया मदनवेगेन च व्यूढायास्तस्याः स्वविषयकं बन्धकीतिलोकप्रवादञ्च कथयँस्तदभिमतमनुयुञ्जानोऽपि लोकानुरञ्जनार्थं देवानां[3] प्रियैर्वाचोयुक्त्या[4] प्रसारितेन लोकप्रवादेन जानकीं परित्यक्तारं राममुदाहृतवान्। स्वाभिमतञ्चैवमाविष्कृतवान् यद्गान्धर्वेण विधिनोद्वहतु नरवाहनदत्तश्चेद्रूपवस्वधिकामप्यस्वधिकां कालिङ्गसेनेयीं, कथं तद्भवेदिति। एतदाकर्ण्य यौगन्धरायण उक्तवान् यद् 'देव नैषा साधारणी कन्या अपि तु दिव्यैषे'ति ज्ञानिना ब्रह्मराक्षसेनासँकृन्मेऽभ्यधायि। एवं पारस्परिकालापं कुर्वत्स्वेव तेषु दिवः समुद्भवन्ती माहेश्वरी वाणी 'त्र्यम्बकतृतीयाम्बकदवदग्धपञ्चशरांशावतारनरवाहनदत्तस्य भार्यार्थं मयैव निर्मितैषा रत्यवतारा मदनमञ्जुकेति सर्वान्तःपुरमुख्ययाऽनया युक्तो नरवाहनदत्त आकल्पं विद्याधराधिराज्यं करिष्यती'त्युक्त्वा विरराम।

---

१. 'पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस्'। २. 'त्यदादीनां फिञ् वा वाच्यः' इति अपत्ये फिञ्। तस्यापत्येनेत्यर्थः। ३. 'देवानां प्रिय इति च मूर्खे'। ४. 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु'। ५. 'आग्नीध्रसाधारणादञ्' ततोऽञन्तत्वात् ङीप्'। ६. 'एकस्य सकृच्च' ततो नञ्।

तदाकर्ण्य कर्णयुगलसुधावर्षि सपरिजनो वत्सेशः सुतोद्वाहकृतस्थिरमतिः आकारितावगतचरतत्त्वसचिवमुख्यमौहूर्तिकोऽयमयसमयमुहूर्तं[1] स्थिरीकर्तुं समादिदेश। गणकाश्च शास्त्रदृष्ट्या सर्वमवलोक्याचिरभाविनमेव शुभविवाहलग्नं निर्दिशन्तोऽपि किञ्चित्कालीनभाविभार्यावियोगं तत्पुत्रस्योचुः। ततः प्राप्ते विवाहदिवसे दिव्याङ्गनाविहितदिव्यमङ्गलकौतुकया मदनमञ्जुकया सह निजवैभवोचितपुत्रविवाहविधिं निर्वर्त्य हराज्ञयाऽमन्दानन्दमाविन्दन् वत्सेशः सकलसंसारसुखरसास्वादसुखितस्वान्तः सुचिराकाङ्क्षितजीवलोकसुखमनुभवन्नरवाहनदत्तेन पुत्रेण स्नुषया मदनमञ्जुकया च सह सपरिजनः सुखेन दिवसाननैषीत्। अभ्युदयाकाङ्क्षी युवराजो नरवाहनदत्तोऽपि च पितुरन्तेवासी[2] सुखसुखेन कौशाम्बीमधिवसन् नवविवाहानन्दमन्वभवत्। मदनमञ्जुका चापि मातृनिर्विशेषस्नेहाया वासवदत्तायाः, मातृष्वसृनिर्विशेषपद्मावत्याश्च[3] हस्तच्छायामाश्रित्य विस्मृतनिजमातृस्नेहाऽनेहसं ससुखं निनाय।

मदनमञ्जुकाविवाहः

अथैकदा, निभृतपरिभ्रमणपरिभृतभ्रातचञ्चूमयविपञ्चीसमुदञ्चितपञ्चमाञ्चिते, प्रमदचञ्चलचञ्चरीककुलकञ्चुकिताम्रमञ्जरीकेऽसमशरसमरसमये, समन्त्रिको नरवाहनदत्तो विहर्तुमुद्यानं गतो लोललोचनषट्पदाम्, शोणोष्ठपल्लवाम्[4], पीनस्तनस्तवकशोभिताम्, परागपुञ्जगौराङ्गीम्[5], छायया तापहारिणीम्, मनोहारिणीम्, माधवीलतामिव माधवीम्, आश्रितैकाशोकतरुमूलाम्, अनुकूलाकृतिम्, मनोभवभावसंधुक्षणविचक्षणाम् साक्षादचिलक्ष्यीचकार। तद्रूपापहृतेक्षणेषु, तत्र गत्वोपविष्टेषु सर्वेषु, गोमुखस्तामपृच्छत्—'शुभे, का त्वम्? कतमश्च देशो नीतः शून्यतामिह निजागमनेन? किं निमित्तकश्चाचिरप्रस्फुटितपल्लवतल्लजचरणयुगलायासः? एतदाकर्ण्य प्रणतिपर्यस्तमस्तकन्यस्तपुष्पा सा नरवाहनदत्तवदनेन्दुनिहितेक्षणा क्षणं निःश्वस्य विस्तरेणात्मवृत्तान्तं

नरवाहनदत्तस्यान्यपत्नीप्राप्तिः

---

१. शुभावहो लग्नः ( अयः शुभावहो विधिः ) प्रचुरशुभावहसमय इति भावः। २. 'ऋतो विद्यायोनिसम्बन्धेभ्यः'। ३. 'विभाषा स्वसृपत्योः'। ४. 'ओत्वोष्ठयोः समासे वा' इति पररूपम्। ५. 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्'।

वर्णयितुमभनगेबमारममौनमुद्राम्[1]—'आस्ते त्रैलोक्यविख्यातहिमवन्नगेन्द्रस्य जरामृत्यूभयच्छित्तिसिद्धयोषधिनिधानेष्वन्यतमे बहुयोजनविस्तीर्णे काञ्चनशृङ्गाख्ये सानावुमापतौ दृढभक्तिर्हेमप्रभो नाम विद्याधरेश्वरः। तस्यास्ति बहुपत्नीषु प्रियतमा विद्वत्तमा[2]ऽलंकारप्रभाख्या पत्नी। तया सह प्रातरुत्थाय यथाविधिविहितशिवाशिवसपर्यस्य, मानुषलोकमागत्यानुदिनं दत्तदीनसर्वाङ्गीनरत्नमिश्रस्वर्णलक्षस्य, तदनु राजकृत्यावेक्षणपूर्वकं विहितमुनिवन्नियतव्रताभ्यवहारादिकस्य, तस्यातिक्रान्तेषु कालेषु जात्वपुत्रताहेतूत्पन्नचिन्तातन्तुसन्दानितान्तःकरणेऽनपत्यताविषमविषादवेदनाव्यतिकरश्चेतस्यास्पदमकरोत्। किमनेनानपत्येनाधिपत्येन एवं खिन्नचेतसं राजानमवलोक्य तद्दौर्मनस्यकारणमनुयुक्तवत्यलंकारप्रभेत्थं तेन निगदिता यत् समधिगताखिलविभवस्यापि मदीयं स्वान्तं नितान्तमनपत्यतातापेन तातप्यते। न ज्ञायते समायास्यति न वा कदाचित् श्लाघ्यः स कालः, धन्यः स वासरः, सुलक्षणा सा वेला यदा भवनाङ्गणचङ्क्रमणक्षितितलरेणुरूषितं, कनकमेखलापरिवेष्टितकटितलं, हृद्यं[3] बालमङ्के समारोप्य कृतकृत्यमात्मानं मन्स्ये। एतदाकर्ण्य तत्पत्नी तमेवं सान्त्वयन्त्युवाच—'देव विश्वजनीन[4]विभवा भवानुकम्पया यथाकालं पुण्यात्मभिः सर्वैरवाप्यन्त इति स एव दुग्धकामोऽपि ते पूरितकामः, कपर्दी अपि च तेऽनपत्यतादारिद्र्यमर्दी, भविष्यत्यतो माऽऽनय मनसि निरतिशयमौदासीन्यम्। आधेहि धर्मे धैर्यं च धियमधिकाम्। समाकर्णितदेवीमुखैतदुदारवचा लघूभूतकिञ्चिद्धृच्छोको[5] हेमप्रभस्तद्वचसि श्रद्धाय, सुस्नाय, पुरोधाय च पुरोहितं काञ्चननवकोटीर्विप्रेभ्यो वितीर्य 'देहं वा पातयेयम्, आशुतोषं वाऽऽशु तोषयेयम्, इति कृतनिश्चयः, 'इहासने शुष्यतु मे शरीरं त्वगस्थिमांसं विलयं प्रयातु' एवमहार्यधैर्यो हराग्रे परित्यक्तौपवस्त्रप्राशित्रः[6], पुत्रार्थमुग्रं तपस्तेपे। त्रिरात्रोपोषिताय तस्मै ससोमः, सोमः[7] शर्वाणीजानिः साक्षादावि-

---

१. 'इगन्ताच्च लघुपूर्वात्'। २. अतिशयेन विदुषीति तमपि, 'उगितश्चेति' वैकल्पिकह्रस्वाभावपक्षे 'तसिलादिष्विति पुम्वद्भावः। ३. 'हृदयस्य प्रिय' इति यत् 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदयस्य हृदादेशः। ४. आत्मन् विश्वजन०–इति खः। ५. 'वा शोकष्यञ् रोगेषु'। ६. परित्यक्तम् औपवस्त्रम् उपवासभोज्यद्रव्यम् उपवासे यत्किञ्चित्प्राशित्रम् ग्राह्यं वस्तु वा येनेत्यर्थः, 'उपवस्त्रादिभ्यः उपसंख्यानम्'। ७. उमया सहितः।

भूय भाविनो वंशधरस्य वीरसुतस्य, गौरीप्रसादाद् भाविन्याः सुन्दरसुताया भविष्यन्महामहिमनरवाहनदत्तभाविमहिष्याश्चावाप्तये वरं दत्त्वाऽन्तरधात्। अन्तर्हिते च भगवति भवे, प्रहृष्टो हेमप्रभः प्रभाते प्रबुद्धोऽलंकारप्रभां स्वप्नसूचनेनानन्द्योत्थाय स्नातो समर्चितधूर्जटिर्दत्तदानः सम्पादितसामयिक[1]पारणाविधिरत्युत्सवं चकार।

याते चाबहुतिथे[2] काले, धृतगर्भाऽलंकारप्रभाद्यौरर्कमिवासूत सुतम्। अलञ्चकार च राजा तं नैसर्गिकानुभावभासितं दिव्यवागुपदिष्टेन वज्रप्रभनाम्ना। अथ कतिपयैरेव दिवसैः कलाभिरापूर्यमाणेन्दाविव विवर्द्धमाने वज्रप्रभे पुनः सगर्भा सम्पद्यमानाऽलङ्कारप्रभा यथाकालं गौरीप्रसादादनिर्वचनीयरामणीयकाम् कन्यां प्रासोष्ट। अत्रापि च कन्याप्रसवसमकालमेव हरादेशसम्वादिनी दिवो वाक्— 'यदियं नरवाहदत्तस्य भाविनी भार्ये'ति पुत्रोत्पत्तिनिर्विशेषकृतोत्सवेन राज्ञा कृतरत्नप्रभाभिधेया सा कन्या वलक्षपक्षीयेन्दुप्रभेवानुदिनं पितृसद्मनि वव्रृधे।

हेमप्रभश्चाथ वर्महरं, कृतदारपरिग्रहं, सुतं यौवराज्येऽभिषिच्य तद्विन्यस्तसमस्तराज्यभारो निर्वृत्तोऽपि सुतोद्वाहनितान्तचिन्तातन्तुसन्दानितान्तःकरणो न नक्तंदिवमपि चेतः प्रसादमाससाद। उवाच चैकदाऽन्तिकासीनां प्रदेयां कन्यामवलोक्य निजपत्नीम् 'देवि पश्य कुलालङ्कारभूता तनया विनयादिसम्पन्नाऽपि महतामपि महादुःखावहेतिवरप्राप्त्या विनैषा रत्नप्रभा मामपि दुःखा[3]करोति दिवानिशम्। इत्थं निजदुःखोदन्वन्तं तन्वन्तं निषण्णं विषण्णहृदयं राजानमलङ्कारप्रभाऽब्रवीत् 'देव, अलमन्यदीय[4]चिन्तया, देवैर्नरवाहनदत्तस्यैषा भार्योक्तेतियोग्य[5]तमाय भाविनेऽस्मच्चक्रवर्तिने किमियं न दीयते? एवमुक्तो राजा तामुवाच यद्यपि स कामांशावतारस्तथापि न सोऽद्यावधि दिव्यतामवाप्त इति तस्य विद्याप्तिम् प्रतीक्षमाणेन मया नाद्यावधि तथा कृतम्।

---

१. 'समयस्तदस्य प्राप्तम्'। २. 'बहुगणवतुडति संख्या', 'तस्य पूरणे डट्' ततः 'बहुपूगगणसंघेषु तिथुक्' बहूनां पूरकः बहुतिथः कालः तथा न भवतीति तथोक्ते इत्यर्थः। ३. 'दुःखात्प्रातिलोम्ये' इति डाच्। ४. अन्यस्य इयम् अन्यदीया 'गहादिभ्यश्च' इति छे 'कारके छे च नायं निषेधः' इति सहकारेण 'अषष्ठ्यतृतीया०' इति दुक्। ५. योगाय प्रभवति इति योग्यः 'योगाद्यच्च' ततोऽतिशायने तमप्।

एवमुक्त्वा विरतवचसि राजनि, नरवाहनदत्तविषयकवाक्यैः कर्णप्रविष्टैराकृष्टचित्तेव विष्टरादुत्थाय कथञ्चित्पितरौ प्रणम्य श्रवणपथप्राप्तप्रथमप्रियातिथिसत्कारार्थमिव निजमन्तःपुरं प्रविश्य चिरं संजातजागरा, प्रभातप्रायायां शर्वर्यां कथञ्चिन्निद्रामवाप्य 'पुत्रि, प्रातः शुभे दिने कौशाम्बीं गत्वा स्ववरो वत्सेश्वरात्मजो द्रष्टव्यः। परिज्ञातामुष्यकुलिकश्च[1] ततस्तमिहानीय ते पिता स्वयमेव तेन तव विवाहं विधास्यतीति' गौर्या सानुकम्पयाऽहं निर्दिष्टेति प्रबुद्धा प्रातर्निवेदितनिजस्वप्नया मात्राऽनुज्ञाता निजपुरात्प्रचलिता क्षणेनेहायाता निजवरं द्रष्टुं प्रवृत्ताऽतः परं भवन्तः प्रमाणम्।'

एवं तस्याः सुधानुषिक्तमुग्धमुखवीणाक्वणनकोमलालापमाकर्ण्य नयनानुरञ्जनमञ्जनमिव तद्वपुश्चावलोक्य 'धन्योऽहं सफलजनिरहमद्य धन्यजननिः सञ्जातो यस्त्वेहारत्वयाऽभिसृत' इति। एवमन्योन्यकृतनवसंलापाभ्यां ताभ्यां क्षणमवाप्तावकाशेऽकस्मादाकाशे विद्याधरबलं ददृशे। ततः तातोऽयमागत 'इति द्राग्रत्नप्रभयोदिते सपुत्रो हेमप्रभो व्योम्नोऽवतीर्य स्वागतिकं नरवाहनदत्तमुपागत्य यावदन्योऽन्यरचिताचारास्ते तिष्ठन्ति क्षणं तावत्समन्त्रिको वत्सराजस्तत्रायातः। तदा कृतातिथ्यं तं हेमप्रभो रत्नप्रभोक्तं सर्वमवबोध्य समवाप्तवत्सेशसम्मतिमानौ, वत्सेशानुप्रेषितेन यौगन्धरायणेन सह रत्नप्रभानरवाहनदत्तौ निजविद्याकल्पितविमाने समवरोह्य क्षणेन क्रौशशतिकः[2] स्वं पुरं काञ्चनशृङ्गकं निनाय। तत्र हेमप्रभो निजविभवानुरूपे महारम्भेऽधिहर्रये पद्मामिव रत्नप्रभां ददौ। नरवाहनदत्तोऽपि च निर्व्यूढोद्वाहमङ्गलो रत्नप्रभया सह दिव्यान् भोगान् भुञ्जानः कतिचिदिनानि विद्याधराधिपपुरमध्युष्य यौगन्धरायणानुमत्या स्वपुरीं प्रयातुकामः काम इव रत्या सह पुनस्तदेव विमानमधिरुह्य सहानुगेन, श्वश्रुर्वेण, श्वशुरेण च स्वपुरीमाययौ। वत्सेश्वरोऽपि च सवासवदत्तस्तत्र पदावनतं ससुमङ्गलीकं[3] सुतं समभिनन्द्य निजविभवानुरूपं सतनयं नवसम्बन्धिनं हेमप्रभं सद्चीकरत्। गतेषु च केषुचिद्दिवसेषु वत्सेशमापृच्छ्य स्वपुरमुत्पत्य गतवति हेमप्रभे सर्वथासुखी यन्नरवाहनदत्तो मदनमञ्चुकारत्नप्रभाभ्यां सह दिवसाननैषीत्।

एकदा च स स्वप्रिये शीघ्रमेव प्रत्यागमनाय समाश्वास्य निजजनकेन वत्सेशेन सह हास्तिकाश्व[4][5]परिगणितपदाजि[6]राजिपरिवृतो मृगयार्थं वनं जगाम। तत्र

---

१. 'आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च'। २. 'क्रोशशतयोजनशतयोरुपसङ्ख्यानम्'। ३. 'केवलमामक०' इत्यादिना ङीप्। ४. 'अचित्तहस्तिधेनोष्ठक्'। ५. 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति पाक्षिकोऽण्। ६. पादस्य पदाज्याति गोपहतेषु।

चिरं मृगयां कुर्वाणः श्रान्तः क्षणमेकत्र विश्रम्याश्वमारूढोऽश्वसादिनैकेन गोमुखेन सह यावदपरिचिताचारपद्यकुशकण्टकाकीर्णप्रान्तरं वनान्तरं प्रविशति तावदेव तेनैव पथा समायान्तीं तापसीमेकां ददर्श। सा च सविनयं नमस्कृता नरवाहनदत्तेन तमाशीर्भिरभ्यर्च्यैवं वक्तुमारभत 'वत्स, इतः पारेपयोनिधि पुरमस्ति कर्पूरसम्भवं नाम। तत्रास्ति कर्पूरकनामा राजा। तस्य कर्पूरिका नाम्ना सुन्दरी सुता। सा च पुरुषद्वेषिणी विवाहं नाभिकाङ्क्षति। सा च त्वय्युपेतेऽवश्यं त्वदर्थिनी भविष्यतीति त्वं तत्र गच्छन्नवश्यं सुन्दरीं तामवाप्स्यसि। यद्यपि तत्र गच्छतस्ते मार्गे महान् क्लेशो भविष्यति तथाप्यहार्यधैर्यकार्यं कुर्वतस्ते सर्वं स्वन्तं भावीति न कथमपि विरमेलिमम्। एवमुक्त्वा तिरोहितायां तापस्यां नरवाहनदत्तः कर्पूरसम्भवं पुरं गन्तुमभिलषन्नासन्नवर्तिनं गोमुखं प्रेरयमाणस्तेनोक्तः 'देव, साहसेनालम्, क्वासावश्रुतमानवपच्छन्[1]दोऽध्वा क्व वा सा कन्यकेति तन्नामश्रवणमात्रेण परित्यक्तदिव्याङ्गनाजनस्य ते निरभिप्रायसन्दिग्धमानुषीमभिधावनं सिकताया उदपेषं[2] पेषणमिवानुचितम्। एवं गोमुखेनोक्तो नरवाहनदत्तो 'न सिद्धतापस्यास्तस्या वचनं कथमपि मृषा भवितुं शक्नोती'ति तद्राजकन्यकावाप्तयेऽवश्यं मया तत्र गन्तव्यम्' एवमुक्त्वाऽऽरूढहयो गन्तुमनिच्छतापि गोमुखेनानुगम्यमानस्तत्क्षणमेव तदभिमुखमभिप्रतस्थे।

अत्रान्तर एव कृताखेटो वत्सेशः स्वबलमध्यगस्थं स्वसुतमायान्तं मन्वानो मरुभूत्यादिभिः सह निजपुरीं प्रत्यावर्तत। किन्तु कञ्चित् कालं यावदनागते नरवाहनदत्ते वत्सेशो रत्नप्रभान्तिकमाजगाम। सा चादित एव ध्यातया निजविद्ययाऽऽख्यातज्ञातदयितोदन्तोद्विग्नं स्वश्वशुरं वत्सेशमब्रवीत्–'आर्यपुत्रस्तापसीनिर्दिष्टां कर्पूरिकां राजसुतां प्राप्तुं कर्पूरसम्भवं पुरं गतः शीघ्रं च कृतकार्य इहैष्यतीति चिन्तयाऽलम्—एतदहं स्वविद्यातोऽध्यगच्छम्' एवं वत्सेशं समाश्वास्य रत्नप्रभा नरवाहनदत्तस्य मार्गक्लेशोपशान्तये निजविद्यां प्रायुङ्क्तेति सा गोमुखानुगतं नरवाहनदत्तमटव्यां संगत्य कुमारीरूपेणोवाच 'अहं रत्नप्रभाप्रेरितेहायाता मायावती नाम विद्या मार्गेऽदृश्या त्वां रक्षामीति निश्चिन्तेन त्वया गन्तव्यम्।

एवमुक्त्वा तिरोहितायां हितायां प्रहितायाञ्च रत्नप्रभया विद्यायां तत्प्रभावतः शान्ताशनायोदन्यो धन्योऽहं यस्यैवंभूता रत्नप्रभा प्रिया भार्येति मन्यमान औदयनिः

---

१. 'वा घोषमिश्रशब्देषु' इति पाच्छब्दस्य वैकल्पिकः पदादेशः। २. 'पेषंवासवाहनधिषु च' इत्युदकस्योदादेशः।

सायमेकं दैवकृतोपलम्भमम्भोरुहतटाकं सुधासारपूरितापम्, भूरितापो दूराध्वगमनखेदखिन्नः समवाप्य तत्रस्नातः कृतस्वादुतरारण्यार्तवफलाहारो नक्तं तत्राधः संयतहयो मन्त्रिद्वितीयो वासार्थं महातरुमेकमारुरोह । तत्र निशीथे विशालतरुशाखासन्निविष्टो वित्रस्तहयहेषितमाकर्ण्य प्रबुद्धोऽधस्तादागतं सिंहमपश्यत् । अवलोक्य च तमस्युंद्यतो[1] जिघांसयाऽवतितीर्षुरपि गोमुखेन 'युवराज, अलं नखदंष्ट्रायुधेन तिरश्चा सह युयुत्सया । शरीररक्षार्थमेवावामिह वृक्षमारूढाविस्येवं गोमुखवाग्रुद्धे नरवाहनदत्ते सिंहस्तदश्वमाशु विनाश्य द्वितीयमप्याजघान । एतन्निरीक्ष्यवत्सेश्वरसुतो हयंक्षमभिलक्ष्य वृक्षादेव क्षिप्तेन कौक्षेयकेणाध्यक्षयत्[2]येव गोमुखे तं द्वेधा[3] चकार । अवतीर्य च तत उपात्तखड्गस्तमेव वृक्षमारुह्य क्षपितक्षपः प्रातस्तरां चावतीर्णो गोमुखानुकाशी कर्पूरिकाभिलाषी पत्काषी[4] प्रत्ययासीत् कर्पूरसम्भवम् । तत्र मार्गे राजकुमारीप्राप्त्याशाकशया कश्यमानोऽपि गोमुखोक्तमनोरञ्जककथाभिर्विनोद्यमानोऽविज्ञाताध्वापि मध्येमध्ये समायान्तीर्विकटा अटवीः, त्वरितधाराधुनीः, शतशः शैलश्रेणीश्च पारयमाणः, कृच्छ्रादादिवसं यौजनिकः[5] सायमतिसरसरसालादिनानानोकहनिवहप्रतिबिम्बरम्यरोधः सान्द्रसरससरोजराजिराजितसरः, एकमासाद्य तत्र विहितस्नानादिक्रियः, सुरभिमधुरास्वाद्यहृद्यवन्यफलनिर्वर्तिताहारविधिः, सविधि सख्या सार्द्धं मृदुकिसलयास्तीर्णशयो रजनीं निनीषुरशेत ।

प्रभातायाञ्च शर्वर्यामुत्थाय सम्पादिताह्निककृत्यः, सगोमुखः प्रस्थितो मार्गे मन्त्रिणमेवमभाषत 'वयस्य, स्वप्ने काचिद् धवलाम्बरा दिव्यरूपा कुमारी मामेत्यैवमभ्यधात् 'वत्स' मा कृथा वृथा चिन्ताम् । इतः परं त्वमाशु समवाप्स्यसि पयोनिधितीरे वनान्तरस्थमाश्चर्यपूर्णं पुरम् । तत्र विश्रान्तोऽक्लेशेनैव कर्पूरसम्भवं पुरं प्राप्य कर्पूरिकां राजकन्यकामवाप्स्यसीति । एवमभिधाय सद्यस्[6]तिरोभूतायां तस्यामहं प्रबुद्धः ।

एवमुक्तवन्तं गोमुख उवाच—देव! न किञ्चित्ते वर्तते दुष्करम् । अचिरेणैव त्वं भविष्यसि सिद्धाभीप्सितः । इत्येवमाद्युक्तो गोमुखेन गच्छन् क्रमाजलधेरुपकण्ठ-

१. 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति निष्ठायाः परनिपातः । २. अक्षिण इत्यध्यक्षम्, अध्यक्षं करोति अध्यक्षयति ततः शत्रन्तात्सप्तमी । ३. 'संख्याया विधार्थे धा', 'एधाच्च', ततः 'तसिलादयः प्राक्पाशपः' इत्यव्ययत्वेन 'अव्ययस्य च्वावीत्वं नेति वाच्यम्' । ४. 'हिमकाषिहतिषु च' । ५. 'योजनं गच्छति' इति ठञ् । ६. 'सद्यःपरुदि'ति सूत्रे, समानेऽहनीति विग्रहे, 'समानस्य सभावो यश्चाहनि' ।

गतमद्रिकूटनिभाट्टालिकम्, मेर्वाभसर्वसौवर्णराजमन्दिरविराजितम्, विपुलाभोगम्, अपरमिवाखण्डलभूमण्डलम्, नगरं नगरजितप्राकारमेकमद्राक्षीत्। विपणीमार्गेण च तत्र प्रविश्य विविधकाष्ठयन्त्रमयम्, सर्वं सजीववद्विचेष्टमानमपि वाग्विरहादेव निर्जीव इति विज्ञायमानमाश्चर्यमयं वणिग्विलासिनीपौरजनं सर्वमवलोकमानो गोमुखद्वितीयो राजसद्मनोऽन्तिकमासाद्य तत्रापि तादृशमेव हस्त्यश्वादि विलोकयन् ससचिवः साश्चर्यो राजभवनाभ्यन्तरमाविवेश ददर्श च तत्र यन्त्रप्रतीहारवारनारीपरिव्याप्तं सर्वजडयन्त्रस्पन्दनहेतुमिन्द्रियाद्यधिष्ठातारमात्मानमिव रत्नसिंहासनासीनमुत्पलमालभारिणमेकं[1] चेतनपुरुषम्। स चापि पुरुषोऽवलोकितोत्तमाकृतिर्निजासनादुत्थायातिथ्येन समाराध्य सान्निध्येऽध्युपावेश्यापृच्छत्, 'लोकस्पृणाकृते, को भवान्, किमर्थञ्चामानुषीं भूमिमिमामात्मना द्वितीयोऽवाप्तवान्'। एतदाकर्ण्य विनिवेदिताशेषात्मवृत्तान्तो नरवाहनदत्तोऽपि चातिप्रह्वजिह्मसुपह्वरेऽतिगह्वरमुद्रं तं, तदीयं तत्पौरञ्च परिचयमनुयुञ्जान एवमुक्तः—'अस्ति वसुधावध्वाः सदलङ्कृतिभूता काञ्चीव काञ्चीति नाम्नी नगरी, गरीयोगुणगणगुम्फिता। तस्यां बाहुबलाख्यो महीपतिः। तस्य राष्ट्रियावावां[2] सोदर्यौ[3] भ्रातरौ मयप्रणीतदार्वादिविलक्षणमायायन्त्रतक्षणविचक्षणतक्षाणौ। ज्येष्ठः प्राणधराभिधेयो वेश्याव्यसनविप्लुतोऽहञ्च कनिष्ठो राज्यधराभिधेयो राजभक्तः। स्नेहेन निवसतोरावयोरग्रजः पित्र्यं[4] धनं भुक्त्वा मत्सञ्चितेनापि भ्रातृवात्सल्यसौहार्देन[5] तस्मै समर्पितेन स्वल्पस्वापतेयसमिद्धाशिना कञ्चित्कालं वेश्यासमागमव्यसनाग्निमिन्धोऽ[6]नालोचितात्मभद्रङ्करण उत्तरोत्तरमतिव्यसन्यन्यतो वेश्यार्थमर्थमपजिहीर्षू रज्जुयन्त्रवहं दारुमयं हंसगोयुगं[7] व्यधत्त। रज्जुघट्टनप्रेरितञ्च तद्धंसयुगलं निशि यन्त्रप्रयोगतो गवाक्षेण राज्ञो बाहुबलस्य कोशं प्रविश्य चञ्चूपात्तपटलकस्थिताभरणं मद्भ्रातृगृहमागमत्। तच्च विक्रीय मज्ज्येष्ठो विलासार्थं वेश्यया[8] संयच्छमानोऽहर्निशं राजकोषं मुष्णानो वार्यमाणोऽपि मया, न तस्मादनार्यकार्याद् व्यरमद् व्यसनान्धः। एवमचलितार्गले, निर्मूषिकेऽपि मूष्यमाणे शेवधौ,

---

१. 'इष्टकेषीकामालानां चिततूलभारिषु'। २. 'राष्ट्रावारपाराद् घखौ'। ३. 'विभाषोदरे' इति समानस्य सः, 'सोदराद्यः'। ४. 'पितुर्यच्च'। ५. ब्राह्मणादित्वात् ष्यञि, 'वाशोकष्यञ् रोगेषु', 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य चे'त्युभयपदवृद्धिः। ६. कर्मण्यणि उपपदसमासे, 'भ्राष्ट्राग्न्योरिन्धे' इति मुम्। ७. 'द्वित्वे गोयुगच्'। ८. 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया'।

कतिचिद्दिनानि भयात्तूष्णीमन्विष्यन्नप्यनुपलब्धचौरोऽधिकाधिकप्रवृद्धक्षुब्धिभाण्डागारिकौ[1], गत्वा नत्वा राजानं, स्फुटं सर्वं न्यवेदयत् इति सोऽन्याञ् जाग्रतः प्राहरिकान्[2] अधिकोषं तत्तत्त्वमवेक्षितुं नियोजयामास। ते च निशीथे गवाक्षेण प्रविष्टौ रज्जुघट्टितौ मद्भ्रातृयन्त्रहंसौ विलोक्य, यन्त्रयुक्तिपरिश्रान्तौ, चञ्चूपात्ताभरणौ, छिन्नरज्जू राजानं प्रातःकाले दर्शयितुं गृहीतवन्तः। तत्कालमेव मदीयो भ्राता ससम्भ्रमं मामवादीत्—'भ्रातः, शिथिलीभूतया रज्ज्वा, यन्त्रे स्रस्तया कीलिकया च, निश्चिन्वेऽन्वेषिभिः कोषरक्षिभिर्मदीयौ हंसौ गृहीतौ। मायायन्त्रविशारदौ चावामेवोभौ विख्याताविति नृपश्चौराविमाविति बुद्ध्या निश्चयेनावां निगृह्णीयात्। अनुशये, यत्त्वया वार्यमाणोऽपि दुर्बुद्धिरहमपराधमिमचरमचरमचरमित्यनपराधिन्यपि त्वयि, मत्कृतैतत्प्रथमापराधपरिपाकः प्रसृतः। तस्मादस्मान्मदीयेन सकृत्प्रहतकीलिकेन, योजनाष्टशतीमुत्पतितुं समर्थेन, वायुयन्त्रविमानेन सुदूरं दुःखदमपि विदेशं शीघ्रं सर्पावः एवं चेक्रीयमाणानुशयसन्तप्तोऽत्र सनाभीः[3] सनाभीनस्मान्[4] विहाय समारूढव्योमगामिविमानोऽपमानोपरूढचिन्तासूत्रसन्दानितः, इतः क्वापि दूरतः, प्राणधरो मदीयो भ्राता यातः। अहं तु तेनोक्तोऽपि बहुभिर्वृतं तदीयं यानं नारोहमपि तु प्रभाते भूते भूपभयं भावि सम्भाव्य, निजनिर्मितमन्यत्पवनजवनयानमारुह्य द्रुतमपनगरं[5] योजनशतं क्रान्त्वा, क्षणं विश्रम्य, ततोऽपि प्रेरितेन तेनैव खगामिनाऽन्यदपि योजनशतद्वयमागाम्। ततः पयोनिधिसान्निध्यनिध्यातसंदिग्धध्वनिस्त्यक्तयानको, गृहीतपद्धतिरनुद्धतिः[6], क्रमान्नवं पुरमेतदवाप्नवम् इति कौतुकाद्राजोपभोगार्हवस्त्राभरणशय्यादिसमन्वितराजमन्दिरं प्रविष्टः सायमुद्यानवाप्यामम्भसाकृतस्नानो[7], भुक्तफलो, रात्रौ च शिरीषसुमनःसंस्तरमतिशय्य राजशय्यामधिशयानोऽपास्तसमस्तवाहुबलभूपभूतभीतिसम्भूतिः निशान्तेऽस्मात्कुत्रचिद्व्रजिष्यामीति निशान्तेऽस्मिन्नेव वस्तुं सञ्चिन्तयन्निशान्ते स्वप्ने बर्हिसमारूढेन दिव्यरूपधारिणा मदीयसब्रह्मचारि-[8]

---

१. 'अगारान्ताट्ठन्'। २. 'तत्र नियुक्तः'। ३. सदा भयभीतः। ४. समाना नाभिर्येषाम् 'ज्योतिर्जनपदे'ति समानस्य सः। ५. 'अपपरीवर्जने' 'पञ्चम्यपाङ्परिभिः', 'अपपरिबहिरञ्चवः पञ्चम्या'। ६. पादाभ्यां हन्यते इति कर्मणि क्तिनि 'हिमकाषहतिषु चेति' पद्भावः। ७. 'ओजःसहोऽम्भस्तमसस्तृतीयायाः' ८. 'चरणे ब्रह्मचारिणि'।

स[1]तीर्थ्यसमानोद[2]र्यान्यतमसदृक्षे[3]ण केनचित्पुरुषेण, मद्धितैकपरेणाहमभिहितः, 'भद्र, न गन्तव्यमितस्त्वयेहैव वस्तव्यम्, आहारकाले च मध्यमपुरे समारुह्य स्थातव्यम्। एवमुक्त्वाऽन्तर्हिते तस्मिन् प्रबुद्धोऽहं निरचिनवं यत्कुमारनिर्मितमेतद्दिव्यस्थानमितीह[4] निवसन्नहं नूनं पदात्पदं श्रेयः समुपेष्यामीति बद्धास्थोत्थितो निर्वर्तिताह्निककृत्यो यावदाहारकाले मध्यमपुरमारुह्य स्थितः तावदुपनतेषु हिरण्मये[5]-पात्रेषु स्वादिष्ठसर्पिःशालिभिस्सा–श्राणा–शष्कुली–संयाव–शुक्तशाकादिभोजनं यथाचिन्तितमन्यच्चोपनतं सद्य एव मत्पुर[6]ः स्थापितमभूत्। यच्चाभ्यवहृत्यापहृतक्षुत्तृष्णोऽहमवाप्तातीवनिर्वृतिः संवृत्तः। तत[7]ः प्रभृति प्रतिवासरमवाप्तयथाचिन्तितराजभोगोऽहमिहैव वसतिमकरवम्। इह हि मच्चिन्तितः परिच्छदो भार्या वा नास्तीति सर्व एव जनो मया दारुम[8]यो विहितः। इत्थं[9] ग्राम[10]तक्षोऽप्यहं राज्यधराभिधो विधेर्वशाद्रा[11]जायमाणो देवनिर्मितेऽस्मिन् पुरे एक[12]कोऽत्र निवसामीति सौम्य, यथाशक्त्यातिथ्यपरिचर्यापरस्य मम सत्कृतिस्वीकृतिपूर्वकं क्षणं विश्रम्य गम्यताम्।

एवमुक्त्वा राज्यधरेण तत्पुरोद्यानवापीं नीतः सगोमुखो नरवाहनदत्तस्तत्र स्नातो, विकचवारिजाञ्चितपञ्चमुखो, मध्यमपुराहारभूमिं प्रापितो ध्यातोपस्थापितान् सुस्वादुविविधाहारान् जग्ध्वा, दुग्धादिमधुमधुरपेयानि च पीत्वा, नितरां सन्तुष्टिमवाप। ततस्तत्र भोजनभाजनमार्जनकरादीनामभावेऽप्यदृष्टेन प्रमृष्टाहारभूमिको भुक्तताम्बूलैलालवङ्गो नक्तं शयनोत्तमं भेजे। तत्र च चिन्तामणिनिभतत्पुरमाहात्म्यविस्मयस्तिमिततारको वत्सेशसूनुः, कर्पूरिकाऽनवाप्तिनवौत्सुक्येन भाविसपत्नीर्ष्यया इव निद्रयाऽऽनालिङ्गितो, विनिद्रान्, पार्श्वतीयेन शयनमध्यमध्यासीनेन राज्यधरेण, कल्या[13]णिन्, चिन्तयाऽलम्, उदारसत्त्वं श्रीरिवाङ्गना भजते इति त्वमपीप्सितां प्रियामवश्यं प्राप्स्यसी'त्युक्तोऽवाप्तधैर्यो गोमुखेन सह

---

१. 'समानतीर्थेवासी,' तीर्थे ये'। २. 'समानोदरे शयितः०' 'विभाषोदरे'। ३. 'दृक्षे चेति वक्तव्यम्'। ४. 'इदमो हः' 'इदम इश्'। ५. 'दाण्डिनायनहास्तिनायनेति' साधु। ६. 'पूर्वाधरावराणाम् असिपुरधवश्चैषाम्'। ७. 'पञ्चम्यास्तसिल्,' 'त्यदादीनामः'। ८. 'मयड्वैतयोर्भाषायाम्०'। ९. 'इदमस्थमुः'। 'एतेतौ रथोः,' १०. 'ग्रामकौटाभ्याञ्च तक्ष्णः' ११. राजेवाचरतीति 'कर्तुः क्यङ् सलोपश्च' 'अकृत्सार्वधातुकयोर्दीर्घः' ततः शानच्। १२. 'एकादाकिनिच्चासहाये' इति पाक्षिकः कन्। १३. 'अत इनि ठनौ'।

सुखं निदद्रौ। प्रातश्च कृताहारः क्षणं यावत्तिष्ठति तावद् गोमुखो राज्यधरमुवाच, 'सखे, मत्प्रभोः कृते यन्त्रविमानमेकं कुरु येन तदारुह्य कर्पूरसम्भवपुरमवाप्य समवाप्यतां निजप्रियाऽनेनेति। तच्चाकर्ण्य तज्ज्ञासावुपानीय रचितचरमर्पयति स्मैकं वातयन्त्रविमानकम्। मनोवेगगामि-खगामि च यदारुह्य सगोमुखो नरवाहनदत्तो मङ्क्षूल्लंघितकल्लोलिनीवल्लभस्तदपरतीरवर्तिकर्पूरसम्भवं पुरमवाप्य नभसोऽवतीर्य विमानादवरुह्य सकौतुकं पुरान्तः परिभ्रमँस्तदैवाभीप्सितं कर्पूरसम्भवं पुरमिति लोकतो ज्ञात्वाऽतिहृष्टो वर्षीयस्या स्त्रियैकयाऽधिष्ठितं रुचिरं वेश्मैकं तदनुमतो निवासाय विवेश। तत्रानुषङ्गिकगत्या जिज्ञासमानः, 'आर्ये किमभिधानोऽत्र राजा, किञ्च तदपत्यम्, कथञ्चतद्रूपमिति' वैदेशिकाभ्यामावाभ्यां शंसेत्येवमनुबद्धा वृद्धाऽद्धाऽरब्धवती तमेवमुत्तरीतुम्—

महाभाग, निखिलदिव्यवैभवसम्भवे, कर्पूरसम्भवेऽस्मिन् कर्पूरको नाम राजा। स चानपत्यताधिपीडितः सदारः सदारचितशङ्करार्चननमस्योऽप्यधिकतपस्याभिकाङ्क्षयाऽनन्यदाशोऽनन्यदास्थितो वरदस्य, वलीवर्दवाहनस्य, सन्तोषाय निराहारस्तपस्तप्तुमारभत। पञ्चरात्रोपोषिताय च तस्मै स्वप्ने भगवान् भूतभावनः समादिदेश, 'पुत्र समुत्तिष्ठ, समवाप्स्यसि त्वं पुत्राभ्यधिकां कन्याम्। अवाप्स्यति च यस्याः पतिर्विद्याधराधिपत्यम्'। एवमादिष्टः प्रबुद्धो भूपतिः प्रातः सर्वं तन्निजपत्न्यै निगद्य प्रहृष्टः सपत्नीको व्रतपारणामकरोत्। अचिराच्चापन्नसत्त्वा सम्राज्ञी यथासमयमसूत सुषं[1]न्धिबन्धसङ्घटितकोमलमांसलशरीराम्, सुताम्, इति सुतनिर्विशेषसम्पादितमहोत्सवः कर्पूरकः कर्पूरिकेति तस्या नाम चक्रे। लोकलोचनचन्द्रिका सा राजसुता सुताधिकस्नेहलालिता लताभिनवेव लावण्याधिक्यमादधती दधती चापि पदमभिनवयौवने तद्विवाहमभिकाङ्क्षत्यपि भूपतौ, पुरुषद्वेषिणी, मनस्विनी, न पुरुषाङ्[2]गुलिषङ्गमपीच्छति। किं कन्याजन्मफलम्? कुतस्त्वं न विवाहमिच्छसीति तत्सख्या मत्सुतयाऽनुयुक्तोक्तवती, 'सखि, मम विवाहानिच्छायां प्राग्जन्मजातिस्मरो मूलम्। तच्चाभिन्नहृदयायै तुभ्यमभिदधती मामवधारय-'महाम्भोधेस्तीरेऽस्त्येको महान् चन्दनवृक्षः। निकषा च तं, वर्तमाने विनिद्रसान्द्रसरससरोजराजितसरसि, प्राग्जन्मनि अहमभवं हंसी। साऽहमब्धितटस्थचन्दनपादपे स्वेन भर्त्रा हंसेन सह निर्मितनीडा, क्रीडानुरक्ता शावकानसविषि।

१. 'सुषामादिषु च'। २. 'समासेऽङ्गुलेः संगः'।

किन्तु बलवदूर्मिरूर्मिमाली, स्वालीकाहंकारहुङ्कारेणावां तर्जयन्निवाकस्मात्तस्मादस्मत्सुतानपाहरदित्यपत्यस्नेहसुलभवैधुर्या धुर्यागत्याधितटस्थशिवलिङ्गस्य निपतन्ती, विलपन्ती, च 'निरपराधोपपीडक, दण्डधारिन्, त्रिशूलिन्,' इत्याद्यनेकोपयुक्तनामोच्चारम्, अपरिमेयविषादा निषादाहतपोतकसंजातशोकसन्तापविधुरीकृतकुररीवामन्दं क्रन्दन्ती, विक्षतपक्षतिरिव क्षितौ विलुठन्ती, शुचा दिवसम्हमासमनशनेति[1] राजहंसेन मदीयेन पत्योपेत्याहमुक्ता—'प्रिये, समुत्तिष्ठ, व्यतीतापत्यानुशोकेन अलम्। जीवद्भिः सर्वमवाप्यत इति भविष्यन्ति नावन्यान्यपत्यानीति'। एवं कद्वदस्य[2] तस्य हृदयतोदकारिणीं वाणीमाकर्ण्य तन्निःस्नेहनिष्कृपतोत्पन्नविस्मयविस्मृतविवेका धिगहो पुरुषान्, कापुरुषान्[3], पापान्, ये भक्तिमतीष्वपि पत्नीषु कामवासनाशमनमात्रैकोद्देश्या वेश्याभिगमनमिवाभिगमनमाकलयन्तो बालापत्येषु चैवं निष्करुणीभवन्ति। तत् किममुना मदीयपतिना दुःखिना वा देहेन गेहेन वाऽपत्यशून्येने'त्यालोच्य हृदि कृत्वा भक्त्या भवं पुरतः पत्युस्तस्य पश्यत एव जननान्तरे जातिस्मरा राजपुत्री भूयासमिति सङ्कल्प्य पयोनिधौ तच्छरीरं क्षिप्रं क्षिप्तवतीति पूर्वजातौ भर्तुस्तस्य नृशंसतां स्मरन्त्या हृदि विषविषमविषयवैरस्यव्रतव्रततिमावर्द्धयन्त्या मे नान्यदर्थे कस्मिँश्चिदपि वरे मनोऽनुरक्तमिति विवाहमधुना नेच्छाम्यतः परं सर्वं दैवायत्तम्। एवं राजसुतोद्घाटिताखिलरहस्या साऽऽगत्य मामुपवर्णितवती। अतः पृच्छते ते सर्वं मयाभिहितम्।

सा चैषा नृपात्मजा विद्याधराणां भविष्यच्चक्रवर्तिनस्ते भार्या भाविनी। पूर्वं देवेन शम्भुनाऽप्येतदादिष्टमिति तल्लक्षणोपेतं त्वामिह लोकेऽहमालोके। एवमुक्तो वृद्धोपहृताहारो नरवाहनदत्तो गोमुखान्वितो निशां तां तत्र नीत्वा, प्रातः सम्मन्त्र्य समं मंत्रिणा गोमुखेन कृतमहाव्रतिकवेशो गोमुखसहायः, 'हा हंसि! हा हंसि!! इति वावद्यमानो राजकीयद्वारमासाद्य[4] जनतेक्षितो बभ्राम। समालोकितेदमीयैतद्व्रतयश्चेटिकाः[5] सविस्मया राजसुतां कर्पूरिकामूचुः—'देवि, सिंहद्वारेऽस्माभिरेको महाव्रती दृष्टः। सद्वितीयोऽपि यः सौन्दर्येणाद्वितीयः, 'हा हंसि! हा हंसि!!' इति दिवानिशमुच्चारयति। पूर्वं हंसी सा, चेटीमुखादेवम-

---

१. निराहारा दिवसमतिष्ठम्। २. 'रथवदयोश्च' इति कोः कदादेशः। ३. 'विभाषा पुरुषे'। ४. 'राज्ञः क च'। ५. 'त्यदादीनि चे'ति इदं शब्दस्य वृद्धसंज्ञायाम् 'वृद्धाच्छः'।

वधार्य धार्यमाणसकौतुकहृदयातङ्का, तं, काल एव तस्मिन्निजान्तिकमानाय्य, शङ्कराराधनोपात्तव्रतं, सतनुमिवातनुम्, विस्मयोत्फुल्लया दृशा पश्यन्ती किमेतदिति त्वया हा ! हंसि ! हा ! हंसि !! इत्युच्चार्यत इति तमनुयुयुजे। किन्त्वेवमनुयुञ्जानामपि तां हा ! हंसि ! इत्येवमुत्तरयति तस्मिन् गोमुखस्तामुवाच, 'देवि, विषयेऽस्मिन् संक्षिप्त्या वदन्तं मामवधेहि—'कर्मयोगतोऽयं पूर्वजन्मनि हंस आसीत्। जलनिधिसमीपे महतः सरसस्तटे वरटया सह चन्दनपादपे निवसतोऽस्यापत्येषु जलनिधिनाऽपनीतेषु, योषिदस्य क्षिप्त्वाऽपत्यशोकदहनदह्यमानमात्मानमब्धौ, लब्धौपयिकशान्तिरभवदिति तद्वियोगार्तः पक्षिजातौ विरक्तस्त्यक्तुकामस्तनुमन्यजन्मनि जातिस्मरोऽहं राजपुत्रो भूयासमेषा च मे जातिस्मरा भार्या भूयादिति संकल्पयन् विरहवह्निविधुरः शंकरं संस्मृत्य निपत्य पत्यौ सरितामम्भस्याश्ववसितासुरभवत्[1]। अधुना चायं शुभे, कौशाम्ब्यां वत्सराजस्य जातिस्मरो नरवाहनदत्तस्तनयः सञ्जातः। जातश्चायमुद्भूतया दिव्यया वाचा विद्याधरेन्द्राणां चक्रवर्ती भवितुं समादिष्टः। क्रमेण च यौवराज्येऽभिषिक्तः पित्रा, दिव्यया मदनमञ्चुकया च परिणायितो, विद्याधरपतेर्हेमप्रभाख्यस्य सुतया रत्नप्रभया स्वयमागत्य वृतोऽपि निर्वृतिं नाप्नोति तां नक्तंदिवं स्मरन् हंसीमिति बालभृत्योऽहमेतेन निगदितः। मृगयार्थमायातोऽयं मद्द्वितीयो दैवात् कयाचित्तापस्याऽवलोकितः कथाप्रसंगेन सानुग्रहमेवमुक्तो यत् 'पुत्र, पुरा कर्मयोगाद्धंसत्वमापन्नस्य कामस्य दिव्यस्त्रीशापतश्च्युता हंसी भार्याऽभवत्। वेलाजलापहृतापत्यशोकसन्तप्तायाञ्चोदन्वत्यामात्मानं पातितवत्यां तस्यां, तद्वियोगासहं स हंसोऽप्यात्मानं तत्रैवाक्षिपदिति शम्भोः प्रसादात्त्वं जातिस्मरो वत्सेश्वरात्मजो जातः। सा हंसी च पारेसमुद्रं कर्पूरसम्भवे पुरे कर्पूरिकानामाधुना राजसुता जाता। तत्त्वं पुत्र, अद्य तत्र संगच्छस्व स्वप्रियाञ्चोपयच्छस्व। एवमुक्त्वा दिवमुत्पतितायां तस्यां तापस्यामसावस्मत्स्वामी[2] ततः समुपलब्धप्रवृत्तिस्तत्क्षणमेवेतोऽभिमुखं मद्द्वितीयो गन्तुं प्रवृत्तस्तत्स्नेहात्पणीकृतनिजजीवितो विविधश्वापद[3]संकीर्णकठिनकान्तारप्रान्तरशतगिरिणदी[4]क्लेशमपरिगणयन्नम्बुधितटस्थहेमपुरीयतक्षणा राज्यधराभिधेयेन प्रत्तं यन्त्रविमानकमारुह्य पयसामास्पदम्[5]पि गोष्पद[6]मिवा

१. षोऽन्तकर्मणि इति धातोः क्तः। २. 'स्वामिन्नैश्वर्ये'। ३. 'शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः'। ४. 'गिरिनद्यादीनां वा'। ५. 'आस्पदं प्रतिष्ठायाम्'। ६. 'गोष्पदं सेवितासेवितप्रमाणेषु'।

कलयन्मत्सहायोऽयं पुरमेतदवाप्येह आम्यँस्तवान्तिकमुपेयिवान्[1] । किमतः परं निखिलाचारप्रतिष्ठानिष्ठस्य परमेष्ठिनोऽभीष्टमिति तु नाद्यावधि स्पष्टम् ।

गोमुखमुखतीयमेतन्निशम्य समुपजातसंवादप्रत्यया कर्पूरिका मय्यार्यपुत्रस्यास्यैतावान्[2] स्नेहो मुधैव मे विरक्तिरिति प्रेमाश्रुकोष्णँका[3][4]जलक्लिन्नानना विमृशन्ती 'सत्यमेवाहं सा हंसी, धन्या[5] च, यत्कृते जन्मद्वयेऽनुभूतवानार्यपुत्र एवंक्लेशं प्रतिदेशम् । तदहमधुना प्रेमक्रीता ते दासी मोदासीनतातो मत्सत्कृतिस्वीकृतौ प्रदर्शनीयेति' वादिनी नरवाहनदत्तं सगोमुखं स्नानाद्यैः सम्मान्य परीवारमुखेन सर्वमेतत् स्वजनकमबोधयत् । सोऽपि चावबुद्धसकलवृत्तान्तस्तदन्तिकमासाद्यावाप्तविवाहेच्छुसुतानुकूलं विद्याधरमहाचक्रवर्तिलक्षणलाञ्छितवरञ्चावलोक्य कृतकृत्यमिवात्मानं मन्यमानः सविधि सादरं स्वसुतां वत्सेशसुताय ददौ ।

एवं कर्पूरिकया सह कृतोद्वाहो नरवाहनदत्तो मूर्तिमत्या कीर्त्यैव तया कतिचिद्दिनानि तत्र निवसन्नेकदा कौशाम्बीं गन्तुं कर्पूरिकामाह । सापि च नरवाहनदत्तीययन्त्रविमानं बहुस्थितिपर्याप्तमनाकलय्य देशान्तरादागत्य तत्र निवसन्तं प्राणधरनामानं यन्त्रविमानविरचनचतुरमाकार्य तत्क्षणं व्योमगामि महदेकं यन्त्रविमानं रचयितुमादिशन्ती चेटीमुखेन पित्रे प्रस्थानेच्छां न्यवेदयत् ।

अत्रान्तर एव क्षिप्रं तत्र[6] समागते राज्ञि, समायातस्तत्र प्राणधरोऽपि व्यजिज्ञपत्—'देव, सुमहद्विमानमेकं मे कृतमेव वर्तते यन्मानुषसहस्रं लीलयैव वोढुं शक्नोति' । एवमाचक्षाणं तं तक्षाणं साधुवादैर्नरवाहनदत्तोऽभिपूज्य 'कच्चित्त्वं पुंसानुजस्य राजधरस्य नानायन्त्रनिर्माणकुशलः प्राणधराभिधो भ्राता ?' एवमभिदधानं तमतिप्रणतिप्रह्वः 'स एवाहं देव, कथं नौ देवो वेत्ति' इति जिज्ञासापरवशस्य तस्य राजधरेणोक्तं सर्वं सप्रसंगमभिधाय तद्विचिकित्सामुत्सारयामास ।

अथ मुदा तेन प्राणधरेण समुपाहृते महायन्त्रविमानके, श्वश्रूरचितमङ्गलालङ्कृतां नववधूं कर्पूरिकां नरवाहनदत्तः प्रदत्तदासीकर्पूरकाञ्चनरत्समारोप्य, सगोमुखो राजविसृष्टेन प्राणधरेण प्रधानप्रतीहारेण च सहितः, समारूढतद्विमानो, व्योम्नोत्पतन्नब्धिदक्षिणँतारस्थं[7] राज्यधरावसथमासाद्यावततार । तत्र भ्रातृदर्शना-

---

१. 'उपेयिवाननाश्वाननूचानश्च' । २. 'यत्तदेतेभ्यः परिमाणे वतुप्' ।
३. 'कवं चोष्णे । ४. 'ईषदर्थे' । ५. 'धनगणं लब्धा' । ६. 'सप्तम्यास्त्रल्' ।
७. 'दिक्शब्देभ्यस्तीरशब्दस्य तारभावो वा वाच्यः' ।

त्प्रहृष्टं प्रह्वोद्वाष्पं कथमप्युज्झिताग्रजं राज्यधरमापृच्छ्य तेनैव विमानेन तदैव कौशाम्बीमवाप्याकाशात्सानुचरनववधूको नरवाहनदत्तो विस्मितनेत्रया जनतयाऽवलोक्यमानोऽवततार। पिता चास्यागमनं बुद्ध्वा देवीसचिवस्नुषादिभिः सहाभ्युद्गताभिनववधूसहितं चरणावनतं तं समभ्यनन्दत्। माता वासवदत्ता चापि पद्मावत्या समं तमन्तरानन्दाश्रुप्रवाहत्रुटिततद्विश्लेषदुःखबन्धमाशिश्लेष। प्रेमहतेर्ष्ये रत्नप्रभामदनमञ्चुके चापि तच्चरणौ हृदयञ्च तुल्यमेव जगृहतुः। ततो वत्सेशः ससचिवो यथोचितावनतां नववधूं कर्पूरिकां तत्पैतृकं[1] प्रधानप्रतीहारञ्च पूजयित्वा नरवाहनदत्तोक्तमामूलं कर्पूरिकाप्राप्तिवृत्तं यथावृत्तं समाकर्णयन्नितरां[2] तोषमवाप। ततो भोजनाद्युत्तरं स्थित्वा यौगन्धरायणादिभिः सह प्रेमालापं कुर्वन्तं वत्सेशं प्रणतः प्राणधरो व्यजिज्ञपत्—'देव, कर्पूरकभूभृता समादिष्टावावां यन्मम सुतायां सकुशलं भर्तृभवनमाप्तायां त्वरितमिहागन्तव्यं येनाहं तां सकुशलं तत्राप्तां जानीयाम्' इति। तत् देव, कर्पूरिकास्वहस्तलिखितलेखं दापयित्वा मया सहितं कर्पूरसम्भवपुरं गन्तुं प्रधानमिममनुजानीहि। अहञ्च सुधासरसं श्रीमच्चरणतामरसं त्यक्तुं न शक्नोमि इति निजकुटुम्बमादाय तत इह प्रत्यागमिष्यामीति'।

एवमुक्त्वा समुपात्तसद्भर्तृसदनसकुशलावाप्तिकर्पूरिकाकराङ्कितपत्रौ कर्पूरसम्भवेशप्रधानामात्यप्राणधरौ वत्सेशादिभिर्विसृष्टौ समारूढविमानौ गगनगती तीर्णजलधी कर्पूरसम्भवं नगरमवाप्य समर्पितलेखौ तन्नीवृद्भूभृतमानन्दयाञ्चक्रतुः[3]। अन्येद्युश्च सकुटुम्बः प्राणधरो राजानमनुज्ञाप्य सम्भावितराज्यधरो नरवाहनदत्तपार्श्वमगात्। युवराजोऽपि च तस्मै तत्रागताय निजमन्दिरसमीप एव वसतिं जीविकाञ्च दत्वा तन्निर्मितैर्विमानकै रत्नप्रभामदनमञ्चुकाकर्पूरिकाभिश्च सह विहरन्नभ्यस्यन्निव भाविविद्याधरचक्रवर्तिगगनगतिं, सुखेन दिनानि निनाय।

एवं कौशाम्ब्यां निजोद्भवभवनमधिवसन्नरवाहनदत्तः कदाचिन्मृगयार्थमग्रेवणमनुगतः[4] सैन्यपरित्यक्तो गोमुखद्वितीयः स्फुरद्दक्षिणाक्षिसूचितशुभागमनोऽरण्यानीमेकामविशत्। अशृणोच्च दिव्यवीणारणनोन्मिश्रमधुरसङ्गीतम्। तदनुसृत्य गच्छन्नातिदवीयस्यध्वनि शैवायतनमेकमवलोक्य तन्निकटवर्तिन्येकस्मि-

१. 'पितुर्यच्चे'ति चाट्ठञ्। २. द्योत्यार्थप्रकर्षे द्योतकात्तरप्, 'तरप्तमपौ घः', 'किमेत्तिङव्ययेति' आमुः। ३. 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ'। ४. वनस्याग्रे अग्रेवणम् राजदन्तादित्वादग्रेशब्दस्य पूर्वनिपातः सप्तम्याश्चालुक्, ततः 'वनंपुरगामिश्रकेति'णत्वम्।

स्तरुमूले संयताश्वः प्रविश्य देवदेवेशमीशानमुपवीणयन्तीं बह्वीभिर्वरकन्याभिः परिवारितां देवकन्यकामेकामपश्यत्। अन्योऽन्यावलोकनसञ्जातपारस्परिकाकृष्टयोस्तयोर्नरवाहनदत्तचित्तज्ञो गोमुखो यावदेव तत्कन्यासखीभ्यः 'केयं कस्य सुते'त्यादि पृच्छति, तावदेव तत्सदृशी प्रौढावततारैका दिवो दिव्यहारवलयवती विद्याधरी या च तत्कन्यान्तिकमासाद्य स्वीकृततत्कन्याकृतस्वागतोपचारा सर्वविद्याधराधीशममरावतीशकल्पं[1] पतिमाप्नुया इति तस्या आशिषं प्रादात्। नरवाहनदत्तश्चैतदालोक्य तत्सान्निध्यमुपढौकितः कृतप्रणतिरवाप्ताशीर्वादः, अम्ब, केयं कन्या तव भवतीति सौम्यां विद्याधरीं शनैरपृच्छत्। सापि चेत्थं पृष्टा वक्तुमेवमारभत–'अस्ति गौरीगुरोर्विविधपीलुवहे[2] सानावेकस्मिन् श्रीसुन्दरपुरनामकं पुरमेकम्। आस्ते च तत्रालङ्कारशीलाख्यो विद्याधरेश्वरः। विविधोदारगुणगणाग्रहग्रहिलस्य च तस्य प्रतप्ताष्टापदप्रभा[3] महिषी काञ्चनप्रभा कालेन सुतमेकमसूत। 'स चायं धर्मपरो भवितेति पार्वत्या स्वप्ने समादिष्टः पित्रा धर्मशील इति नाम्ना ख्यातिमुपपन्नः। क्रमेण च प्राप्तयौवनो धर्मशीलः समधिगतसर्वानवद्यविद्यो यौवराज्येऽभिषिक्तो धर्मैकपरो वशी पितुरप्यधिकं प्रजा अरञ्जयत्। किञ्चित्कालानन्तरञ्चालङ्कारशीलपत्नी काञ्चनप्रभा निजविभाप्रभावितखिलदिग्भागां कन्यकामेकामजनिष्ट। तदुत्पत्तिसमकालमेवोदभूद्दिव्या वाग् यदियं कन्या चक्रवर्तिनो नरवाहनदत्तस्य भार्या भवित्रीति कृतालङ्कारवतीनामा धामातिसमुज्ज्वलरत्नरूपा भूपातिवात्सल्यलालिता क्रमेण समवाप्तशशिकलानीकाशयौवनवीकाशा निजात् पितुरधिगताखिलविद्या विद्याधरोपसेवितं भक्त्या त्रिनयनायतनं भ्रमितुमुद्यता। एतस्मिन्नेव कालेऽस्य भ्राता धर्मशीलो युवापि रहस्यलंकारशीलं निजपितरं व्यजिज्ञपत् 'तात, संसारेऽस्मिन् विरसावसानाः क्षणभङ्गुरा भोगा इमे न मां प्रीणन्ति। निचयाश्च सर्वे क्षयान्ताः, समुच्छ्रयाश्च पतनान्ताः, संयोगा विप्रयोगान्ताः। जीवनं हि मरणान्तमिति व्यासमुनिवचने द्रढीयान् मदीयो विश्वास इति नश्वरेषु तेषु न रतिर्मनस्विना विधेया। यतो हि परत्र नेमे भोगा नापि चार्थसञ्चयाः सहायाः अपि तु धर्म एवैकः परमो बन्धुर्यः पदात्पदमपि जनं न जहातीति परमपदावाप्तीच्छया प्रवणं[4] गत्वोत्तमं तपश्चरितुमहं कामये। एतदाक-

---

१. अमरा सन्त्यत्रेति मतुपि 'संज्ञायाम्' इति मस्य वत्वे 'मतौ बह्वचोऽनजिरादीनामि'ति दीर्घः। २. 'इको वहेऽपीलोः'। ३. 'अष्टनः संज्ञायाम्'। ४. 'प्रनिरन्तः शरेक्षुप्लक्षेति' णत्वम्।

र्याप्तिसमाकुलो वात्सल्यशीलोऽलङ्कारशीलो गलदश्रुलोचनो धर्मशीलं पुत्रमुवाच 'पुत्र, क्व तथाभूतमतिकठिनं तपः क्व च तावकीनमतिसुकुमारं शरीरम्। सर्वभोग्यैश्वर्योपभोगानन्तरमेव प्रशमः श्रेयान् इति कृतदारपरिग्रहस्य धर्मेण च राज्यं पालयतो भोगकाले साम्प्रतं ते वैराग्यमसाम्प्रतम्।' पितुरेतद्वचः समाकर्ण्य तपश्चरणशीलो धर्मशीलः पितरं पुनरेवमभ्यधात् 'पितः, विरक्त्यासक्त्योर्न वयो निमित्तकम्। ईश्वरानुगृहीतो हि कश्चिद्बालोऽपि विरक्तो भवति। कापुरुषश्च कश्चिद् वर्षीयानपि उत्तरोत्तरतरुणायिततृष्णः समवलोक्यते। मदीया च रतिर्नातिप्राज्ये राज्ये नापि चोपशमनिग्रहे दारपरिग्रहेऽपि तु शिवारिराधयिषया तप एव मदीयं जीवितफलम्।' एवं ब्रुवाणं तं पुत्रं यत्नेनाप्यनिवार्यमवेत्य तत्पिताऽश्रुपरीवाह[1]-परिपूरितचक्षुः स्वपुत्रम् 'यदि यूनोऽपीदृशी ते विरक्तिर्वृद्धस्य मे सा कथं न स्यादित्यहमपि वनमाश्रये।' इत्थमुक्त्वा दरिद्रेभ्यो ब्राह्मणेभ्यश्चापरिमितरत्नकाञ्चनराशीन् वितीर्य काञ्चनप्रभां च निजनगर एव स्थातुमाज्ञाप्यावोचत् यत्त्वमिहैव निवसन्ती कन्यामलंकारवतीमेतां परिरक्ष। वत्सरे पूर्णे सत्यस्त्यस्या विवाहलग्नो यदा चाहमिमां नरवाहनदत्ताय दास्यामि। स च चक्रवर्ती जामाता पुरमस्माकमेतत्पालयिष्यति। एतदाकर्ण्य विलपन्तीं ससुतां तां पत्नीमाश्वास्य ससुतो वनमाश्रयदलंकारशीलः। तद्भार्या काञ्चनप्रभा च सतीधर्मानुकूलं निजपतेराज्ञामनुसरन्ती तन्नगरमध्यास्त।

एकदा[2] सा अलङ्कारवती प्रज्ञप्तिसंज्ञिकया विद्यया कश्मीरेषु गत्वा पुण्यक्षेत्रेषु शम्भुं पूजयितुं समुपदिष्टेति मात्रा सह तत्र गत्वा महादेवगिरौ नन्दिक्षेत्रे गिरिजापतिं समपूपुजत्। कालेन च सा स्वमात्रा सह गृहमागतवतीति सैषाऽलङ्कारवतीकन्या, अहञ्चास्या माता काञ्चनप्रभा नाम। अद्य चैषा मामनुवर्त्यैवेहायाता। त्वमपीहायातोऽसि इति प्रज्ञप्तिविद्यातो विज्ञाय अहमिहायातेति देवतादिष्टां सुतां मामकीनामिमां त्वमुपयच्छस्व। प्रातश्चैतत्पित्रोक्तो विवाहावसरः सम्प्राप्त इति त्वमितः कौशाम्बीं व्रज। आवाञ्चेतस्तपोवनात्प्रातर्गन्तास्व इति राजाऽलङ्कारशीलः सुतां स्वकीयामिमां स्वत एव तुभ्यं दास्यतीति। काञ्चनप्रभयैवमुक्तो नरवाहनदत्तो रजनीमात्रमप्यलङ्कारवतीविश्लेषासहमानात्मा साश्रुलोचनः कौशाम्बीमागत्य तत्र च यथाकथञ्चित्परिजनेभ्यः तास्ताः कथाः श्रृण्वन् त्रियामां तामत्यवाहयत्। प्रातश्चोत्थाय विहितावश्यककृत्यो गगनादवरोहन्तीं भर्त्रा अल-

---

१. 'उपसर्गस्य घञ्यमनुष्ये बहुलम्'। २. 'सर्वैकान्यकिंयत्तदः काले दा'।

ङ्कारशीलेन, पुत्रेण धर्मशीलेन तथा पुत्र्या अलङ्कारवत्या च समन्वितां काञ्चनप्रभामवालोकयत्। ते च सर्वे तत्समीपमुपगता नरवाहनदत्तेनाभिनन्दिताः।

एतस्मिन्नेवान्तरे हेमरत्नादिभारवाहाः सहस्रशो[1] विद्याधरा दिवोऽवतीर्णाः। सर्वञ्च तद्वत्सराजो विज्ञाय तत्रागतोऽलङ्कारशीलमुखादखिलं प्रासङ्गिकञ्चाकर्ण्याभिनन्दिततद्वचनो निजविभवानुरूपमलङ्कारवत्या सह नरवाहनदत्तस्योपयमं निरवर्तयत्। अलङ्कारशीलोऽपि च मणिकनकभूषणभारसहस्रैरगणितदिव्यनारीभिश्च यथाशक्ति सर्वान् सम्मान्य, आमन्त्र्य च पत्न्या पुत्रेण च यथागतं ययौ। नरवाहनदत्तोऽपि च सद्वृत्तमनोरमामुदारगुणसम्पन्नाम् अलङ्कारवतीमवाप्य वाण्या सुकविरिव तद्रसिकः ससुखं दिवसानवासाययत्।

एकदा श्वश्र्वा, अलङ्कारवतीमात्रा काञ्चनप्रभया सुन्दरपुरे निजगृहमालोकयितुमर्थितः स तथेत्युक्त्वा समुपलब्धनिजजनकाज्ञः, समन्त्रिवसन्तको वधूसहायः, श्वश्रूविनिर्मितविमानवरमारुह्य व्योमवर्त्मना प्रतिष्ठमानः तस्मात्, सुरललनासंघसुन्दरे किन्नरसंगीतनिनादिते हिमाचले बहून्याश्चर्याणि निरीक्षमाणः, सुमेरुशिखरभ्रान्तिमुत्पादयद्भी रत्नरचितसौवर्णप्रासादैरुपशोभितं सुन्दरपुरमवाप। तत्र च व्योम्नो विमानादवतीर्य सा नाट्यदर्शननृत्यल्लोलध्वजांशुकायामिव तद्राजधान्यां श्वश्र्वा सम्पादितमाङ्गलिककृत्योऽलंकारवतीयुक्तः, सवयस्यवसन्तकः दिवसं तमतिवाह्यान्येद्युः काञ्चनप्रभानिर्दिष्टं दृष्टपूजितञ्च भोगमोक्षप्रदायकमलङ्कारवतीजनककारितशार्वोद्यानस्थितं भगवन्तं महादेवमर्चिचिपुरुद्यानञ्च विजिहीर्षुरलङ्कारवतीसखो नरवाहनदत्तस्तत्रत्ये काञ्चनस्कन्धरत्नशाखामनोरममुक्तागुच्छाच्छकुसुमकान्ते गङ्गासरसि स्नातः सम्पूजितोमाधवश्च काञ्चनपङ्कजवती रत्नसोपाना नानावापीरवलोकयन् सुचिरं व्यचरत्। ततः काञ्चनप्रभया दिव्यवस्त्राभरणैः सवधूकः सहामात्यश्च सत्कृतः सानुगस्तेनैव विमानेन वध्वा सह कौशाम्बीमाययौ। तत्र चैकस्मिन् दिने सम्पादितोचिताह्निककृत्ये स्वसचिवान्विते स्थिते नरवाहनदत्तेऽलङ्कारवतीपार्श्वमागत्यैका प्रतसाष्टापदसवर्णावयवा[2] बाला भीतभीता, देवि परित्रायतां परित्रायताम्, एष ब्राह्मणो मां जिघांसुः बहिः स्थितः इति शरणार्थिनी पलाय्य त्वच्छरणमहमायातेति व्याजहार। तदाकर्ण्याभयप्रदानपूर्वकमखिलं वृत्तान्तं वक्तुं पृष्टा सा भूयो बभाषे—'अस्या एव पुर्या बलसेनाभि-

1. सहस्रं सहस्रमिति वीप्सार्थे 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्।
2. 'ज्योतिर्जनपदेति' समानस्य सभावः।

धानस्य क्षत्रियस्याहमात्मजा, अशोकमालाभिधा, विरूपेणापि रूपलुब्धेन हठशर्माभिधानेन विप्रेण याचिता घोरघोणमुखं तमप्रतीयन्त्यपि वधभीरुणा पित्रा तस्मै दत्ता, तं त्यक्त्वाऽन्यं क्षत्रियपुत्रकं गता। किन्तु सोऽपि हठशर्मणा स्वमदभ्रभ्रुकुटिकुटिलकटाक्षनिरीक्षणाभिभूतः इति धनवानन्यः क्षत्रियकुमारको मया समाश्रितः। श्रुतैतद्वृत्तो दुर्वृत्तो विप्रो निशि तस्य वेश्म वैश्वानरेण[1] सन्दीपितवानिति तेनापि विमुक्ता मुक्ताहारादिकस्मानं कांदिशीकतामुपदिशन्ती हन्तुकामाद् हठधर्मद्विजादविकी[2] वृकादिव तस्माद् बिभ्यतीहैव विश्वमित्रत्वभावनाभावितस्य भवतो भृत्यस्य वीरशर्मणः शरण्यस्य दासित्वमुपपन्ना। एतदवगत्य नैराश्यपाशबद्धः स विरहज्वालाजालावलीढोऽस्थिचर्ममात्रावशिष्टोऽशिष्टो निन्द्यकर्मा हठशर्मा संवृत्तः। अद्य स मां निर्गतां दृष्ट्वाऽऽकृष्टकृपाकृपणकृपाणिको यावद्धन्तुमितः प्रधावति तावदेवाहं प्रपलाय्येहायाता दयार्द्रया प्रतीहार्य्या[3]ऽनावृतद्वारं भावत्कसदनं प्रविष्टेति'। एतदाकर्ण्य नरवाहनदत्तस्तं द्विजं बहिस्तोऽन्तरानाययत्। आगतञ्च रोषपूर्णया, रुधिरक्षोदारुणया दारुणया दृशा बालाम् ( अशोकमालाम् ) तामालोकयन्तं कृपाणपाणिमभाणीत् 'ब्रह्मन्, महापापकारी त्वमसि यः स्त्रियम् हंसि, तदर्थं परवेश्मानि च दहसीति'। एतदाकर्ण्य द्विजोऽवादीत्—'भगवन्, धर्मपत्नीयं मदीया, परित्यज्य च मामन्यतो यातेति सोढुमशक्नुवता मयानुधाविता।' तस्मिन्नित्थमुक्तेऽप्युद्विग्ना साऽशोकमाला सशोकमालापं कुर्वती लोकपालानब्रवीत्—'यूयं मे साक्षिणः, नाहं किममुनाऽनिच्छन्त्यपि हठादुपयम्य नीतेति? न मया किं तदोक्तं यदेवं प्रसभं नीताहं न ते गृहेष्वासिष्ये इति'? इत्थमुक्तवत्यां तस्यां दिव्या वागुद्भूय 'यदशोकमाला वदति तत्सत्यम्' इत्थं तदुक्तं सत्यापयन्ती तत्प्राग्जन्मकथामेवमवर्णयत्—तत्त्वतो नेयं मनुषी अपि स्वपुत्रस्य वीरस्य विद्याधरस्याशोककरस्य केवलोरस्या[4][5] पुत्री, नाम्ना अशोकमाला, पितृसद्मनि यौवनमापन्नाऽन्वयार्थिना पित्राऽनुरूपिणे वराय दित्स्यमानापि नापि कञ्चिदैच्छद्भर्त्तारमतिरूपाभिमानिनीति निर्बन्धकुपितेन तेन 'मानुषी भव,' हठाच्च परिणीतं विरूपं ब्राह्मणं परित्यज्य तद्भयादनुक्रमेण त्रीन् भर्तॄनुपैष्यसीति ततोऽपि तेनोपद्रुता बलिष्ठं राजपुत्रमेकं दासीत्वेनोपाश्रितवर्ती त्वां दृष्ट्वा जिघांसयाऽनुधाविते तस्मिन् राज-

---

१. 'नरे संज्ञायाम्'। २. 'अवेः कः'। ३. प्रतीहारो द्वारम् इति तात्स्थ्यलक्षणया प्रतीहारो दौवारिकस्तस्य स्त्रिया। ४. संज्ञाच्छन्दसोरभावात् ङीबभावः। ५. उरसानिर्मिता ( 'उरसोऽण् चे'त्यत्र साधुत् )।

भवनं प्रविष्टा शापादस्माद्विमुक्तिमवाप्स्यसीति शप्ता । सैषाऽशोकमाला विद्याधर[1]-चरी तेनैवाभिधानेनेह मनुषी जाताऽधुना शापान्तमवाप्य वैद्याधरीं निजतनुं प्रविशन्ती विद्याधरमभिलषिताख्यं महीभुजं पतित्वेनावाप्य रंस्यते'। एवमुक्त्वा विरतायां दिव्यवाचि, तत्क्षणमशोकमाला सहसा परीतप्राणा पृथिव्यामपतत्। तच्चालोक्य वाष्पायितेक्षणा तत्क्षणमलंकारवती सनरवाहनदत्ता तत्पार्श्वमगमत्। हठशर्मा चाकस्माद्रागान्धो विलपन् हर्षसमुत्फुल्लाननः, किमेतदिति पृष्टः सर्वैस्त-त्कारणं पूर्वजन्मस्मृतं सर्वमित्थं सर्वेभ्योऽवर्णयत्—'अस्ति हिमगिरिणदीतीरस्थ[2]मदन-पुरे विद्याधरेश्वरः प्रलम्बभुजो नाम। प्राक्पुण्यपरिपक्वानि[3] फलानि भुञ्जानस्य तस्य स्थूलभुजाख्यस्तनयस्समुदपद्यत । स च भव्यो राजपुत्रः क्रमाद् यौवनमापन्नो विविधगुणगणयुक्तो निजवयोगुणानुरूपमाख्यातिमभजत् इति सुरभिवत्साख्यो विद्याधरपतिः सदारिको दिव्याऽभ्यागारिकः[4] प्रलम्बभुजमागत्य सुरभिदत्ताख्यायाः निजसुताया वरकामणया[5] गुणवते तत्सूनवे स्वसुतां पाणिपीडनविधिना दातुं प्रास्तावीत्। प्रतिपन्नतद्वचनेन च प्रलम्बभुजेन स्थूलभुजस्तमर्थमभ्युपपत्तुमभिहि-तोऽपि कन्दर्पकल्परूपदर्पितः रूपेणावरैषा नाहमेनां परिणेष्ये इति पितृवचनं स्पष्टं प्रत्याचष्ट । किन्तु 'पुत्र, जगतीह किं क्षणभङ्गुरेण रूपेण ? महान्वयसम्भूता पित्रा दत्ता सुरभिदत्ता त्वत्कृते मयात्तेति मान्यथा कृथा मद्वचनम्'। इत्थमनुनी-यमानोऽपि निषेधैकनिर्बन्धो न यदा तद्वचनमन्वसरत्तदा मन्युस्फुरद्दन्तच्छदा-नुभाव्यमानकोपः पिता तमित्थं शशाप यदनेन रूपाहंकारगरपाणे[6]नोन्मत्तस्त्वं विकृतविकटाननो मनुष्यो भव। अशोकमालया भार्यया चानिच्छन्त्याऽप्युज्झि-तोन्यप्रसक्तायास्तस्याः कृते विरहकृशीकृतमनोनीतविग्रहोऽतिरागान्धोऽग्निदा-हादिमहापातकं करिष्यसीति । एतदाकर्ण्य साध्वी सुरभिदत्ता प्रलम्बभुजपाद-लग्नोवाच यन्मदीयभर्तुरेकाकिनो मदपराधतः क्लेशो मा भूदिति मह्यमपि शापं देहि येनावयोः समा गतिर्भवेत्।

एवमुक्तवतीं साध्वीं प्रति परितुष्टः प्रलम्बभुजोऽशोकमालाशापमोक्षावधिं तच्छापं तदैवाचिरादुभयविवाहयोगञ्चोक्तवान्। स चाहं स्थूलभुजः शापादिह

१. भूतपूर्वा विद्याधरी, 'तसिलादिष्वाकृत्वसुचः'। २. 'गिरिनद्यादीनां वा'। ३. 'कुमति चेति' प्राप्तं णत्वं 'युवादेर्न' इत्यनेन वार्यते। ४. अभ्यागारे तत्सम्बन्धि-कर्मणि नियुक्तः, 'अगारान्ताट्ठन्'। ५. 'कुमति च'। ६. पानं पीतिः 'ल्युट् चेति' भावे नपुंसके ल्युट् 'वा भावकरणयोः' इति पाननकारस्य वैभाषिको णः।

परिच्युतः स्वाहंकारदोषानुभूतैतावन्महादुःखोऽद्य विमुक्तशापः संजातः। एवमुक्त्वा परित्यक्ततत्तनुर्हंठशर्मा, समवाप्तविद्याधरकुमारकत्वः, स्वविद्याप्रभावतोऽशोकमालादेहमदृश्यमेव गंगायां क्षिप्त्वा, समानीतैश्च तत्तोयैरभितोऽलङ्कारवतीवासगृहं क्षणात्क्षालयित्वा कृतस्वकीयभाविनरवाहनदत्तनमस्कृतिः, स्वकार्यसिद्धये विहायसा समुदपतत्। तच्च तथा समवलोक्य विस्मितेष्वथ सर्वेष्वनुषङ्गसमुपनतां गोमुखोऽनंगरतेरिमां कथामवर्णयत्।

अस्ति पृथिव्यां शूरपुरं नाम यथार्थं नगरमेकम्[1]। तत्राभवद् महावराहनामाऽतिदुर्मदो राजा। गौर्याराधनतत्परस्य निस्सन्ततेस्तस्य स्वमहिष्यां पद्मरतावनङ्गरतिर्नाम सुतोत्पन्ना। यौवनापन्ना सा कालेन स्वरूपयौवनाभिमानिनी माननीयेष्वपि याचमानेषु राजकुमारेषु न कतममप्यपतीयत्। अपितु यः शूरो रूपवान् शोभनं विज्ञानमेकं वेत्ति तस्मै मयाऽऽत्मा दातव्य इति कृतनिश्चया तस्थौ। व्यतीतेष्वथाहस्सु श्रुततद्गुणनिश्चयोदन्तास्तदिच्छवश्चत्वारो वीरा दक्षिणापथादपरस्परा[2][3]श्चलन्तः समागताः अनङ्गरतिसन्निधौ नृपतिना महावराहेणैकैकं नामजातिविज्ञानमनुयुक्ताः एकतमस्तेष्वेवं व्यजिज्ञपत्–'शूद्रोऽहं पञ्चपट्टिकनामा, प्रत्यहमहं पञ्च पट्टिकायुगलानि वयामि। तेभ्यश्चैकं ब्राह्मणाय ददामि, द्वितीयं च परमेशाय। तृतीयं स्वयं वसे। चतुर्थं चाहं या मदीया भार्या भवेत्तस्यै दास्यामि; विक्रयेण च पञ्चमस्य शरीरयात्रा सम्पद्येतैतन्मयि विज्ञानम्'। द्वितीयश्च तेष्वाचख्यौ–'भाषाज्ञसंज्ञकोऽहं वैश्यः। सर्वेषां मृगपक्षिणां रुतं विजानामि'। ततस्तृतीयोऽवदत्–'खड्गधराभिधः क्षत्रियोऽहं, नान्येनापितु खड्गयुद्धेन जय्यः'। चतुर्थस्तेष्वब्रवीत्–'द्विजोऽहं जीवदत्ताख्यो गौरीप्रसादविद्याभ्यां मृतां स्त्रियं जीवयामि'।

एवं पार्थक्येनात्मविज्ञाननैपुण्यमुक्तवत्सु तेषु क्षत्रियविट्शूद्रेषु, तथा, रूपवर्जं बलवीर्यं च स्वं शंसति ब्राह्मणे, महावराहेण, सर्वे ते निजसूतगृहे विश्रामार्थं विसृष्टाः। आत्मजाऽनङ्गरतिश्च 'चतुर्षु तेषु वीरेषु कतमोऽभिमत' इत्यनुयुक्ता नैकतममपि पतित्वेन कामयमानाऽवोचत्—'शूद्रस्य वायकस्य ज्ञातपक्ष्यादिरुतस्य वैश्यस्य च वयनपक्ष्यादिरुतज्ञानयोरनुपयोगित्वात्क्षत्रियाहं ताभ्यां कथमात्मानमर्पयेयम्। तृतीयस्य तुल्यकुलरूपवयस्कस्यापि सेवोप-

---

१. 'नगपांशुपाण्डुभ्यश्चे'ति रः। २. 'विन्दुरिच्छुः'। ३. 'अपरस्पराः क्रियासातत्ये'।

जीवित्वाद्विरूपत्वाद्दरिद्रत्वाच्च रूपकुलबलविद्यास्नेहिन्यै राजकन्यायै मह्यं न रोचते गेहिनी भवितुम्। एवं तुरीयो जीवदत्तो ब्राह्मणोऽपि न मेऽभिमतो यतो हि स वेदवर्जितो विकर्मेति वर्णाश्रमधर्मरक्षकस्य ते सुताहं खड्गशूरापेक्षया धर्मशूरमधिकं मन्यमाना न तमपि पतीयित्वाऽऽत्मसन्धासिन्धुं गोपदीकरोमी'त्याद्युक्तवतीमात्मजामन्तःपुरे परित्यज्य राजा स्नानाद्यर्थमुत्तस्थौ। द्वितीयेऽह्नि निर्गतास्ते वीराः सकौतुकाश्चत्वारोऽपि नगरे यावद् भ्राम्यन्ति तावदेव पञ्चकवलो नाम महामातङ्गो भग्नालानो जनान्मर्दयन्, मन्दुरातो निर्गतस्तान् वीरानपि पुरः पश्यन् हन्तुमुद्ययुजे। तदभिमुखतः प्रधावतामुद्यतायुधानां तेषां मध्ये खड्गधराख्यः क्षत्रियस्त्रीनन्यानपवार्य महामातङ्गं तमभ्यापत्याग्रप्रसारितं तच्छुण्डमेकेनैव निजखड्गप्रहारेण बिसकन्दलीवं लूत्वा स्वहस्तलाघवेन तदग्रपादद्वयं च द्वैतीयीकेन प्रहारेण छित्त्वा, विमुक्तारटिं करटिनं तं भूमौ निपात्य, परेतपतिपालितपुरीप्रेमास्पदीकुर्वंस्तत्रत्यसर्वजनान् महावराहभूपतिं च व्यस्मापयत्।

परेद्यवि[3], तैः खड्गधरादिभिश्चतुर्भिर्वीरैः सह मृगयायै गतो गजारूढो राजा बहून् व्याघ्रादीन् वन्यान् पशून् न्यहन्। तत्र चाकर्णितवारणबृंहणेषु कुपितेषु अभ्यापतत्सु सिंहेषु एकतमं खड्गधरः एकेनैव तीक्ष्णनिस्त्रिंशप्रहारेण द्वैधीकृत्य[4] द्वितीयञ्च वामपाणिना चरणे गृहीत्वा भूतले पातयन्निरसूचकार। एवमेव भाषाज्ञो जीवदत्तः पञ्चपट्टिकश्चापि एकैकं सिंहमेकैको भूमावास्फोटयत्। एवं पश्यत्येव राजनि ते वीराः पादचारिण एव बहून् सिंहादीन् व्यापादितवन्तः। तेषां तथा वीरकार्येणातिसन्तुष्टो भूपतिः कृताखेटः स्वपुरं विवेश। वीराश्च तत्सूतगृहमाययुः। राजा च क्षणं विश्रम्य स्वसुतामनङ्गरतिमाकार्य्य वीराणां तेषामेकैकस्याखेटकयथादृष्टपराक्रममभिदधत्सर्वथा स्वानुरूपकुलबलविक्रमशालिनं खड्गधरं स्वभर्तृत्वेन स्वीकर्त्तुमनुरुरोध।

व्यतिकरे चैवंभूतेऽनङ्गरतिरुवाच—एतेषां विषये गणकः समाहूय प्रष्टव्यः किं स ब्रवीतीति स नृपतिः वीराँस्तानानाय्य स्वगणकमनङ्गरतेरेतेषां मध्ये केन सह विवाहानुकूल्यं कश्च शुभो लग्न इति पप्रच्छ। एवमनुयुक्तोपयुक्तवेलामे-

---

१. 'उपमाने कर्मणि च'; 'श्रयुकः किति'। २. 'आस्पदं प्रतिष्ठायाम्'। ३. 'परस्मादेद्यव्यहनि'। ४. 'अधिकरणविचाले च','द्वित्र्योश्च धमुञ्' ततः च्विः।

लापको गणकोत्तमो, गणयित्वा चिरं कालं; राजानं तं स्फुटमेवमभाषत यन्नैकेनापि राजदुहितुरानुकूल्यं नापि च तद्विवाहोऽत्र भावी, यतो हि सा शापच्युता विद्याधरी। अद्य चावशिष्टशापमासत्रयेत्येभिस्तावन्मासत्रयं प्रतीक्षेलिमम्। नैषा तदनन्तरं स्वलोकं याता चेदुद्वाहो भविता।

एतदाकर्ण्य समुपजाततद्वचश्श्रद्धास्ते त्रयोऽपि वीरास्तत्र मासत्रयावधि न्यवसन्। अतीते च मासत्रये, राजा तान् वीरान् गणकञ्चाहूय स्वसुतामप्याकारयामास। तदानीं च समधिकतरसौन्दर्यां तामवलोक्यातिहृष्टो राजा यावत्तं गणकं तद्विषये किमपि वक्तुं कथयति तावदेव स्मृतनिजजातिरनङ्गरतिराननमात्मीयमुत्तरीयेणाच्छाद्य मानुषीं तनुं तां तत्याज। किमेवमियं स्थितेत्याश्चर्य[1]चकितो नरपतिर्यावत्तस्या मुखं स्वयमुद्घाट्य समालोकयति तावद्विवर्णवदनाम्बुजा, व्यावृत्तनेत्रभ्रमरा, हंसमंजुस्वनोन्मुक्ता, हिमाहता पद्मिनीव सा, निरसुरदृश्यत। ताञ्च तदवस्थामवलोक्य तच्छोकनिरभ्राशनिपाताहतः, स्वपक्षच्छेदमूर्च्छितो भूभृत्, निश्चेष्टो भूमौ निपतन्निभभग्नां भ्रष्टाभरणपुष्पां मञ्जरीमिव राज्ञीं पद्मरतिमपि व्यामोहेन पातयामासेत्युन्मुक्ताक्रन्दे सकलपरिजने वीरेषु च तेषु निरतिशयदुःखमनुभवत्सु क्षणादुपलब्धसंज्ञो राजा जीवदत्तमुवाच—प्रतिज्ञातमृतनारीजीवनस्य तेऽधुनाऽवसर इति मृतनारीजीवनविद्याबलमस्ति चेत्त्वमधुना सुतां मदीयामिमामुज्जीवय। प्राप्तजीविताञ्चेमां विप्राय तुभ्यमहं प्रदास्यामीति। श्रुत्वैतद्राज्ञो वचो जीवदत्तस्तोयैस्तां राजपुत्रीमभ्युक्ष्य आर्यामिमामजपत्—

> अट्टाट्टहासहसिते, करङ्कमालाकुले दुरालोके।
> चामुण्डे विकराले, साहाय्यं मे कुरु त्वरितम्॥

किन्त्वेवं यत्ने कृतेऽप्यप्राप्तजीवितां तामवलोक्य विषण्णवदनो जीवदत्तो विन्ध्यवासिनीसमभ्यर्चावाप्तविद्यावर्चोऽपि वर्चस्कमिव मे निरर्थकं सञ्जातमित्युपहासावकर[2]निकरपरिकीर्णेन मदीयजीवितेन किं प्रयोजनमित्थमवधीरितनिजजीवनो यावदस्यपगारं[3] स्वशिरश्छेत्तुं प्रवर्तते तावदेवोदगाद्दिव्यभारती यदेषा अनंगप्रभाभिधा विद्याधरकन्यका पित्रोः शापेनेयन्तं कालं मानुषीं तनुमाश्रि-

---

१. 'आश्चर्यमनित्ये' (आङः परस्य चरेः सुट्, 'चरेराङि चागुरौ' इति यत्)।

२. 'वर्चस्केऽवस्करः'। ३. 'अपगुरो णमुलि' (असिमुपगूर्येत्यर्थः)।

त्याद्य स्वलोकं यातेति यात्वा विन्ध्यवासिनीमेवाराधय येन विद्याधरीमपि तां त्वमवाप्नुयाः। एषा च दिव्यभोगस्था, हे राजन्, त्वयाप्यशोच्या। एवमुदीर्य विरतायां दिव्यगिरि, तनूजां निजामन्त्येष्ट्या संस्कृत्य परिहितशुक्, भूभुक्, त्रयोऽन्ये वीराश्च यथागतं ययुः। जीवदत्तस्तु जातास्थो विन्ध्यवासिनीमाराधयँस्तुष्टया तयेत्थमादिष्टः—'अस्ति तुहिनाचले वीरपुरं नाम नगरम्। तत्रत्यविद्याधराधिराजस्य समराभिधस्यानङ्गवतीदेव्यामुत्पन्नाऽनङ्गप्रभा सुता सत्स्वपि तद्योग्यवरेषु रूपयौवनोत्सिक्तया कञ्चिदपि स्वपतिमनिच्छन्ती दुर्ग्रहाभिक्रुद्धाभ्यां स्वपितृभ्यां मानुषीं तनुं, मुनिकन्याभिलाषेण शापादवाप्तमर्त्यत्वस्य विरूपस्य खड्गसिद्धाभिधस्य पत्नीत्वञ्चावाप्तुं तत्रापि च पतिसुखमनवाप्य षोडशाब्दे तत्तनुपरित्यागानन्तरं पुनस्तन्नगरं निवर्तयितुमभिशप्ता। अनिच्छन्त्या अपि खडगसिद्धेन मर्त्यलोकं नीतायास्तस्याः अन्यापहृतिहेतुका पत्या वियुक्तिः। यतो हि पूर्वजन्मनि तेन अष्टौ परयोषितोऽपहृताः अतोऽष्टजन्मभोगार्हं दुःखमनुभवता स्वपापभागदेन तेन पापिष्ठेन संगतैकस्मिन्नेव जन्मन्यष्टानां जन्मनामिव दुःखमनुभवन्ती नष्टस्मृतिर्बहून् मानुषपतीन् च गच्छन्ती मनुजीभूतेन मदनप्रभेण द्युचरेणान्त्येन पत्या याच्यमाना शापनिर्मुक्ता समवाप्तनिजलोका द्युचरीभूतेन तेनैव मदनप्रभेण समुचितेन पत्यावाप्तसंगतिर्भविष्यतीत्युक्ता। एवं पितृशप्ता सा चितावाप्तविग्रहाऽनंगप्रभा पुनरनङ्गरतिरूपेणोत्पन्ना स्वपित्रोर्निकटे वीरपुरे वर्तते। त्वं तत्र गतो विजितेन समरे समरेण तत्पित्रा दत्तां तां परिणयस्व। खड्गं चेमं गृहाण। हस्तगतेनानेन त्वमाकाशगतिरजय्यश्च भविष्यसि। एवमर्पितखड्गायां देव्यां तिरोहितायां, प्रबुद्धो जीवदत्तो हस्ते दिव्यं खड्गमालुलोके। प्रहृष्टमनाः स चाथोत्थाय विहिताम्बिकानतिस्तत्प्रसत्तिसुधाप्यायितशरीरशान्ताशेषतपःक्लेशः, करधृतखड्गोऽवलम्बितवैहायसगतिः, क्षणेनैव तुहिनाचलस्थितवीरपुरस्थं निजकृतिविस्मापितामरं समरं समवाप्य जन्यजितेन च तेन प्रदत्तां तामनङ्गप्रभां परिणीयावाप्तापरिमितसम्भोगसम्पन्नातिचिरं तत्रोवास। कृतावस्थानानन्तरञ्च समरसृमरशत्रुघस्मरासिरवाप्तश्वशुरसमरसम्मतिस्ततो मर्त्यलोकमागमनिच्छन्त्याप्यनङ्गप्रभया सह परां प्रियां निजजन्मभूमिं मर्त्यलोकं नभसा सरभसं समवातरन् मध्येमार्गमवलोकितैकरम्यपर्वतया श्रान्तया तयाऽनङ्गप्रभया स्तोकं तत्र विश्रमितुमभ्यर्थितस्तत्रावतीर्य, तत्तद्विद्याप्रभा-

१. 'षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वाच्यम्'।

ऽतः कृताहारपानादिरनङ्गप्रभाकृतधूर्जटिस्तुतिगीतिमधुरमधु कर्णचषकेणापिब-न्नपहृतमुग्धचित्तो निदद्रौ। एतस्मिन्नन्तर एवाखेटकातिश्रान्तो निर्झरजलाभिलाषुको हरिवरो राजा तेनैव पथा गच्छन्नाकर्णितगीतध्वनिरुन्मुक्तरथः केवलस्तत्रागात्। परस्परावलोकनेन पञ्चशरशरशरव्यतां गतयोरनुयुक्तोक्तान्योन्यकौतस्कुतत्वयोश्च तयोस्तदवस्थपरित्यक्तसुप्तस्वपत्नी[1] अनङ्गप्रभा अङ्कोपात्तभूपतिरूपस्य त्वरया खं यावदेवावगाढुमैच्छत्तावदेव भर्तृदोषेण परिभ्रष्टविद्या विद्याधरी निष्फलाध्यवसाया सञ्जातेति स्मृतपितृशापाऽपारयन्ती सोढुं स्वाभिलाषानैष्फल्यजन्यां शुचं, भृशं सान्त्विता नृपतिनाऽङ्के गृहीत्वा स्वरथमारोहिता मनोजवेन चतुरपस्करेण[2] रथेन हरिवरनगरमवाप्य शापविमोहिता तन्नृपत्यनुरक्ता च तत्रैव दिव्यसुखमनुभवितुमारेभे।

इतो विगतनिद्रेणाद्रौ प्रबुद्धेन जीवदत्तेनानङ्गप्रभां स्वासिञ्चानवलोकयता हृतासिरनङ्गप्रभैव कुत्रचिद्गता, अन्यो वा कश्चित्तद्द्वयमपाहरदिति विविधतर्कवितर्कनकर्तितविचारतन्तुनोद्भ्रान्तेन मदनदहनदंदह्यमानमानसेन, कूटकारस्कर[3]कूजद्विष्किर[4]वचसा तत्रानंगप्रभावस्थितिं निषेधन्तमपि गिरिं सर्वं दिवसत्रयं, तथा दश दिवसानखिलानि तदौपत्यककाननानि च विचिन्वानेनापि न तत्पादचिह्नमपि क्वापि[5] समवापि। अतस्तद्वियोगविक्लव आक्रन्दन्निरशनन्नटन्नितस्ततो निष्प्रतिष्कशो[6] द्विजगृहमेकमाढ्यमाविशत्। तत्र च सुभगा सुवस्त्रा, प्रियदत्ताख्या तद्गेहिनी आसनोपवेशितजीवदत्तस्य पादप्रक्षालनार्थं निजदासीरादिशन्तो 'त्रयोदशमद्य दिवसमस्याशनविरहितस्य' इत्यभाषत। तदाकर्ण्य तदातिविस्मितो जीवदत्तोऽनङ्गप्रभा वियोगिनीह प्राप्ता, योगिनीयमथवेत्यन्तर्विमृशन् धौतपादोऽशिततत्प्रत्ताशनोऽतिप्रणतः, प्रियदत्तां तामत्यार्त्या स्ववृत्तान्तावगतिहेतुं, निजप्रियाखड्गगतिश्चेत्येतद्द्वयमपृच्छत्। समाकर्णिततद्वचना, वचनरचनाचातुरीचुञ्चुरञ्जनीयचरणपतिव्रता सा, चित्ते मे स्वप्नेऽपि पत्युरन्यः पदं न विधत्ते; धत्ते चान्यो ना मे पुत्रभ्रातृसमानताम्, नतां मामवलोक्यार्चनार्थमतिथिर्न कदाचिदपि विमुखो गृहान्तरमभि-

---

१. तदवस्थः परित्यक्तः सुप्तः स्वपतिर्ययेति 'विभाषा सपूर्वस्ये'ति पतिशब्दे वैभाषिकनत्वे, ङीप्। २. 'अपस्करो रथाङ्गम्'। ३. 'कारस्करो वृक्षः'। ४. 'विष्किरः शकुनौ वा'। ५. 'किमोऽत्', 'क्वाति'। ६. 'प्रतिष्कशश्च कशेः'।

स्तरुमूले संयताश्वः प्रविश्य देवदेवेशमीशानमुपवीणयन्तीं बह्वीभिर्वरकन्याभिः परिवारितां देवकन्यकामेकामपश्यत्। अन्योऽन्यावलोकनसञ्जातपारस्परिकाकृष्टयोस्तयोर्नरवाहनदत्तचित्तज्ञो गोमुखो यावदेव तत्कन्यासखीभ्यः 'केयं कस्य सुते'त्यादि पृच्छति, तावदेव तत्सदृशी प्रौढावततारैका दिवो दिव्यहारवलयवती विद्याधरी या च तत्कन्यान्तिकमासाद्य स्वीकृततत्कन्याकृतस्वागतोपचारा सर्वविद्याधराधीशममरावतीशकल्पं[1] पतिमाप्नुया इति तस्या आशिषं प्रादात्। नरवाहनदत्तश्चैतदालोक्य तत्सान्निध्यमुपढौकितः कृतप्रणतिरवाप्ताशीर्वादः, अम्ब, केयं कन्या तव भवतीति सौम्यां विद्याधरीं शनैरपृच्छत्। सापि चेत्थं पृष्टा वक्तुमेवमारभत-'अस्ति गौरीगुरोर्विविधपीलुवहे[2] सानावेकस्मिन् श्रीसुन्दरपुरनामकं पुरमेकम्। आस्ते च तत्रालङ्कारशीलाख्यो विद्याधरेश्वरः। विविधोदारगुणगणाग्रहग्रहिलस्य च तस्य प्रतप्ताष्टापदप्रभा[3] महिषी काञ्चनप्रभा कालेन सुतमेकमसूत। 'स चायं धर्मपरो भवितेति पार्वत्या स्वप्ने समादिष्टः पित्रा धर्मशील इति नाम्ना ख्यातिमुपपन्नः। क्रमेण च प्राप्तयौवनो धर्मशीलः समधिगतसर्वानवद्यविद्यो यौवराज्येऽभिषिक्तो धर्मैकपरो वशी पितुरप्यधिकं प्रजा अरञ्जयत्। किञ्चित्कालानन्तरञ्चालङ्कारशीलपत्नी काञ्चनप्रभा निजविभाप्रभावितखिलदिग्भागां कन्यकामेकामजनिष्ट। तदुत्पत्तिसमकालमेवोदभूद्दिव्या वाग् यदियं कन्या चक्रवर्तिनो नरवाहनदत्तस्य भार्या भवित्रीति कृतालङ्कारवतीनामा धामातिसमुज्ज्वलरत्नरूपा भूपातिवात्सल्यलालिता क्रमेण समवाप्तशशिकलानीकाशयौवनवीकाशा निजात् पितुरधिगताखिलविद्या विद्याधरोपसेवितं भक्त्या त्रिनयनायतनं भ्रमितुमुद्यता। एतस्मिन्नेव कालेऽस्य भ्राता धर्मशीलो युवापि रहस्यलंकारशीलं निजपितरं व्यजिज्ञपत् 'तात, संसारेऽस्मिन् विरसावसानाः क्षणभङ्गुरा भोगा इमे न मां प्रीणन्ति। निचयाश्च सर्वे क्षयान्ताः, समुच्छ्रयाश्च पतनान्ताः, संयोगा विप्रयोगान्ताः। जीवनं हि मरणान्तमिति व्यासमुनिवचने द्रढीयान् मदीयो विश्वास इति नश्वरेषु तेषु न रतिर्मनस्विना विधेया। अतो हि परत्र नेमे भोगा नापि चार्थसञ्चयाः सहायाः अपि तु धर्म एवैकः परमो बन्धुर्यः पदात्पदमपि जनं न जहातीति परमपदावाप्तीच्छया प्रवणं[4] गत्वोत्तमं तपश्चरितुमहं कामये। एतदाक-

---

१. अमरा सन्त्यत्रेति मतुपि 'संज्ञायाम्' इति मस्य वत्वे 'मतौ बह्वचोऽनजिरादीनामि'ति दीर्घः। २. 'इको वहेऽपीलोः'। ३. 'अष्टनः संज्ञायाम्'। ४. 'प्रनिरन्तः शरेक्षुप्लक्षेति' णत्वम्।

र्यातिसमाकुलो वात्सल्यशीलोऽलङ्कारशीलो गलदश्रुलोचनो धर्मशीलं पुत्रमुवाच 'पुत्र, क्व तथाभूतमतिकठिनं तपः क्व च तावकीनमतिसुकुमारं शरीरम्। सर्वभोग्यैश्वर्योपभोगानन्तरमेव प्रशमः श्रेयान् इति कृतदारपरिग्रहस्य धर्मेण च राज्यं पालयतो भोगकाले साम्प्रतं ते वैराग्यमसाम्प्रतम्।' पितुरेतद्वचः समाकर्ण्य तपश्चरणशीलो धर्मशीलः पितरं पुनरेवमभ्यधात् 'पितः, विरक्त्यासक्त्योर्न वयो निमित्तकम्। ईश्वरानुगृहीतो हि कश्चिद्बालोऽपि विरक्तो भवति। कापुरुषश्च कश्चिद् वर्षीयानपि उत्तरोत्तरतरुणायिततृष्णः समवलोक्यते। मदीया च रतिर्नातिप्राज्ये राज्ये नापि चोपशमनिग्रहे दारपरिग्रहेऽपि तु शिवाराराधयिषया तप एव मदीयं जीवितफलम्।' एवं ब्रुवाणं तं पुत्रं यत्नेनाप्यनिवार्यमवेत्य तत्पिताऽश्रुपरीवाह[1]-परिपूरितचक्षुः स्वपुत्रम् 'यदि यूनोऽपीदृशी ते विरक्तिर्वृद्धस्य मे सा कथं न स्यादित्यहमपि वनमाश्रये।' इत्थमुक्त्वा दरिद्रेभ्यो ब्राह्मणेभ्यश्चापरिमितरत्नकाञ्चनराशीन् वितीर्य काञ्चनप्रभां च निजनगर एव स्थातुमाज्ञाप्यावोचत् यत्त्वमिहैव निवसन्ती कन्यामलंकारवतीमेतां परिरक्ष। वत्सरे पूर्णे सत्यस्त्यस्या विवाहलग्नो यदा चाहमिमां नरवाहनदत्ताय दास्यामि। स च चक्रवर्ती जामाता पुरमस्माकमेतत्पालयिष्यति। एतदाकर्ण्य विलपन्तीं ससुतां तां पत्नीमाश्वास्य ससुतो वनमाश्रयदलंकारशीलः। तद्भार्या काञ्चनप्रभा च सतीधर्मानुकूलं निजपतेराज्ञामनुसरन्ती तन्नगरमध्यास्त।

एकदा[2] सा अलङ्कारवती प्रज्ञप्तिसंज्ञिकया विद्यया कश्मीरेषु गत्वा पुण्यक्षेत्रेषु शम्भुं पूजयितुं समुपदिष्टेति मात्रा सह तत्र गत्वा महादेवगिरौ नन्दिक्षेत्रे गिरिजापतिं समपूपुजत्। कालेन च सा स्वमात्रा सह गृहमागतवतीति सैषाऽलङ्कारवतीकन्या, अहञ्चास्या माता काञ्चनप्रभा नाम। अद्य चैषा मामनुवर्त्यैवेहायाता। त्वमपीहायातोऽसि इति प्रज्ञप्तिविद्यातो विज्ञाय अहमिहायातेति देवतादिष्टां सुतां मामकीनामिमां त्वमुपयच्छस्व। प्रातश्चैतत्पित्रोक्तो विवाहावसरः सम्प्राप्त इति त्वमितः कौशाम्बीं व्रज। आवाञ्चेतस्तपोवनात्प्रातर्गन्तास्व इति राजाऽलङ्कारशीलः सुतां स्वकीयामिमां स्वत एव तुभ्यं दास्यतीति। काञ्चनप्रभयैवमुक्तो नरवाहनदत्तो रजनीमात्रमप्यलङ्कारवतीविश्लेषासहमानात्मा साश्रुलोचनः कौशाम्बीमागत्य तत्र च यथाकथञ्चित्परिजनेभ्यः तास्ताः कथाः शृण्वन् त्रियामां तामत्यवाहयत्। प्रातश्चोत्थाय विहितावश्यककृत्यो गगनादवरोहन्तीं भर्त्रा अल-

१. 'उपसर्गस्य घञ्यमनुष्ये बहुलम्'। २. 'सर्वैकान्यकिंयत्तदः काले दा'।

# अथ तद्धितद्विरुक्तनिर्देशात्मकः पञ्चमः कल्लोलः

इतोऽनङ्गप्रभायां च हरिवरपुरस्थस्य राज्ञो हरिवरस्यान्तःपुरे मुख्यतां प्राप्तायां, तदेकाग्रमनसि सुमन्त्राख्यात्मामात्यन्यस्तसमस्तराज्यभरे च तिष्ठति भूभृत्येकदा मध्यदेशतः समागतो लब्धवरो नाम नाट्याचार्यः सम्राणनै[1] कट्यमाटत्। वाद्यनाट्यदृष्टकौशलाकृष्टेन च राज्ञा निजावरोधनाट्याचार्यो विहित इति सोऽनङ्गप्रभां नृत्ये एवमुत्कृष्टां व्यधात् यत्तस्यै सपत्न्योऽप्यस्पृहयन्[2]। कालेन नृत्यशिक्षाभ्याससहवासविवृद्धातिपरिचयपरस्पराकृष्टयोश्च तयोरेकदा स्मरशरासुशरशीर्यमाणशरीरा, रहसि रतलालसया परित्यक्तस्वधा[3]र्मपतभावाऽनङ्गप्रभा नाट्याचार्यमुपागम्य तेन सह रममाणा सुरतसुरतात्यन्तसन्तुष्टा जगाद, 'नाहं त्वया विना क्षणमप्यवस्थातुं शक्नोमि किन्त्ववगतैतत्तत्त्वो हरिवरो नैव नाविहैवं स्थातुं क्षंस्यत इतीतोऽन्यत्र कुत्रचिदज्ञातस्थानं त्वरितमाश्रयितुं श्रेयः। त्वन्नाट्यतुष्टराजप्रदत्तौष्ट्र[4]कमश्वीयञ्च तव, मम च हिरण्मयालङ्काराः सन्तीत्यन्यत्रगमने स्थितौ वा न कामप्यसौविधीमहमनुमिनोमि। एतदाकर्णितेन नाट्याचार्येणाप्यनुमोदितेऽस्मिन् प्रस्तावे परिवर्तितवेषाऽनङ्गप्रभा विश्वस्तयैकया चेट्या सह नाट्याचार्यगृहमागत्योष्ट्रपृष्ठार्पिततदनल्पचारणर्द्धिरवधीरितविद्याधरर्द्धिः खागप[5]त्यरयं हयं समारूढा रूढानुरागनाट्योपदेशिना सह ततः प्रयान्ती वियोगपुरसंज्ञकं सुदूरं नगरमवाप्य ससुखं तस्थौ। राजा हरिवरश्च अनङ्गप्रभा नाट्याचार्येण सह गतेति सन्दिग्धनिदग्धस्तद्वियोगशुग्घुतभुग्दन्दह्यमानमेदोमज्जो निमज्जन्नपि दृश्यमानभवस्थित्यनित्यसम्बन्धगम्भीरविचारविधौ, धैर्यनीरनिधौ, न कथमपि शान्तिं लभमानो देहत्यागोन्मुखो बभूव। किन्तु मन्त्रिणा क्षणानुरागिणीर्विलासिनीरेवं जानानोऽपि भवान् कथमेवं स्त्रीव[6]द् विह्वलीभवत्येवं सम्यगवबोधितः, परित्यक्तशोकः, स्वदारेष्वेव समतुष्यत्। वियोगपुरे च तत्रानङ्गप्रभया सह कञ्चित्कालं स्थितस्य नाट्याचार्यस्य

१. 'न पदान्ताट्टोरनाम्' इति ष्टुत्वनिषेधः। २. 'नित्यं सपत्न्यादिषु'। ३. अश्वपत्यादिभ्यश्चेत्यण्। ४. 'गोत्रोक्षोष्ट्रोरभ्रेत्यादिना वुञ्। ५. दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः। ६. 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादे'तत् वत्यर्थे न प्रवर्तते।

कालेयकेलिकलितस्य[1] सुदर्शनाख्येनैकेन द्यूतकरेण सङ्गतिः सञ्जातेत्यचिरेणैव द्यूतापहारितसर्वस्वं तं त्यक्त्वाऽनङ्गप्रभा सुदर्शनमेव स्वपतित्वेनाशिश्रियत्। नष्टदारधनो नाट्याचार्यश्च निराश्रितो वैराग्यात्प्रवृद्धजटस्तटं तटिन्या गङ्गाया-स्तपसे समाश्रयत। नवनवप्रियप्रियाऽनङ्गप्रभा च तत्रैव सुदर्शनेन सह तस्थौ।

एकदैकागारिकैरावृतो[2] मध्यरात्रे[3] सुदर्शनो मुषिताशेषसर्वस्वीकृत इति द्रव्याभावात्स स्वमित्राद् हिरण्यगुप्ताद् वणिजः किञ्चिद्धनमृणरूपेणादातुमनङ्ग-प्रभया सह परामृशत्। तथा स्वीकृतवत्या च तया सहैव निजमित्रगृहं गत्वा धनमयाचत्। तत्र वणिगनङ्गप्रभोभयान्योन्यालोकने सञ्जाते तावन्योन्याभिलाषौ सञ्जाताविति कुशलो वणिक् सुदर्शनमपरस्मिन् दिने धनं दातुमुक्त्वा तस्मिन् दिने स्वगृहे भोक्तुमुक्तवान्। किन्तु सुदर्शनेन प्रत्याख्याते भोजने 'अस्तु, तव वनिता प्रथममेवास्माकं गृहमायातेतीयमेव भुङ्क्ताम्' इति तन्मित्रेणाग्रहः कृतोऽ-तस्तूष्णींभूते सुदर्शने कितवो वणिगनङ्गप्रभायुक्तोऽभ्यन्तरं प्राविशत्। अतर्कि-तोपनतया च तया सह यथेच्छं पानाहारविहारादि कुर्वाणस्तत्रैव व्यलम्बत। सुदर्शनश्च बाँहीकप्रकोष्ठे तन्निर्गमं प्रतीक्षमाणो वणिक्प्रेरितसेवकैरुक्तो यत्त्वदीया भार्या भुक्त्वा भवनं गतेति तवात्र स्थितिरनर्थिका[4]। साद्यावधि न निर्यातेत्यु-क्ताश्च ते निर्बन्धपरं तं सपादप्रहारं बहिर्निरकालयन् इति निरतिशयं दुःखि-तस्तेन सुदर्शनो निजमित्रेणापहृतां स्ववनितामनुचिन्त्य 'यन्मयाऽन्यस्य कृतं तन्ममान्येन कृतमिति कोपार्हं स्वकर्मैवात्र हेतु। अतस्तस्मै क्रोधो व्यर्थः' इति विचार्य भवच्छेदि तपस्तप्तुं बदरिकाश्रममगमत्। अनङ्गप्रभा च रूपाधिकं वणिक्पतिमवाप्य पुष्पात्पुष्पं गता भृङ्गीव तत्रानङ्गरसास्वादनं कुर्वाणा, विपुल-श्रियस्तस्य प्राणधना, प्राणेषु, धनेष्वपि च स्वामिनी संजाता। किन्तु बन्धक्य-धिष्ठिते गृहे कुलस्त्रीव श्रीर्म्लायतीति कतिपयैरेव दिनैरल्पीभूतधने हिरण्यगुप्ते, लुप्ते चाखिलबाह्याडम्बरे, सम्भृतभाण्डकोऽसाववशिष्टधनमादायानङ्गप्रभया सह वणिज्यार्थं सुवर्णभूम्याख्यद्वीपे[6] सागरपुरनामकं नगरमवाप। तत्राब्धिजीविना सागरवीराख्येन निषादाधिपेन चामिलत्।

---

१. अग्निकलिभ्यां ढक् वक्तव्यः। २. 'ऐकागारिकट् चौरे' ३. 'संख्याविसाय'—इति ज्ञापकस्य सामान्यत्वात् 'सर्वोऽप्येकदेशः कालेन समस्यते' इति समासानन्त-रम् 'अहः सर्वैकदेश०' इत्यच्। ४. 'ईकक् च' इति ईककि|चाट्टिलोपः। ५. 'स्थागा-पापचो भावे', 'द्यतिस्यतिमास्थामित्तिकिति'। ६. 'द्व्यन्तरुपसर्गेभ्योऽप ईत्'।

एकस्मिन् दिने प्रियासखः स सागरवीरेण तद्यानमारुह्य यावदग्रे याति तावद् बलिना मातरिश्वना प्रेरितेन संहारभयदेन बलाहकेन[1] स्वकीयस्थूलवर्षधारेण नैषादस्य[2] सागरवीरस्य यानपात्रे सागरोत्तालतरंगेषु भज्यमाने, इतस्ततोऽस्तव्यस्ते, विमुक्ताक्रन्दे च तत्रत्ये सपरिजने सर्वजने, वणिजो जातायनो[3]ऽनङ्गप्रभामुखमवलोक्य हा प्रिये ! त्वं क्वासीत्युक्त्वात्मानमम्बुधौ क्षिपन् बाहुविक्षेपेण च दैववशादेकां वणिक्प्रवाहिणीमवाप्यारुरोह । जलप्रपतिताऽनङ्गप्रभा च सागरवीरेण रज्ज्वा झटिति निबध्याध्यारोपिता काष्ठफलकमेकं स्वयमारुह्य भीतां तामाश्वासयन् बाहुभ्यां वारि विक्षिपन् प्लवमानोऽब्धौ ययौ । वणिक्प्रवहणमारूढो हिरण्यगुप्तश्च पञ्चाहेनाब्धेः कूलं प्राप । शनैः स्वनगरं चागत्य बद्धधृतिधीराशयो भूयोऽर्थानुपार्ज्य निर्ववृते । फलकस्थितानंगप्रभा च सहसा सागरवीरेण सह सागरतटमवाप्य सागरपुरे निजभवनमानीता । तत्र च राजसमश्रीकं प्राणदायिनं यौवनसौन्दर्योपपन्नमाज्ञाविधायिनञ्चावलोक्य तं दाशपतिमेव पतित्वेन स्वीकृत्य तद्वेश्मनि तदर्पितां समृद्धिमुपभुञ्जानाऽजानान्न व्यह्वान् ।

एकदा च हर्म्याग्रस्थिता सा तयैव रथ्यया यान्तं विजयवर्माख्यं भव्यं राजन्य[4]मवलोक्य रूपलुब्धा सा ततोऽवतीर्य दर्शनाकृष्टचित्तात्मानं स्वप्रणयिनीं विधातुं तं प्रार्थितवतीति हृष्टेन तेनाकाशपतितेव सुन्दरी स्वभवनमानीता । सागरवीरश्च तां क्वापि गतां बुद्ध्वा परित्यक्तसर्वस्वः तपसा स्वतनुत्यागाय कृतगाङ्गायनि[5]प्रतिज्ञो गंगातटमाश्रयत् । अनङ्गप्रभा च भाद्रमातुरेण[6] विजयवर्मणा सह तत्रैव यथासुखं निरर्गला तस्थौ ।

एकदा तत्रत्यो राजा सागरवर्मा स्वनामनिवासितं स्वपुरमवलोकितुं निर्गतः समारूढकरेणुकस्तेनैव पथा निर्ययौ । आयातञ्च नृपमवलोकयितुं वरारोहा सारुरोहाऽनंगप्रभा हर्म्याग्रभागमिति तद्दर्शनसमकालमेव तदाकृष्टचित्तोवाच 'काल्याणिनेय[7], हस्तिपक, नाहं जातुचिदपि हस्तिनमारूढेति हस्तिन[8]मारोप्य मामनुभाविततदारोहणसुखां कुरु ।' एवमुक्ते आधोरणे राजानमवलोकमाने, दिवश्च्युतामिन्दुकला-

---

१. पृषोदरादित्वाद् वारिवाहको बलाहकः । २. 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' । ३. 'पुंसि जाते' इति फञ् । ४. 'राजश्वशुराद्यत्', 'ये चाभावकर्मणोः' । ५. गाङ्गायनिर्भीष्मः, 'तिकादिभ्यः फिञ्' । ६. 'मातुरुत्संख्यासम्भद्रपूर्वायाः' । ७. 'कल्याण्यादीनामिनङ्' इतीनङ् ढक् च । ८. 'हस्ताज्जातौ' इतीनिः ।

प्रभामिवानंगप्रभामवलोक्य अङ्गारूढवशोऽप्यनङ्गारूढभावविवशः, स्वशौर्यविनिर्जितविस्तृतसर्वाशोऽपि तत्प्राप्तिनिबद्धाशः सागरवर्मा, करेणुकारोपणेन तन्मनोरथं पूरयितुं हस्तिपकमादिदेश। राजाज्ञया च हस्तिपकेनानुहर्म्यमुपढौकितां करेणुकामालोक्यानंगप्रभा सागरवर्मण उत्सङ्गे आत्मानमपातयत्। राजा चापि तां गृहीत्वाऽऽशु स्वमन्दिरमवाप्य तत्र स्वमुखप्रतिपादिताखिलवृत्तान्तां तां द्युचराङ्गनामन्तःपुरं प्रवेश्य महादेवीं चकार। विजयवर्मा च राजहृतामेतामवगत्यागत्य च तत्र बहीराजद्वारं राजभृत्यैर्युध्वाऽध्वानमाश्रयत्प्रेतपुर्याः। अनङ्गप्रभा चातः परमनन्यगामिनी नदीव सागरे स्थिरा तेन पत्या सङ्गता कृतार्थमात्मानं मन्यमाना परित्यक्तबहुपुंसी[1] अपीदानीमेकपुंस्का[2] समजायत।

व्यतीतेषु कतिपयदिवसेषु अन्तर्वत्नी अनङ्गप्रभा यथाकालं सुतं प्रासोष्ट। राजापि ब्राह्मणमाकार्य पृष्टशुभलग्नः स्वविभवानुरूपं सुहृद्भिः, सौहार्दैः[3], पैतृष्वसेयैः[4], मातुलैः[5], मातृष्वस्रीयैः[6], सौभागिनेयैः[7], भागिनेयैः[8], अन्यैश्चापि बन्धुबान्धवैः तन्मित्रैस्तन्मैत्रेयैः[9], अजातभ्रातृव्यैः[10], भ्रातृव्यैः[11], माहा[12]कुलीनैराढ्य[13]कुलीनैर[14]न्यैश्चोरसवसम्मिलितैः[15] क्षत्रियैः मिलित्वा कृतजातसंस्कारादिसमुत्सवः 'समुद्रवर्मा' इतिनाम्ना सुतमलङ्कृतवान्।

क्रमाच्च यौवनमवतीर्ण आनङ्ग[16]प्रभेयः समुद्रवर्मा स्वपित्रानुमतो दिग्विजयाय प्रतस्थे। तत्र च विभिन्नदिश्यान्[17] पाञ्चा[18]लान्, [19]पौरवान्, [20]पाण्ड्यान्, सौर[21]मसान्, सौवीर्यान्[22] विजित्यावाप्तापरिमितकुप्याकुप्यः स्वनगरमागतो नाना-

---

१. परित्यक्ता बहवः पुमांसो यया सा परित्यक्तबहुपुंसी—शेषाद्विभाषेति वैभाषिककबभावे पूञो ङुमसुञ्त्रियुगित्वलक्षणा ङीप्। २. उरःप्रभृतिषु एकवचनान्तस्य पुमान्शब्दस्य पाठात् नित्यं कप्। ३. सुहृदोऽपत्यमिति विग्रहे 'तस्यापत्यमि'त्यणि 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य चे'त्युभयपदवृद्धिः। ४. 'ढकि लोपः'। ५. 'मातुर्डुलच्'। ६. 'मातृष्वसुश्चेति' छण्। ७. सुभगाया अपत्यम्–'कल्याण्यादीनामिनङ्' ढक् च। ८. 'स्त्रीभ्यो ढक्'। ९. 'प्रज्ञादिभ्यश्च'। १०. 'दाण्डिनायनहास्तिनायन०'। ११. 'व्यन्सपत्ने'। १२. 'भ्रातुर्व्यच्च'। १३. 'महाकुलादञ्खञौ'। १४. 'कुलात्खः'। १५. 'क्षत्राद्घः'। १६. 'स्त्रीभ्यो ढक्'। १७. 'दिगादिभ्यो यत्।' १८. 'क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्'। १९. 'पूरोरण् वक्तव्यः'। २०. 'पाण्डोर्ड्यण्'। २१. 'द्व्यञ्मगधकलिङ्गसूरमसादण्'। २२. 'वृद्धेत्कोसलाजादाञ्ञ्यण्'।

देशोद्भवमहार्हरत्नहास्तिनायनादिभिः[1] पुत्रपराक्रमातितुष्टयोः पित्रोश्चरणान् पूजयामास। तदाज्ञापितश्च ब्राह्मणेभ्यो हस्त्यश्वहेमरत्नादीनि दत्त्वाऽर्थिभ्यो दरिद्रेभ्यश्चापि तथैव पुष्कलं द्युम्नं दयित्वा दरिद्रशब्दमेवार्थदरिद्रं स्वराष्ट्रे निःशेषितवान्।

तस्मिँश्चैवं पित्रा सहावलम्बमाने राज्यधुरे विषप्रयोगः[2] माण्डूकेयेषु[3], कापेयता[4] कापेयेषु[5], नकुलीनत्वं[6] कौलटिनेयेषु[7], नीडनिवासः[8] चाटकैरेषु[9], द्विजिह्वता[10] गौधेरेषु[11], जडता जाडारेषु[12], क्षुद्रतोत्पत्तिः[13] कारोरेषु[14], [15]गुणविच्छेदः तान्तुवाय्येषु[16] [17]कुटिलिकासंग्रहः कार्मार्यायणिषु[18], अजत्वं छागायनिषु[19], तीक्ष्णता तक्ष्णेषु[20] नान्येषु दृश्यतेस्म।

पुत्रस्यैवं माहात्म्यमवलोक्य सानन्दप्रभः सागरवर्मा भुक्ताखिलराज्यसुखोऽननुभूतपरपराभवः सर्वं राज्यभारं योग्यतमे स्वपुत्रे संस्थाप्य विनश्वरेणापि शरीरेणानश्वरस्य तपसः पुण्यस्यार्जिजयिषयाऽनिच्छत्यपि पुत्रे प्रयागं ययौ। समुद्रवर्मा चापि कतिचित्प्रयाणकं पितरमनुव्रज्य निजनगरं परावर्तितो यथोक्तविधि स्वराज्यं शशास।

---

१. 'दाण्डिनायनहास्तिनायन०'। २. विषम् जलम्, तस्य प्रकृष्टेन योगः संयोगः प्रयोगो वा। ३. 'ढक् च मण्डूकात्'। ४. ईषदपेयता ( 'ईषदर्थे' इति अजादौ कोः कादेशः ) कापेयेषु—कुत्सितपेयपदार्थेषु। ५. कपेरपत्यमिति ( 'इतश्चानिञः' ) ढकि कापेयेषु कप्यपत्येषु। ६. न कुलमस्येति 'नभ्राण्नपात्'—इति प्रकृतिभावे नकुलः तस्य स्त्री नकुली तस्या इनत्वम् स्वामित्वम् कुलीनत्वाभावश्च। ७. 'कुलटाया वा'। ८. निर्गता ईडा ईशस्तुतिः यस्मात्स चासौ निवासः, कुलायनिवासश्च। ९. 'चटकाया ऐरक्'। १०. पिशुनता द्विजिह्वता च। ११. 'गोधाया ढ्रक्'। १२. 'आरगुदीचाम्'। १३. क्षुद्राया भावः क्षुद्रता, 'त्वतलोर्गुणवचनस्ये'ति पुंस्त्वम्, तस्या उत्पत्तिः। १४. 'क्षुद्राभ्यो वा' इति ढ्रक्। १५. सूत्रविच्छेदः। १६. 'सेनान्तलक्षणकारिभ्यश्चे'ति ण्यः। १७. कुटिलिका अयस्कारोपकरणं लोहम् तत्संग्रहः, कौटिल्ये आग्रहो वा। १८. कर्मारस्य अयस्कारस्यापत्यमिति विग्रहे 'कौशल्यकार्मार्याभ्याञ्च इति विहितस्य फिञ आयनादेशे तस्य 'दगुकोसलकर्मारच्छागवृषाणां युड् वादिष्टस्य' इति युडागमः। १९. 'छागवृषयोरपि' इति फिञ् तत आयनादेशे 'दगुकोसलकर्मारच्छाग०' इति युडागमः। २०. 'तक्ष्णोऽण उपसंख्यानम्' इत्यणि 'षपूर्वहन्धृतराज्ञामणि' इत्यलोपः।

सागरवर्मा च दैवयज्ञ्यैः[1] सात्यमुग्र्यैर्महात्मभिः[2] सत्सङ्गप्रसङ्गेन संगतो गृहीतकाषायोऽपि[3] विगतकषायः[4] प्रयागे तपसा वृषध्वजं सन्तोषयन्नेकदा निशावसाने त्रिपुरारिणोक्तः 'त्वम्, एषा अनङ्गप्रभा चोभौ विद्याधरौ प्रातर्निजशापक्षयान्निजलोकं प्राप्स्यथः।' एवमुक्तः प्रबुद्धो राजा यावदनङ्गप्रभां सर्वं वर्णयति तावद्दिवोऽवतीर्णो निजजातिस्मरायाः तस्याः पिता समरः समायातः। सागरवर्माणञ्च तस्य मदनप्रभसंज्ञकभूतपूर्वविद्याधरत्वमात्मनश्च समरनामकानङ्गप्रभाभूतपूर्वपितृत्वञ्चावेद्य रूपगर्वितया तयाऽन्यपतिपरित्यागात् तुल्यगुणमङ्गीकर्त्तुमत्युरकं तत्तत्पतिपरित्यागेन जातरोषेणात्मना प्रदत्तं मानुषीभवनरूपं शापं तदवधिञ्चोपवर्णितवान्।

तद्वर्णितमखिलमाकर्ण्य संजातजातिस्मृती जम्पती विद्याधरत्वमवाप्यान्योन्यदिव्यवपुर्विलोकनविलसद्गाढानुरागौ बभूवतुरिति विद्याधरीरूपामनङ्गप्रभामात्मभूतपूर्वकन्यां विद्याधररूपिणे भूभृते ददौ। सोऽपि च क्षपितशापया तया ससुखं स्वपुरं ययौ।

इत्थं स्वकीयदुर्नयविपाकवशेन दिव्या अपि शापच्युता मनुष्यलोके आयान्ति। समुचितफलभोगानन्तरमुचिताञ्च निजगतिं पूर्वार्जितसुकृत्यनुकूलं परावर्तन्ते।'

निजमन्त्रिणो गोमुखमुखादेवंभूतां कथामाकर्ण्यातिसन्तुष्टः सालङ्कारवतीको नरवाहनदत्तो दिनकृत्यं तदानींतनं विसर्जिताखिललोको निष्पादितवान्।

एकदा स कार्तिकिके[5] मासि, पौषेऽहनि[6], रथमारुह्य गोमुखादिभिः सह मृगयार्थं गतोऽनुगैः सह मृगयां चिक्रीड। स्यन्दने स्थित एव च बहून् सिंहवृक-चित्रकादीन् सायकैरवधीत्। नभोमध्यमध्यारोहति च हरितहये परिश्रान्तः ससारथिगोमुखस्तृषाक्रान्तः सलिलान्वेषणक्रमान्महावनमन्यदेकं विवेश। ददर्श च तत्र प्रफुल्लहिरण्याब्जं, वीचिसम्पर्केणार्कबिम्बेन भुवनतल-

---

१. दैवयज्ञिशौचि—इति ष्यङ् देवाः यज्ञा यष्टव्याः यस्य तस्यापत्यमिती ञन्तात् ष्यङ्। २. उग्रं सत्यं यस्येति निपातनात् विशेष्यस्य पूर्वनिपातो मुमागमश्चेतीञन्तात्सात्यमुग्रिशब्दात् दैवयज्ञीत्यादिना वैभाषिकः ष्यङ्। ३. 'तेन रक्तं रागात्'। ४. रागादिवासनया अखण्डवस्त्वनवलम्बनम्।

५. कृत्तिकानक्षत्रेण युक्ता पौर्णमासी कार्तिकी 'नक्षत्रेण युक्तः कालः' इत्यण्, ङीप् ततः 'विभाषाफाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' इति वैभाषिकः ठक्। ६. 'नक्षत्रेण युक्तः कालः'।

मवतीर्णं नभ इव विराजमानं, दिव्यमेकं सरः। तत्र स्नातः पीताम्भाः, कृतेश्वरस्मरणादिरेकदेशेऽदर्शच्च दूरात्तस्मात्सरस उच्चित्य हेमाम्बुजानि गृह्णतो दिव्याकृतीन् परिहितरौचनिक[1]-शाकलिक[2]-पीतक[3]-माहारजन[4]-वस्त्रालङ्कारविभूषितान् चतुरः पुरुषान्। अवलोक्य च तान् कौतुकाकृष्टनरवाहनदत्तेन कस्त्वं कस्मादसीति च तैः, पृष्टेन सर्वथा स्वपरिचयं दत्वा प्रसादितास्ते पृष्टपरिचया एवं वक्तुमारभन्त—'देव, 'मध्येमहाम्भोधि, नारिकेलद्वीपनाम्ना जगद्विख्यातं महदेकं श्रीमद्द्वीपवरमस्ति। यत्र च दिव्यभूमयो मैनाक-वृषभ-चक्र-बलाहकाश्चत्वारो महापर्वताः। एकैकस्मिंश्च तत्रास्माकं निवासः। एकोऽस्मासु स्वेच्छया विविधरूपधारी रूपसिद्धिनामधेयः। बृहत्सूक्ष्म-प्रमाणदर्शी प्रमाणसिद्धिर्द्वितीयः। सर्वदैवतसिद्धिश्च देवसिद्धिश्चतुर्थः। ते वयं, हेमकमलान्येतान्यस्मादादाय साम्प्रतं श्वेतद्वीपस्थितं भगवन्तं श्रियः पतिं पूजयितुं यामः। वयं हि तद्भक्तास्तत्प्रसादेन च पर्वतेषु तेषु अस्माकमाधिपत्यं सिद्धियुक्ताः सम्पत्तयश्च वर्तन्ते। भवतस्तत्र जिगमिषा चेद् एहि, अन्तरिक्षेण त्वां तत्र नयामः।' देवपुत्रैरेवमुक्तो नरवाहनदत्तः स्वाधीनाम्बुफलादिके तस्मिन्नेव द्वीपे गोमुखादीनवस्थाप्य तन्मध्याद्देवसिद्धिनोत्सङ्गे गृहीतो वैहायसेन पथा श्वेतद्वीपमवाप। तत्र दूरादेव गगनादवतीर्योपसर्पन् पार्श्वस्थिताऽभिधतनूजसविग्रहैः शंख-चक्र-गदा-पद्मैः सेव्यमानं गन्धर्वैर्नारदादिभिश्च भक्त्या स्तूयमानं सिद्धैर्विद्याधरैश्च प्रणम्यमानं पुरः समुपविष्टवैनतेयं, शेषशय्यागतं लक्ष्मीपतिं ददर्श। देवपुत्रैः कश्यपादिभिश्चार्चितं तं नरवाहनदत्तोऽपि प्राञ्जलिरतिप्रह्वो भृशम् उपाश्लोकत्[5]। कृतस्तुतिञ्च तं प्रसादद्दृष्ट्याऽवलोक्य हरिर्नारदमभ्यधात्, 'क्षीरोद[6]सम्भवा वराप्सरसो मया पुरा इन्द्रस्य हस्ते न्यासीकृत्य स्थापिताः। अतोऽमरावतीं गत्वा सर्वास्ता ऐन्द्ररथे समारोप्य सत्वरमिहानय।' एवमादिष्टो हरिणा नारदस्तथेत्युक्त्वा यथानिर्दिष्टं गत्वा मातलिसहिताः सर्वा अप्सरसस्तत्रानीतवान्। ताश्चालोक्य भक्तभावनो भगवान् वत्सराजतनूजमादिदेश 'नरवाहनदत्त, एता अप्सरसः

---

१. 'लाक्षारोचनाट्ठक्'। २. 'शकलकर्दमाभ्यामुपसंख्यानम्' शकलं त्वचि खण्डे च रागवस्तुनि वल्कले' इति विश्वः। ३. पीतात्कन्। ४. हरिद्रामहारजनाभ्यामञ्। ५. श्लोकैरुपास्तौषीत्, 'मुण्डमिश्र०' इत्यादिना णिच्। ६. 'उदकस्योदः संज्ञायाम्', इत्यत्र 'उत्तरपदस्य चेति वक्तव्यम्'।

कामावताराय विद्याधराणां भाविचक्रवर्तिने च तुभ्यं मया दीयन्ते। त्वमेवासामुचितो भर्ता।' एतदाकर्ण्य पादयोः पतिते वत्सराजसुते तदभीष्टमार्गेण स्वगृहं प्रापयितुं हरिणा मातलिरुक्तः इति स ताभिरप्सरोभिः सह देवपुत्रैश्च तं स्वरथे समारोह्य नारिकेलद्वीपमगात्। तत्र च रूपसिद्धिप्रभृतिभिः समातलिरर्चितो नरवाहनदत्तो मैनाकवृषभाद्येषु स्वर्गर्द्धिषु तन्निवासपर्वतेषु समरंस्त। समुत्फुल्लपुष्पपल्लवतल्लजकह्लारेषु सरस्सु नानातरुवनासु तदीयोपवनभूमिषु च विजहार। परभृतिकाकूजितालिकुलकलकलकलितकलिकालितदुपवनावलितत्पुरेषु च चिक्रीड। समुचितान् तत्रत्यान् भोगाँश्चामरोचितान् बुभुजे। त्रिचतुराँश्च दिवसाँस्तत्र न्युष्य निजतातदर्शनोत्को निजसुहृदः प्रति कौशाम्बीपराविवर्तिषामभिव्यानञ्जेति तत्प्रतिमुक्तः समुपस्थापितेन्द्ररथं मातलिमुवाच, 'यत्र सरस्तीरे मदीया गोमुखादयो वर्तन्ते तेन पथा गत्वाऽस्मान् कौशाम्बीं प्रापय।' मातलिश्चापि तदादेशानुसारं साप्सरसं तं रथे समारोप्य मार्गे गोमुखादीँश्चादाय कौशाम्बीमागतवान्। तत्र नभसोऽवतीर्य सम्पूजितं मातलिं परावर्त्याप्सरोभिः सह स्वभवनं प्रविष्टो नरवाहनदत्तो निजागमनहृष्टयोस्तद्दर्शनतृप्तचक्षुषोश्च पित्रोश्चरणानवन्दत। स्थिते च तत्र मन्त्रिवर्गे पित्रा पृष्टो महाद्भुतं स्वपरावर्तनान्तं वृत्तान्तं सन्मित्रसंयोगसम्बद्धमादितोऽवर्णयत्। वत्सेश्वरोऽपि च हरिप्रसादेन ताश्चतस्रोऽप्सरसः स्नुषारूपेणावाप्ता इत्यवगत्यातिहृष्टः स्वानुगृहीतस्येश्वरोऽनुकूलकल्याणमित्रसंयोगं करोतीति शंसन्नच्युतानुग्रहोपलक्षकं महान्तमुत्सवं चकार। नरवाहनदत्तश्चान्या निजसंयोगोत्सुका भार्याः पार्थक्येन सम्भावयामास; ताश्चापि निजविरहवेदना उपवर्णयन्त्यस्तमनन्दयन्नित्येवं-मधुरालापैः कालं नयन्नरवाहनदत्तः ससुखं न्यवसत्।

एकदा प्रातः कृतावश्यककार्यो गोमुखादिभिः सह विजिहीर्षया स्वोद्यानमाश्रितो व्योम्नोऽवतरन्तीषु बह्वीषु[1] विद्याधरीषु विकसत्पद्मवदनां[2], लोललोचनषट्पदाम्, उत्पलगन्धिम्[3], स्मरसञ्जीवनीमिव कन्यामेकां ददर्श। दृष्ट्वा, चैन्दवीं मूर्तिमम्भोधिरिव तदा तत्कर्णजाहविलोचनकटाक्षविक्षोभितः कार्णवेष्टकिक[4]तन्मुखदत्त-

1. 'बह्वादिभ्यश्च' इति ङीप्। 2. 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति वैकल्पिको ङीषोऽभावः। 3. 'उपमानाच्च'। 4. 'सम्पादिनि'इत्यनेन कर्णवेष्टकाभ्यां सम्पादि इत्यर्थे ठञ्।

दृष्टिर्नृपात्मजो जिज्ञासिततत्परिचयः उक्तः, 'देव, हिमालये काञ्चनशृङ्गाख्यं हैमं पुरमस्ति। तत्र कृपणानाथशरणागतकरुणावरुणालयः स्फटिकयशोनामा विद्याधरो निवसति। तस्य हेमप्रभादेव्यां जाता गौरीवरोद्भवा शक्तियशोनाम्नी तनया। पितुः प्राणप्रियाऽहमात्मनः[1] षष्ठी कनीयसी। तदादिष्टा व्रतैः स्तोत्रैश्च पार्वतीमतोषयमिति सन्तुष्टा साऽऽविर्भूय सकला विद्या दत्वा पितुरपेक्षया दशगुणं मे बलं नरवाहनदत्तं भर्त्तारञ्च द्युचारिणां भाविचक्रवर्तिनं निर्दिश्य तिरोदधे। तत्प्रसादादुपलब्धविद्याबलाऽहं क्रमात्प्राप्तयौवनिका[2] जवनिका इव मायायाः यूनामक्ष्णां, क्षपायां दत्तदर्शनया देव्योक्ता यत्प्रातस्त्वया निजो भर्ता द्रष्टव्यः। तव पिता चेह मासे[3] त्वां समायातो वासुद्वाहं विधास्यति। एवमभिधाय तिरोभूतायां तस्यां व्यतियापितत्रियामा रामाहं त्वामालोकयितुमिहायातेति साहं भवन्तमवलोक्य ससखीजनाद्य व्रजामि। एवमुक्त्वा खमुत्पतितायां शक्तियशसि तद्विवाहोत्सुको नरवाहनदत्तो मासं युगोपममनुभवन्नभ्यन्तरं प्रविवेश। तञ्च तथाभूतमतिविमनायमानमालोक्य गोमुखस्तन्मनो रञ्जयितुं पुनः कथामेकामेवमवर्णयत्—

आसीत्पुरैका निरीतिकृषीवलखल्या[4][5], वन्यागोचरभूमिसुरक्षिततृण्या[6][7], क्वचित्संधुक्ष्यमाणगार्हपत्या[8], अन्यत्र वाजपेयिकोत्सृज्यमानबार्हस्पत्या[9][10], दीयमानकाया[11], पठ्यमानश्राया[12], अभिषिच्यमानशतरुद्रीया[13], जोहूयमानमाहेन्द्र[14] सोम्यो[15] षस्य[16] शुनासीरीया[17], संस्क्रियमाणाष्टाकपाल[18] पुरोडाशा, सन्तोष्यमाण-

---

१. आत्मनश्च'; 'पूरण इति वक्तव्यम्'। २. 'द्वन्द्वमनोज्ञादिभ्यश्चे'ति मनोज्ञादित्वाद् वुञ्। ३. सप्तमीपञ्चम्यौ कारकमध्ये इति कर्तृकर्मशक्त्योर्मध्ये काले सप्तमी। ४. 'रजःकृष्यासुतिपरिषदो वलच्', 'वले'। ५. खलानां धान्योत्पवनस्थानानां समूहः 'खलगोरथात्'। ६-७. वनानां तृणानाञ्च समूहः, 'पाशादिभ्यो यः'। ८. 'गृहपतिना संयुक्ते ञ्यः'। ९. 'क्रतूक्थादिसूत्रान्ताट्ठक्'। १०. 'सास्य देवता'। ११. 'कस्येत्' (को देवताऽस्येति कायं हविः)। १२. श्रीर्देवताऽस्येति श्रायो मन्त्रः। १३. शतं रुद्राः (शतशब्दोऽनन्तवचनः) देवता अस्येत्यर्थे 'शतरुद्राद्घश्चे'ति छः। १४. 'महेन्द्राद्घाणौ च'। १५. 'सोमाट्ट्यण्'। १६. 'वाय्वृतुपित्रुषसो यत्'। १७. शुनो वायुः, सीर आदित्यस्तयोर्द्वन्द्वे देवता द्वन्द्वे चेत्यानङ्; शुनासीरशब्द इन्द्रवाचको वेति 'द्यावापृथिवीशुनासीर०' इत्यादिना छः। १८. 'संस्कृतं भक्षाः', 'द्विगोर्लुगनपत्ये', 'अष्टनः कपाले हविषि' इत्यात्वम्।

क्रमकाथर्वणिकवाडव्या[1][2][3], कन्यापसारणसंसूचयमाननिष्पादितपित्र्या[4] धरिव्याः शिरोमणिरूपा, अहरहर्निष्पादिताहीना[5] हीनालङ्कर्मीणप्राचीन[6] श्रोत्रिय[7] याजिताःगणितभूपा, समुच्छ्रायितबहुयूपा, अर्घ्यैः[8] पात्रियैः[9] दक्षिणीयैश्च[10] धरणीगीर्वाणैः, यज्ञि[11] यैरार्त्विजी[12] नैश्चाधिष्ठिता काञ्चनपुरी नाम नगरी। बभूव च तत्र पराजिताखिलनिजारातिः सुमनोनाममहीपतिः। स्वीयाश्वीयगजतौष्ट्रकपा[13][14] र्श्वप्रकाण्डकाण्डीर[15] कावचिक[16] सैनिक[17] बलाक्रान्तदुर्गकान्तारभूभागस्य च यस्य पादावनतौदु[18] म्बरशैब[19] वैदि[20] शादिराज[21] न्यकमौलिकिरीटखचितलौहि[22]-तीकवैदू[23] र्यादिमणिप्रभांशुद्विगुणितनखद्युतयोऽहर्निशं द्योतन्ते स्म। तमेकदाऽऽस्थानगतमवलम्बितवामपार्श्वकौक्षेयकः[24] प्रतीहारो व्यजिज्ञपत्—देव, स्वकीयभ्रात्रानुगता दूरेत्या[25], दाक्षिणात्या[26], लोहितबृहतिकाऽऽवृतापरकाया दुष्कु[28] लीनापि परिहितासिताप्रपदीना[29], समुपनद्धसर्वच[30] र्मीणानुपदीना[31] ध्यासीना बहिर्द्वारं निषादाधिपकन्यकैका मुक्तालतानामधेया पञ्जरस्थितं शुकमेकमादाय देवं

---

१. 'क्रमादिभ्यो वुन्'। २. अथर्वाणमधीते इति विग्रहे 'वसन्तादिभ्यष्ठक्'। ३. वाडवा विद्वान्सस्तेषां समूहः 'ब्राह्मणमाणववाडवाद्यत्'। ४. 'वाय्वृतुपित्रुषसो यत्'; 'रीङ् ऋतः', 'यस्येति च'। ५. 'अह्नः खः क्रतौ'। ६. 'विभाषाचेरदिक्स्त्रियाम्'। ७. 'श्रोत्रियँश्छन्दोऽधीते'। ८. 'दण्डादिभ्यो यत्'। ९. 'पात्राद् घंश्च'। १०. 'कडङ्करदक्षिणाच्छ च'। ११, १२. 'यज्ञर्त्विग्भ्यां घखञौ'। १३. 'गोत्रोक्षोष्ट्रेति'समूहे वुञ्। १४. 'पर्श्वा णस्, 'सिति' च। १५. 'काण्डाण्डादीरन्नीरचौ'। १६. 'ठञ्कवचिनश्चे'त्यनेन कवचिनां समूह इत्यर्थे ठञ्। १७. 'सेनाया वेति'पाक्षिकष्ठक्। १८. 'तदस्मिन्नस्तीति देशे तन्नाम्नि'। १९. 'तस्य निवासः'। २० 'अदूरभवश्च'। २१. गोत्रोच्चोष्ट्रेति वुञ्। २२. 'कर्कलोहितादीकक्'। २३. 'विदूराञ्ञ्यः'। २४. 'कुलकुक्षिग्रीवाभ्यः'-इति ढक्। २५. 'दूरादेत्यः'। २६. 'दक्षिणापश्चात्पुरसस्त्यक्'। २७. 'बृहत्याच्छादने'। २८ 'दुष्कुलाड्ढगिति' ढगभावे 'कुलात्खः'। २९. 'आप्रपदं प्राप्नोति'। ३०. 'सर्वचर्मणः कृतः खखञौ'। ३१. 'अनुपदसर्वान्नायानय'मिति खे, अनुपदं बद्धा अनुपदीना उपानत्।

दिद्दत्ते। एतच्छ्रुत्वा भावावबुभुत्सया स्वकीय[1]-पार्श्वतीय[2]-जनकीय[3]-राजकीय[4]-मुखतीय[5]-मुद्राः समालोकयमानेन राज्ञा 'को दोषः प्रवेश्यताम्' इत्यादिष्टेन प्रतीहारेण नृपास्थानमण्डपं प्रवेशिताऽद्भुतरूपभिल्लकन्यका राजानं प्रणम्यैवमब्रवीत्-

राजन्, वैयासकि[6]रिवाद्वितीयो भागवतः शास्त्रगन्धाख्योऽयं शुकः, परिशीलित कुमुदिक-काशिल'कौमुदिक[9]-कुमुद्वद्[10]देशः, सुपरिचितनाडायन[11]नडवच्च[12]नडकीय[13]-शिखावल[14]-बैल्वकेशः[15], अपूर्वोऽष्टको[16] वैयाकरण[17]:, व्युत्पन्नो नैयासिक[18]-नैयायिकः[19], अवगत-साङ्ग्रहसूत्रिकः[20], अद्वितीयोऽश्वलाक्षणिकः[21], विशिष्टत्रैविद्यः[22], विख्यातैतिहासिक-पौराणिकः[23], सर्ववेदः[24], कृत्स्नकलाविचक्षणः, समालोडितौपनिषद[25]तत्त्वः, ज्यौतिष-शास्त्रपारावारीणः[26], [27]अग्राम्यपरिहासपेशलः, नागरेयक[28]शिष्टाचारदक्षइतिपक्षिरत्नस्यास्य सर्वथा[29] देवोपयोगित्वान्मयायं [30]देवकीयपादमूलमानीतः। एवमुक्त्वा

---

१–५. 'गहादिभ्यश्च' इति छे 'स्वस्य च', 'मुखपार्श्वतसोर्लोपश्च', 'कुग्जनस्य-परस्य च', 'राज्ञः क च'। ६. वेदान् व्यसतीति वेदव्यासः (अस-गतिदीप्त्यादानेषु इत्यस्मात्कर्मण्यण्) नामैकदेशग्रहणे नाममात्रस्य ग्रहणम्, भीमो भीमसेनवत् 'तस्यापत्यम्' 'व्यासवरुडनिषादे'त्यादिना इञि, अकङि, 'नय्वाभ्यामि'त्यैच्। ७–९. 'वुञ्छण्कठ०'। १०. 'कुमुदनडवेतसेभ्यो ड्मतुप्'। ११. 'नडादिभ्यः फक्'। १२. 'कुमुदनडवेतसे'त्यादि०। १३. 'नडादीनां कुक् च'। १४. 'शिखाया वलच्'। १५. नडादित्वाच्छस्तस्य भवार्थकेऽणि 'बिल्वकादिभ्यश्छस्य लुक्' इति लुक्। १६. 'तदस्य परिमाणमि'त्यधिकारे अष्टौ अध्यायाः परिमाणमस्येति 'संख्यायाः संज्ञासंघसूत्राध्ययनेषु' इति कनि अष्टकं पाणिनीयं सूत्रं, तदधीते वेत्ति वा इति, 'तदधीते तद्वेद' इत्यण् तस्य 'सूत्राच्च कोपधात्' इति लुक्। १७. 'तदधीते तद्वेद', नय्वाभ्यां पदान्ताभ्याम्० इत्यैच्। १८-२०. 'क्रतूक्थादिसूत्रान्ताट्ठक्'। २१. 'विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्'। २२. 'अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्' इत्यनेन विद्यान्तलक्षणठको निषेधे, 'तदधीते तद्वेदे'त्यण् (अत्र तिस्रो विद्या अधीते इति विग्रहे तद्धितार्थे द्विगुर्न, द्विगोर्लुगनपत्ये इति लुकि त्रिविद्य इत्यापत्तेः। अतः त्रिविधा विद्यास्त्रिविद्यास्ता अधीते वेद वेत्येव विग्रहः)। २३. इतिहासं पुराणं वा अधीते वेद वा इत्यर्थे 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्चेति' ठक्। २४. सर्ववेदानधीते इति 'सर्वादेः सादेश्च लुग्वक्तव्यः'। २५. 'शेषे' इति शैषिकोऽण्। २६. राष्ट्रावारपाराद्घखौ। २७. 'ग्रामाद्यखञौ' २८, 'कत्त्रादिभ्यो ढकञ्'। २९. 'प्रकारवचने थाल्'। ३०. देववस्येदमितिविग्रहे गहादित्वाच्छे देवस्य चेतिकुक्।

प्रतीहारेण राज्ञः समीपे स्थापितः शुकः स्पष्टस्वरवर्णं मानवगव्योवाच—राजन्, युक्तमेव यद्भवद्द्विषद्वियुक्तकुटुम्बिनीनिःश्वासवातोद्गमसन्धिचितो भावत्को माहेय-प्रतापानलः प्रतिदिशं प्रज्वलति तथापि त्वन्निबन्धनपरिभवोत्पन्नसपत्ननारीबाष्पाम्बु-पूरप्लवैः सोऽन्वहमधिकं वर्द्धते इत्याश्चर्यम्। एवमुक्त्वा शुकः देव, न कोऽपि विष-योमयाऽनाख्येय इति किं प्रमेयं केन शास्त्रेण प्रमाणीकृत्य ब्रवीम्येतदाज्ञाप्यताम्। एतदाकर्ण्य तदीयविषयेऽतिसांशयिकविस्मयस्तिमितः सामात्यः सम्राट् शापात् शुकयोनौ समुत्पन्नं तं कमप्यपूर्वं जातिस्मरमृषिमाकलयन् 'कः, कुतः, कत्यो भवान् कथं च शुकयोनावुत्पन्नस्यापि तवेदृशी तात्कालिकव्युत्पत्तिरित्यादि वक्तुं तमाज्ञप्त-वान्' यदाकर्ण्य शुको बाष्पमुत्सृजन् 'देव, अवाच्यमपीदं कौतुकाकृष्टभवदाज्ञप्तो ब्रवीमि, श्रूयताम्' एवमुक्त्वा स्वसम्बन्धिनीं कथामेवं वक्तुमारभत—अस्ति हिमवन्निकटपर्वतीयप्रदेशेऽतिविशालो मार्यूर-शौकाद्यधिष्ठितो महाँस्तरुरेकः। तस्मिन्निजजायया सह निवसतः पश्चार्द्धे वयसि वर्तमानात् शुकादेकोऽहमेव सुत उदपादि। जातमात्रस्यैव च मम माता, मामकीनोत्पत्तिहेतुकप्रसववेदनया, स्वरा-रोहत्। वर्षीयाँश्चापि मदीयः पिता, सहायान्तराभावाद् येन केन प्रकारेण मत्स-म्वर्धन एव सावहितिनैकटिककोटरस्थशुकानीतभुक्तशेषशालिनीवारफलादि मामा-शयन् मदुपभुक्तशेषं सायंप्रातिकं चाशनजातं स्वयमश्नन्नत्यवाहयद्दिवसान्।

एकदाऽऽखेटकाय तत्रायाता भयकरी, निःशौवस्तिकविभवा, श्वागणिक-कौटिलिकमार्गिक-मायूरिक-मैनिक-सैनिक-भिल्लसेना, मृगयावनभूमिसीमसु,

१. 'खलादिभ्य इनिर्वाच्यः'। २. 'भवतष्ठक्छसौ', 'इसुसुक्तान्तात्कः'। ३. 'नद्यादिभ्यो ढक्'। ४. 'अव्ययात्यप्', 'अमेहक्वतसित्रेभ्य एव'। ५. 'काश्यादिभ्य-ष्ठञ् ञिठौ' इत्यत्र 'आपदादिपूर्वपदात् कालान्तात्'। ६. 'तप्पर्वमरुद्भ्याम्' इति पर्वशब्दात्तपि 'पर्वताच्चे'ति छः। ७. 'वेः शालच्छंकटचौ। ८. 'अनुदात्तादेरञ्'। ९. 'प्राणिरजतादिभ्योऽञ्'। १०. 'अपरस्यार्द्धे पश्चभावो वक्तव्यः'। ११. मात्र-शब्दस्यात्रावधारणमर्थः 'मात्रं कार्त्स्न्येऽवधारणे' तस्य च जातस्यैवेत्येवकारेणास्व-पदविग्रहे मयूरव्यंसकादित्वात्समासः। १२. 'युष्मदस्मदोरन्यतरस्यां खञ् च', 'तवकममकावेकवचने'। १३. 'निकटे वसति'। १४. 'कालाट्ठञ्' १५. 'श्वसस्तुट् च', 'द्वारादीनाञ्च'। १६. श्वगणाट्ठञ्'। १७. 'अण् कुटिलिकायाः'। १८-२०. 'पक्षिमत्स्यमृगान् हन्ति'। २१. 'सेनाया वा' इति ण्याभावपक्षे ठक्।

सीमसु[1] पुष्कलकान्, चर्मसु[2] द्वीपिनः, दन्तेषु[3] कुञ्जरान् [4]केशेषु च चमरीर्घ्नता, विविधप्राणिघाताय निग्रहाय च धावता पुलिन्दवृन्देन सान्धिवेलं[5] कृतान्तक्रीडितमाखेटकं कृत्वा, समुपात्तसीमचर्मदन्तकेशपिशितभारा, क्षणमेकत्र विश्रम्य, तेनैवारण्यकेन[6] पथा निरयात्। शबरेषु तेषु, एकोवृद्धोऽनासादितामिषः क्षुधितस्तं तरुमालोक्य तत्तले व्यलम्बतेति निर्मक्षिकी[7]भूते तस्मिन् प्रदेशे, स शबरवर्षिष्ठस्तं तरुमारुह्य कालपरिवाकाराभ्यां निजभुजाभ्यां तत्रत्यान् मद्वर्गीणान्[8] अन्यांश्चाण्डजान् तरुकोटरेभ्यः समाकृष्य समाकृष्य, नीडेभ्यो भुवि न्यपातयत्। शमनसमानोदर्य[9]सन्निभं समायान्तं तमहमालोक्य, जन्मसहभुवा भयेनातिभीतो निजनीडे यावदेव पितुः पक्षान्तरे निलीये तावदेव स कुलायमस्माकमवाप्य, पितरमपि मामकं पीडितग्रीवं कृत्वा तरुतले चिताविक्षिपत्। अहञ्च तत्पक्षतौ[10] निलीनो निरसुना तेन सह पतितः प्राणपरित्यागयोग्येऽपि तस्मिन् व्यतिकरे सद्यो विस्मृतचिरत्न[11]पितृस्नेहस्तदवस्थं पितरं परित्यज्य निजप्राणपरिरक्षणायान्तर्जीर्ण-[12]शीर्ण[13]-'प्रीण[14]-प[15]र्ण-तृण्यं[16] प्राविशम्। शबरश्चासाववतीर्य तस्मात्तरोर्भ्रष्टेषु तेषु कतिपयान् पार्णाग्नौ शूलाकृत्य[17] स्वदंष्ट्रातिथीन् विधायावशिष्टांश्च व्रततिबद्धानादाय पापः पल्लीं निजामाजत्। अहञ्च, नयननिमीलनशिल्पकलिपतबहुसाह्य[18]य्यकमुद्रया, निद्रया दीर्घदुःखदोषदोषातनं समयमतिवाह्य प्रातरुन्मिषति जगच्चक्षुषि भास्वति, तत्स्थानं विहायाग्रिम[19]प्रसरणमेवान्तिम[20]मुपायं स्वरक्षाया मन्वानः, पक्षपालीपरिरुद्धवसुधो मुहुर्मुहुः प्रस्खलन्नुदन्यापरवशोऽनतिदूरवर्ति पद्मसरस्तीरं प्रापम्। तत्र तदवस्थं मां, कृतपूर्वाह्णितन[21]-कृत्यः, मरीचिनामा मुनिर्दृष्ट्वा समुपजातदयोदयः, कृपाकराग्रेण मामुत्थाप्य, मन्मुखनिक्षिप्तकतिपयोदबिन्दुः[22] पत्रपुटे निधाय, तत्सरोऽपा[23]च्यदिश्य[24]निजाश्रम-

---

१-४. 'निमित्तात्कर्मयोगे' इति सप्तमी। ५. 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'। ६. 'पथ्यध्यायन्यायेति वुञ्'। ७. मक्षिकाणामभावो निर्मक्षिकम् इत्यभावार्थकाव्ययीभावे च्विः। ८. 'अशब्दे यत्खावन्यतरस्याम्'। ९. 'समानोदरे०'। १०'पक्षात्तिः'। ११. 'चिरपरुत्परारिभ्यस्त्नो वाच्यः'। १२-१३. जॄ-शॄ धात्वोर्निष्ठान्तरूपे। १४. 'नश्च पुराणे प्रात्'। १५. 'तस्य समूहः'। १६. 'पाशादिभ्यो यः'। १७. 'शूलात्पाके' 'ऊर्यादिच्विडाचश्च', 'कुगतिप्रादयः'। १८. 'सहायाद्वा'। १९. 'अग्रादिपश्चाड्डिमच्'। २०. 'अन्ताच्च'। २१. 'विभाषापूर्वाह्णापराह्णाभ्याम्'। २२. 'मन्थौदनबिन्दु०' इति उदकस्योदादेशः। २३. 'द्युप्रागपागुदक्प्रतीचो यत्'। २४. 'दिगादिभ्यो यत्'।

पन्थको[१] भवन्ननुसरस्तटं[२] किञ्चिद्दूरं सपङ्केनाप्यग्रे[३] सपद्येन[४] पथा सपद्येन[५]मनुसरता, गुरुनिदेशवश्येन[६]ापीन्द्रियावश्येन वयस्येन[७] सह प्रतस्थे । तन्नीतो गत्वा चाहं किञ्चिद्दूरं, परित्यक्तानुग्रामिक[८]सहवासम्, अनुभूयमानदार्घसत्त्र[९]श्रायसम्[१०], घुष्यमाणसौप[११]तैङ[१२]कार्त[१३]षात्व[१४]णत्विकाग्नि[१५]ष्टोमिक वाशिष्ठिक[१६] पौरोडाशिक[१७]च्छान्दसा[१८]र्चिकपौर[१९]श्चरणिका[२०]र्गयनम् संलक्ष्यमाणभ्रातृक[२१]पित्र्य[२२]पैतामहक[२३] भौति[२४]कानैश्वर्यम्[२५] उख्य[२६] मुख्यभोज्यसम्मान्यमानतैर्थम्[२७], प्रशस्यमानसोदर्य[२८]सद्भावसतीर्थ्यम्[२९], अभ्यस्यमानशा[३०]रीरकीयविरुद्धभोजनीयम्[३१], शिक्ष्यमाणताक्षशिल[३२]-

---

१. 'पथः पन्थ च । २. सरस्तटसमीपे सरस्तटेन सम्बद्धं वा । ३. 'पदमस्मिन् दृश्यम्' । [ सकर्दमेनेतिभावः ] ४. पादौ विध्यन्तीति पद्याः शर्करास्ताभिः सहितेन ( 'विध्यत्यधनुषा' ) । ५. सपदि शीघ्रम् एनमनुसरतेतिच्छेदः । ६. 'वशंगतः' इति यत् । ७. 'नौवयोधर्म० । ८. 'ग्रामात्प्रत्यनुपूर्वात्' ( ठञ् ) । ९–१०. 'तत्र भवः', 'देविकाशिंशपा' । ११–१२. 'तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः' । १४.'बह्वचोऽन्तोदात्ताट्ठञ्' । १५.'क्रतुयज्ञेभ्यश्च' । १६.'अध्यायेष्वेवर्षेः' । १७. 'पौरोडाशपुरोडाशात् ष्ठन्' (पुरो दाश्यते इतीहैव निपातनाद्दस्य डेपुरोडाशः)। १८. 'छन्दसो यदणौ' । १९–२०. 'द्वयजृद्ब्राह्मणर्क्०' इति ठक् । २१. 'अण्ऋगयनादिभ्यः' । २२. 'ऋतष्ठञ्' । २३. 'पितुर्यच्च' । २४. 'विद्यायोनिसम्बन्धेभ्यो वुञ्' । २५. अनीश्वरांदागतस्तत्र भवो वेत्यणि, 'नञः शुचीश्वरे'ति वृद्धिः । २६. 'शूलोखाद्यत्' उखायां संस्कृतमित्यर्थे यत्, 'शाखादिभ्यो यः'—मुखमिव-मुख्यः । २७. शुण्डिकादिभ्योऽण् ( तीर्थादागतस्तैर्थः ) । २८. 'विभाषोदरे', 'सोदराद्यः', २९. समाने तीर्थे वसतीति 'समान तीर्थे वासीति' यति 'तीर्थे ये' इति समानस्य सभावः । ३०. 'अधिकृत्य कृते ग्रन्थे' ( कुत्सितं शरीरं शरीरकं तत्सम्बन्धी शरीरको जीवात्मा, तमधिकृत्य प्रस्तुत्यकृतो ग्रन्थः शारीरकीयः, चतुर्लक्षणीसूत्रसन्दर्भः, अणि, वृद्धाच्छः ) । ३१. इन्द्रजननादित्वात् 'शिशुक्रन्देति छः' । ३२. तक्षशिला नगरी अभिजनोऽस्येति 'सिन्धुतक्षशिलादिभ्योऽणञौ' ।

शिल्पम् , अध्याप्यमानपाणिनीय[1]-तैत्तिरीय[2]-शौनकि[3]कठ[4]-कालाप[5]च्छागलेयि[6]-पाराशरि[7]-ब्रह्मचारिवर्गम्, लिख्यमानपाणिनीय[8]-वाररुच[9]-वारुडकम्[10], परिरच्यमाणमाक्षिक[11]क्षौद्रम्[12], निर्माप्यमाणाग्नीध्रम्[13], प्रदीप्यमानाग्नीध्रीयम्[14], उच्चार्यमाणसामिधेन्यम्[15], वाच्यमानवाहृच्या[16]थर्वणम्[17], तोष्टूयमानशाक्तशैवम्[18], ऋषिप्रभावाभिव्यक्तनिर्गोव्याघ्रिकम्[19], क्वचिच्चिकित्स्यमानशारदिकम्[20], इतरत्र संस्थाप्यमानवीजवापीय-हैम[21]न्ताश्वयुजक[22]-ग्रैष्मक[23]-प्रावृषिक[24]-शारदकम्[25], षड्ऋतूपसेवित्वादेकदैवोपलभ्यमानप्रावृषेण्य[26]-शारद[27]-हैमन[28]-शैशिर[29]-वास[30]न्त-ग्रैष्म[31]फलकम्, [32]गोमयोपलिप्यमानकुटीरो[33]टजाजिरम् , औम[34]कोपचर्यमाणकच्छु[35]रैणे[36]यत्वङ्मयम्[37],

---

१. तेन प्रोक्तम् । २. तित्तिरवरतन्तु०' । ३. 'शौनकादिभ्यश्छन्दसि' । ४. कठेन प्रोक्तमधीयते इति विग्रहे कठशब्दस्य वैशम्पायनान्तेवासित्वाण्णिनिस्तस्य कठचरकाल्लुक् । ५. 'कलापिनोऽण्' इत्यणि 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते, नान्तस्य टिलोपे, 'सब्रह्मचारि'—इत्यादिनाटिलोपः । ६. 'छगलिनो ढिनुक्' । ७. 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' । ८. 'उपज्ञाते' । ९. 'कृते ग्रन्थे'। १०.'कुलालादिभ्यो वुञ्' । ११.'संज्ञायाम्' । १२.'क्षुद्राभ्रमरवटरपादपादञ्' । १३. 'अग्नीधः शरणे रण भं च' । १४. 'वृद्धाच्छः' (अग्निः) । १५. 'समिधामाधाने षेण्यन्' । १६. 'छन्दोगौक्थिकेतिञ्यः' । १७, अथर्वण प्रोक्तो वेदोऽथर्वा–अभेदोपचारात, तमधीते इति 'वसन्तादिभ्यष्ठक्' दाण्डिनायनहास्तिनायनेत्यादिना निपातनाट्टिलोपाभावे आथर्वणिकास्यायं धर्मः आम्नायो वा—'आथर्वणिकस्येकलोपश्चेत्यण्' । १८, 'भक्तिः' । १९. 'द्वन्द्वाद् वुन् वैरमैथुनिकयोः' ( वुन्नन्तंस्त्रियाम् ) । २०. 'विभाषा रोगातपयोः' इति ठञ् । २१. 'उप्ते च' । २२. 'आश्वयुज्या वुञ्' । २३. 'ग्रीष्मवसन्तादन्यतरस्याम्' । २४. 'प्रावृषष्ठप्' । ( प्रावृषि जातएण्यापवादष्ठप् ) । २५. 'संज्ञायां शरदो वुञ्' ( शारदका मुद्गविशेषाः ) । २६. 'प्रावृषएण्यः' । २७. 'कालात्साधुपुष्प्यत्पच्यमानेषु' ( शरदि पच्यमानं फलादिकम् ) २८. 'सर्वत्राण् च तलोपश्च' । २९. 'कालात्साधु०' । ३०–३१. 'ग्रीष्मवसन्तादन्यतरस्याम्' । ३२. 'गोश्च पुरीषे' । ३३. 'कुटीशमीशुण्डाभ्यो रः', उटैः पर्णैः जायते इत्युटजः । ३४. 'उमोर्णयोर्वा' । ३५. 'कच्छ्वा ह्रस्वत्वञ्च' । ३६. 'एण्या ढञ्' । ३७. 'एकाचो नित्यम्' ।

क्वचिद्द्रुवयमीयमानव्रीहिमयद्द्रव्यम्[1][2], इतरत्रामत्रादीयमाननिम्बद्रव्यम्[3][4], आलोड्यमानकालशेयगव्यध्वनिधन्यम्[5][6], उखासुपाच्यमानधेनूधन्यम्[7], भिक्षुजनसंरच्यमाणभैक्षम्[8], सञ्चीयमानानुष्त्रिमपरिक्रमहैमनफलम्, वैवधिक[9]-वादरिक[10]-समानीयमानबदरम्, [11]ऐकान्यिकीभिर्मुनिकन्याच्छा[12]त्रीभिरभ्यस्यमानशुद्धस्वरवर्णोच्चारणम्, निन्द्यमाननास्तिक-गौरुतल्पिक[13]-चातुर्दशिकम्[14], क्वचित्संस्थापिताङ्गारीय[15]कच्छादिषेय[16]पुञ्जम्, इतरत्र प्रस्तुतीक्रियमाणौपानह्य[17]मुञ्जम्, आश्रमम्पश्यम्। यत्र च विकारः [18]आश्मपैप्पल[19]पालाश[20]त्रापुषा[21]दिप्रकृतिषु, न मानुषादिप्रकृतिषु, प्रत्ययलोपः[22]आमलकमल्लिका[23]जातीविदारीषु[24], चैत्रफलपरिपाकशुष्कता व्रीहिमुद्गमाषेषु[25], वचनविशेषनिघ्नता हरीतक्यादिषु,[26] कंसीय[27]-विकारः कांस्ये[28] न मनुष्यास्ये, दृश्यमानमासीत्।

आगत्य च तत्रैकत्र रक्ताशोकतरोरधःस्थितमहमद्राक्षं प्रारब्धबहुजन्यम[29]-

---

१. 'माने वयः'। २. 'व्रीहेः पुरोडाशे'। ३. अमत्रं, पात्रम्। ४. 'द्रोश्च'। ५. 'दृतिकुक्षिकलशि०' इति ढञ्। ६. 'गोपयसोर्यत्'। ७. ऊधसि भवम् (उगवादिभ्यो यदित्यत्र 'ऊधसोऽनङ् च')। ८. भिक्षादिभ्योऽण्। ९. विभाषा विवधात्। १०. 'उञ्छति'। ११. 'कर्माध्ययने वृत्तम्' (ठकि ङीप्)। १२. 'शीलम्' 'छत्रादिभ्यो णः, 'ताच्छीलके णेऽपि'। १३. 'गच्छतौ परदारादिभ्यः'। १४. अध्यायिन्यदेशकालात्। १५. 'तदर्थं विकृतेः प्रकृतौ'। १६. 'छदिरुपधिवलेर्ढञ्'। १७. 'ऋषभोपानहोर्ञ्यः'। १८. 'तस्य विकारः' 'अश्मनो विकारेटिलोपो वक्तव्यः'। १९. 'अवयवे च प्राण्योषधिवृक्षेभ्यः'। २०. 'पलाशादिभ्यो वा'। २१. त्रपुजतुनोः षुक्। २२. आमलक्याः फलमिति विग्रहे 'नित्यं वृद्धशरादिभ्यः' इति विहितस्य मयटः 'फले लुक्' इति लुकि। 'लुक्तद्धितलुकि' इति ङीषो लुक् २३,२४ जातीमल्लिकयोर्विहितस्य पुष्पार्थकस्य विदार्याश्च मूलार्थकस्य 'अनुदात्तादेश्चे'त्यञः 'पुष्पमूलेषु बहुलमि'ति लुप्। २५. 'फलपाकशुषामुपसंख्यानम्'। २६. 'हरीतक्यादिभ्यश्च'। २७. 'कंसाय हितमिति 'तस्मै हितमि'ति छः, पक्षे कंसस्य औग्रसेनेर्नामधेयत्वात् वृद्धाच्छः। २८. कंसीयपरशव्ययोर्यञञौ लुक् च। २९. जनानां जल्पो जन्यः 'मतजनहलात्करणजल्पकर्षेषु' प्रारब्धो बहुभिः सह जन्यो वार्तालापः येन तथाभूतमपि जन्यं युद्धम् अथवा जनी वधूस्तां प्रापयतीतिजन्या (संज्ञायां जन्या) तद्धितम्।

ण्यजन्यम्, ससमुपात्तवाङ्मयप्रासङ्ग्यप्रसङ्गर्षिवत्सप्रा[1]सङ्ग्यमपिसवाङ्माधुर्यधुर्यम्, सम्पाद्यमानाहीन[2]समीनसर्वधुरीणमपि सर्वजनीनसंयतजीवनैकधुरीणम्, निषिद्धसमां[3]समीनमपि भुक्तसमांसमीनम्, भौति[4]कार्थनगण्यमपि समुपलब्धाध्यात्मिकतत्त्वाग्रगण्यम्, भगवन्तं पुलस्त्यम्। स च कुलपतिर्हस्तामलकीकृताखिलैहलौकि[5]कपारलौकिकसार्वलौकिकाध्यात्मि[6]कतत्त्वः, पारिमु[7]ख्यतेजोविशेषानुभावितपोगाम्भीर्यप्रभावो भगवान् पुलस्त्यो मामवलोक्य हसन्नन्यैर्मुनिभिः पृष्टो दिव्यदृष्टिरवोचत–'शापशुकमेनमवलोक्य दुःखेनाहमहसम्। सम्पादितापराह्णक[8]कृत्यश्चाहमेतत्सम्बद्धां कथां कथयिष्यामि यच्छ्रुत्वा स्मृतस्वपूर्वजातिकृत्योऽयं भविष्यती'त्युक्त्वा स निजाह्निककृत्यकरणायोदतिष्ठत्। परिसमापितसर्वदैनिकविधिश्च मुनिभिरसकृदभ्यर्थितो मत्सम्बद्धां कथां वक्तुमेवमारभत—

आसीत्पुरा शालातुरान्नातिनेदीयो निधीयमानशौल्क[9]शालिकशुल्कं, व्य[10]वहारिकजनादीयमानमासि[11]कावरसम[12]कसाम्व[13]त्सरकापमित्यक[14]म्[15] दीयमानयाचितक[16]-

---

१. समुपात्तवाङ्मयस्य प्रकर्षेण आसङ्क्तुं योग्यः प्रसङ्गो विषयप्रसङ्गो यैरेवं, भूता ऋषिवत्सा ऋषिबालकाः प्रासङ्ग्या इव तैः सहितमपि वाचि माधुर्यं येषां ते वाङ्माधुर्यास्तेषां धुर्यम् धुरीणम् ( तद्वहतिरथयुगप्रासङ्गम्', 'धुरो यड्ढकौ', 'न भकुर्छुराम्' )। २. सम्पाद्यमानस्य अहीनस्य ( अह्नः खः क्रतौ ) समीनस्य ( समायाः खः ) च-समामधीष्टो भृतो भूतो भावी वा–तस्य च सर्वधुरीणम्–( खः सर्वधुरात् ) एवंभूतमपि सर्वजनीनम् सर्वजनेभ्यो हितं, यत्संयतजीवनं, तस्यैकधुरीणम्-'सर्वजनाट्ठञ् खश्च', 'एकधुराल्लुक् च'। ३. निषिद्धाः मांसेन सहिता मीना येन तथाभूतमपि भुक्ता भोजनादिना परिपालिता समांसमीना प्रतिवर्षं प्रसवित्री गौर्येन ( समांसमां विजायते )। ४. भौतिकार्था नगण्या यस्मै तम्। ५-६. 'अध्यात्मादेष्ठञिष्यते', 'लोकसर्वलोकाट्ठञ्' 'अनुशतिकादीनाञ्च'। ७. 'अव्ययीभावाच्च', 'परिमुखादिभ्य एवेष्यते' इति ञ्यः। ८. 'पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्'। ९. 'ठगायस्थानेभ्यः'। १०. 'चरति,' 'स्वागतादीनाञ्च'। ११. 'देयमृणे'। १२. अवरस्यां समायां देयम् इति 'ग्रीष्मावरसमाद्वुञ्'। १३. 'सम्वत्सराग्रहायणीभ्यां ठञ् च'। १४-१५. 'अपमित्ययाचिताभ्यां कक्कनौ'।

साम्वहित्रम्[1], सन्निहितपञ्चाङ्गुलादि[2]बहुसैरिक[3]सन्नाहमपि आश्वरथ-शाकट[4]-सङ्कीर्ण-शालम्, क्वचिदवधव्यमानशारदम्, इतरत्रसंस्थाप्यमानहैमन्तम्, नियुज्यमानवैत[5]-निकाकरिक[6]दैवागारिकम्[7], आज्ञाप्यमानावसथिक[8]-कार्म[9]-पारिपा[10]र्श्विक-पारिसुखिकम्[11], आदिश्यमानपथिक[12]आर्थिक[13]-दाण्डमाथिक[14]पारिप[15]न्थिकनिःशस्त्रवैशस्त्रम्[16], अपरिदृश्य-मानाक्रन्दिकम्[17], निर्धार्यमाणापूपिक[18]-लावणिक[19]-किसरिक[20]-शला[21]लुकक्रयवि[22]क्रयिका-पणिकम्[23] आलप्यमानसाम[24]ाजिक-धा[25]र्मिक-पारिषद्य[26]-सामवायिकम्[27], वितीर्यमाण [28]पर्पिकसा[29]र्पिष्कम्-द्वैगुणिक[30]-वार्धुषिक[31]-दशैकादशिक[32]-धनाढ्याध्युषितैकदेशम्, आन्न[33]-धन्य[34]धन्यतरापरभागं रत्नाकरं नाम नगरम्।

अभवच्च तत्र ज्योतिष्प्रभो नाम परमशिवभक्तः सा[35]र्वभौमः पार्थिवः। समूर्जि-तशासनो [36]धर्म्य-न्या[37]य्यौरस[38]प्रजातुल्य[39]प्रजाव्यवहारो यश्चारत्नाकरमुर्वीमधिचक्रे।

---

१. 'वहेस्तुरणिट् च'। २. 'अङ्गुलेर्दारुणि' (षच्)। ३. हलसीराट्ठक्। ४. अश्वस्यायं वहनीय इत्याश्वः 'पात्राद्घाञ्', 'पत्राध्वर्युपरिषदश्च' इत्यञ् स चासौ रथस्तथा 'शकटादण्'। ५. वेतनादिभ्यो जीवति। ६. आकुर्वन्त्यस्मिन्नित्याकरः (पुंसि संज्ञायां घः प्रायेणेति घः) ततः 'तत्र नियुक्तः'। ७. 'अगारान्ताट्ठन्'। ८. 'आवसथात्ष्ठल्'। ९. 'कार्मस्ताच्छील्ये'। १०. परिमुखञ्चेत्यत्र चकाराट्ठक्। ११. पारिमुखिक इत्यत्र तु परिमुखञ्चेत्यनेनैव, ततः पारिपार्श्विकश्चासौ पारिमुखिको यत्र। १२. 'पथः ष्कन्'। १३. 'प्रतिकण्ठार्थललामं च'। १४. 'माथोत्तरपद०'। १५. 'परिपन्थञ्च तिष्ठति'। १६. 'विशसितु रिड्लोपश्चाञ्च वक्तव्यः'। १७. 'आक्रन्दाट्ठञ् च'। १८. 'तदस्य पण्यम्'। १९. 'लवणा-ट्ठञ्'। २०. 'किसरादिभ्यष्ठन्'। २१. 'शलालुनोऽन्यतरस्याम्'। २२. 'वस्न-क्रयविक्रयाट्ठन्'। २३. 'अवक्रयः' (आपणस्य अवक्रयः, राजग्राह्यं द्रव्यम्, इत्यर्थे) ठन्। २४. 'रक्षति'। २५. 'धर्मं चरति'। २६. 'परिषदो ण्यः'। २७. 'समवायान् समवैति'। २८. 'पर्पादिभ्यष्ठन्', पर्पेण पङ्गुपीठेन चरन्तीति पर्पिका-स्तेभ्यः। २९. 'संस्कृतम्' ३०. 'प्रयच्छति गर्ह्यम्' ठक्। ३१. 'वृद्धेर्वृधुषिभावो वक्तव्यः'। ३२. 'कुसीददशैकादशात् ष्ठन्ष्ठचौ'। ३३. 'अन्नाण्णः' (अन्नं लब्धा)। ३४. 'धनगणं लब्धा [ यत् ]। ३५. सर्वभूमिपृथिवीभ्यामणञौ', तत्र विदित 'इति च'। ३६. 'नौवयोधर्मे'त्यादिना यत्। ३७. धर्मपथ्यर्थन्यायादनपेते'। ३८. उरसा निर्मिताः औरसाः 'उरसोऽण् च' ३९. नौवयोधर्म०।

अभूच्चाथ तस्यान्तःपुरप्रधानीभूता ज्योतिष्मती त्रियामेवात्यभिरामा हर्षवती-नामा वामा वामाङ्गी।

निजामात्यविनिवेशितराजभरस्य लौकिकैश्वर्यसुखमनुभवतस्तस्य राज्ञो भूयान् कालो व्यत्यगात् किन्त्वन्तं गतेष्वपि प्रायोऽखिलजीवलोकसुखेषु, सुतमुख-दर्शनसुखं स नोपलब्धवानिति शरवणस्येव निष्फलपुष्पदर्शनान्तःपुरस्य[1], निष्फल-मनोरथस्य च तस्यानपत्यताजन्यसन्तापोऽधिकाधिकमेधाञ्चक्रे। येन स सुतेतर-बहुपारिवारिकव्यक्तिपरिवृतमपि निःसहायम्, चारचारुचक्षुष्मन्तमपि प्रज्ञाचक्षु-षमिव, भूतलावलम्बनमपि निरवलम्बनमिव, अविकलसकलेन्द्रिय[2]चक्रमपि भग्न-मनोरथचक्रमिवात्मानममन्यत।

एकदा स हर्षवतीनिवासगृहं गतश्चिन्ताशोकग्रस्त[3]परिजनपरिवृताम्, समीप-वर्तिशुद्धान्तःपुरवर्षीयसीभिराश्वास्यमानाम्, दिवोऽवतीर्य कमलकिसलयाकलि-ताश्रयकलानिधिकलामिव वामकरतलावलम्बितमुखकमलाम्, अविरलाश्रुपातो[4]-च्छूननयनाम्, परिलक्षितौदासीन्यशयनाम्, रुदतीं तां ददर्श। दृष्ट्वा च तत्कारणं पृच्छंस्तत्प्रत्यासन्नकरङ्कवाहिन्याः, निजापुत्रतां तत्सान्तापिक[5]हेतुमबोधि। तच्चा-कर्ण्यातिदुःखितो राजा मुहूर्तमिव स्थित्वा दीर्घमुष्णञ्च निःश्वस्योवाच—देवि यथाविधिसन्तोष्यमाणगार्हपत्य[6]-गार्हपत्य[7] एव गार्हपत्य[8]-योगक्षेमौ, सर्वमिह सर्वथा स्वच्छन्दनियतिच्छन्दस्यं[9] न किमपि स्वहस्त्य[10]मिति निःसांशयिकेऽलमतिरुदितेन। पुत्रपरिष्वङ्गकीलालौकिकसुखानुभवस्य नूनमनास्पदमस्माकं हृदयम्। नहिदैव-म[11]न्यथयितुं बलवतापि केनापि शक्यते। अतो याव[12]न्मानवशक्यमखिलमुपपाद्य-

१. 'प्रनिरन्तःशरेक्षु०' इति णत्वम्। २. इन्द्र आत्मा, तस्य लिङ्गमिति, 'इन्द्रियमिन्द्रलिङ्गमित्यनेन इन्द्रशब्दाद् घच्। ३. ग्रसु-अदने इत्यस्योदित्वात् क्त्वायां वेट्कत्वेन 'यस्य विभाषेत्यनेन निष्ठायां नेट्। ४. 'श्वीदितो निष्ठाया-मि'तीडभावे सम्प्रसारणादि। ५. 'तस्मै प्रभवति सन्तापादिभ्यः'। ६-८. 'गृहपतिना संयुक्ते ञ्यः', गार्हपत्येनाग्निना विहितं यद् गृहपतेः कर्म ( पत्यन्त-पुरोहितादिभ्यो यक् ) तस्मिन्नेव गृहपतेरिमौ ( दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ) गार्हपत्यौ योगक्षेमौ। ९. छन्दसा, इच्छया, कृतमित्यर्थे 'छन्दसो निर्मिते' इति यत्। १०. 'तेन यथाकथाच हस्ताभ्यां णयतौ' ( हस्तेन देयं कार्यं वा )। ११. अन्यथाकर्तुम् ['तत्करोति तदाचष्टे'] इति णिचि टिलोपः। १२.'यावदवधारणे'।

ताम् । भवाधिकतरं दीनहीनशरण्यां[1], नयस्व स्वसम्पत्तिं स्वव्ययव्हतिञ्च सार्वजनी-[2]
नताम् । वितरानुदिनं भक्तेभ्यो भाक्तान्[3], स्थालीविलीयशालीन्[4] । अवधारय हरि-
काथिकान्[5] । आज्ञापय समधिकमातिथेयम्[6], दापयानुदिनं निःस्विकपथिकीभ्यः[7][8] पाथे-
यम्[9] । एवंकृतेनातिसन्तुष्टा देवा नूनं यथाभिमतफलानि ददति । बहवो हि राजानो
देवमुनिसेवया सुतसम्प्राप्त्या[10] सुतङ्गमसुखिनः सञ्जाताः । एवंप्रायाभिरतिमधुरा-
भिरधरीकृतसुधाभिः शोकापनुदाभिर्वाग्भिर्हर्षवतीमाश्वास्य राजा स्वभवनमाजगाम।[11]

निर्गते च तस्मिन्, सा सकलं तदादेशानुसारमाचरन्ती, गते च नातिबहु-
तिथे काले, क्षीणप्रायायां क्षपायामेकस्यां, स्वप्ने स्वमुखे प्रविशन्तं सोममद्राक्षीत् ।
प्रबुद्धा च हर्षातिरेकविकसितनेत्रा वेत्रासने नेदीयस्येव शयानं राजानं प्रबोध्य,
निवेदितनिजस्वप्ना किमेतदिति कौतूहलिनी राज्ञोक्ता, 'देवि [12]सुत्योऽयं स्वप्नः,
पूर्णा अस्माकं मनोरथाः । प्रसन्नस्ते भगवानुमापतिरित्यचिरेणैवाहं सुतसुशो-
भितोत्सङ्गां भवतीं द्रक्ष्यामि ।

अतिक्रान्तेषु कतिपयेष्वहस्सु सामयि[13] कार्तव[14] स्नानानन्तरं भर्तृधर्मपरायणा
गर्भं दधे राज्ञी । असूत च वैजनने मासि निजवापुषकान्तितिरस्कृतमारं कुमा-
रम् । तस्मिन्नुत्पन्नेऽतिहर्षितप्रजापरिजनस्येतस्ततो धावतोऽतिकोलाहलेन
संक्षोभितं तन्नगरं तदानीमजनि। पार्थिवोऽपि च तनयाननदर्शनातिहर्षितो निजौ-
दार्येण दीनानपि वितीर्णसर्वावश्यकवस्तुभिः प्राभूतिकान्[15] पार्याप्तिकांश्च[16] विदध-
त्प्राज्याज्याभिन्नकुन्दकलिकाकल्पशाल्योदनेन, धूपामोदमनोहरशिखरिणीस्वादु-
शाकेन चा[17]तुर्जातकसंस्कृतेक्षुरसेन, स्निग्धस्तब्धदधिद्रवशर्करास्वादिष्ठभिस्सेन,
आस्वाद्यकवल्यलेह्यपेयबहुलेन, श्रृङ्गारसिन्धुप्लवमानघटिका[18]भिरिव पृथुवर्तुलकुच-

---

१. 'तत्र साधुः' इति यत् 'शाखादिभ्यो यः' इति वा यः । २. 'प्रतिजनादिभ्यः खञ्' । ३. 'भक्ताणणः' । ४. 'स्थालीविलात्' । ५. 'कथादिभ्यष्ठक्' । ६. 'पथ्यतिथिवसति०' । ७. 'भत्रैषाजाज्ञा०' । ८. 'पथःष्कन्', षित्त्वान् ङीष् । ९. 'पथ्यतिथि०' । १०. 'गमेः सुपि वाच्य' इत्यसंज्ञायां खच् । ११. 'तुन्दशोकयोः परिमृजापनुदोः' इति कः । १२. 'तस्य निमित्तं संयोगोत्पातौ' । १३. 'समयस्तदस्य प्राप्तम्' । १४. 'ऋतोरण्' । १५-१६. 'आहौ प्रभूतादिभ्यः' । १७. गुडत्वगेलानागकेसरं चातुर्जातकमुच्यते । १८. 'नौ द्व्यचष्ठन्' ( घटाभ्यांतरन्तीभिः )

घटिकाभिः हास्तिक[1]कुटुम्बिनीभिरिवोपलिप्तहस्तिनीभिः[2] यथावश्यकं परिवेष्यमाणपिष्टक[3]सार्पिषौदश्वित्क[4][5]दाधिक[6]-पायस[7]-चूर्णि[8]-लवण[9]-मौद्ग[10]-मारीचिक[11]-तैन्तिडीकेन[12], एकत्राभ्यवहार्यमाण-दाधिक[13]-पायसिक[14]-शार्करिक[15]-शाकिक[16] शौक्तिक[17]-सौपिकेन[18], अन्यत्र प्रतीष्यमाण-शाष्कुलिक[19]-श्राणिकौदनिक[20][21]-भाक्तेन[22], प्रीतिभोजमहोत्सवेन निजबान्धवान् सन्तोष्य, सौमस्वप्निकं[23] 'सोमप्रभ' इति पुत्रनाम चक्रे।

प्रजानयनोत्सवं तन्वानः स राजसूनुश्चास्तमयैर्गुणैर्निषीव्यमान इवानुदिनं वर्द्धमानो निजकुलानुकूलमेव शारीरक[24]-प्रथिमानम्[25], तामेव च कान्त्यौचितीमधारयत्[26]। अवतरति च तस्मिन् विद्याभ्यासयोग्ये वयसि, पार्थिवस्तदर्थं[27] प्राकारीयप्रदेशे[28] प्राकारीयाभिरिष्टकाभिर्निर्मितप्राकारम्, प्रासादीयैश्चोदूढद्दढिम-दारुभिर्विद्याम-[29]

---

१. हस्तिनीनां समूहः हास्तिकम् 'अचित्तहस्तिधेनोष्ठक्', 'भस्याढे तद्धिते', ततष्टिलोपः, तस्य कुटुम्बिनीः ( खलादित्वादिनिः ) हस्तिना चरति, तरति चेति हास्तिकस्तस्य कुटुम्बिनीरिति वा। २. सुगन्धितद्रव्यम्, हास्तिकशब्दस्य हस्तिसमूहपक्षे हस्तिन्यः करिण्यः ३. 'संज्ञायां कन्' ( अपूपकः )। ४. 'संस्कृतं भक्षाः'। ५. उदकेन श्वयतीति श्वयतेः क्विपि 'उदकस्योदः संज्ञायाम्' ततः 'उदश्वितोऽन्यतरस्याम्' इति ठकि 'इसुसुक्तान्तात्कः'। ६. 'दध्नष्ठक्', 'संसृष्टे', 'व्यञ्जनैरुपसिक्ते', वा ठक् 'संस्कृतमि'त्यनेन वा दध्नि संस्कृतम्, दध्ना संसृष्टं, दध्ना उपसिक्तं दध्नि संस्कृतम्, वेत्यर्थे ठक्। ७. 'संस्कृतं भक्षाः' ( पयसि संस्कृतम् )। ८. चूर्णादिनिः ( चूर्णैः संसृष्टाः )। ९. लवणेन संसृष्टो लवणः, 'लवणाल्लुक्'। १०. 'मुद्गादण्' ( मुद्गेन संसृष्टो मौद्ग ओदनः )। ११. 'संस्कृतम्' (मरिचेन संस्कृतमिति ठक्)। १२. तिन्तिडीकेन संस्कृतम्, 'कुलत्थकोपधादण्'। १३-१९. तेन भक्षयतीति भक्षणेऽर्थे 'चरति' इत्यनेन ठक्। १४. शष्कुलीभक्षणं हितमस्मै इत्यर्थे 'हितं भक्षाः'। २०. श्राणा नियुक्तं दीयतेऽस्मै इति 'श्राणामांसौदनाट्टिठन् एवं २१. ओदनिक इत्यपि। २२. 'भक्तादणन्यतरस्याम्'। २३. सोमस्वप्नः प्रयोजनम् ( कारणम् ) अस्येति 'प्रयोजनम्' इत्यनेन ठञ्। २४. स्वार्थे कनि 'तस्येदमि'त्यण्। २५. 'पृथ्वादिभ्य इमनिज्वा', 'र ऋतो हलादेर्लघोः', पृथुमुदुभृशेत्यादिना रत्वम्। २६. 'वर्णदृढादिभ्यः ष्यञ्च', षित्वाद्ङीष्, हलस्तद्धितस्य। २७-२९. 'तदस्य तस्मिन् स्यादि'ति (छः)।

न्दिरमारचयाञ्चकार । यस्मिँश्च मन्दिरे गुरोः सान्निध्यं[1] निध्यायन् सोमप्रभो बार्ह-
स्पत्योपमप्रतिभया[2] षाड्गुण्या[3]दिशिक्षितोऽल्पेनैव कालेन सर्वविद्यैः[4] सम्पन्नः । वि-
द्यामन्दिररामणीयक[5]हृतहृदयस्य च तस्यासीत् तत्रत्यातिप्रशंस्या[6] शैष्योपाध्या[7]-
यिका । प्रशंसन्ति स्म च सर्वे तस्य सतीर्थ्यसख्यम्[8] । न च भजते स्म तस्य[9]
कार्मुक[10]कौशलं कर्मण्यं[11] कुत्राप्ययाथातथ्यम्[12] ।

एवमतिक्रान्तकौमारः, संक्रान्तकाल्य[13]यौवनः कुमारः, पार्थिवभारधारण-
क्षमो बभूवेति पिता ज्योतिष्प्रभोऽतिप्रीतो विद्यामन्दिरतस्तं[14] राजभवनमानाय्य
विशिष्टज्ञातेयज्ञातिभिः[15] सह स्वविभवानुरूपराजभोगीणैर[16]भिषेकसम्भारैर्विहित-
[17]सार्वजनिकाभिषेकोत्सवो निजप्राज्यराज्य[18]यौवराज्येऽभिषिच्य प्रभाकरा[19]भिधान-
स्य निजमन्त्रिणो योग्यं[20] तनयं प्रियङ्कर[21]नामानमस्य मन्त्रित्वे न्ययूयुजत ।
एतदनन्तरमेव दिवोऽवतीर्णः मातलिः, सोमप्रभमभाषत—शक्रस्य सखा विद्या-
धरस्त्वं धरायां जनुरधार्षीरित्युच्चैःश्रवसः सुतोऽयमाशुश्रवा नाम तुरगोत्तमः
स्मृतपूर्वस्नेहेनेन्द्रेण तुभ्यं प्रहितः । समारूढैतदश्वश्च त्वं शत्रूणामजेयो भविष्य-
सीति । एवमुक्त्वा तं वाजिरत्नं सोमप्रभाय दत्वाऽऽत्तपूजे वासवसारथौ दिव-
मुत्पतिते स दिवसो मनोरमैः सर्वीयै[22]र्मङ्गलोत्सवैर्व्यत्ययाप्यताखिलराजकुलपुरुषैः ।

---

इति ष्यञ् । २. 'पत्यन्तपुरोहितादिभ्यो
१. 'चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्' इति ष्यञ् । ४.सर्वा विद्या अधीते वेत्ति वा इत्यर्थे तद्धितार्थे
यक्' । ३.चतुर्वर्णादित्वात् ष्यञ् । ४.सर्वा विद्या अधीते वेत्ति वा इत्यर्थे तद्धितार्थे 'सर्वादेः सादेश्च लुग्व-
समासे 'विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्' इति ठक् तस्य 'सर्वादेः सादेश्च लुग्व-
क्तव्य' इति लुक् । ५. 'योपधाद्गुरूपोत्तमाद्वुञ्' । ६. शंसिदुहिगुहिभ्यो वेति क्यप्
(काशिका) । ७. 'द्वन्द्वमनोज्ञादिभ्यश्च' । ८. 'सख्युर्यः' । ९. 'कर्मण
उकञ्' । १०. युवादित्वात् 'हायनान्तयुवादिभ्योऽण्' । ११. 'कर्मवेषाद्यत्' ।
१२. ब्राह्मणादित्वात् ष्यञि, 'यथातथायथापुरयोः पर्यायेणे'ति वृद्धिः । १३.
'कालाद्यत्' । १४. 'पञ्चम्यास्तसिल्' । १५. 'कपिज्ञात्योर्ढक्' । १६. 'आत्मन्विश्व-
जनभोगोत्तरपदात्खः' । १७. 'सर्वजनाट्ठञ्खश्च' । १८. 'राजाऽसे'-राजशब्दोऽसमासे
यकं लभते । १९. 'दिवाविभानिशाप्रभा०' इति करोतेष्टः । २०. 'योगाद्यच्च' ।
२१. क्षेमप्रियमद्रेऽण् चेति खच् । २२. 'प्राक्क्रीताच्छ' इत्यधिकारे सर्वेभ्यो
हितमित्यर्थे, 'सर्वाण्णो वेति वक्तव्यम्' इति वैकल्पिकणाभावे छः ।

एवं समारूढयौवनस्समस्तज्ञेयपारीणावारीणः[1] स्ववंशपरंपरीणप्रथासर्वकर्मी-[2][3] णोऽस्यमित्रीणः[4] सोमप्रभोऽन्येद्युः पित्रानुज्ञातस्तं प्रणम्य सबलः, सर्वचर्मीणचार्मा-[5] न्तर्निगूढनिष्कृपकृपाणः, सर्वांगीणसुलक्षणमध्वनीनाश्वमारूढः[6] शुभंयावह- नि पूर्वं पूर्वदिक्सम्मुखीनो[7] दिग्विजयाय प्रतस्थे। तदश्वरत्नसाहाय्येन जित्वा च सर्व- दिशां विशाम्पतीन्, तेभ्यो रत्नान्याहरन् विद्विषश्च शिरसा सममेव तद्धनुर्निकृन्तन् कृतकार्यो हिमाद्रिनिकटे, पथि सन्निवेशितसैन्यो, वनाद्वनान्तरे शौवापदंमृगयां[8] कुर्वाणः किन्नरयुग्ममवलोक्य तज्जिघृक्षयैन्द्राश्वाधिरूढस्तदन्वधावत्। तच्च किञ्चिद् दूरं गत्वा गिरिगुहामेकां प्रविश्य चक्षुरगोचरतां गतम्। मनोजवेन च तेनाश्वेना- तिदूरं नीतः सोमप्रभोऽनाश्वीनेऽध्वनि[10] सुदूरपरित्यक्तबलः, सन्ध्यासमयेऽर्णवैकल्पं[11] महासर एकं दृष्ट्वा तत्तीरे तां निशां निनीषुरवततार। अश्वस्य पुरो घासञ्च विकीर्य स्वयं गृहीतफलोदकोऽकस्मादेकतो गीतनिःस्वनमशृणोत्। कौतुकाकृष्टस्तन्निःस्व- नानुसारेणच किञ्चिद् दूरं गत्वा शिवलिङ्गाग्रे गायन्तीं हैयङ्गवीनम्रदिमशरीरावयवाम्[12] असाधारणीं[13] दिव्यकन्यकामेकां ददर्श। सा च, केयमद्भुतसौन्दर्या सोदर्या रते- रिव स्यादिति, विस्मयस्तिमितलोचनमनिमेषेण चक्षुषाऽक्षिलक्ष्यीकुर्वन्तमुदारा- कृतिं कृतातिथ्य[14]सत्कारा तमुवाच—'को भवान्' कथञ्च दुर्गमामिमां भूमिमे- काकी[15] प्राप्तवान्? एतच्छ्रुत्वोपवर्णितनिजवृत्तान्तेन, सोमप्रभेणास्मद्वृत्तान्तमनुव- र्णयितुं निर्बद्धा बद्धादरेण सा, पद्मतटरुहविटपिसमुत्पाटनपटुभिरश्रुपूरैराप्यायि- तसुनेत्रा[16] निजोदन्तमेवं वक्तुं प्रारभत। अस्ति हिमाद्रिकटके काञ्चनाभाख्यं पुरम्। आस्ते च तत्र पद्मकूटाभिधानो विद्याधरेश्वरः, तस्य हेमप्रभाख्यायां पत्न्यां जाता पुत्रादप्यधिकप्रिया मनोरथप्रभाऽहं कन्या। विद्याप्रभावेणाहं सखीभिः समं

---

१. 'अवारपारात्यन्तानुकामं गामी'। २. 'परोवरपरम्पर०'। ३. 'तत्सर्वादेः पथ्यङ्गकर्म०'। ४. 'अभ्यमित्राच्छ च'। ५. 'सर्वचर्मणः कृतः खखञौ', तथा चर्मणोविकारेऽणि 'चर्मणः कोशे' इत्युपसंख्यानाट्टिलोपे चार्मः (कोशः) ६. 'तत्सर्वादेः०'। ७. 'अध्वनो यत्खौ'। ८. 'यथामुखसम्मुखस्य दर्शनः खः'। ९. 'शुनो दन्तदंष्ट्रा०', 'तस्येदम्, 'पदान्तस्यान्यतरस्याम्', इत्यैच्; ङीप्पुम्व- द्भावः। १०. 'अश्वस्यैकाहगमः'। ११. 'अर्णसो लोपश्च'। १२. 'पृथ्वादिभ्य इमनिज्वा'। १३. 'आग्नीध्रसाधारणादञ्'। १४. 'अतिथेर्ञ्यः'। १५. 'एकादा- किनिच्चासहाये'। १६. संयोगोपधत्वात् 'स्वाङ्गाच्चोपसर्जनादिति' ङीबभावः।

प्रत्यहमाश्रमेषु, कुलशैलेषु, *निविरीसोपशैलप्रदेशेषु, पीलुकुण[1]चणौप[2]त्यक-
वनोपवनेषु च क्रीडित्वाऽऽहारसमये पित्रोरन्तिकं भजन्ती शैशवं व्यत्यया-
पयम् । समुपारूढयौवना चैकदैतत्सरस्तटे विहरन्ती स्नानार्थमागतम्, सवयस्यं,
स[3]स्यकमपश्य[4]मेकं मुनिकुमारकम् । तद्रूपशोभया दूत्या इवाकृष्टाहं तमभ्युपग-
तेति समुपविष्टायां मयि तत्र साकूतया दृष्ट्या कृतमत्स्वागतः परिज्ञातोभयाश-
यया मत्सख्या कोऽयं महाभाग इति तद्वयस्योऽप्रच्छि । तदाकर्ण्य सोऽब्रवीत्–
यन्नातिदवीयसीतो निवसति स्वाश्रमे दीधितिमान्नामा मुनिः । सत्कर्मठो[5] वर्णी[6] स
सरसि स्नातुमत्र कदाचिदायातस्तत्कालागतया श्रिया दृष्टः । तञ्च शरीरेणाप्राप्यं,
प्रशान्तं, मनसैव सदनूकं[7] तर्मनुका[8] साचीकमत साचीकृतचारुचक्षुषाऽवलोक-
यन्ती सकामया भावनयेति तावद्दर्शनरसेनैव कृतकृत्यावाप्तैतत्पुत्रा, त्वद्दर्शनान्मयि
समुत्पन्नोऽयं पुत्रः; त्वया चैष परिगृह्यताम्' इत्युक्त्वा दीधितिमन्तं तं पुत्रं समर्प्य
श्रीरन्तर्दधे । मुनिरपिचानायासलब्धं तं पुत्रं हृष्टः सन् स्वीकुर्वन् यथाकालमुप-
नीयाध्यापितसर्वविद्यीकृतः । स एवायं रश्मिमान्नामा मया साकमिहायातः श्रियः
सुतो मुनिकुमारकः । एवमुक्त्वा तद्वयस्येन पृष्टा मत्सखी मद्विषयकसर्वमपेक्षि-
तमन्वयनामादिकं तस्मायवोचत् । अन्योन्यान्वयज्ञानसञ्जातानुरागावावां
यावत्तत्र स्थितौ तावदेव द्वितीया सखी गृहादागत्याहारभूमौ मां प्रतीक्षमाणं
पितरमवोचत्, येनाहमाशु समागमिष्यामीति मुनिपुत्रमुक्त्वा भीत्या पितुरन्तिक-
मुपगम्य कृतकिञ्चिदशना रसनाऽनाख्येयं तत्सम्पर्कसुखस्वादीयोरसमनुभवितुं
यावद्विनिर्गता तावदाद्या मदीया सखी समागता स्वैरमैरयत् सखि, मुनिपुत्रस्य
तस्य सखा समागतो द्वारि स्थितो मामवदत् यन्मनोरथप्रभादर्शनेन कुसुमशरश-
रारुशरशरव्यतां गच्छन् मम सखा कामप्यनिर्वचनीयां दारुणां दशां प्राप्तः प्राणे-
श्वरीं तां विना प्राणान् धारयितुमसमर्थ इति प्रयुक्तपैतृकव्योमगमनविद्योऽहं
मनोरथप्रभापार्श्वं प्रेषित इह समायातः । एतदाकर्ण्य तदुदन्ततृ[9]प्रालुस्ततो निर्ग-

* 'नैर्विडज्विरीसचौ' । १. 'तस्य पाकमूले पील्वादिभ्यः कुणब्जाहचौ', 'तेन वित्तश्चुञ्चुप्चणपौ' । २. 'उपाधिभ्यां त्यकन्नासन्नारूढयोः', 'त्यकनश्च निषेधः', 'तत्र भवः' । ३. 'सस्येन परिजातः' । ४. तिङश्चेत्यकच् । ५. 'कर्मणि घटोऽठच्' । ६. 'वर्णाद् ब्रह्मचारिणि' । ७. सन्, उत्तमः अनूको वंशो वृत्तिः स्वभावो वा यस्य तम् । ८. 'अनुकाभिकाभीकः कमिता' । ९. 'शीतोष्णतृप्रेभ्यस्तदसहने' ।

स्याग्रे गामिना पथिकेन[1] तेन, दयालुहृदयालुमुनिपुत्रकमित्रेण[2], ससखीहाहमोहाय[3], मया विना चन्द्रोदयेन सहैवोद्गतप्राणं तमद्राक्षम् । तद्वियोगार्णवनिमग्ना चाहमात्मानं निन्दन्ती गृहीततत्कलेवरा, मरणार्थिनी[4], यावदेवानलं प्राविविक्षं तावदेव तेजःपुञ्जाकृतिरुरुबली[5] पुमानेको दिवोऽवतीर्य समुपात्ततच्छरीरः खमुत्पत्यावलोक्यमान एव चक्षुषामगोचरतां गतः । तं तथाभूयंगते[6], मृते च तदनुपदिनि[7], तत्सुहृदि, केवलायामेव मय्यनलं प्रविविक्षौ, गगनगवी मामेवमभाषत—'मनोरथप्रभे, मनोरथः पूर्णस्ते भविष्यति मुनिकुमारकसंगमात्मक इति साहसेनानेनालम्' । एतदाकर्ण्य तत्समागमनिबद्धा शापाशासन्दानितप्राणा विरतमरणधारणा, धारणाध्यानादिना तद्दिनादादिनाथं भगवन्तं शंकरमर्चन्तीह स्थिता । एतद्वादिनी, तत्सखीविषये पृष्टा, सैवमवादीत्—यत्सा सिंहविक्रमनाम्नो विद्याधरेश्वरस्य मकरन्दिका नाम्नी कन्या मदीया सखी मद्दुःखदुःखिनी मद्वार्तां विज्ञातुं स्वसखीं प्रेषितवती आसीत् । तया साकं मयापि स्वसखी प्रेषिता इत्यद्याहमिहैकाकिनी तिष्ठामि । एवमुक्तवती सा, तदैव दिवोऽवतीर्णामुक्तसखीवार्तां तां स्वसखीं सोमप्रभाय दर्शयित्वा कारिततदर्थपर्णशय्याऽश्वाय घासञ्चादापयत् ।

ततः कृतनैशिकविश्रामा[8] व्यतियापितत्रियामाश्च सर्वे ते प्रातरुत्थिता व्योम्नोऽवतीर्णं देवजयनामानं विद्याधरमपश्यन् । यश्चागतः कृतानतिरुपविश्य मनोरथप्रभामेवमवादीत्—मनोरथप्रभे, राजा सिंहविक्रमो मन्मुखेनैवं त्वां वक्ति यत्त्वय्यपरिणीतायां त्वत्स्नेहात्तावकीना सखीयं मदीया सुता मकरन्दिकाऽपि न विवाहमिच्छतीतीहागत्यैनां बोधय येनेयं विवाहोन्मुखी स्यात् । एतदाकर्ण्य स्वसखीं प्रबोधयितुं देवजयेन सह गन्तुकामया तया सह वैद्याधरं लोकमवालुलोकयिषू राजा सोमप्रभोऽपि प्रदत्तघासमश्वं तत्रैव स्थापयित्वा सद्यो व्योम्ना सिंहविक्रमालयं प्रापत् । तत्र प्रदर्शितबहुतिथातिथ्या[10][11]तिथेयी[12] मकरन्दिका सोमप्रभं दृष्ट्वा कोऽयमिति जिज्ञासिता[13] मनोरथप्रभोक्ततदु-

१. 'तत्र कुशलः पथः' ( वुन् ) । २. 'हृदयाचालुरन्यतरस्याम्' । ३. ओहाङ्गतौ ( आगत्येति भावः ) । ४. 'अर्थाचासन्निहिते', 'तदन्ताच्च', 'ऋन्नेभ्यो ङीप्' । ५. 'बाह्वरुपूर्वपदाद् बलात्' इतीनिः । ६. 'भुवो भावे' । ७. 'अनुपद्यन्वेष्टा' । ८. 'सुखादिभ्यश्च' इतीनिः । ९. 'निशाप्रदोषाभ्याञ्च' । १०. 'बहुगणवतुडतिसंख्या', 'तस्य पूरणे डट्' 'बहुपूगगणसंघस्य तिथुक्' । ११. अतिथेर्ञ्यः । १२. पथ्यतिथिवसतिस्वपतेर्ढञ्, टिड्ढाणञ्० इति ङीप् । १३. 'तदस्य संजातं तारकादिभ्य इतच्' ।

दन्ता समुद्यद्वाकासोमप्रभेण सोमप्रभेण च सद्योऽपहृतमानसा न साऽऽत्मानं तत्परिवशं वशीकर्तुमपारयत्। सोमप्रभश्चापि सुपक्ष्मलाक्षीं[1] केशवां[2] लक्ष्मणां[3], ललाटूलाम्[4], सर्वथानुकूलाम्, लक्ष्मीतमां[5] प्रियतमाङ्गनां[6] तां मनसा प्राप्य, गण्यगुण्याग्रगण्यः[7] कश्चित्सुकृतिकप्रकृतिक[8] एव तद्वरो भवेदित्यचिन्तयत्।

अथ सायं सम्पादिताशनीतपिबतेषु सर्वेषु, सुखोपविष्टेषु, प्रवृत्ते च स्वैरं समालापे, वाग्मिनी[9], षोडशिनी[10], मनोरथप्रभा मकरन्दिकां तदुद्वाहानिच्छाहेतुमपृच्छत्। सा त्वाह शरीरादप्यधिकया मत्सख्या त्वयाऽस्वीकृते वरे कथमहं ते सुखदुःखस[11]धर्मिणी पाणिपीडनमिच्छेयम्। इत्थमुक्ता मनोरथप्रभा स्ववृतं वरं, तत्सङ्गमप्रतीक्षाञ्चाचक्षाणा पाणिग्रहाभिलाषिण्या मकरन्दिकया सह सोमप्रभं पर्यचीचयत्। तामपि च तद्रूपयौवनलावण्यातिशयाकृष्टामालोक्य सिंहविक्रमं क्रमात्तत्प्रीतिमुपक्रम्य मनोरथप्रभा तदुभयविवाहकृतनिश्चयाऽभूत्। ततोऽतितोषोत्कर्षोच्छलत्स्वान्तसिन्धुर्मनोरथप्रभाश्रमनिवर्तनावसरविन्दुः[12] सोमप्रभो लब्धधृतिस्तां जगाद–अहमधुना क्षिप्रमेव त्वदाश्रमगमनोत्कः[13]। मन्त्र्यधिष्ठितं तत्रागतं ममानुपदि सैन्यं मद्वार्तमनवेत्य[14] मामकीनाऽहिताशङ्कि परावर्तेत चेत्सद्वत्सलयोः[15] पुत्रवत्सलयोर्मम[16] पित्रोर्महादुःखकर उदन्त एष स्यादित्यवगतसैन्यवृत्तान्तो नितान्तनिश्चिन्तस्वान्तः, परावृत्य मकरन्दिकां परिणेष्यामीति श्रुत्वा देवजयोत्सङ्गारोपितं तं यावदेव स्वाश्रममानयति मनोरथप्रभा, तावदेव सोमप्रभस्य प्रियङ्करनामा मन्त्री तत्पदवीं विचिन्वानः ससैनिकस्तत्रागात्। मिलिताय च मन्त्रिणेऽतिहृष्टः सोमप्रभो यावदेव

---

१. पक्ष्मशब्दात् 'प्राणिस्थादातो लजन्यतरस्याम्' इति लचि सुपक्ष्मले अक्षिणी यस्यास्ताम्। २. प्रशस्ताः केशाः सन्ति यस्या इतिविग्रहे 'केशाद्वोऽन्यतरस्याम्'। ३. 'लक्ष्म्या अच्च' ( चात् न प्रत्ययः )। ४. प्रशस्तललाटयुक्ताम् 'वातदन्तबलललाटानामूङ् च'। ५. 'कृन्नद्या न'। ६. 'अङ्गात्कल्याणे'। ७. 'अन्येभ्योऽपि दृश्यते' इति यप्। ८. 'अत इन् ठनौ' (सुकृतं पुण्यं वर्तते अस्येति विग्रहः)। ९. 'वाचो ग्मिनिः'। १०. षोडशः सम्वत्सरोऽस्याः इति विग्रहे 'वयसि पूरणात्' इतीनिः ततो ङीप्। ११. 'समानस्य च्छन्दसीति' सूत्रे समानस्येति योगविभागात्सदृशवचनेन, सहशब्देनास्वपदविग्रहबहुव्रीहिणा वा समानस्य सहशब्दस्य वा सभावे 'धर्मशीलवर्णान्ताच्च' इतीन्नन्तान् ङीप्। १२. 'विन्दुरिच्छुः'। १३. 'उत्क उन्मनाः'। १४. 'वृत्तेश्च' ( विच्छिन्नस्य प्रतिविधानं वृत्तिः, सा अस्त्यस्मिन्निति वार्तम् )। १५. 'वत्सांसाभ्यां कामबले'। १६. 'अन्येभ्योऽपि दृश्यते' ( वलच् )।

सर्वमादितः[1] शंसति तावदेव शीघ्रागमनसूचकपितृसन्देशगर्भलेखमादाय दूतः समुपागत इति सचिवानुमतः पितुराज्ञामनतिक्रामन् तच्छ्राद्धो[2] निजनगरं जिगमिषुरवलोकितपितृकोऽहं न चिरादिह समागमिष्यामीति मनोरथप्रभां देवजयं चाप्युक्त्वा माता[3]पितृदर्शनातितृष्णगुष्णको[4] निजनगरगमनाभिमना बभूव। देवजयोऽपि च निवृत्य प्राप्तमकरन्दिकान्तिकः सर्वं तत्तां तथैवाबोधयत् यच्चाकर्ण्य सा वासन्तिकोद्याने गीते, सखीजनकोमलालापे चापि पराङ्मुखी, आहारे चापि प्रदर्शितनिरादरा, परित्यक्तमण्डनादिका, पितृभ्यां परिबोध्यमानाऽप्यविघृतधृतिरुत्सृष्टबिसिनीपत्रशयनोन्मादिनीवोद्वेगदायिनी पित्रो र्निजप्रियतमवियोगवैक्लव्यपिशुनविषु[5]णतामभजत् । पितृभ्यामनुनेनीयमानापि तद्वचसा प्रकृतिमनापन्ना सा क्रुद्धाभ्यां ताभ्यां निःश्रीके निषादमध्ये तेनैव शरीरेण कञ्चित्कालं पतितुं शप्ता स्वजातिस्मृतिवर्जिता सा मकरन्दिका तदैव ( मुक्तालताख्या ) निषादकन्याऽजनि । तत्पिता सिंहविक्रमश्च कन्याशापशोकसन्तापितस्वान्तः सपत्नीकः पञ्चत्वमवाप । स च विद्याधरेन्द्रः (सिंहविक्रमः) पुरा सर्वशास्त्रविन्मुनिः केनापि प्राक्त[6]नापुण्यशेषेण शुकतां गत इति स एवायं शुकः स्वतपोबलात्पुराधीतं सर्वं सुतरां स्मरति । कर्मगतिश्चास्य विचित्रां स्मृत्वाऽहमहसम् । राजसदसि कथामेतामुक्त्वैष विमोचयते । सोमप्रभश्चास्य सुतां निषादीत्वमागतां मकरन्दिकां वैद्याधरे जनुषि प्राप्स्यत्येव । मनोरथप्रभा चापि सम्प्रति भूमिपरूपेण वर्तमानं तं रश्मिमन्तं मुनिसुतं तदैव पतिमवाप्स्यति । सोमप्रभश्चापि पितरं दृष्ट्वाऽऽश्रमे प्रियाप्राप्त्यै शङ्कराराधनसाधिष्ठस्तिष्ठति'—

एवं मत्सम्बद्धां कथां कथयित्वा तूष्णीं[7]कामासीने मुनौ, समुपजातजातिस्मरणभूयिष्ठहर्षशोकपरीतमानसोऽहं येन मुनिना तत्र कृपया नीतोऽभवम् तेनैव मरीचिमुनिना गृहीत्वा वर्द्धितः । समुपारूढपर्क्षकश्च पक्षिसुलभाच्चापलादितस्ततः परिभ्राम्यन्, स्वविद्याश्चर्यञ्च प्रदर्शयन्, निषादहस्ते पतितः क्रमात्त्वदन्तिकमानीतः । इदानीञ्च मदीयं पक्षियोनिजं दुष्कृतं क्षीणम् ।

---

१. 'आद्यादिभ्य उपसंख्यानम्' । २. 'प्रज्ञा श्रद्धार्चाभ्यो णः' । ३. 'आनङ् ऋतो द्वन्द्वे' । ४. 'शीतोष्णाभ्यां कारिणि' । ५. 'विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः' ( विषुणता अव्यवस्थितचित्तता ) । ६. 'दिक्शब्देभ्य' इति विहितस्यास्तातेः 'अञ्चेर्लुक्' 'तद्धितश्चासर्वविभक्तिरि'त्यव्ययत्वे, 'सायंचिरमि'ति टयुल् तुटौ । ७. 'अकच्प्रकरणे तूष्णीमः काम् वक्तव्यः' । ८. 'अल्पे' ।

एतां कथां कथयित्वा विरते विचित्रवाचि विदुषि शुके, स सुमनोमहीभृत् तदाकर्णनप्रमदपयोनिधितरङ्गोद्वेलितविस्मृतान्तरात्मा समजायत । सोमप्रभतपसा चातिसंतुष्टः शंकरः स्वप्ने तं सुमनोनृपस्यान्तिकं गन्तुं, तत्र स्वकान्ताञ्चावाप्तुमित्थं समादिदेश यत् पितृशापतो मकरन्दिका निषादसुता भूत्वा शुकतामवाप्तं निजपितरमादाय राज्ञोऽन्तिकं प्राप्ता त्वाञ्चावलोक्य विनिवृत्तशापा सा विद्याधरी सती स्वजातिं स्मरिष्यतीत्यन्योन्यविज्ञानविवृद्धहर्षशोभासम्पन्नयो र्युवयोः सङ्गमो भविष्यति' । भूमिपतिमेवं निगद्य गिरिजेशः स्वाश्रमस्थां मनोरथप्रभामपि तथैवाब्रवीत्—यद्रश्मिमान्नामा यो मुनिसुतस्ते वरोऽभिमतः स सम्प्रति सुमनोऽभिधानो भूमावुत्पन्न इति तत्र गत्वा त्वद्दर्शनेन सम्प्राप्तजातिस्मरं तं वरमाप्नुयाः।

सोमप्रभविद्याधरकन्यके विभुना शम्भुना इत्थं स्वप्ने पार्थक्येनादिष्टे सुमनोनृपतेः सदः समाजग्मतुः । तत्र सोमप्रभावलोकनेन संस्मृतस्वजातिर्विमुक्तशापा मुक्तालताख्या मकरन्दिकाऽवाप्तनिजदिव्यवपुस्तं कण्ठे जग्राह । सोमप्रभोऽपि च गिरिजापतेः प्रभावाद्विद्याधरराजपुत्रीमवाप्य कृतार्थः समपद्यत । सुमनोमहीपतिश्चाप्यवलोकितमनोरथप्रभस्मृतस्वजातिर्नभश्च्युतां पूर्वां तनुं प्रविश्य मुनीन्द्रपुत्रतामवाप्य चिरोत्सुकः स्वकान्तया च तया सङ्गतः स्वाश्रमं प्रययौ । सोमप्रभभूपतिश्चापि निजां प्रियामादाय निजनगरमगमत् । शुकोऽपि च सद्यो वैहङ्गाङ्गसङ्गभङ्गं कृत्वा तपोभिरर्जितं निजधाम जगाम ।

एवं सुदूरान्तरितविशंकट[1]सङ्कटसंकटसङ्कटितानामपि देहिनां यथाकालमवश्यं सङ्गमः सञ्जायत इति न कथमप्यत्रभवता शक्तियशोलाभविषये चिन्तितेन भुवेलिमम् एवं निजसचिवेन गोमुखेन प्रबोधितो नरवाहनदत्तः शक्तियशःसङ्गमसमुत्सुकोऽपि परमसन्तुष्टः शयनशरण[2]मशिश्रियत् ।

परेद्यवि गोमुखः सौखशायनिक[3]-सौस्नातिक[4]-सेवकजनपरिवृतनरवाहनदत्तमनोविनोदसमये पुनरायातस्तन्मनोरञ्जनार्थं कथामपरामेवमारभत—

अस्ति यथासमयमुप्यमानपल्यूल्यमान[5]मौद्गीन[6]-व्रैहेय[7]-यव्यतिल्य[8]गौधूमीनचा-

---

१. 'वेः शालच्छङ्कटचौ','सम्प्रोदश्च कटच्'; विशंकटसङ्कटसंकटैरतिदुःखैः संकटितानाम् अभिभूतानाम् । २. शयनागारम् । ३-४. 'पृच्छतौ सुस्नातादिभ्यः' । ५. पल्यूलवनपवनयोरिति चौरादिकधातोर्यकि शानच् । ६. 'धान्यानां भवने क्षेत्रे खञ्' । ७. 'व्रीहिशाल्योर्ढक्' । ८. 'यवयवकषष्टिकाद्यत्' 'विभाषा तिलमाषोमाभङ्गाणुभ्यः' । ९. 'खलयवमाषतिलवृषब्रह्मणश्च' ।

णकीनैः,[1] क्वचिद्द्वितीयाक्रियमाणैरितरत्र[2] शम्बाक्रियमाणैरन्यत्र[3] च बीजाकृतैः[4] चैत्रैरिक्षुशाकटोपयुज्यमानशाकटैः,[5] आनुव्रजमार्गोपरूढाजथ्यविथ्यैः,[6][7] आशितङ्गवीनगौष्ठीनैः[8][9] विकटाविकटोरणयुद्धैः,[10] अविपटाविषोढालपपयःपिपासाऽविकपोतकपेपीयमानाविसोढैः,[11][12][13] सञ्चाल्यमानगोगोयुगोढशकट्युपस्थोपवेशित–कृषीवलबालव्रातीनैः,[14][15][16] अनुगवीनसंरचयमाणाद्यश्वीन–समांसमीनैः,[17][18] गोगोष्ठतिष्ठदागवीनैः[19][20] स्थलैः, सद्बृहतिकैरप्यसद्बृहतिकैः[21] परहितपरिहितकौपीनैरप्यतिशालीनैर्जनैश्च[22] राजन्वद्धारतभूमिमनुकुर्वतः[23] कुरुवर्षस्य धारेश्वराभिधेये शैवे सिद्धक्षेत्रे न्यवसत्कोऽपि बहुभिर्वैनयिक-तापसोपसेदिवद्भिरुपास्यमानो[24][25] मुनिश्रेष्ठः[26]। एकदा स स्वप्रेष्ठान्[27] शिष्यान् आहूय 'युष्मासु केनचिदपि किमप्यपूर्वं श्रुतं दृष्टं वा स्याच्चेदुपवर्ण्यताम्' इत्याज्ञापयत्। गुरुणा एवमुक्तानां तेषामेकतमोऽगादीदानु-[28]

---

१. धान्यानाम्०। २-३-४. 'कृञो द्वितीयतृतीयशम्बबीजात्कृषौ'। ५. 'भवने क्षेत्रे शाकटशाकिनौ'; 'शकटादण्'। ६. 'अनुयतसमया'; 'तद्गच्छतिपथिदूतयोः'। ७. 'अजाविभ्यां थ्यन्'। ८. 'अषडक्षाशितङ्ग्वलम्०'। ९. गवां स्थानमिति सुपीतियोगविभागात्तिष्ठतेः के, अम्बाम्बगोभूमीति सस्य षत्वेऽष्टुत्वम्; एवं निष्पन्नाद् गोष्ठशब्दात् 'गोष्ठात्खञ् भूतपूर्वे'। १०. 'सम्प्रोदश्च कटच्' इत्यत्र चाद्विकटम्, तथा अविशब्दात् 'संघाते कटच्' तत्र ये उरणाः मेषाः ( कारनाम्नीतिसूत्रे हलादावेवेतिनियमेन सप्तम्यलुगभावः )। ११. 'विस्तारे पटच्'। १२. 'अवेः कः' ( अविरेव अविकः )। १३. 'अवेर्दुग्धे सोढदूसमरीसचोवक्तव्याः' ( सकारपाठ सामर्थ्यान्न षः )। १४. 'द्वित्वे गोयुगच्'। १५. सर्वतोऽक्तिन्नर्थादित्येके'। १६. 'रजः कृष्यासुति०' 'बले', 'व्रातेन जीवति'। १७. 'अनुग्वलं गामी'। १८. 'अद्यश्वीनावष्टब्धे'। १९. 'गोष्ठजादयः स्थानादिषु पशुनामभ्यः'। २०. आङ् पूर्वाद्गोः कर्मकरे खः; गोः प्रत्यर्पणपर्यन्तं कर्मकरः। २१. बृहती भाषणम् जलादिनिधानं वा तत्सहितैरपि प्रावाररहितैः ( एकत्र बृहतिकाशब्दे 'न सामिवचने' इति सूत्रज्ञापितो बृहतीशब्दात्स्वार्थिकः कन् 'केऽण्' इति ह्रस्वः )। २२. 'शालीनकौपीने अधृष्टाकार्ययोः'। २३. 'राजन्वान् सौराज्ये'। २४. 'विनयादिभ्यष्ठक्'। २५. 'अण् च' इत्यनेन तपसोऽण्। २६. अतिशयेन प्रशस्य इति, 'अतिशायने तमबिष्ठनौ' इत्यनेन प्रशस्यशब्दादिष्ठनि प्रशस्य श्रः 'प्रकृत्यैकाच्'। २७. प्रियशब्दादिष्ठनि, प्रियस्थिरेति प्रादेशः। २८ 'एकाच प्राचाम्'।

गा[1]दिकोऽपूर्वस्य स्वश्रुतस्यैवं यत्काश्मीरेषु विजयनामधेये कस्मिंश्चिच्छाम्भवे महाक्षेत्रे कृतकुटीरः, सर्वथा शंयु[2]रपि विद्याहंयुः[3] कश्चित्परिव्रा[4]ण् न्यवसत्। अहं सर्वविजयी भवेयं, द[5]विष्ठेष्वपि देशेषु मदीया बंहिष्ठा[6] कीर्तिः प्रसरेदित्यत्युत्कटेच्छः शम्भुं प्रणत्य सद्योवादाय बहिर्निरगमत्। पर्यटनक्रमेण च स विदुष्म[7]तः प्रदेशान् गत्वा तत्रत्यान् वादविद्वद्दे[8]श्यबहुपटून् पराजयमानोऽटवीमेकामासाद्य परिश्रान्तस्तरोरेकस्याधस्ता[10]द्विशश्राम। क्षणादेव च तत्र नेदीयः[11] सरःसरसिजशिशिरसमीरणे क्षेत्रे कुतश्चित्समागतेन दण्डकुण्डिकाकरेण, द्रव्येण[12], धा[13]र्मिकेणैकेन तस्य काकतालीया[14] संगतिः सञ्जाता। कुत आगतः, क्व च त्वं यासीति परिव्राजा परिपृष्टो धार्मिको जगाद, 'अहं विद्याक्षेत्रात्पाटलिपुत्रादिहायातो वादेन वावदूकान् जेतुं काश्मीरान् गच्छामि'। एतदाकर्ण्य परिव्राडचिन्तयत्–यदिहस्थोऽयमेकः पाटलिपुत्रीयः स्वकुशा[15]ग्रीयया बुध्या न मया जितश्चेत्तत्र गत्वा बहूनां जयोऽसम्भव एवेति परिव्राड् धार्मिकमाक्षिप्यैवमाह–'देव मुमुक्षुस्त्वम्, वादव्यसनातुरस्त्वञ्चेत्येतद् द्व[16]यं सर्वथाऽन्योन्यभिन्नम्। वादाभिमानबन्धेन संसृतिमुमुक्षा, वह्निनौष्ण्यशमनमिव, हिमेन च शीतनिवारणमिव, पाषाणतरण्या सिन्धूत्तरणमिवेति रक्षसां कृते शोभावहां वाक्क[17]लहविवादेच्छां परित्यज्य संसारक्लेशभीरुणा मुमुक्षुणा सर्वथा शान्तेन दान्तेन च भवितव्यम्। एवमुक्तो धार्मिकोऽतिसन्तुष्ट उवाच–'संबन्धो हि सज्जनानामाभाषणपूर्वः, सख्यं[18] ञ्च साप्त[19]पदीनमित्यटव्यामिह सङ्गतयोर्नावेतद्द्वितयं सञ्जातम्। अतो मित्रस्थानेऽपि भवानुपदेशेनानेन मे गुरुस्थानीयः[20]।

---

१. 'अनुगादिनष्ठक्'। २. 'कंशंभ्यां बभयुस्तितुतयसः'। ३. 'अहं शुभमोर्युस्'। ४. 'परौ व्रजेः षः पदान्ते'। ५. 'स्थूलदूर०'। ६. बहुलशब्दादिष्ठनि 'प्रियस्थिरे'ति बंहादेशः। ७. 'तदस्यास्त्यस्मिन्निति मतुप्'; 'तसौ मत्वर्थे'; 'वसोः सम्प्रसारणम्'। ८. 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः'। ९. विभाषा सुपो बहुच्पुरस्तात्तु। १०. 'पूर्वाधराधराणाम्०' 'अस्ताति च'। ११. अन्तिकशब्दादीयसुनि 'अन्तिकबाढयोर्नेदसाधौ'। १२. 'द्रव्यं च भव्ये'। १३. 'धर्मं चरति'। १४. 'समासाच्च तद्विषयात्'। १५. 'कुशाग्राच्छः'। १६. 'संख्याया अवयवे तयप्'; 'द्वित्रिभ्यां तयस्यायज्वा'। १७. 'पूर्वसदृशसमोनार्थकलह०'। १८. 'सख्युर्यः'। १९. 'साप्तपदीनं सख्यम्'। २०. 'स्थानान्ताद्विभाषा सस्थानेनेति चेत्'।

एवमुक्त्वा बहुकृत्वस्तं[1] प्रणम्य, त्रिः[2] परिक्रम्य च, यथाभिमतमगात् । परिव्राट् च तत्रैव स्थितो भार्यया सह क्रीडतस्तद्द्रुमसद्रो[3] यक्षस्य[4] वार्ताप्रसङ्गेऽशृणोत् यत्क्रीडायाम् यक्षेण नर्मणा पुष्पस्रक्ताडिता तद्वृक्षकपत्नी मृषैव विचेतीकृतां[5] मृतकल्पा[6]-मात्मानं प्रदर्शितवतीति बान्धवजनमुक्ताक्रन्देन कोलाहलपूर्णं तत्सर्वं स्थानं क्षणमजायत । चिरस्यैवंभूतदशा सा हशावुदमीलयत् । 'किं ते जातम् ? कथमेवमभूत् ? किं वा त्वयैवंभूतदशायामन्वभावीति पृच्छापरवशे यक्षे, मिथ्यैव सैवमवोचत्-'त्वया मालयाऽभ्याहताहं तत्क्षणमेव कृष्णं, पाशहस्तं, कर्णिलम्[9], दन्तुरम्[10] ज्वलन्नेत्रम्, ऊर्ध्वशिरोरुहं, निजच्छायामलीमसीकृतसर्वदिशम्[11], कमप्यपश्यम् । स च दुष्टः शमनसदनं मामनैषीत् किन्तु तत्रत्यस्वामिना[12] 'नैषोऽमुष्या मृत्युसमय' इत्युक्त्वा परित्यक्ता जागरितेवाहं प्रकृतिमापन्ना इह चकितानिव, विरहीकृतानिव[13] चोऽवलोकयामि । एवमभिधायिनीं यक्षिणीमाकर्ण्य यक्षो जक्षदाचचक्षे[14] मूढे—जानामि त्वामहं कुहनानायिकाममतिमायिकाम्[15] । स्त्रीणां हि चेष्टितं प्रायेणैन्द्रजालिकमेव[16] । क्व स्रक्ताडनया यमपुराध्वाध्वन्यता[17] क्व च ततः परावृत्तिः । त्वयेत्थमभिदधत्या पाटलिपुत्रस्त्रीवृत्तान्तोऽन्वकारि ययैवमेव विचित्रकृत्येन स्वपतिरवञ्चि । सा च तदानीन्तनपाटलिपुत्रीयसिंहाक्षनामकस्य राज्ञो भार्या । एकदा सा स्वमन्त्रिसेनानीपुरोहितवधूभिः सह ज्यौत्स्न[18] पक्षत्रयोदश्यां सरस्वती[19] मन्दिरं दर्शनार्थं यान्ती मार्गं विविधं विचेष्टमानैः मृतं[20] मृता इति चीत्कुर्वाणैः अर्शसैः[21], कुष्ठिभिः,[22] पीनसिभिः[23], आनाहिभिः[24], भगन्दरिभिश्चैवं

---

१. 'विभाषा बहोर्धेति' पाक्षिकधाऽभावे 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्'। २. 'द्वित्रिचतुर्भ्यः सुच्' । ३. 'द्युद्रुभ्यां मः' । ४. 'दाधेट्सिशदसदो रुः' । ५. 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' । ६. 'ईषदसमाप्तौ कल्पप्'० । ७. 'प्रज्ञादिभ्यश्च' । ८. 'गुणवचनेभ्यो मतुपो लुगिष्टः' । ९. 'स्वाङ्गाद्विवृद्धौ' ( इलच् ) लम्बकर्णमित्यर्थः । १०. 'दन्त उन्नत उरच्' । ११. 'ज्योत्स्नातमिस्रा'० । १२. 'स्वामिन्नैश्वर्ये' । १३. 'अरुर्मनश्चक्षुश्चेतः० । १४. 'जक्षित्यादयः षट्', 'नाभ्यस्ताच्छतुः' । १५. 'व्रीह्यादिभ्यश्चेति' ठन्, टाप् । १६. 'प्रयोजनम्' । १७. 'अध्वनो यत्खौ' । १८. 'ज्योत्स्नादिभ्य उपसंख्यानम्' इत्यण् । १९. सरः प्रसरणम् तदस्त्यस्यामिति मतुपि 'संज्ञायाम्' इति मस्य वः । २०. 'आबाधे च' । २१. 'अर्श आदिभ्योऽच्' । २२-२४. 'द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः' ( मूत्रावरोधः, कोष्ठबद्धता वाऽऽनाहस्तद्युक्तैः ) ।

विविधक्षेत्रिय[1]व्याधिदुःखाकृतैरन्यैश्च कुब्जान्धपङ्गुखोडावटीटचिल्ल[2][3]कौकुटिकै[4]र्मिलिता निगदिता देवि, देहि दीनेभ्यो विविधाम[5]याविभ्यो नः किमपि भैषज्य[6]म्। कुर्वस्माकमर्शत[7]ः, कुष्ठतः, प्रवाहिकातश्चेति। यतो हि सौदामनी स्फुरितभङ्गुरोऽयं जीवलोकः। दानदेवदर्शनादिभिरेवाकालिका[9]भिधानीयक[10]प्रतीयमानरामणीयकः। तथापीभा इव तुन्दिभा[11]ः, केशवा[12] अप्यकैश[13]वाः बहवो ऽश्नीतपिबतमोदतै कपरायणाः औदरि[14]काः उदरपूरं भुक्त्वा सुवसितवसनाः केश[15]का स्वसदृशान् समया, समयाकु[16]र्वन्ति किन्तु ना त्रभ[17]वतीभिरप्यदसी[18]यवृत्तिर्भाग्यमपि त्वकिञ्चना[19] वयमीश्वरप्रदत्तशक्तिभिरुद्धर्तव्याः।

एतदाकर्ण्य भूपादिपत्न्योऽन्योन्यपरामर्शेन निःसहायांस्तान् एकैकं[20] चिकित्सयितुं स्थिरीकृतवत्यः। देवीदर्शनानन्तरं परावर्तमानाश्च ता विविधव्याधिग्रस्तांस्तान् पृथक् पृथक् स्वभवनान्यानाय्य स्वस्वस्वामिसमवाप्तसम्मतयस्तेषां सेवां सम्पादयन्त्यो न तदन्तिकादुत्तस्थुरिति बंहीयःकालिक[21]संपर्केण तथा तदासक्तास्ताः सञ्जाता यन्मन्मथान्धीकृतास्तन्मयमेव जगदवलुलोकिरे। स्वप्रेयसीरेवंभूता अवलोक्य समुपजातशङ्केषु नृपादिषु, नृपो युक्त्या स्वपत्नीमनुयुज्य वास्तविकतत्त्वमवगन्तुं प्रतिजज्ञे। परेद्यवि तस्याः शरीरे कानिचित् सम्भोगविशेषचिह्नानि समवलोक्य तज्जिज्ञासापरो राजा सत्याख्यानेनैव तस्याः

---

१. 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः'। २. 'नते नासिकायाः संज्ञायां टीटञ् नाटज्भ्रटचः'। ३. 'क्लिन्नस्यचिल्पिल्लश्चास्य चक्षुषी'। ४. 'संज्ञायां ललाटकुकुट्यौ पश्यति'। ५. 'आमयस्योपसंख्यानम्'। ६. 'अनन्तावसथेतिहभेषजाञ्ञ्यः'। ७. 'रोगाच्चापनयने'। ८. 'तेनैकदिक्'। ९. 'आकालिकडाद्यन्तवचने'। १०. 'योपधाद्गुरूपोत्तमाद्वुञ्'। ११. 'तुन्दिवलिवटेर्भः' (वृद्धानाभिस्तुन्दिः)। १२. 'केशाद्वोऽन्यतरस्याम्'। १३. 'भक्तिः'। १४. 'उदराट्ठगाद्यूने'। १५. 'स्वाङ्गेभ्यः प्रसिते' (केशप्रसाधने प्रसक्ताः, तद्रचनायां तत्परा इत्यर्थः)। १६. 'समयाच्च-यापनायाम्'। १७. 'इतराभ्योऽपि दृश्यन्ते' (इति त्रल्) दृशिग्रहणाद् भवदादि योग एव। १८. त्यदादीनां वृद्धत्वे, 'वृद्धाच्छः'। १९. न वर्तते किञ्चनमेषामिति मयूरव्यंसकादित्वात् समासः। २०. एकं बहुव्रीहिवत्। २१. 'प्रकृष्टे ठञ्' (प्रकृष्टो दीर्घः कालोऽस्येति कालिकः सम्पर्कस्तेन)।

श्रेयो निर्दिशन् प्रतारणकौशलिकया[1] तयेत्थं कृतकमुक्तः—'चारित्रतो[2]ऽतिगृह्यमाणाऽहं न वृत्ततो व्यथेऽथेहाद्यावधि न कथमपि वृत्ततः क्षिप्ता। आम्, रात्रावितश्चित्रभित्तेः कश्चिच्चक्रगदाधरो निर्गत्य मामुपैति तत्कृतमेतच्चिह्नम्' एतदाकर्ण्य स मूर्खो राजा वैष्णवीं तां मायामात्मपत्नीञ्च शुचीभूता[3]माकलय्य मन्त्रिसेनान्यादीन् अपि तथैव प्रबोधयमानस्तूष्णीको[4]ऽभवत्।

एवमसत्यैकरचनाचतुरा, अनपेक्षितसाक्षिण्यः[5], शठा भार्या बहुधा[6] जडमतीन् पतीन् प्रतारयन्ति। न यक्षोऽहं तादृक्षो यत्र ते स्त्रीप्रपञ्चः फलिनो[7] भवेत्।

तरुतले स्थितः परिव्राजकस्तत्सर्वं निशम्य बद्धाञ्जलिर्यक्षं तं व्यजिज्ञपत् भगवन्नहं ते शरणागतः इतीहस्थेन मया यद्भवद्भ्यः समाकर्णि तदागो मे मर्षय। तस्यैवं विद्याविनयवाक्येनातितुष्टो यक्षो निजगाद—अहं हि सर्वस्थानलब्धयो यक्षो भवत्सत्योक्त्या चाति सन्तुष्टः इति वरं कमपि मत्तो याचस्व। एवमुक्तः परिव्राडुवाच यत्त्वं स्वभार्यां माभिकुध्यैषएव मदीयो वरः। एतदाकर्ण्य ततोऽप्यधिकं सन्तुष्टेन यक्षेण पुनरन्यं वरं ग्रहीतुमागृहीतः परिवाड् अद्य प्रभृति जम्पती युवां स्वपुत्रं मां जानीतमिति प्रार्थयामास। तथाकर्ण्य सभार्यो यक्षस्तत्क्षणं प्रत्यक्षीभूय, तत्स्वीकृतिं ददद्वादीद् यद् मद् वराद् भवान् मर्त्यत्रा[8]वसद्भिर्जनैः सह विवादे, द्यूते, कलहे च सर्वदा विजयी भविष्यति। एवमुक्त्वाऽन्तर्हितं यक्षं मनसा प्रणम्यातिवाहितत्रियामः परिव्राट पाटलिपुत्रकमागत्य तत्रत्यराजास्थानगतात् पण्डितान् विवादे पराजितवान्। तेनातितुष्टो भूपतिर्बहुसीमराज्ये तत्रा[9]कुर्वन्नपि स्वदेशैकप्रियेण परिव्राजा तेन प्रत्याख्यात इति राजसा[10]त्कृतकोशसञ्चितप्रत्नसद्रत्नसमुत्करेण नृपेण तेन सम्मानितः स परिव्राट् स्वदेशं परावृत्य यक्षप्रसादेन ससुखं न्यवसत्।

---

१. मनोज्ञत्वाद् वुञ्। २. 'अतिग्रहाऽव्यथनक्षेपेष्वकर्तरि तृतीयायाः, चारित्रेणान्यानतिक्रम्य वर्तमानाहमिति भावः' वृत्ततश्चारित्रतो न चलामीतिनाद्यावधि चारित्रेण निन्दिता। ३. 'अभूततद्भावेच्विः', 'च्वौचेति'दीर्घः। ४.'शीले को मलोपश्च'। ५. 'साक्षाद् द्रष्टरि संज्ञायाम्' ततोनान्तत्वान् ङीप्। ६. विभाषा बहोर्धाऽविप्रकृष्टकाले'। ७. 'फलवर्हाभ्यामिनच्'। ८. 'देवमनुष्यपुरुषपुरु०' इति सप्तम्यन्तात् त्रा; मर्त्येषु वसद्भिरिति भावः। ९. 'देये त्रा च'। १०. 'तदधीनवचने'।

शिष्यमुखादेवं परिव्राडुपवर्णितकथामाकर्ण्य कुभार्याणां पतिवञ्चकतां निन्दन् सत्यमाहात्म्यञ्च सर्वथा स्तुवन् परमानन्दतुन्दिलो[1] मुनिः परां कोटिं सन्तोषस्यावाप।

गोमुखमुखाच्छ्रुताभिरेवं विधाभिर्विनोदकथाभिर्दिनान्यतिवाह्य विवाहदिवसे प्राप्ते पितुरन्तिकस्थो नरवाहनदत्तो नभसः सहसावतीर्णं वैद्याधरं बलं तन्मध्ये च ससदास्यदास्यमानस्वकीयदुहितरमागतं विद्याधरेन्द्रं स्फटिकयशसञ्चावलोक्य प्रत्युद्गतोऽर्घ्यादिना कल्पिताशेषस्वोचितदिव्यवैभवविधयातिथ्यसत्कृतिः श्वशुर इति पूजयामास। स्फटिकयशा अपि च पूर्वप्रदिष्टां स्वकन्यां शक्तियशसं रत्ननिचयप्रपूरितायवत्सेशसुताय सुखसुखेन[2] सविधि प्रदाय परांकोटिमानन्दस्यानुभवन्निजावासमुत्पपात।

स्वशक्तियशःसम्पन्नो नरवाहनदत्तश्चाप्यधुना स्फटिकयशःप्रसूतशक्तियशोद्विगुणितशक्तियशःसम्पन्नो नवोढया बध्वा यथावश्यकं यथाकालं यथायथं[3] द्वन्द्वं[4] मन्त्रयमाणः सुखमयानि दिनान्यनैषीत्।

इति कौमुदीकथाकल्लोलिन्यां तद्धितद्विरुक्तनिर्देशात्मकः पञ्चमः कल्लोलः॥

( समाप्तोऽयं पूर्वार्द्धभागः )

नंन्नमेह[5] पाणिनये गुरवे श्रीजयदेवमणये चापि।
विद्वन्मालामणये गुरुजश्रीरामशिरोमणये स्यात्॥ १॥

---

१. 'तुन्दादिभ्य इलच्'। २. 'अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्'। ३. 'यथास्वे यथायथम्।' ४. 'द्वन्द्वंरहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु'। ५. नमतेर्यङन्तात् क्वियामप्रत्ययः, मुहुर्मुहुर्नतिरित्यर्थः।

कौमुदी–

# कथाकल्लोलिनी

## [ पश्चार्द्धभागः ]



## अथ गणनिर्देशात्मकः षष्ठः कल्लोलः

[1]नमाम्यशेषविघ्नौघगारणं वारणाननम् ।
कारणं चर्द्धिसिद्धीनां दुरितार्णवपारणम् ॥

अन्यपत्नीप्राप्तौ– ( भ्वादयः )

कामरूपेण स्पर्द्धमानो[2] वत्सयुवराज एवं शक्तियशसं रत्नप्रभाद्या आद्या देवीस्तास्वपि च मुख्यां मदनमञ्जुकाञ्चोपलभ्य सुहृद्युक्तो निजपितृपार्श्ववर्ती समोदं[3] कौशाम्ब्यां निवसन्नेकदोद्यानं गतो देशान्तरादागताभ्यां द्वाभ्यां भ्रातृभ्यां राजपुत्राभ्यां सङ्गतोऽभवत्[4] । स्वीकृतवत्सयुवराजकृतातिथ्ययोश्च तयोरेकतरस्तम् अगादीत्[5], 'देव, आसीन्निजारामरामणीयकाधरीकृतनन्दने, क्रीडासरसीभिः सम्वलिते[6], तुषारधव-

---

१. गणकार्यारम्भे गणेशप्रणत्यात्मकमङ्गलस्यात्यावश्यकतया भ्वाद्यदादिसर्वगणप्रतिनिधिरूपतत्तद्गणीयधातुनिष्पन्नशब्दग्रथितश्लोकेनादौ गणेशनतिरूपं मङ्गलं नमामीति–इह नमामीत्यत्र 'नम्' इति भ्वादिगणधातुः । अशेष इत्यत्र च 'शिष्' इति रुधादिगणधातुः । विघ्न इत्यत्र विपूर्वकादादादिकात् 'हन्' धातोः कप्रत्ययः । ओघ इत्यत्र च 'उच्' समवाये इति दैवादिकाद् घञि पृषोदरादित्वाच्चकारस्य घकारः । गारणमित्यत्र तौदादिकात् 'गॄ' धातोर्णिजन्ताल्ल्युट् । एवं वारणमित्यत्र क्रैयादिकाद् 'वॄ'धातोर्णिजन्ताल्ल्युट् । कारणमित्यत्र तानादिक 'कृ' धातोर्णिजन्ताल्ल्युट् । ऋद्धिरित्यत्र सौवादिकाद् 'ऋध्' धातोः क्तिन् एवं सिद्धिरित्यत्र दैवादिकात् 'सिध्' धातोः क्तिन् । दुरितशब्दो दुरुपसृष्टात् आदादिकात् 'इण्' धातोः क्तान्तः । अर्णवशब्दश्च जौहोत्यादिकाद् 'ऋ' धातोः औणादिके नसि मत्वर्थीय-वप्रत्ययान्तः ( धातोरस्यच्छान्दसत्वेऽपि 'अर्तिपिपर्त्योश्च' इतीत्वविधानसामर्थ्याल्लोकेऽपि तत्प्रयोगः ) पारणमित्यत्र तु चौरादिक 'पार' धातोर्ल्युट् प्रत्ययः ।
२. स्पर्ध संघर्षे । ३. मुद् हर्षे । ४. भू सत्तायाम् । ५. गद् व्यक्तायां वाचि । ६. वल् सम्वरणे ।

लभित्तिप्राकारप्राकारेण परिगते, जलप्रतिबिम्बितप्राकारच्छलेनोच्छलज्जलनिधिशङ्कया मैनाकमन्वेष्टुमन्तःप्रविष्टहिमवतेव महाखातवलयेन वेष्टिते[1], महापार्थिववरूथिनीवानेकरथ्यासङ्कुले, प्रजल्पता[2], पठता[3], गायता[4] च भुजङ्गजनसमाजेन क्षणमप्यपरित्यज्यमान[5]मनोभवभवभावनभवने, स्वीकृतसतीव्रताभिरप्यसतीव्रताभिः[6], कृतसरसङ्गाभिरपि कृतकुसङ्गाभिः[7], सनिमेषदर्शनाभिरपि निर्निमेषदर्शनीयाभिः[8] अङ्गनाभिरलंकृते वैशाखाख्ये पुरे सुव्यवस्थापितवर्णाश्रमधर्मो दैवपुरुषकारानुगुण्यषाड्गुण्यप्रयोगचतुरः, मनुष्यलोकस्थितोऽपि गुणगणगरिम्णा सर्वलोकोपरिस्थितः, परमाणुसूक्ष्मयाऽपि क्रोडीकृतत्रैलोक्यया प्रज्ञया समुपेतः, सप्ततन्तुख्यातोऽप्यसङ्ख्यगुणशाली[9], सर्वदाह्लादितलोकोऽप्येकदानानन्दितभूसुरनिकरः[10], उदात्तेनापि[11] स्वरितेन स्वचरितेन पवित्रितत्रिभुवनावनिः, स्वपरभार्यास्वजनपराङ्मुखोऽपि परस्वभार्यास्वजनसम्मुखः[12], अवनितापहार्यप्यवनितापहारी[13], सौजन्यपरतन्त्रवृत्तिरप्यसौजन्य[14]-

---

( भ्वादयः )

१. वेष्ट वेष्टने। २. जल्प व्यक्तायां वाचि। ३. पठ् व्यक्तायां वाचि। ४. गै शब्दे। ५. त्यज हानौ। ६. पतिव्रताभिरपि तीव्रतया स्वभावोग्रतया असहिताभिः। ७. कुः पृथ्वी तत्सङ्गाभिः, भूमिसङ्गताभिः। ८. अतिसुन्दरीभिः। ९. सप्तभिस्तन्तुभिः सूत्रैः ख्यातो विख्यातोऽपि असंख्यैः गुणैः सूत्रैः शोभाशालीति विरोधः; सप्ततन्तुर्यज्ञः, गुणाः शौर्यादयः इति परिहारः। १० सर्वदा सुखाकृतसर्वलोकोऽपि एकदा अनानन्दितो दुःखाकृतो भूसुरनिकरो द्विजवृन्दो येनेति विरोधः। एकदानेन केवलदानेनैव आनन्दितः समृद्धिं प्रापितो द्विजसमूहो येनेति परिहारः। ११. उदात्तेनापि स्वरितेनेति विरोधः। उदात्तेन उत्कृष्टेनापि स्वरितेन स्वर्गविख्यातेन, सुरगणगुणितेनेति परिहारः। १२. स्वपरभार्यासु स्वेतरवनितासु अजनपराङ्मुखो गमनपराङ्मुखः, स्वजने आलिङ्गने वा पराङ्मुखोऽपि परधनवनिताग्रहणसम्मुख इति विरोधः। पराः उत्कृष्टाः याः स्वभार्याः स्वजना आत्मीयाश्च तत्सम्मुख इति परिहारः। १३. वनितानाम् अनपहारकोऽपि अवन्या भूम्यास्तापहारकः। १४. सुजनस्वभावोऽपि असौजन्यप्रकृतिरिति विरोधः। सौजन्यप्रकृतिरपि असौ, जन्यनिषण्णः, युधि स्थिर इति परिहारः।

निषण्णः, समिद्[1]व्यतिकरस्फुरितप्रभावोऽप्यकृशानुभावोपेतः शत्रुघ्नोऽपि[2] विश्रुत-कीर्तिः, यथार्थः प्रजापतिर्भूपतिः। यस्य राज्ये वैष्णवानामेव कृष्णवर्त्मनि[3] प्रवेशः, सूर्योपलानामेव मित्रोदयेन[4] ज्वलनम्, वैशेषिकमते एव द्रव्यप्राधान्यम्[5], गुणानामेव भेदकभावः[6], धातूनामेव सोपसर्गत्वम्[7], पदानामेव विग्रहः[8]। कुकविकाव्येषु एव यतियोगभ्रंश[9]दोषः समदृश्यत। स च यथा न धर्मोऽसदत्[10], नार्थकोशोऽव्ययीत्[11], न राजलक्ष्मीर्व्यहयीत्[12], न शरीरसैन्यबलम् अपाक्षैषीत्[13], न मित्रवर्गोऽम्लासीत्[14] तथा राज्यं कुर्वन्नाध्यात्मिकतत्त्वमीमांसा[15]-शीशांसा[16]-समवेतस्वान्तो ऋजुवृत्तिभिर्विद्वद्भिरदीदांसिष्ट[17], बीभत्स[18]चित्तेभ्यश्च अजुगुप्सिष्ट[19]। तस्य द्वैमातुरयोः पुत्रयोरावयोरेकतरो रुचिरदेवनामाहमपरश्चायं पोतक इति। तयोरावयोरेका प्रजविनी हस्तिनी मामकीना, अस्य च द्वौ तुरगौ। तेषां जवाधिक्यविषये समेध[20]माने विवादेऽहं करिणीं जवाधिकां निगदामि[21] तुरगौ चायं विकत्थते[22] इति तेषां जवेऽन्तरं निर्णेतुं न त्वया विनाऽन्यः कश्चित् कल्पते[23]ऽतोऽस्मद्गृहमुपगत्य तत् परीक्षेथाः[24]। रुचिरदेवेनेत्थमनुनाथितो[25] वत्ससूनुरश्ववशा-

---

१. समिधां काष्ठानां व्यतिकरेण सम्पर्केण स्फुरितः प्रभावो यस्यैवंभूतोऽपि कृशानोरग्नेर्भावेनानुपेतः इति विरोधः। समित् संग्रामः तत्सम्पर्केण स्फुरितः प्रभावो यस्य, अकृशेन उत्कृष्टेन अनुभावेन तेजोविशेषेण चोपेत इति परिहारः। २. शत्रुघ्नो दाशरथिः अपि विगता श्रुतकीर्तिस्तद्भार्या यस्येति प्रतीयमानोऽर्थः। शत्रुसंहारकोऽपि विश्रुता प्रख्याता कीर्तिर्यस्येति वास्तविकोऽर्थः। ३. कृष्णवर्त्मा अग्निस्तत्र प्रवेश इति प्रतीयमानोऽर्थः, कृष्णमार्गे इति तात्त्विकोऽर्थः। ४. सूर्योदयेनेत्यर्थः, न सुहृत्समृद्ध्या जनेष्वीर्ष्येति भावः। ५. द्रव्याणाम् पृथिव्यादीनाम् महत्त्वम् न धनस्येति भावः। ६. विशेषणभावः, न जनेषु पारस्परिकपृथक्करणबुद्धिः। ७. उपसर्गाः प्रादयो रोगाश्च। ८. पृथक्करणं, कलहश्च। ९. भ्रंशु अधःपतने। १०. षद्लृ विशरणगत्यवसादनेषु। ११. व्यय गतौ। १२. हय गतौ। १३. क्षि क्षये ( क्षयन्तेति वृद्ध्यभावः )। १४. म्लै हर्षक्षये। १५. मान पूजायाम्। १६. शान तेजने। १७. दान खण्डने ततो दानेरार्जवे सन्। १८. बध बन्धने। १९. गुप गोपने। २०. एध वृद्धौ। २१. गद व्यक्तायां वाचि। २२. कत्थ श्लाघायाम्। २३. कृपू सामर्थ्ये। २४. ईक्ष दर्शनाङ्कनयोः। २५. नाथ उपयाच्ञायाम्।

रसात्तदनुरोधाच्च परम् आह्लादमानः[1] तथेत्यभ्युपेत्य तदानीतातिजवाश्वरथम् अधिरूढः[2] ताभ्यां सह वैशाखपुरार्थं प्रातिष्ठत[3]। अतित्वा[4] चाचिरमेव तत्पुरं प्राप्य निशाकरो यथा तन्नगरनरनारीभिरभिनन्द्यमानस्तदुत्तमं पुरं प्रविवेश। तत्र च युवराजः पूर्वैः प्रतिष्ठितस्य कामस्य रतिप्रीतिपदं शृङ्गारैकमयं मन्दिरं निकषा मन्दिरं रुचिरदेवस्य, तत्पुरस्कृतः प्रीत्या प्रविश्य वरवाजिगजाकीर्णे तदागमनसोत्सवसमूर्जितश्रिणि तद्गृहे सत्कृतोऽत्यद्भुताकृतिं कन्यां जयेन्द्रसेनां रुचिरदेवस्वसारं समवालोकिष्टेति[5] तद्रूपाकृष्टः स विस्मृत[6]प्रवाससमुद्भूतस्वजनविरहः प्रेमप्रक्षिप्तप्रफुल्ल[7]नीलाब्जजयमालयेव स्वयंवरे तयापि तत्क्षणमेवाव्रियत।

अन्येद्यू रुचिरदेवेन पोतकानीतजवितुरगयुगले स्ववशावेगवलेन जिते यावदेव वत्सेशसुतोऽभ्यन्तरं प्रविशति तावदेव तत्पितृरूप्यो दूतस्तत्पार्श्वमाव्रज्य[9] तं प्राणंसीत्[10] अभाषत[11] च—'देव, उद्यानतोऽनिवेद्यैतावद्दूरमजितमजितं[12] त्वामाकर्णयतो विगतधृतेर्देवस्य वत्सराजस्य हृदयमनुक्षणं त्वदनवलोकनसमुपजातासन्तोषं जोषं जोषमोषतीति[13] स्थानादस्मात्त्यक्तेहत्यव्यासक्तिना सत्वरमित्वरेण भवता भवनीयम्। एवं स्वानवलोकनेन पितुरवस्थां प्रियोपलब्धिञ्च[14] [15]ध्यायन्तं दोलायमानमानसं नरवाहनदत्तं दूरादेव नमन्नतिहर्षलो जयघोषमुच्चरन्[16], तस्य भाविविद्याधराधीट्त्वं विद्विषां विनाशकारित्वञ्च पणायन्[17] सार्थवाह एकोऽवदत्[18], 'अचिरादेवाच्युतगुणं स्वालौकिककान्त्या दिवम् आक्रमन्तं[19] भवन्तं खेचरा द्रक्ष्यन्ति[20]'। एवं स्तूयमानेन युवराजेन तेन सत्कृतो निजवृत्तान्तं वर्णयितुञ्चानुयुक्तो महावणिक् एवं स्ववृत्तं वक्तुम् आरभत[21]—

अस्ति भूलोकमौलिमालिकामतल्लिका लम्पा नाम नगरी। अनुशास्ति च तत्र भवदत्तो नाम भुवो भर्ता। यश्च स्वराष्ट्रपरराष्ट्रनीतिं सम्यङ्निर्वहति[22]। अक्लृशा-

१. ह्लादी सुखे च। २. रुह बीजजन्मनि प्रादुर्भावे च। ३. ष्ठा गतिनिवृत्तौ। ४. अत् सातत्यगमने। ५. लोकृ दर्शने। ६. स्मृ चिन्तायाम्। ७. फुल्ल विकसने। ८. जि जये। ९. व्रज गतौ। १०. णम् प्रह्वत्वे शब्दे च ( यमरमनमातां सक् च )। ११. भाष व्यक्तायां वाचि। १२. अज गतिक्षेपणयोः। १३. उष् दाहे। १४. डुलभष् प्राप्तौ। १५. ध्यै चिन्तायाम्। १६. चर गतिभक्षणयोः। १७. पण व्यवहारे स्तुतौ च। १८. वद व्यक्तायां वाचि। १९. क्रमु पादविक्षेपे। २०. दृशिर् प्रेक्षणे। २१. रभ राभस्ये। २२. वह प्रापणे।

नुभावोऽपि च यो निजप्रतापातनुतनूनपाता विद्वेषीन्धनौघदहा दहति[1] दारुण-दुर्हृदः। न यस्य राष्ट्रे धमति[2] दरिद्रातिदरिद्रेष्वपि बुभुक्षा सन्धुक्षितबुभुक्षित-जाठराग्निम्[3]। न यो नमति[4] समुद्दामदर्पिद्दतिहरीनरीन्[5]। न च गुरुजनसेवाया युच्छति[6]। न दायादान् व्युच्छति[7]। किं बहुना, यः सत्यशीलसाद्गुण्यपुण्ययशोवा-सांसि चीवति[8]। असौजन्यं ष्ठीवति[9]। स्वकीयायत्ययानत्ययाशालतारसैः पीवति[10]। विपक्षिविजिगीषानिःश्वासैर्जीवति[11]। स्वकीयाप्रतिमप्रतिभया [12]नवनवं विषय-जातम् अभ्यूहते[13]। विबुधसहकृतो विविधशास्त्राण्यवगाहते[14]। वृन्दारकवृन्दवन्दि-नोऽवति[15], सन्मार्गप्रतिबन्धिनो मवति[16]। यस्यानुशासने वर्णाश्रमधर्ममनुसृत्य यथावस्थमाश्रमेषु लब्धाधीशोऽपि गृहीतब्रह्मचारिव्रतो गुरुजनेभ्यः साङ्गवेदोपवेदान् शिक्षते[17] भिक्षते[18] च, विविधविज्ञानशाला [19]निरीक्षते [20]समीक्षते च। कृषीवलश्च यत्र निरीतिभीतिः निवसति[21], विघसति[22] च। व्रातीनश्च यथावृत्तिसमुपलब्धिसमु-पजातप्रीतिः विहसति[23], विलसति[24] च। एवं वर्तमाने सुखमयसाम्राज्ये तत्राभव-देकोऽतिधनाढ्यः कुसुमसाराख्योमहावणिक्। प्रत्यहं स देवान् अवन्दत[25]। वणि-ज्याव्यासक्तोऽपि न सुपथोऽस्पन्दत[26]। दीनेभ्योऽनुदिनं यत्किञ्चिद् विश्रणन्[27] एव अमोदिष्ट[28]। ज्ञातीन् सुखयित्वैव सोऽह्लादिष्ट[29]। प्रतिपर्व स्नानार्थं स गङ्गां व्यसेधत्[30]। दारिद्र्यार्दितार्दितः स बहूनां प्राणान् अगोपायीत्[31]। व्यवहृतौ धूर्तैर्व-ञ्चितोऽपि न स्वयं तान् अधूपायीत्[32]।

---

१. दह भस्मीकरणे २. ध्मा शब्दाग्निसंयोगयोः। ३. धुक्ष सन्दीपने। ४. णम प्रह्वत्वे ५. उद्दामा दर्पिरहंकृतिरेव दृतिश्चर्मपात्रं तां हरन्तीति उद्दामदर्पिद्द-तिहरयः, पशवः तान् (हरतेर्दृतिनाथयोः पशौ इति इन्) ६. युच्छ प्रमादे। ७. उच्छी विवासे (प्रायेणायं विपूर्वकः)। ८. चीवृ वसने। ९. ष्ठिवु निरसने। स्वकीयो य आयत्ययः उत्तरकालीनः शुभावहो विधिस्तस्य अनत्ययस्य अविनाशस्य या आशालता तद्रसैः। १०. पीव स्थौल्ये। ११. जीव प्राणधारणे १२ (प्रकारे गुणवचनस्य)। १३. ऊह वितर्के। १४. गाहू विलोडने। १५. अव रक्षणे। १६. मव बन्धने। १७. शिक्ष विद्योपादाने। १८. भिक्ष भिक्षायामलाभे लाभे च १९., २०. ईक्ष दर्शनाङ्कनयोः। २१. वस निवासे। २२. घस्लृ अदने। २३. हस हसने। २४. लस श्लेषणक्रीडनयोः। २५. वदि अभिवादनस्तुत्योः। २६. स्पदि किञ्चिच्चलने। २७. श्रण दाने। २८. मुद हर्षे। २९. ह्लादी सुखे च। ३०. षिध गत्याम् (सेधतेर्गतौ)। ३१. गुपू रक्षणे। ३२. धूप सन्तापे (गुपूधूप०)।

इत्थमनिशं जीवनं यापयन् धार्मिकधुरीणः स शङ्कराराधनतो मां चन्द्र-साराख्यमेकमेव पुत्रमलभत[1]। एकदा देवयात्रामालोकयितुं गतोऽहमपरानाढ्या-नर्थिभ्यो ददमानान् अद्राक्षम्[2]। अतो दानश्रद्धया धनार्जनेच्छुः पित्रुपार्जितया बह्वयापि सम्पत्त्याऽसन्तुष्टो नानारत्नप्रपूरितप्रवहणमारुह्याम्बुधिवर्त्मना द्वीपान्तरं गन्तुं प्रावर्तिषि[3]। दिष्ट्या चानुकूलेन वायुना प्रेरितं तत्प्रवहणमल्पैरेव दिनैरभीष्टं तद्द्वीपं प्राप किन्तु तत्रत्यो राजा मामर्थलोभेन बद्ध्वा कारागारे न्यक्षिपदिति निरयनिभे तत्र क्षुत्तृडर्दितैः क्रन्दद्भिर्[4]दुष्कृतिभिः प्रेतैरिव सहस्थितस्य तस्य मम कुलाभिज्ञस्तत्र निवासी महीधराख्यो महावणिक् ममान्वयादि राजानं विज्ञपयन् 'निर्दोषस्यास्य लम्पानिवासिनो वणिक्पुत्रस्य बन्धनाद्यनुचितमय-शस्करञ्च' इत्यगदत्[5]। एवं बोधितो नृपतिर्निजान्तिकं मामानाययत्। सादरं तेन तत्र सम्मान्यमानश्चाहं तन्मित्त्रोपाश्रयेण व्यवहारान् कुर्वन् महता सुखेन न्यवसम्[6]।

तत्रैकदा वसन्तोत्सवे शिखराख्यस्य वणिजो वरकन्यकामालोक्य कन्दर्प-दर्पार्णवोर्म्येव हृतहृदयस्तत्पितुरन्तिकं गत्वा तामहम् अयाचिषि[7]। स च क्षण-मन्तर्विचिन्त्य अवदीद्[8] यत्कस्माच्चित्कारणादेषा साक्षाद् दाशितुम्[9] अशक्येति यानेन सिंहलेषु स्वमातामहसमीपे प्रहितेह याचितापि तत्र गत्वा कार्यमेतद्यथा-सेत्स्यति तथा कर्त्तुं सन्दिष्टेति तत्र सेधित्वा[10] एषोपयन्तव्या। एवमुक्त्वा ससम्मानं मां गृहार्थं विसृज्य शिखरोऽन्येद्युस्तां कन्यां सपरिच्छदे याने समारोह्य पाथोधिपथेन सिंहलान् प्रेषितवान्। अहञ्च तद्वृत्तं श्रुत्वा समुत्सुको यावदेव तत्र गन्तुम् अभिकांक्षे[11] तावद्विद्युन्निपातनिभोग्रेयं वार्ता प्रादुरभूद् यद् येन प्रवहणेन शिखरस्य सुता गता आसीत्तदर्णवे निमग्नं तत्रस्थानखिलानब्धौ न्यम-ज्जयत्। तद्वार्तामाकर्ण्य भग्नधैर्योऽहं स्थले स्थितोऽपि निरवलम्बे शोकसागरे न्यपतम्[12]। तथापि वृद्धैः 'दुर्दमनीय एष भवितव्यतापरपर्यायो विकरालः कालः।

---

१. डुलभष् प्राप्तौ। २. दृशिर् प्रेक्षणे। ३. वृतु वर्तने। ४. क्रदि आह्वाने रोदने च। ५. गद व्यक्तायां वाचि। ६. वस निवासे। ७. टुयाचृ याच्ञायाम्। ८. वद व्यक्तायां वाचि ( अतो हलादेर्लघोः )। ९. दाश्रृ दाने। १०. षिध गत्याम्। ११. काक्षि कांक्षायाम्। १२. पत्लृ पतने।

महतां राज्ञामपि प्राणान् एष मूषक इव महार्हं वस्तु प्रत्यक्षमप्रत्यक्षं वा मूषति[1]। अजगर इव प्राणिनो दूरान्निगलति[2]। कामयमानोऽपि[3] सतीं गतिं कामयमानो ना नावलोक्यते। कः चराचरेषु सुदृढग्रहादस्य पलायितुं[4] क्षमते[5]। को वेमं कश्च नायं जगृहे[6]। तथापि जीवन्[7] नरः सर्वदुराशासेनां जयति[8]। अध्रुवत्यपि सर्वस्मिन्नस्मिन् जगति विविधवस्तुजातमात्मस्वभावनया मेदते[9]। नात्मनोऽध्रौव्यं विस्रम्भते[10] इति निश्चिन्तः सन्नेलोशीरादिवासितं, सज्जनचित्तवत्स्वच्छं, पयो रसादिकं वा धयति[11]। विविधामोदवहं वस्तु जिघ्रति[12]। नानादृश्यजातं पश्यति। श्रुतिमधुरशब्दं शृणोति[13]। स्पर्शसुखदायि च वस्तु स्पृशति। मधुराम्ललवणादिषड्रसविशिष्टमास्वाद्यम् आस्वादते[14]। स्वार्जितयोगक्षेमाय प्रयतते[15]। अतो भगवत्समीहितेऽस्मिन् व्यतिकरे भवतापि न विस्मयमानेन[16] भुवेलिमम्'। एवमाश्वास्यमानो विविधाशाकशाघातैर्मनोरथरथ्यं वाहयन् तद्द्वीपगमने मतिमकार्षम्। एवं विविधसद्रत्नोपचितो राजप्रियोऽपि पोतारूढोऽहं तस्मात् अचलम्[17]। किन्तु मार्गेऽकस्माद्घोरेण वारिदतस्करेणाक्रान्तो विरुद्धेन बलिना वायुना विधिना च प्रेर्यमाणः सपरिजनधनस्तत्पोतोऽर्णवे न्यमाङ्क्षीदिति काष्ठफलकमेकमाश्रित्य शनैश्शनैरहं कल्लोलवेल्लितः[18] सलिलनिधिपुलिनमलप्सि[19]। तत्र स्थितश्च दुःखार्तो दैवं निन्दन्[20] तटोपान्तपतितमष्टापदाङ्गुलीयकमवाप्य तद्विक्रयोपलब्धेन धनेन तटनिकटग्रामेऽशनसामग्रीं विनिमित्य[21] क्रीतवस्त्रयुगलो मनागिवगताब्धिवाहक्लमोऽभवम्। क्षणं च तत्र विश्रम्य दयिताविरहीतस्ततो दृष्टिं विक्षिपन् सिकतासम्भृतायां भुवि विचरन्नेकत्र वन्यवेषामप्यतिशोभमानां कन्यामेकामालोकिषि[22]। अपि मम भाग्येन सैवेयं भवेदिति चिन्तयता, स्पन्दमानेन तदा वामेतरेणाक्ष्णा विज्ञापितशुभोदर्केण मया तन्वि, प्रासादवासार्हाऽपि का त्वमरण्येऽत्र विचरसीति[23]' पृष्टा। किन्तु न सा किञ्चिद् अशंचत[24]

---

१. मूष स्तेये। २. गल अदने। ३. कमु कान्तौ। ४. अय गतौ। ५. क्षमूष् सहने। ६. ग्रह उपादाने तथा गृहू गर्हणे। ७. जीव प्राणधारणे। ८. जि जये। ९. जिमिदा स्नेहने। १०. स्रम्भु विश्वासे। ११. धेट् पाने। १२. घ्रा गन्धोपादाने। १३. श्रु श्रवणे। १४. स्वाद आस्वादने। १५. यती प्रयत्ने। १६. स्मिङ् ईषद्धसने। १७. चल सञ्चलने। १८. वेल्ल चलने। १९. डुलभष् प्राप्तौ। २०. णिदि कुत्सायाम्। २१. मेङ् प्रणिदाने ( मयतेरिदन्यतरस्याम् )। २२. लोकृ दर्शने। २३. चर गतिभक्षणयोः। २४. शच व्यक्तायां वाचि।

अपि स्ववितृप्तेन चक्षुषा ईक्षमाणं मां कृतार्चना सस्नेहं मुहुर्मुहुः परिवृत्य निरैक्षिष्ट किञ्चिद्विमृशन्ती च शनैश्शनैस्तस्मादगमत्[1] इति दृक्पथाद्गतायां तस्यां तमोऽन्धा दिशोऽवलोकमानोऽनिर्वचनीयावस्थोऽहं समजनिषि । तदवस्थे तत्र वर्तमाने मयि क्षणानन्तरं तेजसाऽर्कप्रभानिभा बालब्रह्मचारिणी मतङ्गमुनिकन्या यमुनानामधेया तपःक्षामशरीरा धृतिरिव विग्रहिणी, कल्याणदर्शना, विपञ्चीव सुमधुरस्वराऽवलम्बितधृतिरित्थं मां रहसि रहस्यं सर्वं सप्रपञ्चमपञ्चीत्[2] यद्द्वीपान्तरीयशिखिराख्यो महावणिक् कन्यायामस्यां जातरूपाभिजातरूपवत्यां प्रादुर्भूतायां जिनरक्षितसंज्ञेन सुहृदा ज्ञानिनोक्तः 'अन्यमातृका कन्यैषाऽनवद्या स्वयं कस्मैचिददद्या' । अतो देयां तां तन्मातामहहस्तेन स तुभ्यं दापयितुमचीकमत[3] । अत एव च तत्पित्रा सा सिंहलद्वीपं प्रेषिता । पयोधौ पोते भग्नेऽपि तत्र निपतितां तामायुःशेषतया न कोऽपि जलजन्तुरखादत्[4] । महोर्मिमाली चापगतचेतनां तां वेलातटे न्यक्षैप्सीत् । तां च स्नातुं गतो मदीयः पिता भगवान् मतङ्गमुनिर्मृतकल्पामपि तदानीमवाप्तचेतनामवलोक्य प्राणिमात्रदयालुतया समाश्वास्य स्वकीयाश्रममानैषीत्, अवादीच्च[5] माम्, यमुने, समुचितसम्वर्द्धनोपायैः तायस्व[6] इमामनाथामिति' वेलातटे समुपलब्धाया अस्या 'वेला' इति नाम कृत्वा मह्यमर्पितवान् । तदाप्रभृत्यपत्यवात्सल्यमयं मदीयं चित्तं नवयौवनशालिनीमिमामवलोकमवलोकं तपति[7] । इदमुपयुक्तपतिसंयोगाय च कालातिपातं न सहते[8] । इयं हीह निवसन्ती देवार्चनपुष्पावचयादिना पितरं श्रयति[9] । स्वयमपि चास्मत्सहवासजनितसंस्कारैः सन्ध्ययोर्द्वयोर्देवान् यजति[10] । भोजनपाचनादिना चास्मानतिथींश्च भजति[11] । किं बहुना, विविधस्वादिष्ठभोज्यपेयक्षौमादिपरिधेयार्हाऽपि वन्यफलमूलादिभिरस्माभिः सममात्मानं भरते[12], वल्कलवसनैश्च वपुर्व्ययते[13] । सर्वथा पूतचरिता किन्त्वियं त्वदीया प्राग्जन्मभार्येतीहागतं त्वां प्रणिधानेनाहम् अबोधिषम्[14]; तवान्तिकम् उपासृपम्[15] चेत्यस्मदर्पितामिमां परिणयस्व[16]; अतः परं

---

१. गम्लृ गतौ । २. पचि व्यक्तीकरणे । ३. कमु कान्तौ । ४. खाद भक्षणे । ५. वद व्यक्तायां वाचि । ६. तायृ सन्तानपालनयोः । ७. तप सन्तापे । ८. षह मर्षणे । ९. श्रिञ् सेवायाम् । १०. यज देवपूजा० । ११ भज सेवायाम् । १२. भृञ् भरणे । १३ व्येञ् सम्वरणे । १४. बुध अवगमने । १५. सृप्लृ गतौ । १६. णीञ् प्रापणे ।

दयस्व[1] चेति गिराऽनयाऽनभ्रवृष्टयेव शुष्यच्छस्यचेत्रमभिवृष्य यमुना मां स्वपितुर्मतङ्गस्याश्रमम् अनैषीत्। स च मतङ्गो मुनी रूपिणीं मनोराज्यसम्पत्तिमिव वेलां मह्यम् अदयिष्ट[2]।

तया च वेलया ससुखं तत्र निवसन् सरस्येकस्मिन्नम्भोऽवगाहनकेलिं कुर्वन्नपश्यन्नेकदाऽहं शुन्धन्तं[3] मुनिं मतङ्गमम्भसा अभ्यषिञ्चम्। एतेन स मुनिमत्यन्तम् अचण्डिष्ट[4], अशप्त[5] चावाभ्यां वियोक्तुमिति तदवहेलाभग्ननिजखेलासिन्धुवेला, वेला, क्षमां याचमाना मुनिपादयोः प्रण्यपप्तत्[6]। तेन च शान्तो मुनिः करेणुवेगेनाश्वयुगजेतृभाविविद्याधरेश्वरनरवाहनदत्तदर्शनावधिं तच्छापं निर्दिश्य सम्पादितस्नानादिक्रियो हरेर्दर्शनार्थं व्योममार्गेण श्वेतद्वीपम् अशिश्वियत्[7]।

एवं विन्नदथितोऽपि वन्यजीवनेनातिखिन्नो वनितावियोगभयनुन्नोऽहं स्वदेशं परावर्तितुमुत्सुकोऽभवम्। अतोऽम्बुधितटमवाप्य तदानीं समुपलब्धनिजसुहृद्वणिक्प्रवहणं भार्यामारोप्य यावदेवाहमारुरुक्षामि तावदेव समीरणस्तत्पोतं दूरमहरदिति हृतभार्यो विह्वल्य[8] भूमावहमपतम्। तदैव दैवयोगेन तत्रागतः कश्चित्तापसः तदवस्थं मामवलोक्य निजकामण्डलववारिप्रक्षेपेण सचेतनं कृत्वाऽऽश्वासनपूर्वकं निजाश्रममानीतवान्। तत्र च यथावृत्तं पृष्ट्वा श्रुतशापव्यतिकरः स्वप्रणिधानेन सावधिं शापसवधार्य मदीयं धृतिबन्धम् अमीवीत्[9]। तदनन्तरं तां प्रियां पुनरन्विच्छन् भग्नवहनोत्तीर्णं सखायं वणिग्वरमवाप्य लङ्घमानो[10]ऽपि दिवसानुल्लङ्घयन् देशान् दुर्गमान्, क्रमाद् वैशाखपुरमवाप्य वत्सेश्वरसद्वंशमुक्तामणेर्भवत इहागमनमहमश्रौषम्[11]। हस्तिन्या च विजिताश्वगोयुगं भवन्तमालोक्य विगतशापभारोऽहमधुना साधु वणिग्भिरानीतां सम्मुखागतां तां प्रियां वेलामहमिह अदर्शम्[12]। अतो यमुनाप्रत्तसद्रत्नहस्तया तया त्वत्प्रसादेन संयोजितः समुत्तीर्णशापमहार्णवोऽहमिह प्रणन्तुं त्वामायात इति सदयितो निर्वृत्तोऽहमस्मिन् समये स्वदेशमये[13]।

इत्थं पञ्चितनिजप्रश्ने ऽञ्चिते[14] च प्रणम्य चन्द्रसारेऽवलोकितवत्सराजात्म-

---

१. देङ् रक्षणे। २. दय दानगतिरक्षणहिंसादानेषु। ३. शुन्ध शौचे। ४. चडि कोपे। ५. शप आक्रोशे। ६. पत्लृ पतने (पतः पुम्) ततः नेर्गदनदेति णत्वम्। ७. टुओश्वि गतिवृद्ध्योः। ८. ह्वल चलने। ९. मव बन्धने। १०. लघि भोजननिवृत्तौ। ११. श्रु श्रवणे। १२. दृशिर् प्रेक्षणे। १३. अय गतौ। १४. अचि गतौ।

जमाहात्म्यातिहृष्टो रुचिरदेवः सोपचारवृत्तिप्रागिदृत्सितां सुसदृशीं स्वस्वसारं करेणुतुरगोत्तमयुक्तां जयेन्द्रसेनां नरवाहनदत्ताय ददे[१]। सोऽपि च तया सह रुचिरदेवमामन्त्र्य कौशाम्बीमुपढौकितो[२]ऽन्याभिर्मदनमञ्जुकादिभिर्निजप्रियाभिः समेधितो[३] मेधितो[४] यथेच्छं क्रीडन्[५]नहरहररमत[६]। ( इति भ्वादयः )

तत्र चैवं स्थितोऽवाप्ततत्तदतिसुन्दरभार्योऽसावप्सरसामपि सौन्दर्यम् ऋती-

(अदादयः) यमानः[७] वत्सेशो बहुभार्योऽपि तामादिमां देवीं मदनमञ्जुकामेव रुक्मिणीं माधव इव बहु अवेदीत्[८]। यथासमयमनुदिनं तया सह आस्त[९], अख्यत[१०], अलिक्षत[११] इत्यधिक्षत[१२] तयोर्दाम्पत्यप्रीतिः।

एकदा स्वपन्[१३] वत्सेशसुतोऽपश्यत् यन्नभसाऽऽगत्य कयाचिद्दिव्यया कन्ययाऽहमपहृिये। एवं स्वप्नक् एव स महाभागोऽजागो[१४] घनच्छायपादपे तार्क्ष्यरत्नशिलातले मलयाचले च स्थितमात्मानमलभत। यत्र विविधा वल्लर्यस्तरुणतरून् और्णाविषुः[१५], समयूरीका मयूरा व्यराविषुः[१६]। विकचपुष्पोपात्तसुरभिगन्धिगन्धवहा अवान्[१७]। सुधाधवलितशीतांशुरश्मयश्च अभान्[१८]। तत्रत्यमित्थं रामणीयकमवलोक्य नरवाहनदत्तोऽचिन्तयद् यद् निजालौकिकप्रभाविभासिताखिलकाननविश्वसम्मोहनौषधिनिभा विभावर्यामियमिह का मामानीतवतीति तां जिज्ञासुरलीकसुप्तकं कृत्वा लज्जावनतमुखीं तां प्रलपन्निव धौर्त्येन अवोचत्[१९], 'प्रिये, मदनमञ्जुके, मामालिङ्ग्य त्वं क्व याहि[२०]? राहि[२१] मे प्रतिवचनम्, पाहि[२२] मम जीवनम्। एहि[२३], एहि; त्वदाश्रित एवाहं श्वसिमि[२४]। त्वत्परित्यक्तश्चाहं न वश्मि[२५] धारयितुमात्मानम्

---

१. दद् दाने ( न शसददवादिगुणानाम् )। २. ढौकृ गतौ। ३. सम्यक्प्रकारेण एधितः समृद्धिं गतः। ४. मेधृ सङ्गमे। ५. क्रीडृ विहारे। ६. रमु क्रीडायाम्। ( इति भ्वादयः )

(अदादयः) ऋतिरिति सौत्रोधातुः जुगुप्सार्थकः। ७. ( ऋतेरीयङ् )। ८. विद ज्ञाने। ९. आस उपवेशने। १०. चक्षिङ् व्यक्तायां वाचि ( चक्षिङः ख्याञ्, अस्यतिवक्तिख्यातिभ्योऽङ्। ११. लिह आस्वादने ( शल इगुपधादनिटः क्सः )। १२. दिह उपचये। १३. ञिष्वप् शये। १४. जागृ निद्राक्षये। १५. ऊर्णुञ् आच्छादने। १६. रु शब्दे। १७. वा गतिगन्धनयोः ( लङः शाकटायनस्यैव )। १८. भा दीप्तौ। १९. ब्रूञ् व्यक्तायां वाचि ( ब्रुवो वचिः )। २०. या प्रापणे। २१. रा दाने। २२. पा रक्षणे। २३. इण् गतौ। २४. श्वस प्राणने। २५. वश कान्तौ।

इति। एवमुक्त्वा सा कन्यका तद्दयितारूपं धृत्वा तमालिलिङ्गेति स चाप्युन्मीलितलोचनस्तां निजपत्नीस्वरूपां सस्मितं कण्ठे गृहीत्वा, 'अहो मम विज्ञानम्,' इत्युक्त्वा उदश्वसीत्[1]। किन्त्वेतेन तदाशाविरुद्धं त्यक्तत्रपा सा स्वकीयं रूपं प्रदर्श्य तम् अचष्ट[2], 'आर्यपुत्र, स्वयंवरां मामिदानीं पत्नीरूपेण स्वीकर्तुं त्वं समुड्ढि[3]' एवमुक्तो नरवाहनदत्तो गान्धर्वेण विधिना तां विवाहितवानिति तया सहैव सा रात्रिस्तस्य व्यत्यगात्[4]।

प्रातश्च स तत्कुलजिज्ञासया दयितां तां युक्त्योवाच[5], 'प्रिये, अपूर्वामहमेकां कथां त्वां वच्मि[6] तां त्वं निजश्रुतिपथमवतारय—

आसीदेकस्मिंस्तपोवने[7] ब्रह्मसिद्धिनामा कश्चिन्मुनिः। निजाश्रमसरसि स नित्यं त्रिसन्ध्यम् अनिङ्क्त[8]। तपसि स्थितश्च सोऽशनपानादिकं सर्वम् अवृङ्क्त[9]। वल्कलं वसानः[10] अपि न शीतवातादिना ऐरिष्ट[11]। निजतेजोऽनलमभिवर्षत्यपि प्रचण्डांशौ प्रज्वलितचतुर्दिगनलोऽचल इव स मध्यमध्यासिष्ट[12]। एवं शमदमादिनाऽऽत्मेन्द्रियाणाम् ईशानः[13] स मृडम् ऐडिष्ट[14]–किन्तु न यदा तदभीष्टसिद्धिज्योतिरभ्युदयेन तद्धृदयम् अचकात्[15] तदा परिवृक्तसकलसिद्धिव्यापृतिः स समाः समाधावजागरीत्[16] इति कालान्तरे घनजटोर्णुतांसः[17] स शिवात्परां कोटिं सिद्धेरवाप।

एवं योगसिद्धस्य तस्य निजाश्रमे निवसतो गुहायामेकस्यामेका जरती शिवा अवात्सीत्। एकदा दुर्दिने भक्ष्यार्थं बहिर्निर्यातां तां वशाविश्लेषोद्दामदशो वन्यद्विपो हन्तुम् अभ्ययौत्[18] इत्युभयोः कृपालुर्मुनिः क्रोष्ट्रीं तां करिणीं चकार। एतद् दृष्ट्वा तस्यामनुरक्तो हस्ती तामसुखत्।

स च वारणस्तया साकं सानन्दं भ्रमन्नेकदा तदर्थं पद्मान्यानेतुं प्रस्नुवन्मधुजलजोर्णुतजलजलाशयमेकमुपेतः शारदपङ्कनिगग्नोऽशनिनिलूनपक्षो भ्रष्टोऽचल

---

१. श्वस प्राणने (रुदश्च पञ्चभ्यः) इति लङस्तिपि ईट् (ह्मयन्तेति लुङि वृद्ध्यभावो वा)। २. चक्षिङ् व्यक्तायां वाचि। ३. वश कान्तौ (लोटो हिः)। ४. इण् गतौ (इणो गा लुङि)। ५. ब्रूञ् व्यक्तायां वाचि। ६. वच् परिभाषणे। ७. अस् भुवि। ८. णिजि शुद्धौ। ९. वृजि वर्जने। १०. वस आच्छादने। ११. ईर गतौ कम्पने च। १२. आस उपवेशने। १३. ईश ऐश्वर्ये। १४. ईड स्तुतौ। १५. चकासृ दीप्तौ। १६. जागृ निद्राक्षये। १७. ऊर्णुञ् आच्छादने (ऊर्णोतेर्णुवद्भावो वाच्यस्तेन श्युकः कितीतीडभावः)। १८. यु अभिगमने। १९, ष्णु प्रस्रवणे।

इव पङ्कान्तर्विचेष्टितुं नापारयदिति तथाऽवसन्नं तमवलोक्य सा वशा-शिवा तत्क्षणमेव तं परित्यज्य वारणान्तरमाश्रित्य क्वापि इयाय[1]। किञ्चित्काला-नन्तरञ्च पूर्वविश्लिष्टा तस्य निजा करेणुका निजपतिमन्विष्यन्ती दिष्ट्या तमेव प्रदेशं प्रायासीत्[2] इति भद्रजातिः सा पङ्के निमग्नं निजपतिं निरीक्ष्यातिदुः-खिनी तमनुसर्त्तुं तत्सरः प्रविष्टा स्वयमप्याकण्ठं पङ्के निमग्ना सञ्जाता। तत्का-लञ्च तेनैव मार्गेण सशिष्यो ब्रह्मसिद्धिर्निरगात्[3]। वशानागौ च तथा पङ्कान्तर्नि-मग्नावुद्वीक्ष्यातिकरुणापरवशः प्रभूतबलैः शिष्यैस्तौ पङ्कान्तरादुद्धारयामास। एवं मृत्योर्वियोगाच्चोत्तीर्णौ तौ तस्मिन्मुनावपयाते यथाकामं विजह्रतुः। इत्थ-मुत्तमजन्मानस्तिर्यञ्चोऽपि न निजं प्रभुं प्रियं वोज्झन्त्यपि त्वापत्तेरुत्तारयन्ति। हीनजात्युद्भवाश्चञ्चलात्मानश्चैवं नैसर्गिकस्नेहपूर्णा न भवन्ति।

नरवाहनदत्तोक्तमेतदाकर्ण्य दिव्यकन्यका सा सर्वं तदाशयम् अवेत्[4] अब्र-वीच्[5] च, यद्भवदुक्तौ न कोऽपि यद्यपि संशेते[6], तवाभिप्रायञ्चाहमभ्युपायम्[7], तथापि, आर्यपुत्र, अहमपि कथामेकामुपवर्णयामि श्रुत्वा तत्सर्वं मत्तः स्वहृत्तः तद्भावमुपगत्य मद्विषयिणीं शङ्कां सर्वां त्वं परिमृड्ढि[8]—

'कान्यकुब्जे शूरदत्ताभिधान आसीदेको द्विजः। ब्राह्मणाः प्रायः दरिद्रति[9] किन्तु स तत्रत्यबाहुशक्तिनामकमहीपतेरमात्य इति ग्रामशतम् ईशाञ्चक्रे[10]। पतिदेवता तस्य वसुमतीनामभार्या वामदत्ताख्यं भव्यं पुत्रं प्रासविष्ट[11]। सम्पन्नम-द्राकरणादिसंस्कारश्च सोऽचिरादेव सर्वा विद्या अध्यगीष्ट[12]। यौवनमापन्नश्च शशि-प्रभां भार्यां परिणीय कालेन सभार्ये परेते पितरि तथैव भार्यया सह गार्हस्थ्ये प्रावर्तत। किन्तु अविदंतस्तस्य[13] किञ्चित्कालानन्तरं सा भार्या दैवात्स्वेच्छाचारिणी समवाप्तशाकिनीसिद्धिश्च संवृत्ता।

एकदा राजसेवार्थं राजकटकमुपाश्रितं वामदत्तं निजगृहादुपेत्य तत्पितृव्यः

---

१. इण् गतौ। २. या प्रापणे। ३. इण् गतौ। ४. विद ज्ञाने। ५. ब्रूञ् व्यक्तायां वाचि। ६. शीङ् स्वप्ने। ७. इण् गताविव्यस्य लङः उत्तमैकवच-नम्। ८. मृजू शुद्धौ ( लोटो हिः व्रश्चभ्रस्जसृजमृज—इति षत्वे हेर्धौ ष्टुत्वम् )। ९. दरिद्रा दुर्गतौ ( श्नाभ्यस्तयोरातः )। १०. ईश ऐश्वर्ये। ११. षूङ् प्राणि-गर्भविमोचने। १२. इङ् अध्ययने ( विभाषा लुङ्लृङोः, गाङ् कुटादिभ्योऽञ्णि-न्ङित्, घुमास्थागापाजहातिसां हलि )। १३. विद ज्ञाने ( विदः शतुर्वा )

अवंग्[1] यत्तवैषा भार्या त्वदीयं महिषपालं सम्पृक्ते[2] अतोऽस्मत्कुलमिदानीं वर्ण-सङ्करतां प्राप्तं सद्विनष्टम्। एतदाकर्ण्य वामदत्तो निजपितृव्यं तत्रैव निजस्थाने स्थापयित्वोदायुधो निजसदनमुपेत्य यावन्निभृतं पुष्पवाटिकाम् आस्ते तावत्क्षणा-देवोपपतिसमुत्सुका विविधाहारहस्ता तद्भार्या तत्रैव उपैद्। भुक्तवता च तेन साकं निंस्यमाना[3] अस्वाप्सीत्। तदवलोक्य वामदत्तो निजायुधमुद्यम्य 'आः, पापौ अद्य इतः क्व इतः[4]' एवमुक्त्वा तौ हन्तुम् अवंट्[5]। एतेनानार्या तद्भार्या सहसा विनि-द्रोत्थाय [6]कक्षे वह्निरिव त्वं मां स्वकक्षे कक्षे[7] इति कथमिह अकक्षे[8] त्वं जाल्म! इत्थमुक्त्वा तन्मुखे धूलिं प्राक्षिपत्। तेन च स मानुषोऽपि मंक्षु तदानीमेव महिषः समपद्यत। स्मृतिस्त्वस्य तद्भावेऽपि न व्यलुपदिति तथाभूतं तमिभस-न्निभेषु सैरिभेषु निक्षिप्य दुष्टा सा महिषपालकेन तेन निर्घृणं ताडयन्ती एकस्य महिषार्थिनो हस्ते तिर्यक्त्वविवशीकृतं तं व्यक्रैषीत्। तत्क्रेता च तत्पीठसमारो-पितभारं महिषत्वमापन्नं वामदेवं गंगातीरे वर्तमानं कञ्चिद् ग्राममानैषीत्। तत्र शङ्कुना बद्धः स पूर्ववृत्तं सर्वम् अध्यगात्[9] येन च 'दुर्वृत्ता भार्या कक्षान्तरप्रविष्टा पुत्त्रादिनी[10] सर्पिणीव न कस्यापि कल्याणाय' इति चिन्तयन्तं सुदुःखितमुद्वाप्प भारक्लेशास्थिपञ्जरशेषशरीरं तं काचिद् योगिनी [11]अभ्याचष्ट स्वालौकिकज्ञानाव-गताखिलवृत्तान्ता च मन्त्रतोयेनाशु तस्य महिषत्वम् अह्नोष्ट[12]। प्राप्तमानुषरूपञ्च तं स्वगृहं नीत्वा तस्मै कान्तिमतीनाम्नीं निजदुहितरम् अरासीत्। एवं पुनर-वाप्तमानुषरूपः समुपलब्धनवीनभार्यश्च स वामदत्तः ससुखं कतिपयान्यहानि तत्रैव तस्थौ।

व्यतियत्सु[13] चाहस्सु निजगृहगमनोद्यतं वामदेवं दृष्ट्वा सा योगिनीकृष्णरक्त-गौरान् त्रिवर्णानपि सर्षपान् आदाय सर्वान् अयावीत्[14]। अभिमन्त्रितांश्च तान् कृत्वा

---

१. वक्केर्लङ्। २. पृची सम्पर्चने। ३. णिसि चुम्बने। ४. क्व गच्छतः। ५. वश कान्तौ लङः प्रथमपुरुषैकवचनम्। ६. कक्षे, तृणेऽग्निरिव त्वं स्वकक्षेस्व-कीयप्रकोष्ठे, कक्षे शास्सि; इतीह अकक्षे प्रकोष्ठाद् बहिः ( तृणाभावे वा ) त्वं माम् हे जाल्म, कथम् अकक्षे कुत्सितं शास्सि ( नञो नलोपस्तिङि क्षेपे )। ७, ८. कश गतिशासनयोः। ९. इण्वदिक इति वक्तव्यम्। १०. तत्वकथने 'नादिन्याक्रोशे पुत्रस्य' इति निषेधाभावे पुत्रशब्दे तकारस्य द्वित्वम्। ११. चक्षि-ङोऽत्रदर्शनार्थत्वाद् अदर्शदित्यर्थः। १२. ह्नुङ् अपनयने। १३. एतेः शतरि सुप्। १४. यु मिश्रणामिश्रणयोः।

तमशिषत्[1] यत् यस्याः कारणेन त्वमद्यावध्येवं कष्टमध्यकष्टाः[2] तामाद्यां दुर्भगां सर्षपैरेभिराहत्य तत्र वडवां विधेहि। महिषपालश्च तज्जारं[3] जहि[4]। कृत्वा चैवं निश्चिन्तः स्वपिहि[5]।

इत्थं समुपेताभिमन्त्रितसर्षपभार्यो वामदत्तस्ततो निजगृहमुपेत्य योगिनी-कथितप्रकारेण सर्षपैराद्यभार्यां वडवां विधाय महिषपालमवधीत्[6]। मन्दुराबद्धाश्च तां वडवां प्रत्यहं स्ववैरविशुद्धये लगुडेन सकृत्वस्ताडयित्वैव आदद्[7] बद्धप्रतिज्ञः।

एवं कान्तिमत्या सह ससुखं समयं यापयतस्तस्य वामदत्तस्य गृहे एकदा कश्चिदतिथिः आयात्। तस्मिंश्चातिथावत्तु प्रवृत्ते स्मृतादत्तकुभार्यावडवाहति-र्वामदत्तोऽजग्ध्वैव दण्डपाणिर्निर्ययौ। प्रदत्तवडवारूपतत्कुभार्यानियतलगुडाहतिश्च गेहमागत्य समुपेतनिर्वृतिः अप्सासीत्[8]। एतेन क्षणमतिथिर्निजभोजनम् अव-र्जिष्ट[9] ससम्भ्रमं पप्रच्छ च तं तद्बहिर्निर्गमनकारणम्। सोऽपि च स्पष्टम् आचचक्षे प्राघुणिकाय तस्मायामूलं सर्वं वृत्तान्तम्। तच्चाकर्ण्य प्राघुणिकस्तं तथाकर्तुं समचक्षिष्ट[10] अशीत्[11] च यत् एतेन दुर्ग्रहेण अलम्; या तव पशुत्वम् अहुत तामेव विनतिभिः नुहि[12]; आराध्य च तामेवावाप्तसमृद्धिः एधि[13]। अतिथिनैवमुक्तो वामदत्तो विहितसत्कृतिं तं विसृज्याकस्माद् गृहोपेतां तां योगिनीमनुग्रहार्थी समभ्यर्च्य चिरम् अस्तावीत्[14]। तेनातिप्रसन्ना सा योगेश्वरी सभार्याय तस्मै यथाविधि दीक्षापूर्वं कालसङ्कर्षिणीं विद्यामुपादिक्षदिति श्रीपर्वतं गतः स तां साधयित्वा ततः समुपलब्धखड्गोत्तमः कान्तिमतीयुतो विद्याधरोत्तमो बभूव। ततश्चात्मसिद्धिप्र-भावेण मलयभूभृतो रजतकूटाख्ये शृङ्गे कृतपुरवरः कालेन कान्तिमत्यां ललितलो-

---

१. शासु अनुशिष्टौ (सर्तिशास्त्यर्तिभ्यश्च) इत्यङ् (शास इदङ् हलोः) इत्युप-धेत्वम् ततः (शासिवसिघसीनाञ्च) इति सस्य मूर्धन्यः। २. कश गतिशासनयोः, कष्टं प्राप्नोदिति भावः। ३. जारयतीत्यर्थे (दारजारौ कर्त्तरि णिलुक् च) इति कर्तरि घञ् णिलोपश्च। ४. हन् हिंसागत्योः (हन्तेर्जः)। ५. ञिष्वप् शये (रुदादिभ्यः सार्वधातुके)। ६. हन्तेर्लुङि (लुङि च) इति वधादेशः। ७. अद भक्षणे (अड् गार्ग्यगालवयोः)। ८. प्सा भक्षणे। ९. वृजी वर्जने। १०. वर्जितवान् (वर्जने ख्शाञ् नेष्टः)। ११. शासु अनुशिष्टौ (तिप्यनस्तेः)। १२. णु स्तवने। १३. अस् भुवि (ध्वसोरेद्धावभ्यासलोपश्च)। १४. ष्टुञ् स्तुतौ (स्तुसुधूञ्भ्यः परस्मैपदेषु)।

चनानामधेयां कन्यामवाप। उत्पत्तिसमकालमेव च सा गगनोद्गतया गिरा भाविनो विद्याधरसञ्चक्रवर्तिनो भाविनी भार्या निर्दिष्टा। तामेव माम् आर्यपुत्रो विदाङ्करोतु[1]। नाहमत्र भवते सर्वमेवं विदुषे कथमपि द्विषे[2]। अतो मा मयि भवानपि संदेग्धु[3]। त्वय्यनुरक्तैव चाहं त्वामहमिह समानैषम्।

एवमाख्यातात्मकुला सा स्वात्मविषयिणीं नरवाहनदत्तीयसर्वशङ्कां पर्यमार्ट्[4] इति विद्याधरीं तां भार्यारूपेण स्वीकृत्य स तदीयाभिलाषां क्षिप्रम् अप्रासीत्[5]।

[ इत्यदादयः ]

एकदा च क्रीडाकुसुमावचयक्रमेण सा ललितलोचना मलयपर्वतीयवनराजिषु किञ्चिद् दूरम् अजिहीत[6]। इतो नरवाहनदत्तोऽपि तया अवेवेक्[7]। एवंभूते व्यतिकरे स वासन्तिकशोभासम्पन्ने कुसुमिततरुसुभगे गहने

नरवाहनदत्तस्य प्रिया पार्थक्यम् ( जुहोत्यादयः )

वने विहरन्नेकं महदच्छजलं तीरतरुपरिच्युतकुसुमैः सतारकम् आकाशमिव विराजमानमपश्यत्। तद्दर्शनसमकालमेव विचारोऽयं तन्मनसि अविक्षत[8] यत्पुष्पाणि अवचिन्वाना मदीया प्रिया न यावत् इह अभ्याजिहीते तावद् अहमिहैव तां प्रतीक्षमाणः कालं पिपर्राणि[9], एतस्मिन्नेव सरसि नेनिजानि[10], वस्त्रान्तराणि च बिभराणि[11]। एवं सञ्चिन्त्य स तस्मिन्नेव सरसि, विविक्ते अनेनिक्त विहितदैनिकसन्ध्योपासनादिश्च तत्रैकस्मिंस्तरुतले तिष्ठन् राजहंसीनां तत्सदृशीं गतिं रसालवल्लीषु च तदालापसन्निभं पिकीनामालापम्, हरिणीनाञ्च तन्नेत्राभे नेत्रे विलोक्य दूरस्थामपि स्वप्रियां मदनमञ्चुकां स्मरन्नुद्भूतकामाग्निसन्तप्तः तत्क्षणमेव मुमूर्च्छ। तस्मिन्नेव च काले पिशङ्गजटो नाम दिव्यदृष्टिः कश्चिन्मुनिः

---

१. विद ज्ञाने ( विदाङ्कुर्वन्त्वित्यन्यतरस्याम् )। २. द्विष अप्रीतौ। ३. दिह उपचये। ४. मृजू शुद्धौ, लङः प्रथमपुरुषैकवचनम् ( मृजेर्वृद्धिः ) ( व्रश्चभ्रस्जसृजमृज० ) इत्यादिना षः। ५. प्रा पूरणे। [ इत्यदादयः ]

❀ जुहोत्यादयः ❀

६. ओहाङ् गतौ, ( 'ई हल्यघोः' )। ७. विजिर् पृथग्भावे, ( णिजां त्रयाणां गुणः श्लौ )। ८. विष्लृ व्याप्तौ, (शल इगुपधादनिटः क्सः)। ९. पॄ पालनपूरणयोः ( अर्तिपिपर्त्योश्च )। १०. णिजिर् शौचपोषणयोः ( णिजां त्रयाणां गुणः श्लौ ); ( नाभ्यस्तस्याचि पिति सार्वधातुके )। ११. डुभृञ् धारणपोषणयोः ( भृञामित् )।

तत्र स्नातुमगादिति तदवस्थं स तमवलोक्य तत्प्रियास्पर्शतुल्यशीतलजलैः सिञ्चन् प्रबुद्धं सावहितं, प्रणतञ्च तमेवम् अभ्यधत्त[1], 'पुत्र, परीष्यन्ति[2] प्रियाविषयकास्ते मनोरथाः' इति मा जुहुधि[3] तद्विरहवह्निमात्मयौवनशक्तिहविषा। जहि दैन्यद्विषदम्। मा च जहिहि, जहीहि, जह्राहि[4] धैर्यम्। धृतं हि तत्, धारिणे सर्वसमीष्टं ददाति[5]। धैर्यशौर्यशालिनो हि व्याघ्रादयोऽपि बिभ्यति[6]। असिद्धिस्तु श्वशुरादिव तस्माज् जिहेति[7], इति मदाश्रमं चलित्वा एतत्सम्बद्धां मृगाङ्कदत्तीयां कथां त्वमाकर्णय'। एतदुक्त्वा बाह्यान्तर्विशुद्धः पिशङ्गजटस्तं निजाश्रममानयत्। तत्र च फलमूलादिभिः सम्पादितसमुचितातिथ्यं तं स्वयमुपभुक्तफलादिरित्थं *मृगाङ्कदत्तीयां कथाम् अभ्यधात्[8]— [ इति जुहोत्यादयः ]

अस्ति भुवनत्रयविश्रुता अयोध्या नाम नगरी। तस्याममरदत्ताख्यो महीपतिर्विद्यते[9] स्म। भास्करस्येव तस्य राजवर्चसं त्रिभुवनेषु दिदीपे[10]। नित्यानुरक्तायां सुरतप्रभायां भार्यायां तस्य मृगाङ्कदत्ताख्यः पुत्रो प्रियापार्थक्ये जज्ञे[11]। यौवनमापन्नस्य तस्य स्वकोदण्डस्येव कोटिप्राप्तगुणान- ( दिवादयः ) तस्य प्रचण्डशक्ति–स्थूलबाहु–दृढमुष्टि-मेघबल-भीमपराक्रम–विक्रमकेसरि-विमलबुद्धि-व्याघ्रसेन-गुणाकर-विचित्रकथ-प्रख्याः कुलीना युवानः, शूराः, प्रभुहितैषिणः प्राज्ञाश्च मन्त्रिणो बभूवुः। मृगाङ्कदत्तश्च तैः सह ससुखं पितुः प्रासादेषु तिष्ठन्नात्मानुरूपां भार्यां लेभे।

एकदा रहसि तदन्यतमो मंत्री भीमपराक्रमः स्वकीयं स्वप्नमेवं वर्णितवान्– 'देव, प्रासादेऽद्याहमशयिषीति स्वप्ने खरतरनखरमभिधावन्तं सिंहमेकमपश्यम्। गृहीतच्छुरिके समुत्थिते च मयि सोऽत्रसयत्[12] इति पलायमानं तमहं जवादनुपत्य

---

१. डुधाञ् धारणपोषणयोः, ( श्नाभ्यस्तयोरातः ), ( दधस्तथोश्च )। २. पॄ पालनपूरणयोः ( वॄतो वा )। ३. हु दानादनयोः, ( हुझल्भ्यो हेर्धिः )। ४. ओहाक् त्यागे, ( ई हल्यघोः ), ( जहातेश्च ), ( आ च हौ )। ५. डुदाञ् दाने। ६. ञिभी भये, (आत्मनेपदेष्वनतः)। ७. ह्री लज्जायाम्। ८. डुधाञ् धारणपोषणयोः ( गातिस्थाघुपा० )– [ इति जुहोत्यादयः ]

( दिवादयः ) ९. विद सत्तायाम्। १०. दीपी दीप्तौ। ११. जनी प्रादुर्भावे, ( गमहनजनखनघसां लोपः क्ङित्यनङि )। १२. त्रसी उद्वेगे।

* इयं कथा दशमकल्लोले समाप्नोति।

व्यर्द्धुं[1] प्रायसम्[2]। स च किञ्चिद्दूरं गत्वा प्रसारितरसनः शूरितुं[3] माम् अगृधत्[4]। अतः छुरिकयाऽहं दीर्घां तस्य रसनामच्छैत्सम् । तदैव च स सिंहो विकृतो महानेकः पुरुषः समपद्यत । 'को भवान्' इति पृष्टश्च सोऽवोचत् यदहं वैतालः, तव शौर्येण च निरतिशयम् अतुषम्[5]। कथय, किं ते प्रियमाचरेयमिति । एतदाकर्ण्याहमब्रवं यदेवं चेत्तदा मम प्रभोर्मृगाङ्कदत्तस्य का भार्या भाविनीति मामवबोधय । तच्चाकर्ण्य स वैतालोऽवशासीत् यत् उज्जयिन्यां कर्मसेननाम्नो नृपतेर्निजलावण्यन्यक्कृताप्सरस्सौन्दर्यशीलसम्पन्ना सुता शशाङ्कवती तद्भार्या भविष्यति, ताञ्चावाप्य सार्वभौमो भूपतिर्भूत्वा तव प्रभुः सर्वा निजप्रजाः सन्तोषयिष्यतीति । एवमुक्त्वा स वेतालस्तिरोऽधत्त; अहञ्च स्वगृहमागमम् ।

एतदाकर्ण्य मृगाङ्कदत्तोऽन्यान्निजमन्त्रिणः समाहूय सर्वं तच्छ्रावयामास । स्वकीयञ्च स्वप्नमित्थं तेभ्योऽवर्णयत्—'जाने, सर्वे वयं महाटवीं प्रविष्टाः अध्वनि अतृषाम[6]। दुःखेन चावाप्तं पानीयं पेतुं[7] प्रवृत्ताः पञ्चभिः पुम्भिः सायुधैरवरुद्धाः । तान् हत्वा पिपासवो वयं यावत्पानीयं पातुं प्रयतामहे तावन्न तज्जलं नापि ते पुमांस इति कृच्छ्रां दशामवाप्ता वयमिन्दूज्ज्वलवृषमारूढमायान्तं महेश्वरमैक्षामहि । स च प्रणतेष्वस्मासु दक्षिणादक्षगोऽश्रुणः कणमेकमपातयत् । स च क्षणानन्तरं समुद्रः समपादि[9] । तस्मात् प्राप्तां शुभामेकावलीं गले बद्ध्वा रक्तानुलिप्तेन नृकपालेनाहं तमम्बुधिम् अपीये[10] । तदनन्तरमेवाहम् प्राभुत्सि[11] । क्षणदाऽपि तदाऽदास्त[12] ।

मृगाङ्कदत्तेनेत्थं निजस्वप्ने निवेदिते मन्त्री विमलबुद्धिर्हृष्यत्सु तत्रस्थेष्वन्येष्वभाषत यत्त्समवाप्तभवानुग्रहो भवान् धन्यः । स्वप्ने मुक्तावलीं लब्ध्वा यद्भवताऽम्बुधिः पीतस्तेन शशाङ्कवतीमवाप्य भवान् भुवं भोक्ष्यतीति स्थिरीकृतम् । तच्चाकर्ण्य मृगाङ्कदत्तस्तानुवाद यद् यथा मम स्वप्नस्य फलं यथा वा भीमपराक्रमो वेतालादाकर्णितवान् यद्यपि तत्तथैव भावि तथापि बलदुर्गाभिमानिनः

१. व्यध ताडने । २. यसु प्रयत्ने ( 'यसोऽनुपसर्गात्' ) । ३. शूरी हिंसास्तम्भनयोः । ४. गृधु अभिकांक्षायाम्, ( पुषादिद्युतादि० ) । ५. तुष प्रीतौ ( पुषादित्वादङ् ) । ६. ञितृषा पिपासायाम् । ७. पीङ् पाने । ८. यती प्रयत्ने । ९. पद गतौ । १०. पीङ् पाने । ११. बुध अवगमने । १२. दीङ् क्षये ( मीनातिमिनोतिदीङां ल्यपि च ) ।

कर्मसेनस्य सुता शशाङ्कवती शौर्यप्रज्ञाबलेनैव मयोपलब्धव्या। यतो हि प्रज्ञाबलमेव स्वाभीष्टसिद्धिमुख्यसाधनम्।

एवं शशाङ्कवती समुपलब्धिसमुत्सुको मृगाङ्कदत्तः स्वसचिवैः सममुज्जयिनीं गन्तुमना महाव्रतिकवेषेण स्वनगर्या बहिर्गन्तुं मन्त्रिभिः सम्मन्त्र्य खट्वाङ्गकपालादि समाहर्त्तुं भीमपराक्रमाभिधं सचिवं समादिशत्। किन्तु तेनाहृतं तत्सर्वं मृगाङ्कदत्तस्य पितुर्मुख्यो मन्त्री स्वगृहे अबुद्ध[1]।

द्वितीयस्मिन् दिने हर्म्यपृष्ठे यातायातं कुर्वन् मृगाङ्कदत्तोऽधस्तादकस्मात्स्वमुखताम्बूलरसम् अस्नस्यत्[2]। स च दैवाद्धर्म्यपृष्ठमधोऽधोवर्तमानया पद्धत्या पद्यमानस्य[3] मन्त्रिणस्तस्य शिरसि अभ्रंशत[4]। एतेन 'मृगाङ्कदत्तो ममोपरि अष्ठीव्यत्' एवमवबुध्यमानो मन्त्री निरतिशयं तस्मै अक्रुध्यत्[5]। हृन्निहितपरिभवखेदश्च निजगृहम् आपद्यत सचैलञ्च अशुध्यत्[6]।

अथान्येद्युर्मृगाङ्कदत्तस्य पितुरमरदत्तस्य दैवाद्विसूचिका समजायत[7]। अतो निर्जने लब्धावसरो मन्त्री सहसोद्भूतरोगार्तिं तमभयं याचित्वाऽवदत्, देव, भीमपराक्रमगृहे मृगाङ्कदत्तेन त्वदर्थमभिचारः समारब्धस्तेनैव भवानद्य क्लिश्यति[8] कृश्यति[9] चानुक्षणं देवस्य देहः अहञ्च चारमुखात्सर्वमेतद् अवाबुध्ये। अतो देहाद् व्याधिमिव देशात्तमात्मजं दुरात्मानं निराकृत्य सन्तुष्य। एतदाकर्ण्यामरदत्तः सातिशयम् उदभ्राम्यत[10] तदवेक्षणाय च निजसेनापतिं भीमपराक्रमगृहमजीगमत्। स च सेनापतिः केशकलापादिसर्वमाभिचारिकवस्तुजातं तत्रोपलभ्य ततः समानीय सर्वं तद्राजानं प्रादर्शयत्। अमरदत्तश्चैतेन निजमन्त्रिकथने व्यश्वसीत् निरतिशयञ्चाक्षुभ्यत्[11] अचिन्तयच्च, 'अहो! यच्छुभोदर्कैकपरः पिता दुष्परिस्थितौ[12] क्षुध्यन्नपि न भुङ्क्ते, तृष्यन् अपि न पीयते, यश्च सुतस्नेहसम्बन्धबन्धः शृङ्खल इव पितरं नह्यति[13] किं तथा कथितः स इहैव[14] पर्यवस्यति? किमयमेवात्मजो निजपूर्वजान् पुंनाम्नो नरकात्[15] समुज्जस्यति यो[16] यस्यति स्वमेवं निजजनकाभिचारकलङ्कपङ्केनाविलयितुम्? किमेतदेवात्मजलाभफलं यदवाप्य मानवमनो हर्षेण

---

१. बुध अवगमने। २. ष्णसु निरसने। ३. पद गतौ। ४. भृशु भ्रंशु अधःपतने। ५. क्रुध क्रोधे। ६. शुधशौचे। ७. जनी प्रादुर्भावे। ८. क्लिश उपतापे। ९. कृश तनूकरणे। १०. भ्रमु अनवस्थाने। ११. क्षुभ सञ्चलने। १२. क्षुध बुभुक्षायाम्। १३. णह बन्धने। १४. षोऽन्तकर्मणि। १५. जसु मोक्षणे। १६. यसु प्रयत्ने।

नृ[1]त्यति । शैशवे धूलिधूसरितस्य यस्य रजसा मलिनीभूता अपि जना धन्याना-त्मनो म[2]न्यन्ते । यस्मिंश्च पितुः सहस्रशो जीवनाशाबुद्बुदाः आधीय[3]न्ते, न चिराच्चैवं विलीय[4]न्ते ? सत्स्वपीतरभावपदार्थेषु किं जगति द्रव्यस्यैव प्राधान्यम्, गुणानाञ्च सर्वथोपसर्जनीभावः ? न च कर्मसु किमप्यवधानम् ? किं तथा स्नि[5]ह्य-त्यपि पितरि पुत्रस्य जनसामान्यप्रतिपत्तिर्न विशेषाग्रहः ? किमित्थं द्रव्यमति-रिच्य गुणादिसमवाये मानवानामेकपद एवाभावबुद्धिः ? किमेतदर्थमेव जनोऽ-न्योन्येन [6]संसृज्यते, र[7]ज्यति, विरज्यते च ? अहो बत, यदनवाप्त्याधिपीडितोऽ-हमन्तःप्रविष्टघुणः काष्ठ इवाहर्निशम् अ[8]जरम् सत्यपि सर्वस्मिन् विभवे सुत-मुखावलोकनकामनया सुरतप्रभया सह तथाभूतानि व्रतादीनि समाचरम् तत्सर्वं विषबीजवपनमिव स[9]मजनि । कथमन्यथा ममैवोरसा जातस्य मय्येवाभि-चारिकबुद्धिर्भवेत्' । एवमित्यादि विविधं चिन्तयन् [10]अतिगुप्यन्, [11]कुप्यँश्च नृपतिर्निजपुत्रदौरात्म्यं [12]क्षमितुं न अ[13]शकयत्, सेनापतिञ्च प्राबिसत्[14] यद्राज्य-लुब्धो मह्यं द्रु[15]ह्यन् मृगाङ्कदत्तोऽमात्यैः सहितोऽद्यैव राज्यान्निर्वास्यताम् । सेनापति-रपि मृगाङ्कदत्ताय राजादेशं निवेद्य सामात्यं तं नगर्या निरकालयत् । राजपुत्रोऽ-पि चार्चितविनायकोऽतिहृष्टो गृहीतापेक्षितसम्पत्तिर्मनसैव पितरौ प्रणत्य विनि-र्गत्य चायोध्यातः प्रचण्डशक्तिप्रमुखान्निजसहयोगिनो दशापि मन्त्रिण उवाच यन्मदीयो बालसुहृत्, विद्यासु च सब्रह्मचारी, किराताधिपतिरिदानीं पितरि मृते विन्ध्ये राज्येऽधिरोपितो वर्तते अतः सुहृदस्तस्येदानीं निकटं गच्छामः । ततः क्रमाद्वयं शशाङ्कवतीं प्रत्युज्जयिनीं यास्याम इति ।

एवं प्रतिपन्नात्मकथनैः सचिवैः सह गच्छन्मृगाङ्कदत्तः सायं निवृत्ततोयामट-वीमेकामवाप्य स्वि[16]द्यद्गात्रः कृच्छ्रात्तीरोपान्तप्ररूढशुष्कपादपं सर एकमवालो-किष्ट । तत्र स्नात्वा सम्पादितसान्ध्यविधिः, पीतजलः, श्रान्तः शुष्कस्यैकस्य तरोरधोऽशयिष्ट येन तस्याध्वक्लान्तिः अलि[17]क्षत् ।

---

१. नृती गात्रविक्षेपे । २. मनु अवबोधने । ३. धीङ् आधारे । ४. लीङ् श्लेषणे । ५. ष्णिह प्रीतौ । ६. सृज विसर्गे । ७. रञ्ज रागे । ८. जृष् वयोहानौ । ९. जनी प्रादुर्भावे ( जनिवध्योश्च ) । १०. गुप व्याकुलत्वे । ११. कुप क्रोधे । १२. क्षमू सहने । १३. शक विभाषितो मर्षणे । १४. बिस प्रेरणे । १५. द्रुह जिघांसायाम् । १६. ष्विदा गात्रप्रक्षरणे । १७. लिश् अल्पीभावे ।

चन्द्रचकासितायाञ्चार्द्धरजन्यां मृगाङ्कदत्तः प्राबोधि[1] तेन नवदलैः पुष्पैः, फलैश्चापूरितः स वृक्षस्तदानीमलक्ष्यत। तस्य पक्कानि फलानि भृशं अश्यमानानि तस्मात् तत्क्षणमवलोक्य स सर्वान् सचिवान् अजागरयत् तदद्भुतञ्च प्रादर्शयदिति विस्मयाविष्टाः क्षुधिताश्च ते सर्वे सुस्वादुरसैस्तैः फलैः बुभुक्षितानात्मनः अतृपन्[2]। भुक्तवत्स्वथ तेषु पश्यत्स्वेव सर्वेषु शुष्कवृक्षः स क्षणादेव विप्रकुमारः समपद्यत इति विस्मितेन मृगाङ्कदत्तेन 'को भवान्' इति पृष्टोऽवदत् यत् आयोध्यिकस्य दमध्यभिधस्यैकस्य द्विजस्य श्रुतधिर्नामा पुत्रोऽहम्। एकदा दुर्भिक्षे मृतमातृकेण मया सह भ्राम्यते भूमिमिमामवाप्तवते मम पित्रे पञ्च फलानि कश्चिन्मुनिः प्रादादिति क्षुत्क्षामकण्ठः स त्रीणि मह्यं दत्त्वाऽऽत्मने द्वे समस्थापयत्। किन्तु सरसि स्नातुमपसृते तस्मिन् सर्वाणि फलानि भुक्त्वाऽहं व्याजसुप्तकमकार्षम्। सरसः स्नात्वा समायातश्च मदीयः पिता नैतद् अमृष्यत्[3] अपितु काष्ठवत्स्थितं मामवलोक्य अस्यैव सरसस्तटे शुष्कवृक्षो भवेति अशपत्[4] उक्तवाँश्च यत् चन्द्रवत्यां रात्रौ वृक्षरूपस्त्वं पुष्पिष्यसि[5], फलिष्यसि[6] चेति स्वकीयैः फलैर्यदाऽतिथीन् तर्पिष्यसि[7] तदा शापनिमित्तं वृक्षत्वं ते प्रनङ्क्ष्यति[8]। एवं पित्राऽभिशप्तः शुष्कवृक्षत्वमापन्नोऽहमद्य युष्मद्भुक्तफलः चिराय मुक्तशापः प्रण्यपत्सि[9]। इत्थमुक्तवृत्तान्तं पृच्छन्तञ्च श्रुतधिं मृगाङ्कदत्तोऽपि स्ववृत्तान्तमबोधयत् इति नीतावधीती श्रुतधिर्मृगाङ्कदत्तस्यानुयायितायां वावृत्यमानः[10] सचिवान्वितेन च तेन तत्र तां निशां नीत्वा प्रातरित्वा बभूव।

गच्छँश्चैवं मृगाङ्कदत्तः करिमण्डितसंज्ञके वने भूरिकेशान् दुराकृतीन् पञ्चपुरुषान् ददर्श। ते च समुपजातविस्मयमिमसुपगत्योचुर्यत् धेनूपजीविनो विप्रा वयं काशिपुर्याम् अजनिष्महि। अवग्रहवशात्तत्रत्यं सर्वं तृणम् अशुषत्[11]। अतस्तस्माद्देशात्प्रचुरतृणमिदं वनं धेनुभिः सहागतानां रसायनमिव तटरुहविविधौषधिभावितं वारि च पिबतां क्षीरभुजामस्माकमस्मिन्निर्जने वने पञ्चवर्षशतानि अवासुः[12]। एवं भूतानामस्माकं देव, भवन्तोऽतिथयो दैवनियोगेन प्राप्ता

---

१. बुध अवगमने। २. तृप प्रीणने। ३. मृष तितिक्षायाम्। ४. शप आक्रोशे। ५. पुष्प विकसने। ६. फल निष्पत्तौ। ७. तृप प्रीणने। ८. णश अदर्शने ( नशेः षान्तस्य ) ( मस्जिनशोर्झलि )। ९. पद गतौ ( नेर्गदनद पतपद०- )। १०. वावृतु वर्तने। ११. शुष शोषणे। १२. षोऽन्तकर्मणि ( 'विभाषा घ्राधेट् शाच्छासः )

इत्याश्रममिममुपगत्य स्वीकृतास्मद्वन्यफलपुष्पाद्यातिथ्यास्तिथ्यामस्यामस्मान् सनाथीकुर्वन्तु। एवं तैरभ्यर्थितो मृगाङ्कदत्तः सानुगस्तदाश्रमं गत्वा स्वीकृतधेनूपजीविविप्रातिथ्यस्तत्र व्यतियापिततद्दिनः प्रातस्तस्मात्प्रस्थितोऽन्यान्यपि कौतुकानि विलोकयन् क्रमात् किरातविषयमवाप्य स्वागमावेदनाय किरातपतिं स्वमित्रं शक्तिरक्षितकं प्रति श्रुतधिं प्राहिणोत्। सोऽपि च किरातेशोऽग्रे निर्गत्य सामात्यं मृगाङ्कदत्तमानतो निजपुरं प्रावेशयत्। तत्रापि च तेनोपचरितः कांश्चिद्दिवसान् स्थितः स्वकार्ये सहायकरूपेण शक्तिरक्षितमपि सज्जं तं गृहीत्वाऽऽत्मना द्वादशः पुण्याहे पुनरुज्जयिनीं प्रति शशाङ्कवतीहृतहृदयः प्रातिष्ठत।

गच्छँश्च शून्यामटवीमेकामवाप्य भस्माजिनजटाभृतं तपस्विनमेकं दृष्ट्वा किं त्वम् इहैकाकी निराश्रमपदेऽरण्ये तिष्ठसीति सानुगस्तमुपागत्य विनतोऽप्राक्षीत्। तापसश्च एतेनोदतरत् यदहं शुद्धकीर्त्यभिधानस्य नानामन्त्रौषधिसिद्धिमान् शिष्यः। एकदा शुभलक्षणं क्षत्रियकुमारकमेकमासाद्य स्वस्थावेशमकरवम्। सोऽपि च समाविष्टः सिद्धौषधिरसक्षेत्राणि समुदीर्योवाच यदस्मादुत्तरदिग्विभागे विन्ध्याटव्यामेकः केवलः शिंशपातरुः विद्यते। तस्य चाधस्तान्महदेकं नागेन्द्रभवनम्। तत्र च पारावताख्यः बलवान्नागः। स चैकदा प्रवर्तमानं देवासुरसंग्राममबुद्ध। अतस्तत्र गत्वा देवपक्षमाश्रित्य सन्नद्धवारबाणो देवेभ्यो द्रुह्यद्भिः असुरैः अयुद्ध[1]। प्रलयघनघर्घरघोषेणैव च धनुषो नैकानरीन् योधनान् आयोधनान् निरास्थत्[2]। अच्छाच्[3] च शरासनासितनिशितैश्[4]शरैरसुराणां शिरांसीति भूषिताः सुरशत्रवो भूवियुक्तिं सोढुम् अताम्यन्त[5] इव दृढं ताम् आश्लिष्यन्[6]। तद्रागेणेव च क्षरदसृजा समरभूः अक्लैत्सीत्[7]। एतेनातितृप्ता देवास्तस्मै वैदूर्यकान्तिनामकं खड्गमददुः। तच्च खड्गं यो नरोऽवाप्नोति स सिद्धाधिपतिर्भूत्वाऽपराजितो दीव्यति[8]। स चाखिर्वीरसहायैरुपलभ्यः। एवमाविष्टेन तेनोक्तोऽहं तं व्यसर्जयम्। तस्य खड्गस्याभिगृध्नुश्चाहं साहाय्यार्थं सर्वां भूमिम् अभ्राम्यम्[9] किन्त्वनवाप्तसहायः खिन्नो मर्तुमिहायातः।

---

१. युध सम्प्रहारे। २. असु क्षेपणे (अस्यतेस्थुक्)। ३. छो छेदने (विभाषाघ्राधेट्शाच्छासः)। ४. शो तनूकरणे ('शाच्छोरन्यतरस्याम्')। ५. तमु काङ्क्षायाम्। ६. श्लिष् आलिङ्गने। ७. क्लिदू आर्द्रीभावे। ८. दिवु क्रीडाविजिगीषा०। ९. भ्रमु अनवस्थाने (वा भ्राश०) इति वैभाषिके श्यनि (शमामष्टानां दीर्घः श्यनि)।

मृगाङ्कदत्त एवं तत्तापसादाकर्ण्य 'भगवन्, अलमति खेदेन ! सामात्योऽहं वेत्स्ये[1] तव सहाय इति सर्वमभीष्टं ते सेत्स्यति'[2] इत्थं तमभाषिष्ट। तापसश्चैतदभिनन्द्य कृतकृत्यमिव तत्क्षणमेवात्मानम् अमंस्त[3]। सानुगेन तेन सह तत्स्थानं च ययौ। तत्र मंत्रबद्धासु दिक्षु च रात्रौ मृगाङ्कदत्तादीन् स्थापयित्वा दिक्षु विक्षिप्तैरभिमन्त्रितसर्षपैरग्निं प्रकटीकृत्य नागदमनैर्मन्त्रैर्होतुं प्राक्रम्यत[4]। उत्पातमेघादींश्चात्ममन्त्रशक्त्याऽजैषीत्। एवं कुर्वति सानुगे तस्मिंस्तापसे शिंशपातरोरेका स्त्री निरियाय। सा च स्वकीयाभरणरवैर्मोहमन्त्रान् पठन्तीवोपेत्य कटाक्षक्षतमानसं तं विदधती समाश्लिक्षत्[5]। एतेन विस्मृतमन्त्रः स तापसो नितराम् अमुह्यत्[6] इति होमभाण्डं तस्य हस्ताद् अभ्रशत्। तदानीमेव लब्धावसरोऽसौ पारावताख्यो नागः कल्पान्तघनाघन इवोद्गमत्। नयनज्वालाघोरं तमालोक्य तस्य दारुणं गर्जनञ्चाकर्ण्य सा दिव्या नारी तत्क्षणम् अनशत्। स्फुटितहृदयस्तापसश्चापि चिराय अशाम्यत्[7]। तस्मिन् नष्टे नागो विहितसाहाय्येभ्यो मृगाङ्कदत्तादिभ्यः अशप्यत[8] यद् यूयमस्य साहाय्यं निष्कारणमनुचितमुचिता[9] अकुर्वन्निति कञ्चित्कालमन्योन्यवियुक्ता स्थास्यथेति।

एवमुक्त्वाऽन्तर्हिते नागे ते सर्वे तत्क्षणमेव ध्वान्तावरुद्धदृशो ध्वस्तशब्दश्रवणशक्तयश्च मृगाङ्कदत्ताद्या विप्रयुक्ताः शापप्रभावादितस्ततः[10] क्षुभ्यन्तोऽन्योन्यान्[11] मृग्यन्तश्च नितराम् अखिद्यन्त[12]।

एवं सचिवैर्विनेतस्ततो भ्राम्यतो मृगाङ्कदत्तस्य द्वित्रेषु मासेषु व्यतीतेषु एकदा श्रुतधिर्विप्रस्तम् अन्विष्यन् अकस्मात्तदन्तिकमवाप। प्रदर्शितविनयश्च साश्रु श्रुतधिः सादरं स्वमन्त्रिवार्तां पृच्छन्तं तमाश्वास्योवाच 'प्रभो, न मया ते दृष्टास्तथापि जाने, उज्जयिनीमेव ते यास्यन्ति; यतो हि सैव पुरी भवतां गन्तव्यस्थानम्।' एवमुक्तस्तेन प्रेरितश्च मृगाङ्कदत्तस्तेन सहोज्जयिनीं प्रस्थितः स्तोकैरेव दिवसै-

---

१. विद् सत्तायाम्। २. षिधु संराद्धौ। ३. मन ज्ञाने। ४. क्रमु पादविक्षेपे ('वा भ्राशभ्लाशभ्रमुक्रमु०') इति वैभाषिकः श्यन् 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम्, तेन 'क्रमः परस्मैपदेषु' इति दीर्घाभावः। ५. श्लिष् आलिंगने ('आलिंगने')। ६. मुह वैचित्ये। ७. शमु उपशमे। ८. शप आक्रोशे। ९. उच समवाये (समवेता इत्यर्थः) १०. क्षुभ संचलने। ११. मृग अन्वेषणे ( दिवादेराकृतिगणत्वात् श्यन् )। १२. खिद दैन्ये।

र्मार्गे विमलबुद्धिं निजमन्त्रिगमवाप्य अहृषत्[1]। तद्दर्शनेन चोद्बाष्पदृशं प्रणतं तं परिरभ्य तत्रैव चोपवेश्येतरमन्त्रिणां वार्तां पप्रच्छ। विमलबुद्धिरुत्ततार यद्देव, नाहं बुध्ये[2] नागशापतः कस्कस्तेषु क्व गत इति तथापि भवाँस्तान् प्राप्स्यतीत्यहं यथा वेद्मि तच्छृणु—नागशापेनेतस्ततः परिभ्रमन्नहमटव्याः पूर्वदिग्विभागेऽतिक्लान्तः केनापि साधुना महर्षेर्ब्रह्मदण्डिन आश्रमं प्रापितः। तत्र तेनर्षिणा प्रदत्तैः फलैः अम्भोभिश्च विगतक्लमीकृतोऽहं पर्यटन्नाश्रमादाराद्बृहतीं गुहामद्राक्षम्। प्रविश्य च तत्र तस्या अन्तर्मणिमन्दिरमेकमवलोक्य जालगवाक्षैस्तत्र वीक्षितुं प्रवृत्तः सभृङ्गकं चक्रं भ्रामयन्तीं स्त्रियं पृथक् पृथक् स्थितौ वृषगर्दभौ चादर्शम्। भृङ्गाश्च पार्श्वस्थेन वृषगर्दभौ अधीयन्त[3] इति ताभ्यां स्नुग्धौ[4] क्षीरासृक्फेनौ पीत्वा यथाश्रयं ते सितासिता भूत्वा जालकारका अभूवन्। ततो द्विविधैश्च तैः स्वकृतशक्तिर्द्विविधा जालपाशाः कृताः, ते च सुपुष्पैर्विषपुष्पैश्च संगताः। तेषु जालपाशेषु यथासुखं सक्तास्ते जालकाराः श्वेतकृष्णोभयमुखेन महाहिना समागत्य दष्टा इति नार्या तया ते नानाघटेषु क्षिप्ताः। समुत्थिताश्च ते तथैव तान् पाशान् यथातथं शिलष्ट्वा विषोद्वेगाच्च तत्पुष्पजालस्थेषु समारटत्सु अन्येऽपि तेऽन्यजालस्थाः क्रन्दितुं प्रवृत्ता इति तत्रस्थेन केनापि कृपालुना तपस्विना भालतो मुक्तया ज्वालया दग्धपाशास्ते ससुषिरं वैणवं दण्डं प्रविश्य तदूर्ध्वस्थे भास्वरे ज्योतिषि न्यलीयन्त। तत्क्षणमेव च सचक्रवृषगर्दभा सा स्त्री चक्षुषोरगोचरताम् आपद्यत। तद् दृष्ट्वा विस्मितोऽहं यावत्तत्र पर्यटन् स्थितस्तावद् भृङ्गगुञ्जितैरम्बुजैः स्वं वीक्षितुमाह्वयन्तीमिव पुष्करिणीं हृद्यामेकामपश्यम्। तत्तीरोपविष्टश्च यावदहं तद्वनं वीक्षे तावल्लुब्धकेनैकेन स्वयं संवर्द्धितो दशबाहुः सिंहपोतोऽनायत्त इति क्रोधात्तस्माद्वनाद्विवासितः। स सिंहपोतोऽपि च वनान्तरे सिंह्याः शब्दमाकर्ण्य तत्र गच्छन् वायुनाऽवकीर्णभुजो विहितः किन्तु क्षणानन्तरं क्रमशः स लम्बोदरेणैकेन पुंसा पूर्ववत्समारोपितबाहुकः सम्पादित इति स सिंह्याः कृते तद्वनं जिगमिषुर्भृशम् अक्लिश्यत[5] तथापि अन्ते तां प्राप्य तद्युक्तो निजवनमायात इति सभार्यं तं करिमर्दनमागतमालोक्य लुब्धकस्तस्मै तद्वनं समर्प्य ततोऽगात्।

एतद् निरीक्ष्योभयं तदाश्चर्यमहमाश्रममागत्य ब्रह्मदण्डिनेऽवोचम्। स चापि त्रिकालज्ञो मुनिर्मामेवमभ्यधात् 'धन्यस्त्वम्। सर्वमेतत्प्रसन्नेनेश्वरेण

---

१. हृष तुष्टौ। २. बुध अवगमने। ३. धीङ् आधारे। ४. ष्णुह उद्गिरणे ५. क्लिश उपतापे।

प्रदर्शितम् । या त्वया स्त्री दृष्टा सा माया, तया च भ्रामितं संसारचक्रम् । ये च भृङ्गास्ते जीवाः । वृषभगर्दभौ च पार्थक्येन धर्माधर्मौ, तत्स्नुग्धदुग्धासृजी च सुकृतदुष्कृते, स्वाश्रयोत्थे च ते संसेव्य श्वेतकल्मषा द्विविधा जालकाराभाः स्ववीर्यतश्च विष्टब्धा जीवाः । ते च सत्पुष्पविषपुष्पाभसुखदुःखानुषङ्गिणो द्विविधानेव सुतादिकान् जालपाशान् निर्माय तेषु यथास्वमासक्ताः शुभाशुभाभ्यां वक्त्राभ्यां युक्तेनोरगरूपिणा कालेन जूर्यन्ते[1] । ततः स्त्रीरूपया मायया घटरूपासु नानायोनिषु क्षिप्ता अपि तथैवोत्थाय तुल्यासु श्वेतकृष्णासु द्विधा आकृतिषु पतिताः सुखदुःखानुबन्धिषु पुत्रादिजालपाशेषु च निजैर्जालैर्बद्धा अत्युद्विग्नाः कृष्णाः परमेश्वरं शरणं क्रन्दितुं प्रवर्तन्ते। तद् दृष्ट्वा जातवैराग्यास्ते श्वेता अपि जीवा निजजालस्थास्तमेव प्रभुं शरणमाक्रन्दन्ति । ततो रहस्यमेतदवबुध्य तापसरूपेण देवेन ज्ञानाग्निज्वालया सर्वेऽपि ते दग्धपाशाः कृता इति विद्रुमसदृण्डरूपं तदूर्ध्वस्थमादित्यमण्डलं प्रविश्य ते परमं धाम समाश्रिता इति चक्राकारेण संसारेण सहैव वृषखराकारधर्माधर्मसमन्विता सा माया नष्टा । संसारे एवं स्वकर्मभिः शुक्लकृष्णा जीवा भ्राम्यन्ति । ईश्वराराधनेन च समुज्जस्यन्ते इति तव मोहशान्त्यर्थमेवैतत्सर्वमीश्वरेण प्रदर्शितम् ।

यच्चापि भवता वापीजले समवलोकि तस्य रहस्यमेवमवबुध्यस्व । एतद्धि जले मृगाङ्कदत्तस्य भाव्यर्थप्रतिबिम्बप्रदर्शनम् । तच्चापि भगवतैव प्रदर्शितम् । मृगाङ्कदत्तो हि सिंहशावकसन्निभः भुजोपमैर्दशभिर्मन्त्रिपुत्रैः सहवर्द्धितः, वनसन्निभात् देशाल्लुब्धकतुल्येन जनकेन च कोपात्प्रवासितः । अन्यवनोपमादवन्तिदेशादुद्भूतां शशाङ्कवत्याः ख्यातिं सिंह्या इवाकर्ण्य प्रधावितः, नागशापेन वातेन भ्रष्टमन्त्रिभुजो विहितः । ततो लम्बोदररूपेण विनायकेन संघाटितामात्यभुजः स पुनः प्रकृतिस्थो जातः । ततो गत्वाऽतिक्लेशेन सिंहीरूपां शशाङ्कवतीं प्राप्य तामादाय चागतं समालोक्य लुब्धकनिभस्तज्जनकः सर्वं तत्स्वदेशवनं तस्मै समर्प्य तपोवनं प्रस्थितः । इत्थमवलोकनेनैतेनैतदायाति यद्भवत्प्रभुः मन्त्रिणो युष्मान् भार्याञ्चैतत्सर्वमवाप्स्यतीति' ।

मुनिवरेणेत्थमवबोधितो लब्धधृतिरहं ततो निर्गतस्त्वयेह संगतः ।

( इति दिवादयः )

---

१. जूरी हिंसा वयोहान्योः । ( इति दिवादयः )

विमलबुद्धितः एतत्सर्वमद्भुततममाकर्ण्य परं परितुष्टो मृगाङ्कदत्तः श्रुतधियुक्तेन तेन सहापरमन्त्रिशशाङ्कवत्याप्त्याशापाशसितो[1]ऽपि स्वाभीष्टं साद्धुम्[2]

प्रियापार्थक्ये (स्वादयः)

अग्रेऽनवरतं हिन्वन्[3] नार्दुनोत्[4]। अध्वक्लमापनोदार्थं गिरिप्रस्रवणेषु सोऽसोष्ट[5]। उदन्यार्दुतो[6]ऽपि स स्वनिश्चयं न अधोष्ट[7]। अशनायासम्बाधितोऽपि कदाचित्कतिपयसिन[8]सक्तुग्रासैरेवात्मानम् अतर्पीत्[9]। अन्यदा चावचितवन्यफलैरेव स शान्तिम् आशिष्ट[10]; शिष्टाभिनिवेशसन्निविष्टोऽसौ अवरिष्ट[11] च शयनार्थं बाहूपधानोऽनास्तृतभूमिमेव यथापूर्वम्। विमलबुद्धिसमुदितवाक्यं स्मारं स्मारं स स्वाभीष्टसिद्धिं निरचेष्ट[12] इति काले काले सध्रीचोः श्रुतधिविमलबुद्ध्योः प्रोत्साहनेन सोऽधिकाधिकमात्मोद्देश्याभिनिवेशसुस्थिरत्वम् [13]आपत्। निराशा तत्सान्निध्यमपि समवलम्बितुं न अशकोत्[14]। अत एव च धृतिसाहसोद्यमधृक् सोऽनवरतश्रमेणापि न कष्टमाष्ट[15]।

[ इतिस्वादयः ]

इत्थं शशाङ्कवतीप्राप्तिप्रबलाभिलाषातितुन्नो[16] भवितव्यतानुनुन्नो[17]ऽसौ, वनाद्वनं पुराच्च पुरं पुरन्[18] अन्तरा नर्मदानदीम् [19]आससाद। सा चापि दिष्ट्या मिलितमेलिप्यमाणामात्यशशाङ्कवतीकं तं वीक्ष्य निजवीचि-

प्रियापार्थक्ये (तुदादयः)

वेल्लद्भुजलताभिः, हर्षान्नृत्यन्तीव, विलसत्फेनैश्च तं निकषा कसन्तीव प्रतीयतेस्मेति तदाकृष्टो यावदेव स गाढमवगाढुं तामवतरति तावत्तत्र स्नातुं मायावटुनामा कश्चिच्छबरभूपतिरुपाच्र्छीत्[20]। विधिरतर्कितमपि [21]विविधति इति ब्रुवन्तं तं भिल्लं त्रयो

---

स्वादयः

१. षिञ् बन्धने २. साध संसिद्धौ ३. हि गतौ वृद्धौ च ४. टु दु उपतापे ५. षुञ् अभिषवे ६. टु दु उपतापे ('दुग्वोर्दीर्घश्च', इत्यत्र निरनुबन्धकत्वात् दु गतावित्यस्यैव ग्रहणादत्र न दीर्घः) ७. धुञ् कम्पने ('स्वरतिसूति'— इति वेट्) ८. जलादिना पिण्डीकृत इत्यर्थः (सिनोतेर्ग्रासकर्मकर्तृकस्य) इति निष्ठानत्वम्। ९. तृप प्रीणिने। १०. अशू व्याप्तौ संघाते च। ११. वृञ् वरणे। १२. चिञ् चयने। १३. आप्लृ व्याप्तौ। १४. शक्लृ शक्तौ। १५. अशू व्याप्तौ संघाते च (ऊदित्वात् वेट्) १६. तुद व्यथने। १७. णुद प्रेरणे ('नुद-विदोन्द०' इति वैकल्पिको नः) १८. पुर अग्रगमने। १९. पद्लृ विशरण-गत्यवसादनेषु। २०. ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु। २१. विध विधाने।

जलमानुषा युगपद् गृहीत्वा निर्गरितुम्[1] ऐषिषुः[2]। अतस्तत्परिच्छदस्तम् उज्झित्वा[3] बिभ्यदभ्यद्रवत्। तद् दृष्ट्वा समाकृष्टखड्गो मृगाङ्कदत्तोऽन्तः प्रविश्य जलमानुषाँस्तान् प्रत्यस्किरत्[4] शबरञ्च अमोचयत् इति तद्ग्राहनिग्रहान्मुक्तो भिल्लराजोऽद्भ्यः उदमाङ्क्षीत्[5], राजपुत्रपादयोः पतित्वा च अप्राक्षीत्[6], 'भगवन्, कस्त्वम् यस्समानीतो धात्राऽत्रात्रास्त त्रस्तस्य मे प्राणान्? जन्मना त्वं कं महानुभावं मृडसि[7]? रहसि त्वां का योषिज्जोषं जुषते[8]? क्व त्वं क्षियसि[9]? मनसि किं वा महोद्देश्यं धियसि[10]?' इति। एतदुक्त्वोत्तरे श्रुतधेरशेषतश्च तद् वृत्तान्तं श्रुत्वा सुतरां प्रणतः शबरेन्द्रो यथादिष्टे तदभिवाञ्छिते सहायो भवितुं स्वम् अदिशत्[11], स्वगृहं तत्कृपोपस्थित्या पवित्रीकर्त्तुञ्च प्रार्थयमानः स्वकीयां पल्लीमानीय स्वविभूतिभिः यथावत् आद्रियत[12]। मृगाङ्कदत्तोऽपि च तदनुरोधतः तत्र काँश्चिद्वासरान् अध्रियत[13]।

एकदा तत्रैव स्थिते मृगाङ्कदत्ते शबरेश्वरश्चण्डकेतुनाम्ना निजप्रतीहारेणाचैर्दीव्यन्नासीदिति नभसि मेघेषु गर्जत्सु प्रनृत्यतो मयूरान् द्रष्टुं स उत्तस्थौ। द्यूतरसिकः प्रतीहारस्तमभ्यधात् यद्राजन्, असुशिक्षितताण्डवैरेभिर्मयूरैरलम्। मदीये गृहेऽतीमानभूतपूर्वो मयूरो वर्तते तदवलोकनरसिकश्चेद्भवान्, तं श्वः प्रदर्शयिताहे। एतदाकर्ण्य 'नूनं स त्वया प्रदर्शयितव्य' इति प्रतीहारमुक्त्वा स्नानाद्यर्थमुत्थिते तस्मिञ्छबरेश्वरे मृगाङ्कदत्तोऽपि सानुगस्तत्सर्वमाकर्ण्योत्थाय स्नानाहारादिविधीन् अविधत्।

अथ रात्रावन्धे तमसि कस्तूरिकानुलिप्तनीलवासस्त्वचिताङ्गो[14] राजपुत्रो वीरचर्यार्थं स्वोद्देश्यादेकक एव सुप्तानुगात्स्वावासात् खड्गपाणिर्निर्जगाम। भ्रमतश्च मार्गे ध्वान्तवशादपश्यतस्तस्य कस्यापि पुरुषस्यांशेनास्यांसोऽभ्यहन्यतेत्यतिक्रुद्धो राजपुत्रो युद्धाय तमाह्वयति स्म। किन्त्वंसेनाहतो निपुणः पुमान्

---

१. गॄ निगरणे ('वृतो वा', अचि विभाषा')। २. इषु इच्छायाम्। ३. उज्झ उत्सर्गे। ४. कॄ विक्षेपे ('किरतौ लवने', 'अडभ्यासव्यवायेऽपि०')। ५. टुमस्जो शुद्धौ ('मस्जि नशोर्झलि')। ६. प्रच्छ ज्ञीप्सायाम्। ७. मृड सुखने। ८. जुषी प्रीतिसेवनयोः। ९. क्षि निवासगत्योः। १०. धि धारणे। ११. दिश अतिसर्जने। १२. दृङ् आदरे। १३. धृङ् अवस्थाने। १४. त्वच संवरणे।

तत्कालोचितमुवाच यद् अविचार्यैवैवं कथमतिताम्यति भवान्। अत्र तु निशापतिरेवापराध्यति येन नैषा निशा प्रकाशिता विधाता वा चुकोट[1] यो न पूर्णाधिकारमस्य भाग्ये लिलेख[2]। अत एवेदृश्यन्धकारेऽकारणं वैराणि समुल्लसन्तीति दैवादत्र मिलितयोरावयोर्युद्धेन कतरः किं वेदिष्यते[3]। नागरिकादेतदाकर्ण्य सत्यमिति तुष्टो मृगाङ्कदत्तः 'को भवान्', इति तं पुरुषं पप्रच्छ। तेन च चौरोऽहम् इत्युक्तो राजपुत्रो मृषावदत्, 'तर्हि हस्तमानय, सहचरश्च मे भवेति'। इत्थं तेन सख्यं कृत्वा तेनैव सह गच्छन् स निर्जलजीर्णकूपमेकम् उपासीदत्। तच्च प्रविश्य तत्र वर्तमानया सुरुङ्गया तेनैव पुंसा च सह गत्वा स मायावटो राज्ञोऽन्तःपुरं प्रविवेश[4]। तत्र प्रकाशे स पर्यचैषीद् यत्तस्य सहायायी पुरुषो नान्यस्तस्करोऽपि तु चण्डकेतुः प्रतीहारः। राजस्त्रीच्छन्नकामुकश्चण्डकेतुस्तु मन्दालोकैककोणस्थं मृगाङ्कदत्तं परिचेतुं नाशकत्।

तत्र प्राप्तमेव च प्रतीहारमुत्थाय मञ्जुमत्यभिधाना तदनुरक्ता राजपत्नी तं कण्ठेऽग्रहीत् पर्यङ्के समुपवेश्य चाप्राक्षीत्, 'अद्य कं पुमांसं त्वमिहानैषीः' इति। प्रतीहारोऽब्रवीत्, 'विश्वसिहि ममायं सुहृदिति न भयस्यावकाशः' इति। एवमुक्ता मञ्जुमती सातिशयम् उदविजिष्ट[5], उवाच च यदिदानीं मन्दभाग्याया मे कुतो विश्वासः; यतो हि नर्मदाम्भसि मृत्युमुखे पतितं राजानमवलोक्य मृगाङ्कदत्तस्तद्रक्षणे व्यापृत[6] इति राजाऽसौ जलमानुषगृहीतोऽपि नामृत[7]। तच्छ्रुत्वोपांशु प्रतीहारोऽवादीत्, 'प्रिये, शुचा अलम्। अचिरादेव मृगाङ्कदत्तं तमहम् प्रतिस्किरिष्यामि' इति। एतदुक्तवन्तं तं मञ्जुमत्यभ्यधत्त–मा विकत्थिष्ठाः, यदासौ नृपो नर्मदाम्भसि ग्राहैराक्रान्तोऽभूत्तदैको मृगाङ्कदत्त एव तद्रक्षणाय समयस्यत्, तमजस्यच्च। कथं न त्वं तं तत्रैव तर्हि तर्हितुमभङ्गुरं शस्त्रम् उदगुरिष्ठाः[8], अपि तु भीतस्ततः पलायिष्ठाः? वीरा हि कर्मणि निपुणन्ति[9] न केवलं वाचीति जोषमास्यताम्। मा कस्यचिच्छ्रुतिपथमेतदवतरेदन्यथा मृगाङ्कदत्ताच्छूराच्छिवं ते न भवेत्।

---

१. कुट कौटिल्ये। २. लिख अक्षर विन्यासे। ३. विद्लृ लाभे। ४. विश प्रवेशने। ५. ओविजी भयचलनयोः। ६. पृङ् व्यायामे। ७. मृङ प्राण त्यागे। ८. गुरी उद्यमने। ९. पुण कर्मणि शुभे।

एवमुक्तो जारः प्रतीहारः सातिशयं लेजे[1]। तदधिक्षेपक्षान्तिस्तदानीं तदा श्रयं न भेजे। अमर्षावेशभरोऽमुष्याधरो निष्पुस्फोर[2]। चुक्षोर[3] च मञ्जुमत्युक्तमेकैकमक्षरं तद्धृदयमिति क्रोधाग्निर्ज्वलद्भ्राष्ट्रकपालपतितान्नमिव तत्सर्वाङ्गं बभर्ज[4]। अतोऽमृष्यमाणः स उवाच–'आः पापे, मृगाङ्कदत्तस्त्वाम् अलुभत्[5] इति त्वं तस्मिन् बद्धभावा; किन्तु तेन त्वं यन्माम् अधिक्षिपसि[6] तस्य फलमिदानीमेव विन्दस्व[7]। एवमुक्त्वा स्त्रीवधपापानवहितः स स्वच्छुरिकया तच्छिरश्छोरितुमैच्छत्। परं तस्मिन्नेव काले रहस्यधारिणी चेटिकैका छुरिकां ताम् अवाष्टम्नात् इति मञ्जुमती ततो निर्गत्यान्यत्रागमत्। प्रतीहारश्च विस्मितेन मृगाङ्कदत्तेन सह यथागतं स्वगृहं परावर्तत।

प्रतीहारे तस्मिन् स्वगृहं प्रविष्टे मृगाङ्कदत्तस्तमसि तमभिहितवान् 'समासादितस्वभवनो भवानधुना क्षिप्रं गाढं निद्रातु अहमपि चातः साधयामी'ति। प्रतीहारस्तथेत्युक्त्वा तच्चेष्टावलोकनेच्छया तत्रत्यं स्वभृत्यमेकमाहूय आदिशत् यत्स मयूरो यत्र वर्तते तत्र पुरुषमेनं नीत्वा शयनीयमस्मै प्रयच्छ। भृत्योऽपि च तथेति प्रतिपद्य मृगाङ्कदत्तं सदीपकं तद्गृहं प्रवेश्य दत्तशय्यञ्च तं विधाय बहिर्निर्ययौ।

गते च भृत्ये सार्गलीकृतबहिर्द्वारो मृगाङ्कदत्तः पञ्जरस्थितं तं मयूरमालोक्य सोऽयं प्रतीहारोक्तो मयूर इति चिन्तयन् कौतुकात्तस्य पञ्जरमुद्घाटयामास। पञ्जरनिर्गतो मयूरश्च मृगाङ्कदत्तं निपुणं निरीक्ष्य तत्पादयोर्निपपात मुहुर्मुहुर्लुलोठ चेति लुठतस्तस्य कण्ठे मृगाङ्कदत्तः बद्धं सूत्रकमवलोक्य तुदति एतदेनमित्यवगत्य मंक्षु तद् अमुक्त[9]। मुक्तकण्ठसूत्रश्च मयूरः पश्यत एव मृगाङ्कदत्तस्य भीमपराक्रमो मन्त्री समपद्यत। मृगाङ्कदत्तश्च तदौत्सुक्येनानतं तं समाश्लिष्य किं न्वेतदिति विस्मयाविष्टः सर्वं वर्णयितुं तम् असुवत्[10]। तन्निर्वर्ण्यातिप्रसन्नो भीमपराक्रमो लिम्पमानां[11] तदीयां मृदुलतान्तां जिज्ञासालतां स्ववृत्तान्तामूलवर्णनेनेत्थम् अव्रश्चीत्[12]–'देव, नागशापेन भवदन्तिकाद्भ्रिष्टोऽहमटव्यां भ्रमन्ने-

१. ओलजी व्रीडायाम्। २. स्फुर स्फुरणे। ३. क्षुर विलेखने। ४, भ्रस्ज पाके। ५. लुभ विमोहने। ६. क्षिप प्रेरणे। ७. विद्लृ लाभे। ८. छुर छेदने। ९. मुच्लृ मोचने। १०. षू प्रेरणे। ११. लिप उपदेहे। १२. ओव्रश्चू छेदने।

कस्मिन् शाल्मलिपादपे निखातां गणेशप्रतिमामालोक्य कृततत्परिणूतिः[1] तन्मूले परिश्रान्तः समुपाविशम्। कृतञ्च मनसि, यद् वेतालवृत्तान्तं स्वामिने निवेद्य न मयोचितमाचरितम्। एवं पारस्परिकपार्थक्येऽपराधिनमात्मानमालोच्य निराहारो देवस्याग्रेऽध्रुवं देहमिमं परित्यक्तुमध्रुवम्[2]। गतासु चैवमबहुतिथीषु तिथिषु तेनैव पथा कश्चित्पथिकोऽपथीत् तस्यैव तरोश्छायायां च क्षणं विश्रम्य 'किं त्वं पुत्रात्र म्लानमुखस्तिष्ठसि? किमिच्छति[3] भवान्? किं मिच्छति[4] भवन्तम्? इत्थं निरवज्ञात्। तन्निर्बन्धेन च यथावत्स्ववृत्तान्तं विनिवेदितवन्तं मां स वृद्धपथिकः 'न धीरेषु भवादृशेषु एवमात्मग्लानिहेतुभूतविकाराः शुम्भन्ति[5]। धीरोद्योगिनां हि सर्वे मनोरथा यथासमयं समुम्भन्ति[6], इति नापदि ते स्वधैर्यम् उज्झन्ति।' एवमुक्त्वा तद्बोधिकाः विविधाः कथाश्च कथयित्वा मरणान्मां निवार्य यथेच्छम् अविच्छायीत्[7]। [ इति तुदादयः ]

मित्रवियोगजन्मतामिस्रावरुद्धबुद्धिः किन्तु, सुगृहीतस्नेहोपदेशप्रदीपोऽप्येवं खिन्ते[8], यत्सर्वमुपदेश्यं विद्वानपि न स कृत्याकृत्यं विन्ते[9]। ज्ञानप्रकाशो हि न तस्य समुच्छृन्ते[10] इति प्रियात्प्रियतरमपि स[11] परितृन्ते। अतः कथं मां विधिर्मम प्रभुणा संयुनक्तु[12] येन स पुनरप्यस्मान् पूर्ववत् सम्भुनक्तु[13] इति चिन्तानिमग्नोऽहं युष्मान् अन्विष्यन्नटव्यास्तवाभिलषितामुज्जयिनीम् आञ्जिषम्[14]। परं सापि मे तव संयोगम् अवर्जीत्[15]। एतच्च नैराश्यं स्वान्तं मदीयम् अभिनत्[16] इव, शरीरञ्च प्राणेभ्यः अविनक्[17] इवेति भवदनवाप्त्यवरुद्धमानसगतिरतिश्रान्तः एकस्याः स्त्रियः गृहं प्रदत्तभोजनावासवस्त्रोऽहं वासाय प्राविशम्। तत्र चावाप्तशयनासनः क्षणं

प्रियापार्थक्ये
( रुधादयः )

---

१. णू स्तवने। २. ध्रु गतिस्थैर्ययोः। ३. 'मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न' इति किम् शब्दात् क्यचो निषेधः। ४. मिच्छ उत्क्लेशे। ५. शुम्भ शोभार्थे। ६ उम्भ पूरणे। ७. विच्छ गतौ ( 'गुपूधूपविच्छ०' इत्यायप्रत्ययः )

( इति तुदादयः )

❀ रुधादयः तनादयश्च ❀

८. खिद दैन्ये। ९. विद विचारणे। १०. उच्छृदिर दीप्तिदेवनयोः। ११. उत्तृदिर हिंसानादरयोः। १२. युजिर योगे। १३. भुज पालने। १४. अञ्जू व्यक्तिम्रक्षण। १५. वृजी वर्जने। १६. भिदिर विदारणे। १७. विचिर पृथग्भावे। १८. रुधिर आवरणे।

सुप्तः प्रबुध्य च यावत्कौतुकान्निभृतस्थितोऽवलोकयामि तावत्सा स्त्री गृहाभ्यन्तरे भूमिम् औनत्[1] ; मुष्टिपरिमितान् यवाँश्चादाय मन्त्रोच्चारणपूर्वकं समन्तात्तान् अवपत्[2] ; तत्क्षणं क्ष्मामुद्भिद्य जातान्, फलितान्, पक्वान्, लूनान् कपाले चैकस्मिन् भ्रष्टान्, अवहताँश्च तान् सद्यः अपिनट्[3], सक्तुरूपेण च व्यशिंनट्[4]। ताँश्च सक्तून् एकस्मिन् भाण्डे संस्थाप्य मुष्टित्रयपरिमिताँस्तेभ्यः समादाय कांसपात्र्यामेकस्यां निधाय अद्भिः समस्कार्षीत्[5] पिधानेनैकेन च तान् पिधाय गृहञ्च सुव्यवस्थं विधाय स्नानार्थं गृहान्निरयासीत्। एतत्सर्वं तत्कृत्यं मदीयस्वान्ते निरतिशयां विस्मितिम् अतनिष्ट[6] येन चाहं तां शाकिनीम् अमनिषि[7] सत्वरञ्चोत्थाय सक्तुभाण्डतस्तावत एव सक्तून् समुद्धृत्य सुरक्षितसंकरः पूर्वं पिधाने संस्थाप्य कांसपात्र्याः सक्तून् सक्तुभाण्डे निक्षिप्य पिधानस्थापितसक्तून् पुनः पूर्वपात्र्यां कृत्वा तथैव तावतीभिरेवाद्भिरभ्युचय यथापूर्वं पिधाय शयनीयेऽङ्गान्यत निषि। स्नात्वाऽऽगता च सा मामुत्थाप्य पात्र्याः सक्तून् अशनाय मह्यम् असनिष्ट[8] स्वयं चाज्ञातमत्कृतव्यत्यया तस्मात्सक्तुभाण्डाद् गृहीत्वा अतर्णीत्[9] इति भुक्तेषु तेषु सक्तुषु सा तत्क्षणमेव छागी समपद्यत। तां तथाभूतामवलोक्य तदीयं सर्वं कृत्यञ्च प्रत्यभिज्ञाय मदीयोऽमर्षाग्निः समधिकम् ऐन्धे[10] येनाहं ताम् एकस्मै सौनिकाय अक्रैषम्[11]। [ इति रुधादयः तनादयश्च ]

परेद्यवि सौनिकपत्नी मामुपेत्य अगुध्नात्[12] यत्त्वं मदीयां सखीम् अव्याचीः अतस्तस्य फलमवश्यं त्वं लप्स्यसे। एवं तया तर्जितोऽहं ततः पुरो बहिर्गत्वा समन्ताद्विततशाखस्यैकस्य न्यग्रोधशाखिनो मूले श्रान्तोऽशयिषि। तदैवं योगिनीदुष्टा सौनिकभार्या मामुपेत्य तथासुप्तस्य मम गले सूत्रकमेकम् अभान्त्सीत्[13]। तथाकृत्वा गतायां च तस्यां यदाहं प्राभुत्सि तदा स्थितस्मृतिरहं मयूरत्वं प्राप्तमा-

(क्र्यादयः)

---

१. उन्दी क्लेदने। २. ( डु वप् बीजसन्ताने )। ३. पिष्लृ सञ्चूर्णने। ४. शिष्लृ विशेषणे। ५. डु कृञ् करणे ( उपात् प्रतियत्न )। ६. ( तनु विस्तारे )। ७. ( मनु अवबोधने )। ८. ( षणु दाने )। ९. ( तृणु अदने )। १०. ञि इन्धी दीप्तौ। ११. डु क्रीञ् द्रव्यविनिमये [ इति रुधादयः तनादयश्च ]

❀ क्र्यादयः ❀

१२. गुध रोषे। १३. बन्ध बन्धने।

त्मानमपश्यम् । ततः कतिचिद्दिनानि इतस्ततोऽत्युद्विग्नोऽहमभ्रमिषम् इत्येकस्मिन् दिने शौनिक एको जीवन्तं माम् अग्रहीत्[1] भिल्लराजप्रतीहारमुख्यायास्मै चण्डकेतवे च समुपाहार्षीत् । तत्पत्नी मामवलोक्य अपूर्वोऽयं मयूर इति क्षिप्रम् अप्रैषीत[2] । मदुपयुक्तेन च स्वादीयसा भोज्येन प्रोषितं माम् अप्रोषीत्[3], मनोरञ्जकक्रीडनकरूपेण चैकस्मिन् सुन्दरे पञ्जरे समतिष्ठिपत् ।

अद्येह दैवानीतस्त्वं मम कण्ठसूत्रकममुच इति पुनः समयो नौ अखौनात्[4] अतो न चिरादस्मान् निर्ऋणीयाव[5] । रात्रिचर्याया दर्शकान् पापोऽयं प्रतीहारः स्वरहस्यभेदभिया प्रमीणाति[6], त्वञ्चास्य रात्रिचर्यामद्यादर्श इति सर्वमस्याचरणरहस्यं जानासि[7] । अतो योगिनीनिर्मितमेतत्सूत्रं स्वकण्ठे सिनीहि[8] मयूरीभूय चामुना गवाक्षेण बहिर्निर्ऋणीहि[9] । ततः समुच्छ्रितात्तव कण्ठात् प्रसारितभुजोऽहं तत्सूत्रं मोचयित्वा आत्मनः कण्ठे भन्त्स्यामि तद्वदेवाहमपि च द्रुतमनुद्रोष्यामि तत्र च त्वया मम सूत्रे मुक्ते आवां प्रकृतिस्थौ भविष्यावः । द्वारं हि बहिरर्गलितमिति ततो विनिर्गममावयोः विष्कभ्नाति[10] अतो गवाक्षमार्गेणैवावयोर्गमनं श्रेयः ।

चतुरस्य भीमपराक्रमस्य युक्तिरियं राजपुत्रं निरतिशयम् अप्रीणात् इति तत्कथनानुसारेण स ततो निर्गत्य मन्त्रिणा सह सचिवद्वयं स्वावासमागात् । तत्र च प्रहृष्टास्ते सर्वेऽन्योन्यवृत्तान्तवर्णनैस्तां निशामनैषुः ।

प्रातः मायावटुर्भिल्लराजो निजप्रतीहारेण चण्डकेतुना सह मृगाङ्कदत्तमुपाव्राजीत् । राजपुत्रं विनोदयन् 'एहि, अक्षैर्दीव्यामः' इति चावादीत् । एतच्छ्रुत्वा मृगाङ्कदत्तस्य सखा श्रुतधिरभाषिष्ट, 'किमक्षैर्देवनेन ! न तत्किमप्यपूर्वम्; किं विस्मृतं भवता यद् ह्यः भवत्प्रतीहारोऽपूर्वस्य मयूरस्य नृत्यप्रदर्शनं प्रत्यजानात । अतस्तेनैवाधुना मनो रञ्जनीयम् ।' श्रुतधेरेतदाकर्ण्य शबरेश्वरो मयूरानयनाय तं प्रतीहारमादिक्षत् । प्रतीहारश्च तदानीमचिन्तयत् यत्किमर्थमहं प्रमादाद्विस्मृत्य शिखिक्षयक्षिसमपि क्षपारहस्यसाक्षिणं न तत्क्षणमक्षणिषम्[11] ।

---

१. ग्रह उपादाने । २. प्रीञ् तर्पणे कान्तौ च । ३. पुष स्नेहनसेवनपूरणेषु । ४. खच भूतप्रादुर्भावे । ५. ऋ गतौ । ६. मीञ् हिंसायाम् ( 'हिनुमीना' ) । ७. ज्ञा अवबोधने ( 'ज्ञाजनोर्जा' ) । ८. षिञ् बन्धने । ९. ऋ गतौ । १०. स्कम्भु रोधने सौत्रो धातुः । 'स्तम्भुस्तुम्भुस्कम्भु०',–'वेः स्कभ्नातेर्नित्यम् । ११. क्षणु हिंसायाम् , व्यापादयमित्यर्थः ( ह्मयन्तेति वृद्ध्यभावः ) ।

तदस्मात्त्वरमित्वरो भूत्वा तथा करोमीति विचार्य शीघ्रं गृहमगास्त। किन्तु प्रविष्टशिखिवेश्मा यावत् पश्यति न तत्र तावच्चौरो नापि मयूरोऽदर्शि। एष व्यतिकरः प्रतीहारस्य चण्डकेतोर्हृदयम् अमृद्नात्[1]। स च गत्वा नृपतिं व्याहरत् 'देव, रात्रौ कश्चिच्चौरो मदीयं मयूरम् अमुष्णात्[2]। यतो हि अतीतेऽह्नि प्रगेऽहं[3] तद्गेहम् अगे, तदानीं स आसीदिदानीञ्च नास्तीति भवदग्रे मिथ्यावादीदानीमहं सञ्जातः। न मे वाक् प्रसरति किमपि वक्तुम्। निश्चप्रचमेतद् यत् स आसीत्कश्चिद् गृहीतमयूरावतारो दिव्यावतारः। अपूर्वं स आचरत्। अदृष्टपूर्वं सोऽनर्तीत्। पुरः पर्यवस्थापितजलो न स यावत् अस्नात् न किञ्चित् आश्नात्[4]। पत्न्याश्च मे स आसीदपूर्वं क्रीडनकमिति चोरितेन तेन सा नितरां क्षुभ्नाति[5]। अनुनीयमानापि शिरो धुनाति[6]। तच्चौर्यहेतुञ्च मामवगत्य भृशं भृणाति[7]। किं बहुना, वार्यमाणापि सा तथैव प्रेष्णाति[8] इति। एतदाकर्ण्य 'यस्ते बर्हिणमपाहार्षीत् स प्रसिद्धश्चौरो निशाचरश्च इति श्रुतधिनोक्ते मृगाङ्कदत्तादींश्चाप्यन्योन्यदर्शिनो हसतो वीक्ष्य मायावटुः किमेतदिति वक्तुं तान् निरबध्नात्। ततो मृगाङ्कदत्तो रात्रौ प्रतीहारमेलनमारभ्य भीमपराक्रममोचनं यावत्प्रतीहारवृत्तान्तं शबरेन्द्राय शशंस।

तथा च तत्र प्रतीहारो राजपत्न्या गृहं गच्छन् यथा मृगाङ्कदत्तम् अभ्यचीत्, यथा च तत्र गत्वा कामुकः स राजमहिषीमचीकमत, शस्त्रकलहं वा व्यधात्, यथा च स्वकीयप्रतीहारगृहप्राप्तिर्भीमपराक्रममुक्तिश्चेत्येतत्सर्वं तथा शबरेन्द्रम् अक्लिक्षत्[9] यज्ज्वलत्कोपाग्निपरीताङ्गः स प्रतीहारमुद्वध्य निरकुक्षत्[10] अविनीतां राज्ञीं मञ्जुमतीञ्च तदानीमेव स्वदेशाद् व्यौच्छत्[11]।

मृगाङ्कदत्तश्चाथ शबरसत्कृतः, शशाङ्कवत्यधिगमाय बद्धोद्यमोऽप्यवशिष्टमन्त्रिसङ्गमसव्यपेक्षः, पुलिन्दपल्ल्यां बहूनि दिनानि निनाय। [ इति क्र्यादयः ]

एवं भिल्लाधिपतेर्मायावटोर्गृहे तिष्ठति विमलबुद्ध्यादिसहिते मृगाङ्कदत्ते,

---

१. मृद क्षोदे। २. मुष स्तेये। ३. प्रातःकालेऽहं तद्गृहमगच्छम्। ४. अश भोजने। ५. क्षुभ सञ्चलने ( क्षुभ्नादिषु च' )। ६. धूञ् कम्पने। ७. भृ भर्त्सने ( 'प्वादीनां, ह्रस्वः' )। ८. इष आभीक्ष्ण्ये ( पौनः पुन्येन तथैव करोति )। ९. क्लिशू विबाधने। १०. कुष निष्कर्षे ( 'निरः कुषः' इति वेट् )। ११. ( उच्छी विवासे )। [ इति क्र्यादयः ]

समेत्यात्मीयश्वमूपतिरेकदा शबराधीशं व्यजिज्ञपत्[1] यत्त्वदाज्ञापिता भगवत्या उपहारं मार्गयमाणा[2] वयं पुरुषमेकं तादृशम् आपिवाम[3]। स चास्माकं वीरयोधानां शतपञ्चकेन असंसङ्ग्रामत[4], बहूँश्च अचखण्डत[5] इति दण्डप्रहारविवशीकृतोऽस्माभिः स इहानीतः। तदाकर्ण्य पुलिन्देन्द्रस्तं पुरुषमाशु प्रवेशयितुं दर्शयितुञ्चादिदेशेति गण्डसिन्दूरसम्पृक्तस्रवत्कटोन्मत्तबद्धकरटीव, शस्त्रक्षतक्षरदसृगाक्तगात्रः, पाशैर्विबाधितः[6] स यावत्प्रवेशितस्तावन्मृगाङ्कदत्तस्तं निजमन्त्रिणं गुणकरं प्रत्यभिज्ञाय प्ररुदन् धावित्वा कण्ठे अजगृहत[7]। भिल्लेन्द्रश्च तन्मित्रेभ्यस्तं गुणाकरमवगत्य निजप्रभुपादलग्नं तमतिप्रह्वो भृशम् असंसामत्[8] स्वनिकेतनञ्च संसङ्केत्य[9], विविक्ते निनिक्ते च तस्मिन्, बद्धव्रणपट्टकं तमगदङ्कारप्रोक्तपथ्यैः पानभोजनैश्च अववासत[10]। इत्थं समाश्वस्तं तं स्वमन्त्रिणं मृगाङ्कदत्तः समागत्य, 'सखे, कथय कस्ते वृत्तान्त' इति तमन्वयुङ्क्त। तदाकर्ण्य रणसर्वगुणाकरो गुणाकरः शृण्वत्सु सर्वेषु स्वकीयं वृत्तान्तं समुपकेतयितुम्[11] एवमुपाक्रमत—

'नागस्य शापेन भवद्भ्यो विरहितोऽहं मोहात्सुदूरं तामटवीं भ्रमन्नपि न किञ्चिद् अवीविदे[12]। क्वचिद् रेषणम्[13] अचिच्छिद्रत[14], इतरत्र भवद्गवेषणश्रमसोह आन्दधत्[16]। इत्थं नितरां दुःखितः चिरादवाप्तबुद्धिरहम् अचिचिन्तम्[17], 'अहो दुशिक्षितस्य वेधसोऽपूर्वो विलासः। यो हि मृगाङ्कदत्तो हर्म्यतलस्थितोऽपि खिद्येत स सन्तप्तसिकतायामस्यामटव्यां पदयमानः[18] कथं भवेत्। कां वा गतिं तेऽस्मद्वयस्याः प्राप्ताः स्युः। इत्थमन्तर्मुहुर्मुहुर्भावयन्[19], विन्ध्यवासिनीं दैवादवाप्य कृतान्तसदनोपममहर्निशोपहारीकृतानेकजीवं देव्या भवनं प्रविष्टः यथोपलब्धोपचारैर्देवीमहम् अममहम्[20]। अपश्यञ्च तत्रैकमात्मोपहारिणं कण्ठान्तर्गतनिस्त्रिंशहस्तं पुरुषशवम्।

प्रियापार्थक्ये ( चुरादयः )

---

❀ चुरादयः ❀

१. ज्ञप ज्ञाने ज्ञापने च। २. मार्ग अन्वेषणे। ३. आप्लृ लम्भने। ४. संग्राम युद्धे। ५. खडि भेदने। ६. बध संयमने। ७. गृह ग्रहणे। ८. साम सान्त्वप्रयोगे। ९. सङ्केत आमन्त्रणे। १०. वास उपसेवायाम्। ११. केत श्रावणे। १२. विद चेतनाख्याननिवासेषु। १३. री गतिरेषणयोः ( रेषणं वृकशब्दः )। १४. छिद्र कर्णभेदने। १५. गवेष मार्गणे। १६. अन्ध दृष्ट्युपघाते। १७. चिति स्मृत्याम्। १८. पद गतौ। १९. भुवोऽवकल्कने ( अवकल्कनं चिन्तनम् )। २०. मह पूजायाम्।

तच्चैवमवलोक्य त्वद्वियोगिनोऽतिदुःखितस्य च मे मतिरात्मोपहारेण देवीं सन्तोषयितुमुदभूदिति यावदहं धावित्वा तत्खड्गमुपात्तवाँस्तावद् वार्धक्यकम्पिना शिरसा सानुकम्पं कापि तापसी मरणान्मां निवार्य पृष्टमद्वृत्तान्तोक्तवती 'सुखदुःखसंयोगवियोगादिपरिपूर्णेऽस्मिन् जगति वीरस्य ते देहोत्सिसृक्षयाऽनयाऽलम्। मृतानामपि संगमो भवति किं पुनर्जीवितानामिति मृगाङ्कदत्तेनावश्यं ते समागमो भविते'ति। इत्थं वृद्धतापस्याऽऽश्वासितोऽहं समुपजाततद्वाक्यास्थो विहिततत्प्रणतिः प्रस्थितवान्। ततः क्रमादटवीमेतां प्राप्तश्चण्डिकाकृते उपहारमन्विष्यद्भिरेभिः शवरैरुपलब्धोऽस्मीति युद्धे व्रणार्दितः शवराधिपतेरस्य मायावटोः पार्श्वमानीतोऽत्र द्वित्रमन्त्रियुक्तं भवन्तमुपलब्धवान्। अत्र च त्वत्प्राप्तिप्रसादः सर्वं मदीयं दुःखमिदानीम् औनंनत्[1]।

सख्या गुणाकरेणेत्थमुदीरितं तद् वृत्तान्तमाकर्ण्य शवरेशगृहस्थितो मृगाङ्कदत्तः परमं पर्य्यप्रीणयत्[2] वयस्यैरन्यैरुत्थाय निजाह्निकं च अतितीरत्[3]। गुणाकरमथ तत्रोल्लाघयन्, शेषान् सखीन् प्राप्तुमुज्जयिनीञ्च शशाङ्कवत्युपलब्धये यियासुः कतिचिदहानि तत्रैव अवंवसत्[4]।

गुणाकरे चाथोल्लाघवतां गते, शुभेऽहनि मृगाङ्कदत्तः श्रुतधिना, विमलबुद्धिना, गुणाकरेण, भीमपराक्रमेण च सहितोऽन्यान् सखीन् चपंयन्[5] शशाङ्कवत्युपलब्धये उज्जयिनीं प्रति पन्थँयमानो[6] निजसुहृदं शवराधिपं मायावटुमामन्त्र्य तत्पल्लीम् अररहत्[7]। गच्छँश्चाग्रे सामत्यः स क्वापि तरोस्तले निद्रितोऽकस्मात्प्रबुद्धः पुरः सुप्तं मानुषमेकमविष्कंयत्[8]। यावच्च स तस्य मुखं निरावृणोति तावत्स विचित्रकथसंज्ञकं निजमन्त्रिणमभिज्ञातवान्। सोऽपि च विचित्रकथः प्रबुद्धः सन् मृगाङ्कदत्तं पादयोरग्रहीष्ट। अकाण्डदर्शनोत्फुल्लचक्षुर्मृगाङ्कदत्तोऽपि च तं प्रबुद्धैः स्वमन्त्रिभिः सह असंसभाजत[9]। अथाखिलेषु क्रमात् उक्तस्वस्ववृत्तान्तेषु मौनमाकलयत्सु विचित्रकथोऽप्यात्मवृत्तान्तं सप्रपञ्चम् अपंपंचत्[10]।

इत्थं श्रुतधिपञ्चमैः स्वसचिवैर्युक्तो मृगाङ्कदत्तोऽगणिताध्वश्रमो, विन्ध्याटव्या भुवि गच्छन्नच्छाच्छस्वादुशीतलजलाशयं सफलस्निग्धतरुच्छायरमणीयं काननमेक-

१. ऊन परिहाणे। २. प्रीञ् तर्पणे ('धूञ् प्रीञोर्नुग् वक्तव्यः')। ३. तीर कर्मसमाप्तौ। ४. वस निवासे। ५. चिञ् चयने ('चिस्फुरोर्णौ', 'अर्तिह्रीव्ली०–' 'मितां ह्रस्वः')। ६. पथि गतौ। ७. रह त्यागे। ८. विष्क दर्शने। ९. सभाज प्रीतिदर्शनयोः। १०. पचि विस्तारवचने।

सापत्। तत्र ससचिवः सोऽशुशुन्धत्[1] फलानि च अबभक्षत्[2], समाच्छन्ने चैकस्मिन्. प्रदेशे विश्रामार्थमतिष्ठत्। एतस्मिन्नेव समये स नातिदूरे तस्मात्स्थानात्समालापमिवाश्रौषीत्। तत्र गत्वा च स यावल्लतान्तरे चक्षुर्निक्षिपति तावत्तत्र महान्तं वरवारणमेकम् अवालुलोकत्[3]। स च पथि श्रान्तं चक्षूरहितं पुरुषमेकं करेणाहृतैस्तोयैः, फलैः, कर्णानिलैश्च 'कच्चिदाश्वसितो भवान्'? इति मुहुर्मुहुः साधुमानुषवत्प्रीत्या व्यक्तया गिरा समाश्वासयन् मृगाङ्कदत्तम् अचुकुहत[4]। एतेनाश्चर्यचकितो राजपुत्रः स्वसखान् आह, 'पश्यत, क्व वन्यो वारणः, क्व च मानुषोचिताचाराः। तदवश्यमत्र केनापि हेतुना भवितव्यम्। अयं पुमान् अस्माकं सखायं प्रचण्डशक्तिं तुलयति[5] किन्त्वन्धोऽयमिति विशिनष्टि। अतः क्षिप्रं तत्र गत्वा पश्याम इति सखीनुक्त्वा श्रृण्वन्नलक्षितस्तस्थौ। तत्र समाश्वसितं तमन्धं वारणोऽपृच्छत् 'भगवन्, कस्त्वम्? कथञ्चेहायातः? कथं वा दृष्ट्युपघातः?' ततः सोऽन्धोऽपि गजोत्तमं तमित्थम् उदतीतरत्[6] 'अहमायोध्यिकस्य राज्ञोऽमरदत्तस्य पुत्रस्य मृगाङ्कदत्तस्य प्रचण्डशक्तिनामा भृत्यः। तं राजपुत्रं केनापि कारणेन भूपती राज्ये वस्तुम् अवीवृजत्[7] इति सहायैरस्माभिर्दशभिः सहितः शशांकवतीहेतोरभ्युज्जयिनि प्रस्थितः। मार्गे च नागशापेन सर्वे वयं वियोजिताः। अतस्तच्छापेन भ्रमन्नहमन्धत्वमायातो यथोपलब्धफलमूलाशनं कुर्वाणो मार्गे नानाक्लेशान् अनुबीभवम्[8] तेनातिखिन्नः पर्वतपतनानशनादिनेष्टतसमृत्युमन्विच्छन्नहमात्मीयां न कामपि शक्तिम् अवीशिशिषम्[9]। तथापि तथाकुर्वन्तं मामवलोक्य विधिर्भृशम् अचुकुस्मत[10] इति न तं मह्यं व्यशिश्रणत्[11]। अद्य हि त्वत्प्रसादेन मदीयं सर्वं क्षुद्दुःखम् अचकलत[12] इत्यान्ध्यमपि कदाचिन्मे जम्भयेत्[13]।

तेनेत्थमुदीरितो हर्षशोकयोर्दोलायमानमानसोऽपीदानीं संजातनिश्चयो मृगाङ्कदत्तः सचिवानभाषत, निश्चयेनैतां कष्टदशां गमितः प्रचण्डशक्तिरेवायम् इत्यधुनास्माभिस्त्वरया सम्भावनीयः। नेत्रदानोपकारञ्च कदाचिदस्यैष द्विपः

---

१. शुन्ध शौचकर्मणि। २. भक्ष अदने। ३. लोकृ दर्शने। ४. कुह विस्मापने। ५. अङ्न्तस्य तुलाशब्दस्य 'तत्करोतीति'–णिचि रूपम्। ६. तॄ प्लवनसन्तरणयोः। ७. वृजी वर्जने ( आधृषीयत्वाद्वैकल्पिको णिच् )। ८. भू सत्तायाम्। ९. शिष असर्वोपयोगे। १०. कुस्म कुत्सितस्मयने। ११. श्रण दाने। १२. कल गतौ। १३. जभि नाशने।

कुर्यात्' । एवमुक्त्वा राजपुत्रः शृण्वँस्तत्रालक्षितोऽतिष्ठत् । प्रचण्डशक्तिस्ततो वारणं तमपृच्छत् 'महात्मन्, को भवान्? कथं वा ते गजत्वम्? कथं च समदस्यापि ते निर्मदा वागेषेति?' एतदाकर्ण्य सनिःश्वासमामूलात्तं स्वकीयं वृत्तान्तं वर्णयितुं गजो जगाद–

'पुरा एकलव्यायां नगर्यां श्रुतधराभिधो राजाऽभूत् । सिंहासनमारोहति च यस्मिन्, यस्य शक्तिं, षाड्गुण्यं, त्रिवर्गं चारातयोऽपि अचीकृतन्[1] ( अचिकीर्तन् ) समुदिते च यस्य तेजोविभाकरे भीतिचाकचिक्याभिभूतानि विपक्षिचक्षूंषि अचीकणन्[2], दुर्हृत्कुमुदानि च अययन्त्रन्[3] । यः प्रजासु सर्वथाऽनाश्रितान् अपपक्षत्[4] । अधर्मम् अदूदुलत्[5] । चौर्यम् उदमूमुलत्[6] । शौर्यम् अपपर्णत्[7] । वध्यम् अबीबधत्[8], प्रजाभ्यश्चेत्थं सर्वथा सुखसौविध्यम् अबीभजत्[9] ।

तस्य चैवंभूतस्य धर्मध्वजस्य, राजनीतिपरायणस्य च राज्ञो द्वयोर्भार्ययोः शीलधरसत्यधरनामानौ द्वौ सुतावजनिषाताम् । शीलधरस्तयोर्ज्येष्ठः सत्यधरश्च कनिष्ठः । कनीयाँस्तयोः यौवनमदोत्सिक्तः एवम् अजगर्वत[10] यत्सोऽर्हानपि अजगर्हत्[11] । न देवान् किञ्चिद् अजीगणत्[12], न दीनेभ्यः पणमपि व्यशिश्रणत्[13] । दायादैरन्यैः सह तद् व्यवहारं स्वालप्यालं दिवं याते एव भूपतौ स स्वौरसं ज्यायांसञ्च शीलधरमपि राज्याद् व्यौचिच्छत्[14] ।

अमर्षेण चैतेनातिसमुद्विग्नः शीलधरो वनं गत्वा घोरेण तपसा सन्तोषितं शिवं वरार्थम् प्रार्तर्थत[15] यदहं गन्धर्वो भवेयं येनाम्बरचरो भूत्वा दायादं सत्यधरमवहेलया हिंसयेयम्[16] । एतदाकर्ण्य शम्भुस्तमादिशद् यदेतत्ते भावि किन्त्वद्य शत्रुस्ते स्वयं मृत इति स राढायां पुरि भूपतेरुग्रभटस्य समरभटो नाम पुत्रो भूत्वा जनिष्यते । तस्य च त्वं भीमभटो नाम विमातृजोऽग्रजो भूत्वा तं निहत्य

---

१. कृत संशब्दने ('उपधायाश्च') । २. कण निमीलने । ३. यत्रि संकोचने । ४. पक्ष परिग्रहे । ५. दुल उत्क्षेपे । ६. मूल रोहणे । ७. पर्ण हरितभावे । ८. बध संयमने । ९. भज विश्राणने । १०. गर्व माने (आगर्वीयत्वादात्मनेपदम्) । ११. गर्ह विनिन्दने (आधृषीयः) । १२. गण संख्याने (ई च गणः) । १३. श्रण दाने ( प्रायेणायं विपूर्वः ) । १४. उच्छी विवासे । १५. अर्थ उपयाच्ञा याम् ( आगर्वीयत्वान्नित्यं तङ् ) । १६. हिसि हिंसायाम् ( आधृषीयः ) ।

राज्यं कारयिष्यसि[1] किन्तु यतो हि त्वं सामर्षम् अतपसीः[2] इति मुनिशापात्पद-भ्रष्टो जातिस्मरो व्यक्तवाग् वन्यो वारणो भविष्यसीति। यदा च त्वमवसन्नमतिथिं स्ववृत्तान्तं सूचयिष्यसि[3] तदा गजत्वान्निर्मुक्तो गन्धर्वो भविष्यसि। अतिथिरपि च त्वया तदोपकृतः सम्पत्स्यते। एवमादिश्य तिरोभूते भवे शीलधरश्चिरतपःक्षीणां स्वतनुं विभाव्य गङ्गायां ताम् पातयति[4] स्म।

अत्रान्तरे पूर्वोक्तायोग्रभटसंज्ञाय राज्ञे मनोरमया मनोरमाख्यया पत्न्या ससुखं निवसते देशान्तराल्लासको नाम नर्तकः समागत्य यत्र स्त्रीरूपिणा हरिणा दैत्यानाममृतं हृतं तन्नाट्यप्रयोगं प्रादर्शयत। तस्मिंश्च नृत्यन्तीं नर्तकस्य तनयां लास्यवतीं नृपोऽवलोक्य स्वरूपविक्षोभितविश्वे, विश्वे तद्रूपे अलूलुभत्[5] इति नृत्यान्ते प्रवितीर्णतत्पितृप्रचुरधनस्तत्कालमेव स कन्यां स्वकीयमन्तःपुरं प्रावी-विशत[6]। विहितोद्वाहया च तत्र तया नर्तक्या लास्यवत्या तन्मुखासक्तलोचनस्तस्थौ।

एकदा सा यजुःस्वामिसंज्ञं पुरोहितम् अचकथत[7] यत्पुत्रो मे नास्तीति पुत्रे-ष्ट्या त्वं मामत्र सत्रयस्व[8]। तदाकर्ण्य पूर्वाराधितः पुरोहितस्तथेति प्रतिज्ञाय विद्व-द्भिर्ब्राह्मणैर्विधिवत्तामिष्टिम् अचीकरत[9] मन्त्रपूतं चरुञ्च द्विधा विभाजयन्[10] अग्र्यं भागं ज्येष्ठाम्, शेषञ्च लास्यवत्यै प्राशयत्[11]। ततश्चोभयो राज्ञ्योरुदरयोः पूर्वोक्त-शीलधर-सत्यधरनामानौ पुत्रौ समाजग्मतुरिति समये प्राप्ते महीपतेः पाणिगृही-ती भार्या मनोरमा कल्याणलक्षणं पुत्रं प्रासविष्ट। तत्प्रसवकाले च दिवः सुस्पष्टा भारती समुदभूद् यदयं भीमभटो नाम विख्यातकीर्तिर्नृपोऽजायतेति।

अन्येद्युर्लास्यवती चापि सुतमसूतेति पिता तं समरभटनामानं कृत्वा सुतद्वयोत्सवसमारोहे प्राचुर्येण यथाविभवम् अविव्ययत[12]। यथासमयकृतयथा-वश्यकसंस्कारौ महार्हदोलयोरान्दोल्यमानौ लाड्यमानौ पाल्यमानौ च तावुभावपि समधिकसौकुमार्यौ कुमारौ कौमारे कुमारयमाणौ[13] राजप्रासादेषु अवधिषाताम्।

---

१. कृधातोः स्वार्थे णिच्। २. तपोऽचर इति विग्रहे 'कर्मणो रोमन्थ-तपोभ्यां वर्तिचरोः' इति क्यङि ( तपसः परस्मैपदञ्च ) ( क्यस्य विभाषा )। ३. सूच पैशुन्ये। ४. पत गतौ ( वैभाषिकणिजन्तः )। ५. लुभ विमोहने। ६. विश प्रवेशने। ७. कथ वाक्यप्रबन्धे। ८. सत्र सन्तानक्रियायाम्। ९. डुकृञ् करणे। १०. भाज पृथक्कर्मणि। ११. अश भोजने। १२. व्यय वित्तसमुत्सर्गे। १३. कुमार क्रीडायाम्।

भीमभटश्च निसर्गतः शरीरेण किञ्चिद् अशश्रथत्[1] समरभटश्च अतुस्थूलत[2], तथापि स्फूर्त्या, शीलशौर्यवीरगुणैश्च भीमभटः समरभटमजयदिति सङ्घर्षेणान्योन्ययोस्तयोर्वैरमवर्धिष्ट ।

एकदा बाहुयुद्धक्रीडायां समत्सरो हठात्समरभटो भीमभटं मुष्ट्या अतीतडत्[3]। एतेन भीमभटः सातिशयम् अबभामत्[4] भुजाभ्यां भ्रातरमुत्क्षिप्य च क्षितौ अचिक्षिपत्[5] । तेनेत्थं गाढमभिहतं समरभटं सर्वद्वारैरसृग्वमन्तं सेवका मातुरन्तिकमानिन्युः । माता च तं तथाभूतं दृष्ट्वाऽवबुद्धसर्ववृत्तान्ता, नितान्ताशान्तस्वान्ता, स्नेहकातरा, तन्मूर्द्धासक्तमूर्द्धा भृशं प्रारुदत् तदैवात्याकुलचेतसा तत्र प्रविष्टेन राज्ञा किमेतदिति पृष्टा चोवाच तवात्मजस्यैतां दशां समवलोक्याहं विचारयामि यत्कथमेवंविधे सुते तवैव कल्याणं स्यात् इति । लास्यवत्यैवमुक्तस्य नृपस्योग्रभटस्य क्रोधाग्निरेवं समैन्धिष्ट यत्स भीमभटं हृतवृत्तिं कृत्वा समरभटस्य च रक्षार्थं सपरिच्छदं राजपुत्रशतं नियुज्य सर्वं भाण्डागारं कनीयसः समरभटस्याधीनं कृत्वा ज्यायांसं भीमभटं सर्वथाऽपाकार्षीत् । एतत्सर्वमवलोक्य तन्माता मनोरमैकदा पुत्रमाहूय व्याहार्षीत् यन्नर्तकीरागानुरक्तस्ते पिता ज्येष्ठमपि त्वामेवमवाहेलयत् यत्सर्वं सुखसौविध्यं तुभ्यं पर्यवर्जीदिति समरभटोऽपि तुच्छातितुच्छं त्वां गणापयत्[6]येवं व्यवहारोऽनयोरत्र न त्वदीयमुदर्कं सुखाकरं कथापयति। अतस्त्वं पाटलिपुत्रं गच्छ तत्रापुत्रको मातामहस्तुभ्यं स्वराज्यं दास्यति । इत्थं बलिनो रिपोः परोक्ष[7]स्त्वमेधि । मातुरेतद्वचः श्रुत्वा भीमभटो निजगाद यन्मातः, क्षत्रियः सन्नाहं क्लीब इव देशं रहयिष्यामि । मा च त्वं धैर्यमवधीरय । न कोऽपि वराको मां प्रबाधितुं शक्नोति । एवं ब्रुवन्तं तं माता अब्रवीत् तर्हि मदीयैर्धनैस्त्वं स्वरक्षार्थं भूयसः सहायान् कुरुष्व येन यथासमयं ते त्वद्रक्षार्थं संस्कुर्वन्तु । एतदाकर्ण्य भीमभटोऽवोचत् । अम्ब, नैतच्छोभते, एवं कृते तातस्य प्रातिपक्ष्यं कृतं भवेत् सर्वश्च जनो मां स्वार्थिनं स्पष्टं पटयेत्[8] । अतः त्वदाशीभिरेव मदीयं शिवं स्यात् । त्वं सर्वथा निर्वृणीष्व ।

भीमभटो मातरमेवमाश्वास्य ततो निरगच्छत् ।

---

१. श्रथ दौर्बल्ये । २. स्थूल परिबृंहणे । ३. तड आघाते । ४. भाम क्रोधे । ५. क्षिप प्रेरणे । ६. शाकटायनमते कथादित्वाद्गणधातोः पुक् । ७. अक्षणः परं परोक्षम्, तदस्त्यस्मिन्निति परोक्षः, अर्श आद्यच्, परोक्षा क्रिया इतिवत् । ८. पटुमाचक्षीत ( तत्करोति तदाचष्टे ) ( प्रातिपदिकाद्धात्वर्थे णिच् ) ।

पौराश्च तत्सर्वं बुद्ध्वा व्यचिन्तयन् यद्राज्ञा भीमभटस्य परमनौचित्यं कृतम्। समरभटो हि राज्यमस्यापहर्त्तुं न प्रगल्भते[1]; तद्भीमभटकृतपूर्वसेवाः प्रत्युपकर्त्तुमयमस्माकं समयः। एवं निश्चित्य ते तं धनैस्तथा सहायुञ्जन् यत्स भृत्यैः समायुक्तः ससुखमवसत्। कनिष्ठस्तु तस्य वधावसरमेवाहर्निशं न्यरुरूपत्[2]।

एकस्मिन् दिने शङ्खदत्ताख्यः शूरो युवा धनी च द्वयोर्वयस्यो विप्रः समरभटमेत्याब्रवीत्, 'भ्रात्रा वैरं न युक्तम्; नापि चैष ते धर्मः। स ज्यायान् इति तद्बाधने परा तेऽपकीर्तिर्भवेत्; सम्भावितस्य चाकीर्तिर्मरणादतिरिणक्ति अतः परस्परस्मिन्नेवमान्वीप्यमन्तःसामीप्यञ्च विधेयं येनान्योऽपि भवत्सौभ्रात्र्यमनुकुर्वीत।' किन्त्वेवं ब्रुवन्तं तं स निरबभर्त्सत[3] इति तत्कोपतो धीरः शङ्खदत्तः तद्विजिगीषया भीमभटेनैकसख्यं व्यधात्।

एतस्मिन्नेवान्तरे देशान्तरादागतो मणिदत्ताख्यः कोऽपि वणिक् अत्युत्तममश्वरत्नमेकमानयत। तं तत्रानीतं शशाङ्कधवलं, विशेषश्रुतिमधुरह्रेषम्, दुग्धाब्धेरुत्थितमुच्छ्रितकल्लोलजालमिव, चूडामण्यङ्गदादिभिः समायुक्तम्, शङ्खदत्तेन चाख्यातं श्रुत्वा, भीमभटस्तं हयोत्तमं तस्माद्वणिग्वराक्रेतुम् असत्यापत्[4]। समरभटश्चैतदवगत्य तत्रैत्य द्विगुणेन मूल्येन तमश्वं तस्माद्वणिजो मार्गतिस्म[5]। परतन्त्रीकृतञ्च तमश्वं यदा स तस्मै नाददात् तदा स बलात्तं नेतुं प्रावर्ततेत्युभयो राजपुत्रयोर्धाविताः शस्त्रपाणयो भृत्या अन्योन्यान् असयन्तः[6] असमंङ्ग्रामन्त। भीमभटभृत्यप्रचण्डदोर्दण्डनिहतानुचरसमरभटस्तद्भयात् अभञ्ज्यत[7]। भज्यमानञ्च तं पृष्ठतः केशेषु समाकृष्य प्रमन्युः शङ्खदत्तो यावज्जिघांसति तावद्भीमभटः पश्चादागत्य, 'आस्तां तावत्, एवं कृते तातस्य दुःखं भवेदि'त्येनं न्यवारयत्। इत्थं शङ्खदत्तेन मुक्तोऽसौ समरभटो व्रणै रक्तं वमंस्त्रस्तः पलाय्य पितुः पार्श्वमगात्।

अत्रान्तरे स्वीकृताश्वं तं वीरं भीमभटं कश्चिद् ब्राह्मणः क्षणादुपेत्य विजने नीत्वा समभाषिष्ट यन्माता मनोरमादेवी, पुरोहितो यज्ञःस्वामी, पितृमन्त्री सुमतिश्चैवं त्वामधुना सन्दिशन्ति 'यदस्मिन् व्यतिकरे एवंभूते शत्रुतामुपेते तव पितरि, यशस्काम्यन्, धर्मम्, आत्मानम् आयतिञ्चात्मनो रिरक्षिषुर्यद्यस्माना-

---

१. गल्भ धार्ष्ट्ये। २. रूप रूपक्रियायाम्। ३. भर्त्स तर्जने। ४. सत्यशब्दाण्णिज्, आपुक् ('सत्यापपाश०–')। ५. मार्ग अन्वेषणे (आधृषीयः)। ६. असिभिर्घ्नन्तः ('कर्तृकरणाद्धात्वर्थे')। ७. भज, भृज गतौ।

त्महितानवगच्छसि तर्ह्यर्केऽस्तंगतेऽस्मिन्निर्दिष्टसमयेऽलक्षितो निर्गत्य स्वसिद्ध्यै मातामहगृहमिहि । एवं वादयद्भिस्तैः[1] सद्रत्नं स्वर्णपूर्णप्रेषितं भाण्डमेतन्मद्धस्तेन गृहाण ।

तस्माद्द्विजादेतदाकर्ण्य तथेत्यभिनन्द्य च गृहीततत्स्वर्णसद्रत्नभाण्डो भीमभटः प्रदत्तमातृवाचिकानुरूपप्रतिवाचिकं तं द्विजं व्यसर्जयत् । अस्तमिते चार्के कृपाणपाणिस्तत्तुरङ्गमपृष्ठमध्यममध्यारुह्य गृहीतहेमरत्नेन पृथग् अश्वयता[2] शङ्खदत्तेन सह श्वेतयमानः[3] ततः प्रातिष्ठत ।

इति कौमुदीकथाकल्लोलिन्यां गणनिर्देशात्मकः षष्ठः कल्लोलः ।



१. वद सन्देशवचने । २. अश्वेनातिक्रामता ( 'तेनातिक्रामति' ) इति णिजन्तात् शतृप्रत्ययः । ३. श्वेताश्वेनातिक्रामतीति ( श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च ) इति णिजन्ताच्छानच् ।

# अथ प्रक्रियानिर्देशात्मकः सप्तमः कल्लोलः

प्रियापार्थक्ये
(ण्यन्तप्रक्रिया)

इत्थं ततो निर्गत्यातन् सवयस्यो राजपुत्रोऽतीतदविष्ठाध्वा निशीथे महच्छ्रवणमेकमापत्। तत्र च सवयस्यस्य तस्य पतद्वाजिखुरक्षुण्णशरशब्दप्रबोधितम्, उद्गर्जच्छावकैः सहोत्थाय सिंहमिथुनमेकमश्वौ नखैरुरो विदारमुपचस्कारेति समित्रः सोऽवारुह्य यावत्तुरगाववलोकते तावद्विगलितान्त्रौ तावुभौ भूमावपतताम्। तदवलोक्य विषण्णो भीमभटः, 'कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि'–'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता'–तथा–'वामे विधातरि कथं विपदां निवृत्तिः'–इत्यादि गालोडयमानः[1] शङ्खदत्तमभाषत यद्विरुद्धात्स्वजनात्पलायिता अपि वयं विरुद्धाद्विधेः पलायितुं कथं शक्नुमः इति स एवेहैकान्ते कान्तारेऽश्वमात्रसहायानप्यस्मानसहायान् अबीभवत[2]। अतर्कितोपनतैरेभिरात्मव्याघ्रप्रखरनखरक्षुरैरस्माकमाशातन्तुसन्तानवितानान् अलीलवत्[3]। यतो हि, एतावद्दूरमस्मान् ययोःसाहाय्यम् अशूशवत[4] तौ हयावपि अमृषातामित्यमृषा तां शिवोक्तिं कर्त्तुमिदानीं कः सहयुञ्ज्यात्। कथमधुना नैशेऽस्मिन् तमसि पद्भ्यामियमरम्याऽटवी गम्या! एतदाकर्ण्य तत्सुहृच्छङ्खदत्तोऽब्रवीत्, 'वयस्य, धैर्येण विधुरोऽपि विधुर्जेतुं शक्यते इति नास्माभिरधैर्यैर्भाव्यम्। एहि, समारूढधैर्यावावामग्रे व्रजाव इति'। एवं वादिना शङ्खदत्तेन सह शनैः शनैर्व्यतिक्रान्तकान्तारः शरपाटितपादः स राजसूनुस्तां विभावरीं पर्यजीहपत[5]।

प्रातरुदयाचलसानूदितभानुर्निविडतरुलताध्वान्तच्छन्नान् मार्गान्, तद्विरहिताटवीप्रदेशाँश्च समचीवकासत्[6]। सिंहादिसङ्कीर्णायामटव्यां गमनानुषङ्गप्राप्तैरन्यैः कतिपयपान्थैः सह पुरोगच्छन् मध्याह्नेऽध्वक्लममपनिनीषुः, सिस्नासुः, पिपासुश्च राजसूनुः शीतलसलिलमलीललतेति[7] नातिदूरं गत्वा स तपस्विजनोटजसङ्कीर्णजह्नुकन्यापुलिनं स्वसहगामिभिः प्रापिपत्[8]। शीतैः स्वादुभिश्च गाङ्गैर्वारिभिस्तत्र स्नातश्च शङ्खदत्तानीतवन्यफलमूलादिस्वयमश्नन्नन्यानपि समाशिशत[9]। तदनन्तरं तत्रोत्तरीतुमशक्यायाः पयःपूरपूर्णपुलिनायाः समुच्छ्रितैस्तरङ्गहस्तैरसकृन्निवारयन्त्या इव जाह्नव्याः कूलेन गत्वा विजनोटजाङ्गणस्थमेकत्र स्वाध्यायसंलग्नं ब्राह्म-

---

१. श्वेताश्वाश्वतर०' इति णिच्। २-३. 'ओः पुयण्ज्यपरे'। ४. 'णौ च संश्चङोः'। ५. 'अर्तिह्रीब्ली०'। ६. 'नाग्लोपिशास्वृदिताम्'। ७. लल ईप्सायाम्। ८. आप्लृ लम्भने। ९. अश भोजने।

णपुत्रकमवलोक्य तमुपगतः 'कस्त्वमिह निर्जने वने एकाकी निवससीति' वक्तुं विनम्रस्तमवचेष्टत्[1]। सोऽपि च तथा तं जिज्ञासुमवलोक्याभाषत, यदहं वाराणसीनिवासी, श्रीकण्ठद्विजात्मजो नीलकण्ठः। पिता मां समस्कृत। ऋषिकुले ऋषिकल्पा गुरवो माम् अध्यजीगपन्[2]। सोऽहं समापितसर्वविद्यो यावद् गृहमुपैमि तावत् करालः कालोऽस्माकमन्योन्याशानौकामगाधापारे संसाराकूपारे न्यौब्जिजत्[3] इति कुले केवलोऽवशिष्टोऽहं दारिद्र्यवाताहतविभिन्नहृत्कलिकाकल्लोलैः प्रवाह्यमाणो जाह्नवीतटमशिश्रियम्। अत्र च सांसारिकसुखावाप्तीच्छया तपस्यन्तं मां माता गङ्गा स्वप्ने समादिशत् 'मद्दत्तानि फलानि भुञ्जानस्त्वमिह तिष्ठ। वाञ्छितं त्वं सर्वमवाप्स्यसीति'।

प्रातस्त्यक्तनिद्रेण दरिद्रेण मया प्रकृतिर्यथापूर्वं दैनिककृत्यानि प्रारिरम्भत[4] इति कृतशौचस्नानादिना मया जननी जाह्नवी निजजलाभ्यन्तरे समागतानि स्वादुफलानि अलिलम्भत्[5]। तानि चादायाहमुटजे समाशिषम्। तदाप्रभृति तथैवान्वहं प्राप्तानि फलानि आशयन् जाह्नवीस्वप्नविश्वासो मामिह स्थापयति[6]। शुभावसरञ्च तमहमिह पालयामि[7] यदा दुःखमेतन्मे गङ्गाप्रसादः दुर्मापयिष्यति, लक्ष्म्या गृहलक्ष्म्या च मां व्लेपयिष्यति[8,9] इति।

भीमभट इत्थं यदा नीलकण्ठविषयिणीं निजजिज्ञासां तेन अमीमृजत्[10] तदा स शङ्खदत्तमब्रवीत् 'गुणिने अर्थिने चास्मै एतद् गार्हस्थ्यसंस्थापन-पालन-पर्याप्तं धनं समर्पय[11]' एवमुक्त्वा मात्रा प्रदत्तं पुष्कलं धनं तस्मै अदीदपत्। ततः कृतार्थीकृतद्विजन्मा नाव्यगङ्गामुत्तरीतुं नाव्यन्नपि न यदा नावमवाप्तवाँस्तदा सशङ्खदत्तो दोर्भ्यामेव शिरोनिबद्धासिः तां तरीतुमवातरत्। परमनवाप्तोत्तरतारो मध्यभाग एव गङ्गौघदूरीकृतवयस्यो वीचिभिर्ह्रियमाणः कथञ्चिदुत्तरणमतितीरत्। समुपलब्धोत्तरतटः किन्तु यदा शङ्खदत्तं न दृष्टवाँस्तदा हा मित्र, इत्याक्रन्दन्नविरलाश्रुधारासारैराननम् औन्दिदत्[12] गङ्गायामात्मानं चेप्तुञ्चोदयंसीत् इति यावदेव स आत्मानं तत्र

---

१. विभाषा वेष्टिचेष्ट्योः। २. 'णौ च संश्चङोः' इति इङो वैभाषिको गाङ्। ३. उब्ज आर्जवे, ( उपदेशे दकारोपधस्य 'भुजन्युब्जौ पाण्युपतापयोः' इति सूत्रे निपातनादस्य बत्वम् तेन 'नन्द्राः'–इति निषेधाज्जिशब्दस्य द्वित्वम् )। ४. 'रभेरशब्लिटोः'। ५. 'लभेश्च' ६. अर्तिह्री०'। ७. 'पातेर्णौलुग्वक्तव्यः'। ८-९. क्ष्मायी विधूनने, व्ली वरणे ( अर्तिह्री० )। १०. 'उऋत्'। ११. 'अर्तिह्री०'। १२. 'नन्द्राः संयोगादयः'।

क्षिपति तावदेवाम्बुमध्यत आविर्भूता साक्षाद्गङ्गा तत्तीव्रसंवेगसन्तुष्टा तत्क्षणमभणीत् 'पुत्र वृथा साहसं मा कृथाः, त्वदीयः सखा जीवन् स्थित इत्यचिरेणैव तव तेन संयोगो भविष्यतीति । त्वञ्चेदानीं मत्तः प्रतिलोमानुलोमाख्यां विद्यां गृहाण, अनयोरनुलोमां पठन् नरः परस्यादृश्यो भवेत् । प्रतिलोमाञ्च पठन् इष्टरूपप्रकाशनं कुर्यात् । एतत्प्रभावाया अपि सप्ताक्षरोम्भिताया एतस्या विद्यायाः प्रभावेणास्यां पृथिव्यां त्वं राजा भविष्यसि । एवमुक्त्वा जाह्नवी तेन तद्विद्याद्वयम् प्रत्यजिग्रहत् अतिरस्यच्चेति सञ्जातास्थो भीमभटो मरणादुपारंसीत् ।

मित्रप्राप्त्युत्सुकः पद्म इव कृच्छ्रात् क्षपिततत्क्षपो भीमभटः प्रातः शङ्खदत्तमन्वेष्टुं ततः प्रस्थितः परिभ्रमन्नेककः असंकीर्णवर्णमपि चित्रोज्ज्वलस्थितिजनम्, कलानां निलयमपि दोषाकरशब्दभाजम् लाटविषयदेशं कदाचिदवाप्तवान् । तत्रान्तर्नगरे देवकुलावासानवलोकयन् इतस्ततो भ्रान्त्वा द्यूतकाराणामेकां शालाम् आगमत् । यत्र च कटिकर्पटमात्रैकवसना अपि द्यूतव्यसनाः कितवा अक्षैरदीव्यन् इति कृतालापैस्तैः साकं सोऽपि देवितुमारेभे । अन्यान् वञ्चयित्वोपार्जितं तेषामखिलं धनञ्चाहार्षीत् । तदनन्तरं हारितार्थान् स्वगृहान् गन्तुमुद्यतान् तान् कितवान् अवरुध्य भीमभटोऽब्रवीत् यद्यूयं धनमेतद् गृह्णीत। मया हि धनमेतदिष्टेभ्यो देयम् भवन्तोऽप्यस्माकमिष्टा एव । तस्यैषोऽनुरोधस्तान् नितराम् अजिह्रिपत् किन्त्वेकोऽक्षक्षपणकोऽब्रवीत् यद्द्यूतस्य यद्यपि परिभाषैवैषा वर्तते यद्धारितं धनं तत्र न दीयते तथापि सुहृद्भूत्वा यद्येषोऽस्मभ्यं प्रयच्छति तर्हि स्वेच्छया जितमप्यर्थं कथं न वयं गृह्णीमः। एवं द्यूतजितपरस्वा अपि गृहीतस्वस्वास्ते भीमभटेन सह अजर्यं संगतं समतिष्ठिपन्त[1] । सोऽपि च सकुटुम्बकैस्तैः सहोद्यानं गत्वा तदुपाहृतैर्भोजनपानाद्यैर्व्यवाहरत् । अक्षक्षपणकाद्यैः पृष्टश्च तेभ्यो निजवंशनामादिकञ्चाब्रवीत् । तेन च स्ववंशनामादिपृष्टेषु तेषु अक्षक्षपणकस्तमेवं स्वोदन्तम् अबभाणत्[2]—

आसीद्धस्तिनापुरे शिवदत्ताभिधानो द्विजः । महाधनशालिनस्तस्य बाल्याधीतशस्त्रवेदविद्यः, सदृशकुलविहितविवाहोऽहं वसुदत्ताख्यः पुत्रः । मम माता महारौद्ररूपाऽतिक्रोधना, दुराराध्या चेति सा मदीयं पितरमेवम् अबीभपत्[3] यत्स

१. 'तिष्ठतेरित्'; 'समवप्रविभ्यः स्थः' । २. 'काण्यादीनां वेति वक्तव्यम्' ।
३. 'बिभेतेर्हेतुभये', 'भीस्म्योर्हेतुभये', ।

तया उल्लापितः[1] अतर्कितः क्वाप्यगात्। तदवलोक्य मातृभयभीतोऽहं तदनुकूलमेव सर्वं विधातुं स्वभार्यां विशेषेण निरदिशमिति मद्भीतया तयाऽपि सा सर्वं स्वानुकूलमेव असीसिधत्[2]। एतेनापि किन्तु मम भार्या कलहप्रियां स्वश्वश्रूं न कथमपि अतूतुषत्। तत्तूष्णीम् अवस्थानम् निजावज्ञानमिव, तद्दैन्यालापं कैतवकलाकलापमिव, प्रत्यायनञ्च स्वदोषविव्यायनमिव[3] मन्यमानायास्तस्या दुराशयो न शुनः पुच्छ इव वृश्चिकदंश इव वा निजकौटिल्यम् अरीरपत्[4]। अतः सा तद्विरुद्धाचरणैः तां तथा अपीपिडत्[5] यदत्याधिक्यवैवश्यं तां क्वापि अशीशदत्[6]। नाद्याप्यहं जाने तदद्दष्टं क्व ताम् अवीवृतत्[7]।

घटनयाऽनया नितरां खिन्नोऽहं विदेशं गन्तुमुत्सुकोऽभवम्। किन्तु ज्ञातयो मिलित्वा पुनरङ्गनामेकां मया व्यवीवहन्। फलतो मात्रा मे भापिता सन्तापिता च सापि भार्या पाशेनोद्बध्यात्मानम् अजीर्घतत्[8]। एतेन ततोऽप्यधिकं खिन्नोऽहं विदेशं गन्तुमुद्यतस्तदानीं निवारयतो बन्धून् स्वमातृदुष्टतां पितृप्रवासनादींश्च कारणरूपेण सर्वम् अबभाषम्। किन्तु यदाहं तान् प्रत्याययितुं नाशकम् तदा युक्त्या कारुणा दारुणा पुत्तलिकामेकां निर्माप्य मृषैव तामहं पुनः पर्य्यणयम्। ताञ्चानीय सार्गलेऽन्तर्गृहेऽन्यत्र अतिष्ठिपम्। कर्मकरीरूपेण च तस्या एकां सेविकां पृथङ् न्ययूयुजम् अम्बामथावदं यन्नवोढैषाऽप्रौढा श्वश्र्वाराधनादिकं न जानातीतीयं पृथगिह तिष्ठतु आवाञ्चात्र पृथगास्वहे। इत्थं मातृकौटिल्यस्य मदीया बान्धवजनप्रत्याययिषा रहस्यमेतत्सर्वं मया न्यगूहयत्[9]।

दिनेषु यातेषु सार्गलेऽन्तर्गृहे वर्तमानां कपटस्नुषां तां दूषयितुं[10] कयापि युक्त्या यदा मे माता नापपारत् तदा प्रकारान्तरतया तथा कर्त्तुम् अचेष्टयत् इति स्वयमेकदा दुर्मनाः साऽश्मनाऽऽत्मनो मूर्धानमाहत्य स्वगृहाङ्गणे रक्ताक्ता तारमाक्रन्दीत्। श्रुताक्रन्दनप्रविष्टैश्च मत्सहितैर्जनैः किमेतदिति पृष्टाऽसावित्थं सासूयं तानुल्लापयते स्म यदियं नवीना स्नुषा समागत्य मदीयामिमां दशामकार्षीदिति

---

१. 'प्रलम्भनाभिभवपूजासु०', 'लियः सम्माननशालीनीकरणयोश्च'। २. 'सिध्यतेरपारलौकिके'। ३. 'शाच्छासाह्वाव्यावेपां युक्'। ४. रीङ् क्षये। ५. 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्'। ६. गत्यर्थत्वात् 'शदेरगतौ तः' इत्यनेन न तोऽन्तादेशः। ७. 'उर्ऋत्'। ८. 'हनस्तोऽचिण्णलोः', 'होहन्ते'रिति कुत्वम्। ९. 'ऊदुपधायाः गोहः'। १०. 'दोषो णौ',।

मरणेनैवेदानीं मम निष्कृतिः सम्भवति। एतच्च तद्गृह्याणां मम बान्धवानां कोपं नितरां स्फावयति[1] स्मेति ते तत्र तदानीं वर्तमानेषु किंवृत्तेष्वन्यतमं प्राजीहयन्[2] अन्यानपि च द्वित्रान् भद्रपुरुषान् ग्रामीणान् आजूहवन्[3]।

इत्थं यदा सर्वे ते पर्य्यष्कीर्षुस्तदा मातुर्मे तथाभूताया दशायाः कारिण्याः तन्नवोढस्नुषायाः समीपे मया सह अगच्छन्। किन्तु समुद्घाटितार्गलास्ते यावत्पश्यन्ति तावत्तत्र केवलां काष्ठमयीं पुत्तलिकामेकामपश्यन्। व्यतिकरश्चैष तैः वस्तुगतिं निरचीचयत्[5] इति विडम्बितात्मानं विलज्जिताञ्चाम्बां हसन्तो हृदयाध्यारोपितृतत्कौटिल्यप्रत्ययास्ते बान्धवा यथागतं गताः।

परित्यक्ततद्देशोऽहञ्च भ्राम्यन्निमं देशं प्राप्य दैवाद् द्यूतशालां प्राविशम्। अत्र च, चण्डभुजाख्यम् पांसुपटम्, श्मशानवेतालम्, कालवराटकम्, शारिप्रस्तरञ्चेमान् तुल्यपराक्रमान् शूरान् अद्राक्षम्। 'विजितो जेतुर्दासः स्यादिति' मिथः पणं कृत्वैतैः सममक्षैरहमदीव्यमिति द्यूते विजिता इमे मम दास्यं गताः। अहञ्चैतेषां गुणैर्जितः स्वयं दास्यमुपगतः, इतीमे स्वैः समं वसता मया सर्वं दुःखं व्यसस्मरन्। एवमवस्थोचितेन नाम्ना प्रसिद्धोऽक्षक्षपणकनामाऽहम्। गूहितात्मभिः सत्कुलोत्पन्नैरिहैवमेतैः सह भाग्यवशान्मिलितो निवसंश्चाहं पूर्वोपार्जितपुण्यैरत्रभवता मिलित इतीदानीं त्वमस्माकं प्रभुः।

अक्षक्षपणेनेत्थं स्ववृत्तान्ते विनिवेदिते तेऽन्येऽपि यथाक्रममात्मोदन्तानवर्णयन्नित्यानुषङ्गिकप्राप्तान् तान् सखीन् मत्वा सर्वैः सह विहृत्य तद्दिनं नीत्वा अक्षक्षपणकाद्यैस्तैः षड्भिः सह तस्मादुद्यानान्नृपात्मजो भीमभटः समुद्भासमानशीतांशुतिलकालङ्कृताननपौरन्दरीं दिशमगात्।

तैः समं तत्र तिष्ठति तस्मिन् प्रावृडुपागमत् इति विपाशा नदी महावारिपूरेण पुलिनं प्रपूर्यौघप्रशान्ताम्भोधिसम्मुखीव प्रोवाह। तस्मिन् काले तेन जलौघेन समानीयात्र क्षिप्तः एको महामत्स्यो गरीयस्त्वान्नदीतटे व्यासक्तोऽभूत्। तं तथाभूतं दृष्ट्वा तत्रत्या जना विविधायुधैर्विहन्तुं प्रधाव्य तस्य तिमेरुदरं पाटयामासुः। पाटिताच्च तस्माज्जीवन्नेको युवा द्विजो निरगात्। अद्भुतेन च तेन

---

१. 'स्फायो वः'। २. 'हेरचङि'। ३. 'ह्वः सम्प्रसारणम्'। ४. 'समवाये च'। ५. 'चिस्फुरोर्णौ'। ६. 'रुहः पोऽन्यतरस्याम्'। ७. 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्'।

विस्मापिताः सर्वे लोकाः कोलाहलं व्यधुः। तच्च सर्वं श्रुत्वा मित्रैः सह भीमभटोऽपि तत्रागात्, मत्स्याद्विनिर्गतं तं निजमित्रं शङ्खदत्तञ्चापश्यत् इति समुपजातपरिचयौ तावविरलधाराश्रुभिरन्योन्यमुन्दयमानौ परमानन्दम् अन्वबोभवताम्। ततो भीमभटेन पृष्टः शङ्खदत्तः सर्वं स्ववृत्तान्तमित्थमवर्णयत्—

गङ्गोर्मिवेगेन त्वद्दृष्टेरगोचरीकृतोऽहमशङ्कितमेकेन महीयसा मत्स्येन निगीर्णो महावेश्मसदृशं तस्योदरं प्रविष्टः क्षुधितश्छुरिकोत्कृत्ततन्मांसमश्नन्नौर्जिजम्। सोऽयं तिमिरद्य तत इहानीय धात्रा विनिक्षिप्त इति जनैरेभिर्हताद्विदारितोदराच्चास्मादहमेवं विनिर्गतस्त्वां बाहीकं प्रकाशञ्च समवालुलोकम्।

शङ्खदत्तस्यैषोक्तिर्भीमभटमन्यांश्चापि तत्रस्थान् सर्वांस्तन्निगरणेन, मत्स्योदरस्थित्या, बहिरागत्या च निरतिशयं विस्मापयते स्म।

तस्मिन् देशे शङ्खदत्तेन सहेत्थं स्थिते ससुहृदि भीमभटे, नागराजस्य वासुकेर्यात्रोत्सवमयः समयः समायात्। अघटितघटयितृ हि विधेर्विधानं यद् विदेशीयेऽपि हृदयस्थलद्वये स्नेहलतामेकां जनयति, सपल्लवयति चेति भीमभटः शंखदत्तादिः सह मिलन्महाजनं नागमुख्यनिकेतनं नागराजस्य वासुकेर्दर्शनायायासीत्। दिव्ये हि यत्रत्ये वातावरणे सत्यं सर्वत्र अशशासत्। सत्यपि वासुकिसहस्रफणामण्यनवरतप्रकाशे, यत्रत्यदिव्यजनहृदयानि आध्यात्मिकज्ञानदीपो दिवानिशम् अचचकासत्। सर्वो हि यत्रत्यो जनो निजशालीन्येनात्मचारित्रमालिन्यम् अममार्जत्। दुराचारविचारनिःश्वास एव च यत्रत्यजनताहृदयम् अवोव[1]जत। दुर्व्यसनवासनासन्ततिश्च यत्रत्यो जनः हृत्स्थलेऽवेव असू[2]षुपत। परगुणपर्य्यालोचनदृषदि च निजबुद्धिम्, अशीश[3]यत। परसन्तापश्च यत्रत्यजनान्योन्यस्नेहं न व्यलील[4]यत्। ना साध्वाचारो वस्त्राभरणाद्याडम्बरैः लापयतेस्म। सबलश्च न दुर्बलम् उल्लापयतेस्म। न कोऽपि कमपि कटूक्तिं वोदलीलपत्।

भीमभट एवं भूते प्रदेशे प्रासादाभ्यन्तरस्थां माल्यदामभिर्भृताम्, फणारत्नप्रभापुञ्जैः आरक्ताम्बुजैरिव चिताम्, विषाग्निधूमपटलैश्च नीलोत्पलैरिवावृताम्, तद्वासुकिमूर्तिं दृष्ट्वा तां तत्रत्यैर्यथावाप्तपत्रपुष्पफलादिभिः आर्चिचत्। स्तोत्रैश्चोपाशुश्लोकत्। एतस्मिन्नेव समये राज्ञो लाटेश्वरस्य चन्द्रादित्यस्य कन्या, कुवल-

१. 'वो विधूनने जुक्'। २. 'स्वापेश्चङि'। ३. 'शाच्छासाह्वाव्यावेपां युक्'। ४. 'लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने'।

यावत्तयां जाता शोभनसर्वाङ्गी कुरङ्गीदृग्, हंसावली तत्र समायात्। सा च दिव्यानुकारिभिः स्वकीयैरङ्गैः कटाक्षविक्षेपादिभिश्च भीमभटममोहयत्। जगत्सौन्दर्यतस्करः सोऽपि च तिर्यङ्नयनवर्त्मनाऽन्तः प्रविश्य तस्या धैर्यहृत्कोषम् अचूचुरत्[1]। [ इति ण्यन्तप्रक्रिया ]

एवंभूते व्यतिकरे सा गुप्तविसृष्टाप्तचेटीमुखेन तन्मित्रेभ्यश्च तद्युवकनामास्पदादिकं जिज्ञासते[2] स्म; प्राप्ततत्परिचया च तदुन्मुखहृदयाऽपि विवर्तितमुखी यथा कथञ्चित् स्नात्वा परिजनैर्नीयमाना स्वमन्दिरञ्च जिगमिषति[3] स्म। प्रियाप्रेमपाशबन्धस्खलद्गतिर्भीमभटोऽपि च सखिभिः सह स्वावासमरिरिषति[4] स्म।

प्रियापार्थक्ये ( सन्नन्तप्रक्रिया )

गते च तस्मिन् भीमभटे राजकन्यका हंसावली राजप्रासादमासाद्य स्वेप्सितं[5] सन्देशं दत्त्वा स्वकीयां दूतीं तस्मै व्यसर्जयत्। सा चापि तत्र गत्वा एकान्ते हंसावलीविषयकमनुरागं भीमभटमुक्तवती सोऽपि च 'नक्तमन्तःपुरमभ्युपगत्य तां सम्भावयिष्यामि, विद्याच्छन्नं विशन्तं नहि कोऽपि मामवलोकयिष्यति' इत्थं तां प्रतिसन्दिदेश।

प्रदोषसमये दिव्याभरणभूषितो भीमभटो गङ्गावितीर्णविद्याया आनुलोम्येन पाठतोऽदृश्यीभूय प्राग्विविक्तीकृतं तस्यान्तःपुरं समाविश्य हंसावलीम् अदिदृक्षिष्ट[6] इति प्रातिलोम्येन तां विद्यां पठित्वा तस्या राजपुत्र्या दृश्यतां गतो गान्धर्वविवाहविधिना हंसावलीं स्वभार्यां विधाय तयैव सह तां रात्रिञ्च नीत्वा पुनर्नक्तमायास्यामीति तामाश्वास्योषसि ततः सपद्यपद्यत।

प्रातरन्तःप्रविष्टा महत्तरा अन्तःपुरे सम्भोगलक्षणैर्युक्तां हंसावलीमवलोक्य

---

१. निवृत्तप्रेषणाण्णिच्।				[ इति ण्यन्तप्रक्रिया ]

❀ सन्नन्तप्रक्रिया ❀

२. ज्ञा अवबोधने, 'धातोः कर्मणः समानकर्तृकादिच्छायां वा', 'ज्ञाश्रुस्मृदृशां सनः'। ३. इण् गतौ 'सनि च' इति गमादेशः। ४. ऋ गतौ 'स्मिपूङ्रञ्ज्वशां सनि'। ५. आप्लृ व्याप्तौ 'आप्ज्ञप्यृधामीत्', 'अत्र लोपोऽभ्यासस्य'। ६. दृशिर् प्रेक्षणे 'ज्ञाश्रुस्मृदृशां सनः'।

सर्वं तद्रहस्यं तत्पित्रे शशंसुरिति राजा सर्वं तद् अशिक्षुः[1], रहस्य-प्रतीषिषया[2] गुह्यान् चरान् निशि नियुयुजे।

भीमभटश्च मित्रैः सह दिनं व्यतियाप्य प्रदोषे पुनरपि प्रियान्तःपुरमागच्छत्। तत्र च विद्याप्रभावतोऽलक्षितप्रवेशं तं सिद्धं ज्ञात्वा राज्ञो ज्ञीप्सया[3] चारास्ततो निरचारिषुरगादिषुश्च राजानं तत्सर्वमिति राजा तच्छ्रुत्वा तानाह यदेवं सुरक्षितम्[4] इव सुरक्षितम् अप्यन्तःपुरं यः प्रविशति न स लौकिकः पुरुष इति मद्वचनेन तमेवं गत्वाऽभिधत्त यत्त्वादृक्षेण गुणवता वरेण न कथं मत्तनया प्रकटं प्रार्थिता। कथमेतदर्थं त्वयात्मा समवुवूर्षि[5] कथञ्चैतद्रहस्येव व्यधित्सि[6]। एवमुक्त्वा तूष्णींस्थिते राजनि तत्प्रेषिताश्चारा राजप्रासादमेत्य द्वारस्था एव भीमभटाय सर्वं तद्राजसन्देशमभाणिषुः।

भीमभटोऽपि चाहमिदानीं राज्ञा ज्ञातोऽस्मीति बुद्ध्वाऽभ्यन्तरस्थित एव तान् प्रत्यभाषत 'अद्य हि घोरा रात्रिः। प्रातरहमास्थानमण्डपमागत्य सर्वं तत्त्वम् आविवेदयिषितास्मि[7]' इति। तदाकर्ण्य ततः प्रत्यावर्तिताश्चारा राजानं विज्ञापितभीमभटोत्तरमकार्षुः।

प्रातःकाले भीमभटः स्वमित्रैः सह सम्मन्त्र्य समुत्कृष्टवेषः चन्द्रादित्यस्य भूपतेरास्थानमण्डपमागात्। तत्र च निजोचितमासनमासीने तस्मिन्, तत्सखो द्विजः शङ्खदत्तो राजानमभाषत 'राजन्, राढापते राज्ञ उग्रभटस्यातर्क्यविद्यामाहात्म्यो दुरतिक्रमपराक्रमो भीमभटनामा पुत्रोऽयं तव सुताम् प्रेप्सुः[8] इह समायातः। एतदाकर्ण्य राजा रात्रिवृत्तान्तं शृण्वन् योग्यं तं वरमवेक्ष्य समुपजाततच्छ्रद्धो द्रुतं समायोजितोद्वाहोत्सवावसरो यथाविभवयुक्तां हंसावलीं भीम-

---

१. शक मर्षणे, 'सनिमीमाघुरभलभशक०'–'अत्र लोपोऽभ्यासस्य', 'सनाशंसभिक्ष उः'। २. प्रतिपूर्वकादेतेः सन्, बोधनार्थत्वात् 'सनि च' इति गमादेशाभावः। ३. 'आप्ज्ञप्यृधामीत्', 'अत्र लोपोऽभ्यासस्य' ततः 'अप्रत्ययात्'। ४. सुरैर्देवैः क्षितम् अधिष्ठितम् ( कर्मणि प्रत्यये, 'निष्ठायामण्यदर्थे', 'क्षियो दीर्घात्' इत्युभयोरप्रवृत्तिः )। ५. सम्पूर्वकाद्वृणातेर्वृञ् वरणेऽस्माद्वा सन्नन्तात् 'इट् सनि वा' ततः कर्मणि लुङ्, च्चिण्। ६. विपूर्वकाद् दधातेः सनि, 'सनिमीमाघु०'–'अत्र लोपोऽभ्यासस्य'। ७. आङ्पूर्वकाद् ण्यन्ताद्वेत्तेर्लुट्। ८. 'आप्ज्ञप्यृधामीत्'।

भटाय प्रादात् इति भूरिहस्त्यश्वग्रामलाभान्वितोऽसौ हंसावल्या सह परं निर्वृतस्तत्र कतिचिद् दिनान्यनिनीषिष्ट[1]।

विगतेषु कतिचिद्दिवसेषु परिविव्रजिषुर्वर्षीयान्[2], श्वशुरोऽसुतश्चन्द्रादित्यो लाटराज्यं भीमभटाय समर्प्य वनाय प्रातिष्ठत। भीमभटोऽपि चावाप्ततद्राज्यः शङ्खदत्तादिभिः सप्तभिर्वीरैः सह सम्यग्लाटराज्यमशिषत्।

तथा लाटं सुशासद् भीमभटो भीमभटो जातु प्रयागमायातो मृतमात्मपितरमुग्रभटमश्रौषीत्। एतदपि तच्छ्रुतिपथमवातरद् यन् मुमूर्षुः[3] असौ नर्तकीसुतं स्वकनिष्ठपुत्रं राढाराज्येऽभ्यषेचयत्। तदाकर्ण्य पितरमनुशोच्य सम्पादिततदौर्ध्वदैहिको दायादायापकारिणे तस्मै समरभटायेत्थं सन्दिश्य प्रैष्यं प्रैषिषिषत्[4] यत् 'हे नर्तकीसुत, तावकीना तातसिंहासनम् अधिरुरुक्षा[5] सर्वथाऽसमीचीना, नापि च वर्तते त्वयि तद्योग्यता। अतः सत्यपि लाटराज्ये तद्धि मत्स्वमिति न त्वयाऽधिरोढव्यम्' इति।

स दूतो द्रुतं गत्वा प्रदत्तनिजपरिचयो लेखमास्थानमण्डपस्थितये समरभटाय समार्पयत्। सोऽपि च भीमभटनामाङ्कितमुद्रं तत्सन्देशं वाचयित्वैवमभ्यभाषत 'यं हि पिता पुरा पुरः औचिच्छिषीत्[6] स एवायोग्योऽतो दुर्विनीतस्य तस्यैवं मिथ्या राज्यलिप्सामिश्रितधिप्सा[7][8] केवलमहम्मन्यतैव। लेखेन चेत्थमुद्गर्ज्य समरभटो भीमभटाय तथैव प्रहितप्रतिसन्देशः स्वदूतं विसृष्टवान्। प्रतिदूतोऽपि च लाटदेशाधीश्वरं भीमभटमुपगत्य विनिवेदितनिजस्वामिसन्देशमकरोत्।

भीमभटश्चाथानुवाचिततल्लेखो मुक्ताट्टहासो दायादप्रतिदूतमेवमभ्यधात्—'गच्छ रे दूत, मद्वाक्यान्नर्तकीसुतं वक्तात् यदश्वग्रहे शङ्खदत्तात्तव रक्षां भीमभट एव व्यधात्। त्वं बालस्तातप्रियश्चेति क्रियासमभिहारेण विरित्सुं[9] त्वां नातः

---

१. नयतेः सनि, 'पूर्ववत्सनः' इति लुङस्तङ्। २. व्रज गतौ। ३. 'आशंकायां सन् वक्तव्यः'। ४. प्रपूर्वकादिष धातोः सनो लङ्। ५. अधिपूर्वकाद् रुहधातोः सन्नन्ताद् अप्रत्यये टाप् 'हलन्ताच्च' इति सनः कित्वादुपधागुणाभावः। ६. उच्छी विवासे, 'पूर्वत्रासिद्धीयमद्विर्वचने' इति चछाभ्यां सहितस्येटो द्वित्वम्, 'हलादिः शेषः', लुङ्। ७. डुलभष् प्राप्तौ, 'सनिमीमाघुरभलभ०'। ८. दम्भु दम्भने, 'सनीवन्तर्धभ्रस्जदम्भु०'-'दम्भ इच्च' हलन्ताच्चेत्यत्र हल्ग्रहणस्य जातिपरत्वात्सनः कित्वेन नलोपः। ९. 'राधो हिंसायां सनीस् वाच्यः'।

परं चंस्ये । वंशेऽपि तु यतोऽहं पितृवत्सलतमं नूनमह्नाय त्वां तन्निकटं निनीषामीति परिगणितैरेव दिवसैस्तत्रागतं मामवबुध्य महायात्रायात्रिको बुभूषुः[1] कर्तव्य-विचार-सोपानपरम्परां तितंनिष[2] । अचिरेणैव च पितृसामीप्यमुपगत्य तस्मै सुतसान्निध्यसुखं सिसनिष[3] ।

एवमुक्त्वा विसर्जितप्रैष्यो भीमभटो जिगीषया[4] ससन्नद्धवर्मागणितवीरभटो दायादं समरभटम् अभ्यषिषेणयिषीत्[5] इत्यत्युज्ज्वले तस्मिन् राजेन्दावभ्युदयाचलं समारूढे प्रवृद्धनादः सैन्यमहाम्बुधिः क्षुभ्यन्नुदचलत् । तत्सहयुयुक्षया प्रस्थितैरसङ्ख्यैः सामन्तै राजपुत्रैश्च महानिनदैर्नदैरिव [6]संजिगंसमानैर्निजस्वामिबलं समीर्त्सुभिर्दिशां प्रदेशाः[7] समापिपरीषिषत[8] । सम्पतदसङ्ख्यगजवाजिजवव्यग्रा, तद्भारविदलनत्रासात्साकम्पा मेदिनी, रजोराजिव्याजेन विभुशरणम् अबिभक्षत[9] । समरभटोऽपि च भीमभटमेवं राढाभ्यर्णमागतमवगत्य [10]संवर्म्य, हर्म्यतलसुखानवहितोऽहितं सन्नद्धसेनोऽभ्युद्गत्य युयुत्सयाऽग्रतो निर्गतो रणाय आजूहवदिति मिलितयोरुभयो राज्ञोः शूराणां परस्परसमरकौशलम् ईर्ष्यियिषुः[11] महानाहवप्रलयः प्रावर्तत ।

क्षणानन्तरमेव कुप्यत्कृतान्तदन्ताग्रदलनोत्थित इव शस्त्रसम्पातजन्मानलः समुज्जृम्भमाणो नभोऽभ्याविवरीषत् । रेणुविताना सैन्यतुमुलनादवादिता, नृत्यत्कबन्धा च रणाङ्गणरङ्गभूमिर्व्यरुचत् । हस्तयमान-पादयमान-प्राण्यसृङ्नदी[12], प्लवमानप्राणिनीव प्रत्यभासीत् । न चिरादेव च शङ्खदत्तेन, अक्षक्षपणेन, युद्धविशारदैश्चण्डभुजाद्यैश्च महाबलैर्दुर्मदैर्द्विरदैरिव धनुर्धरो भीमभटः परसैन्यमहातरूनभाक्षयत् । तस्य सैन्ये भग्ने रथस्थितः समरभटोऽतिक्रुद्धो रणाब्धौ मन्दर इवाचलोऽतिष्ठत् । तदा वारणस्थो भीमभटस्तमभिपत्य तस्य चतुरोऽश्वान् स्वशरा-

---

१. 'इको झलि', 'सनि ग्रहगुहोश्च' । २. 'तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः' । ३. 'सनीवन्तर्ध-इतीट्' । ४. 'अज्झनगमां सनि', 'सन्लिटोर्जेः' । ५. सेनया अभियातुमैषीत्, 'सत्यापपाश०' इति ण्यन्तात्सनो लुङ् । ६. 'समो गम्यृच्छिभ्याम्' ( अजादेशस्येत्युक्तेः 'अज्झनगमामि'ति न दीर्घः, नापि तङि इडागमः ) । ७. ऋधु वृद्धौ, 'सनीवन्तर्ध०', इति पाक्षिकेडभावः 'आप्ज्ञप्यृधामीत्', 'अत्र लोपोऽभ्यासस्य' । ८. 'इट् सनि वा' । ९. भजतेः सन्नन्ताल्लुङ् । १०. वर्मणा सन्नह्य । ११. 'ईर्ष्यतेस्तृतीयस्य' । १२. 'णिङङ्गान्निरसने' इति णिङन्ताच्छानच् ।

रुशरै रणभूमिशय्यायामसूषुपत् इति विरथोऽपि समरभटो धावित्वा तोमरेण तितृंहिषया[1] भीमभटविकटकरटिनं प्राहार्षीत् । इत्थं प्रहतवाहनावुभावपि विवाहनौ भूत्वा गृहीतचर्मखड्गौ पदाती एवामर्षणौ तौ द्वन्द्वयुद्धेनान्योन्यम् अभ्यबुभूषिष्टाम् । क्षणाच्च खड्गयुद्धविशारदः प्रसह्य युध्यमानो भीमभटो नर्तकीतनयस्य शिरोऽचिच्छित्सत्[2] । सम्पन्ने चेत्थं तस्मिन् ससैनिके समरभटवधे, मृधे चाप्यवसिते, सिद्धचारणोद्गीयमानकीर्तिर्भीमभटः सखिभिः सह राढापुरीं प्रविश्य चिरप्रवासोपयातो रामः कौशल्यामिव मातरमभ्यनन्दयत् । स्वयञ्च पौरैरभिनन्द्यमानो, गुणप्रियैः सचिवैश्च पूज्यमानः, पितुः सिंहासने समुपाविशत् । ततः अक्षक्षपणादिभ्यो निजसहायकेभ्यो बहुग्रामान् वसूनि च प्रदाय तैः सह पैतृकं पदं प्रशासत् लाटेन्द्रसुतया देव्या हंसावल्या सह चिरं रममाणोऽपि सर्वां भूमिं वशीकृत्य समाहृतोत्तमराजकन्याभिः सम्भोगैकसक्तः, पानादिव्यसने चानुरक्तः, सचिवेषु न्यस्तसमस्तराज्यभारोऽभ्यन्तरान्न निरजिगमिषीत् ।

एवं सांसारिकव्यसनासक्तस्य तस्य दिदृक्षया यदृच्छया जातूत्तङ्को मुनिःशर्वसमादेशपवित्रमकाल इव तत्राजगाम । द्वारञ्च प्राप्ते तस्मिन् मुनौ द्वाःस्थैर्जनैरावेदितोऽपि रागमदैश्वर्यमदान्धो नृपतिर्न तदा तदादिदरिषया[3] लेशमप्यवाधात् इति क्रुद्धो मुनिरमुष्मै राज्ञे 'मदान्धस्त्वम् राज्याद्भ्रष्टो वन्यो हस्ती भव' इति शशाप । एतदाकर्ण्य विगतमदो भूपतिर्मुनिचरणानतो दीनैर्वचनैस्तं प्रासादयत् इति प्रशान्तकोपो महर्षिस्तस्य उद्दिधीर्षया[4] इत्थं वक्तुम् अन्वजिघृक्षत्[5] यद्विकलचक्षुषम्, प्रचण्डशक्त्याख्यं नागशापावसादितञ्चातिथीभूतं मृगाङ्कदत्तसचिवं समाश्वास्य यदा त्वं स्ववृत्तान्तं प्रवक्ष्यसि तदैतस्माच्छापात्ते मोक्षो भविष्यति । गिरिशादिष्टं, त्वं तदा, गन्धर्वत्वमवाप्स्यसि; अतिथिश्च ते चक्षुष्मान् सम्पत्स्यते । इत्थमुक्त्वोत्तङ्को मुनिर्यथागतं प्रायात् । भीमभटश्च राज्यविच्युतस्तत्क्षणं मुनिशापकारणो वारणो बभूव । स चाहं गजीभूतो भीमभटः, त्वञ्च प्रचण्डशक्तिरित्यधुना सङ्गमोऽयमावयोः शापमोक्षं कालयति ।'

---

१. तृंहू हिंसायाम्, ऊदित्वाद्वेट् तेन 'हलन्ताच्च' इत्यस्याप्रवृत्तिः । २. 'हलन्ताच्च' इतिसनःकित्वम् । ३. दृङ् आदरे, 'अत्रेटो दीर्घो नेष्टः' तेन 'किरश्च पञ्चभ्य' इति न दीर्घः । ४. भौवादिकधृञ्धातोः सनि 'अज्झनगमां सनि' इति दीर्घादि । ५. 'रुदविदमुषग्रहि०' 'सनिग्रहगुहोश्च', 'ग्रहिज्या०' इति सम्प्रसारणम् सनः षत्वस्यासिद्धत्वाद्भषभावः ।

एवमुक्त्वा भीमभटः परित्यक्तगजाकारस्तत्क्षणं दिव्यविभवो गन्धर्वः समपद्यत। प्रचण्डशक्तिरपि च तस्मिन् पश्यत्येव समुत्पन्नलोचनालोकशक्तिरजायत। तदैव वल्लीजालान्तःस्थितोऽन्यैः सचिवैः सहितः सुदृढोत्पन्ननिश्चयो मृगाङ्कदत्तो द्रुतं प्रधाव्य निजमन्त्रिणं प्रचण्डशक्तिं कण्ठे जग्राहेत्यकाण्डसुधावर्षसिक्ताङ्गः सोऽपि निजस्वामिनं मृगाङ्कदत्तं परिचित्य सहसा तं पादयोरग्रहीष्ट। ततश्चिरविश्लिष्टसंश्लिष्टौ रुदन्तौ भृशं दुःखितौ च स्वामिसेवकौ गन्धर्वरूपो भीमभटः पर्यसान्त्वयत् मृगाङ्कदत्तोऽपि च प्रणतः [1]'यदस्माभिरयं सखोपलब्धः, यच्च पुनरमुना चक्षुष्मत्त्वमवाप्तं तत्र सर्वत्र भवानेव हेतुरित्यादिवाक्यैर्मुहुर्मुहुस्तम् अतुष्टूषत्। तेनातिसन्तुष्टो गन्धर्वो मृगाङ्कदत्तमुवाच यदचिरादेव त्वं शेषानपि सर्वान् सचिवानवाप्य समुपलब्धशशाङ्कवतीभार्यो महीतलभूभृद् भविष्यसि। अहञ्चातः परं स्मृतमात्र एव त्वां सन्निधास्यमानोऽधुना स्वाभीष्टं सिषाधयिषुः[2] साधयामि।

एवं चारुकेयूरहाररवमुखरितदिग्विभागे, गन्धर्वधौरेये दिवमुत्पतति समवाप्तप्रचण्डशक्तिर्मृगाङ्कदत्तः परां कोटिं निर्वृतेरवाप्तस्तदहोरात्रमनैषीत्।

प्रभाते च शशाङ्कवत्याः शेषाणां स्वमन्त्रिणाञ्च अन्वेषिषिषया उज्जयिनीं यियासुर्मृगाङ्कदत्तस्ततः प्रतिष्ठमानो मार्गेऽतिविकृतेनैकेन पुंसा नभस्तले समुह्यमानं निजमन्त्रिणं विक्रमकेसरिणमद्राक्षीत्। यावच्च तेन तमन्यमन्त्रिणः प्रदर्श्यन्ते तावत्स गगनाद् अवतितरिषुः[3] तस्य पुंसः स्कन्धादवरुह्य रुरुदिषापर-[4]वशोऽश्रुक्लिन्नकलेवरो मृगाङ्कदत्तं पादयोर्जग्राह। ततस्तेन तन्मन्त्रिभिश्च क्रमेणाश्लिष्टं 'स्मृतः पुनर्मामभ्येष्यसि' एवमुक्त्वा विसृष्टतत्पुरुषं तत्र समुपविष्टं तं मृगाङ्कदत्तः कौतुकात्तदुदन्तम् अपिपृच्छिषीत्[5]। विक्रमकेशरी चापि तथोत्सुकं निजप्रभुमवगत्येत्थं निजोदन्तं वक्तुं प्रारभत—

'नागशापाद् भवद्भ्यो वियुक्तोऽहं वह्न्यहानीतस्ततो भ्रमन् भवतो मार्गे मार्गे मार्गयमाणोऽचिन्तयं यद्भवद्भिरवश्यमाश्रितव्योज्जयिनीत्यत्रागत्यैतन्निकटस्थस्य ब्रह्मस्थलाभिधस्य ग्रामस्य वापीतटीयैकस्मिन् वृक्षमूलेऽध्वश्रममपनेतुं सुषुप्सया[6] समुपाविक्षम्। तत्र सर्पदंशार्तो वृद्धो ब्राह्मण एकोऽब्रवीत् 'पुत्र, इत

१–२. स्तौतिण्योरेव षण्यभ्यासात्'। ३. 'इट्सनि वा'। ४. 'रुदविद०' इति किंत्वाद्गुणाभावः। ५–६. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' इति किंत्वात् सम्प्रसारणादि।

उत्तिष्ठ, अन्यथा मदीयां गतिं गमिष्यसि। अस्त्यत्रैको महासर्पो येन दष्टोऽहं तद्विषरुजार्दितो वाप्यामस्यां स्वशरीरम् उजिजिह्मिषामि' एवमुक्तवन्तं तं देहत्यागान्निवार्य विषघ्नमन्त्रैर्निर्विषमकार्षम्। ततः स विप्रः साकूतं कृत्स्नं ममोदन्तमत्यादरात्पृष्ट्वा विदितार्थः प्रीतिमान् एवमभाषत यत्त्वया मम प्राणाः प्रत्ता इति मम पितुः प्राप्तं वैतालसाधनमन्त्रमिमं त्वं गृहाण। कृतैतन्मन्त्रजपसिद्धवैतालो हि जनो यल्लिप्सते तल्लभते। यद्विविदिषति[1] तद्वेत्ति। यज्जिघत्सति[2] तदत्ति। यद् धित्सति[3] तद् धयति। यं सिसीषति[4] तं सिनाति। यं मित्सति[5] तं मीनाति। यं शुशावयिषति[6] तं शावयति। यं जुहावयिषति[7] तं हावयति। यं रिरक्षति तं रक्षति; यं विभ्रक्षति[8] क्रोधाग्निना तं भ्रज्जति। किं बहुना, तस्य जनस्य वशंवदतां गतः प्रबलोऽपि शत्रुश्चरणावनतोऽनवरतं शुश्रूषमाणस्तदाज्ञानुसारमेव अजिजिषति[9], तिष्ठासति, निनृत्सति[10] विवृत्सति इत्ययं मन्त्रस्त्वादृशां कृते महानेवोपकारी सेत्स्यती'ति।　　　　　　　　　　　　　　[ इति सन्नन्तप्रक्रिया ]

तेनेत्थमुक्तोऽहं प्रत्यवोचं यन्मृगाङ्कदत्तमतिरिच्याहं नाधुना किमपि लिप्से वैतालादिकम् इति तदन्वेषणपर एव पर्य्यटाट्ये,[11] स्थले स्थलेऽनुजनं तद्वार्त्तां च परीपृच्छ्ये,[12] न कोऽपि किन्तु तां सोसूच्यते'। एतदाकर्ण्य विप्रोऽसौ विहस्य मामेवमब्रवीत् 'अपि त्वं न जानासि यद्वैतालसिद्ध्या सर्वमभीष्टं पर्यवसेसीयते? एवञ्चेत्तदा वैतालस्यैव प्रसत्त्या तत्प्रत्यासत्त्या च भूभुजस्त्रिविक्रमसेनस्य

प्रियापार्थक्ये
( यङन्तप्रक्रिया )

---

१. 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' इति कित्त्वात् सम्प्रसारणादि। २. 'लुङ्सनोर्घस्लृ', 'एकाच उपदेशे' इति नेट्, सस्य तत्वम्। ३. 'सनिमीमाघु०' ४. 'स्तौतिण्योरेव०'। ५. 'सनिमीमा०'। ६. 'णौ च सँश्चङोः' ७. हुदानादनयोः, तेन याजयितुमिच्छतीत्यर्थः। ८. 'सनीवन्तर्धभ्रस्ज०'। ९. 'स्मिपूङ्रञ्ज्वशां सनि'। १०. 'सेऽसिचि०' इति वेट्। [इति सन्नन्तप्रक्रिया]

( यङन्तप्रकिया )

११. 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' 'दीर्घोऽकितः' १२. 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्', 'ग्रहिज्येति' सम्प्रसारणे 'रीगृदुपधस्य च' इत्यत्र 'रीगृत्वत इति वक्तव्यम्' इति रीक्।

यथा विद्याधरैश्वर्यम् अजञ्जनिष्ट[1] तत्सम्बद्धां मयोच्यमानां कथां निजश्रुतिपथमवतारयितुं त्वम् अवेदेधीयस्व[2]—

'अस्ति गोदावरीतीरे प्रतिष्ठानाभिधानो देशः। तत्र शक्रपराक्रमस्त्रिविक्रमसेनाख्यो वैक्रमसेनी राजा बभूव। अधर्माय कोपिनोऽपि कोऽपि नो नानन्द्यत यो यस्य राष्ट्रे साधारणोऽपि जनः। राजनीतिचतुरोऽपि धार्मिकवरो यो न प्रजानां विपदे पदे पदे अचङ्क्रम्यत। प्रतापशालिनो यस्य नामाकर्णनेनैवारयो रणे दुर्गशरणं निजविजयनिराशाः समासासद्यन्त। यदनुभावोऽरिगणयौवनयौवनवासन्तिकविभूतिमदम् अदंदह्यत[3]। कक्षविलम्बितकौक्षेयकाटोपमात्रेण आहितारिहृदयभयो यद्भुजो भुजङ्ग इव सपक्षानपि विपक्षान् अदंदश्यत।

आस्थानमण्डपगतस्य तस्य सेवार्थं शान्तिशीलाख्यो भिक्षुरेकः फलम् उपानेनीयत। स राजा चापि तत्फलमादायासन्नवर्तिनः कोषागाराधिकारिणो हस्ते अदेदीयत।

इत्थं व्यतीतेषु दशसु वर्षेषु फलमेकदा राज्ञे दत्त्वाऽऽस्थानतोऽपसृते भिक्षौ तत्फलं राजा रक्षिणां हस्तान्मुक्ताय दैवतस्तत्र प्रविष्टाय च क्रीडामर्कटपोतायादायादद्यत। स च मर्कटो यावत्तत्फलम् अशाशर्[4]यते तावद्वेभिद्यमानमध्यात्तस्मात् उत्तममनर्घं रत्नमेकं निरगात्। तद् दृष्ट्वा राजा तत्फलमादाय भाण्डागारिकमप्राक्षीत् यद्भिक्षूपनीतानि यानि फलानि मया तुभ्यमनुदिनमर्पितानि तानि त्वया क्व स्थापितानीति तच्छ्रुत्वा सभयः कोषाध्यक्षो व्यजिज्ञपत् यत्तानि फलानि गञ्जमनुद्धाट्यैव प्राचेक्षिपिषि गवाक्षतस्तत्राहम्। आदेशश्चेदहं तत्र गत्वा गवेषये। एवमभिदधानो राज्ञाज्ञप्तः कोषाध्यक्षः तत्र गत्वा निरीक्ष्य पुनरागतो न्यवेदयत् यत्तत्र फलानि तु न सन्ति किन्तु रश्मिज्वालोर्णोनूयमानरत्नराशिर्देदीप्यमानो दरीदृश्यते। तदाकर्ण्यातितुष्टो भूपः तान् मणीन् कोशरक्षिणे दत्त्वा पूर्ववदागतं भिक्षुमन्येद्युरवदत्, 'भिक्षो, एवमेतावद्धनव्ययेन यत् त्वं मां सेषेव्यसे किमेतेन ते प्रयोजनं वरीवृ[5]त्यते इति न यावत्त्वं वदसि न तावदतः परं फलमहं ते जरीगृहिष्ये'। एतदुक्तवन्तं राजानं भिक्षू रहस्यवादीत्—'देव वीरसाहाय्यसापेक्षं मन्त्रसाधनं मेऽत्र वर्तते प्रयोजनम्। तत्र च भवान् चलीक्लृप्यते[6]

१. 'ये विभाषा,' 'यस्य हलः'। २. 'घुमास्था०' इतीत्वे 'गुणो यङ्लुकोः'। ३. 'लुपसदचर०' 'जपजभदहदशभञ्जपशाञ्च'। ४. 'सूचिसूत्रि०'। ५. 'रीगृदुपधस्य च'। ६. 'कृपो रो लः' इत्युभयत्र लत्वम्।

इति मन्मात्रासाध्ये तत्र चेक्रीर्य्यमाणं[1] ते साहाय्यमहम् वावश्ये[2]। तन्निशम्य 'तथास्तु' इति प्रतिपनीपद्यमाने[3] राजनि तोतुष्यमाणः श्रमणः 'तर्हि आगामिन्यां कृष्णचतुर्दश्यां निशागमे महाश्मशानान्तर्वटस्याधः स्थितस्य ममान्तिकम् भवताऽऽगन्तव्यम्' इति नृपं वावचांचक्रे। तदाकर्ण्य 'बाढम्, एवं करिष्यामि' इति महीभुजोक्तः क्षान्तिशीलः श्रमणो जरीहृष्यमाणो निजागारमार[4]।

अथ निर्दिष्टायां चतुर्दश्यां महासत्त्वो भूभुक् भिक्षवे प्रतिपन्नां प्रतिज्ञां सास्मर्यमाणः[5] परिहितनीलवसनः, खड्गहस्तः, शाशय्यमान[6]-सर्वजनपरिजनराजधानीतो निर्गत्य निविडध्वान्तव्रातमलीमसां वावाश्यमान[7]कौशिकाम्, रेरीयमाण[8]वृकाम्, रोरूयमाणपरिडोढौक्यमानजम्बुकाम्, परितोत्रौक्यमानश्वापदचङ्क्रम्यमाननिखातशवाम्, जेघ्रीय्यमाण[9]-देध्मीयमान[10]शववसामगन्धाम्, चित्यालोकालोलोक्यमानाश्वत्थशाखिशाखावटबन्धाम्, क्वचित् संचेस्कीयमाणकफेरुकुलचोकुष्यमाणकुणपसनीस्रस्यमाना[11]न्तरन्त्राम् अन्यत्र जंजप्यमान[12]कापालिक-सासाध्यमानमन्त्राम्, श्मशानभूमिमवाप्तवान्। जगाद च तत्रोपसृत्य वटतरोरधस्तिष्ठन्तं भिक्षुम्, 'भिक्षो, एषोऽहमागतः, समाचक्ष्व कस्यां काष्ठायां तेष्ठीयै, कान् वा तव साधनविघ्नभूतान् त्वन्निघ्नो जेघ्नीयै[13]'? इत्थमुक्तो हृष्टियुक्तो भिक्षुरुवाच, 'राजन्, प्रसन्नश्चेदितो दक्षिणामुखं विदूरं गत्वैकाकिनि शिंशपातरौ समुल्लम्बितस्थितं मृतमेकपुरुषमिहानीय साहाय्यं मे विदेधीयस्व। तन्निशम्य 'तथास्तु' इति निजस्वीकृतिं देदीयमानः सत्यसङ्गरो राजा दक्षिणां दिशमवलम्ब्य समुपात्तप्रदीप्तचितालातलक्षितेन पथा गत्वा कथंचित्तं शिंशपातरुमवाप्य चिताधूमसमलीमसस्य भूतस्येव तस्य तरोः स्कन्धे लम्बमानं तं शवं समारूढतत्तरुश्छिन्नरज्जुं भूमावपातयत्। पतितमात्र एव च स शवोऽकस्माद् व्यथित इवोच्चैः अकोकूयत[14] इति दयालू राजा जीवशङ्कया ततोऽवरुह्य तदङ्गानि प्राम्राक्षीत्। तेन च शवोऽट्टहासम् अजाहस्यत। एतेन राजा वेतालाधिष्ठितं तं मत्वा कथमेवं चाकख्यसे,

---

१. 'रीङ्ऋतः', 'गुणो यङ्लुकोः'। २. 'न वशः'। ३. 'नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्'। ४. ऋच्छतेर्लिट्। ५. 'यङि च', 'दीर्घोऽकितः'। ६. अयङ् यि क्ङिति'। ७. वाश्रृ शब्दे। ८. री गतिरेषणयोः (रेषणं वृकशब्दः)। ९–१०. 'ई घ्राध्मोः'। ११. 'नीग्वञ्चु०'। १२. 'जपजभ०'। १३. 'हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः'। १४. कुङ् शब्दे 'न कवतेर्यङि' कवतेरिति शपा निर्देशादादादिकयोर्न।

एहि गच्छावः' इति यावन्निर्भयोऽभिधत्ते तावद् वैतालव्यापारितः स शवो भूमावदृश्यो भूत्वा तस्मिन्नेव तरौ पुनर्लम्बमानोऽदृश्यत। त्रिविक्रमसेनस्तं शवमवतारयितुं पुनस्तं वृक्षमध्यरुक्षत्। ततस्तमवतार्य वैतालाविष्टं तं स्कन्धे चारोप्य मौनेन गन्तुं प्रचक्रमे। यान्तञ्च तं शवान्तःस्थो वैतालो ललाप यन्मां बेभ्रीयमाणस्त्वमध्वनि शंश्रम्यसे इत्यध्वश्रम-यँय्यँमां[1] यथा त्वं यायाः एतदर्थं कथामहमेकां त्वां वर्णयामि—[ इति यङन्तप्रक्रिया ]

आसीत् पुरा पुरारिवसत्यां वाराणस्यां निजप्रतापानलनिर्दग्धसपत्नकुलकाननः प्रतापमुकुटो नाम राजा। तस्य रूपशौर्याभ्यां स्मरारिजनदर्पदलनो वज्रमुकुटो नाम तनयो बभूव। स च राजपुत्रः पितृभ्यां स्वविभवानुरूपं चेकीय्यमानः[2] सौन्दर्येण शरीरेण च शुक्लपक्षे शशीव सातिशयं शोशूयाञ्चक्रे[3]। तस्य च राजपुत्रस्य स्वशरीरादप्यधिकप्रियो महामतिः, बुद्धिशरीराख्यो मन्त्रिपुत्रः सखा समजायत। स चैकदा नृपात्मजस्तेन सख्या चेक्रीडयमानो मृगयातिप्रसङ्गतोऽतिदूरमध्वानं गतो निजशरैः शटालानां सिंहानां शिरांसि शौर्यश्रीचामराणीव वरीवृश्च्यमानो घनवनमेकमविशत्। तत्र च स बम्भण्यमानभ्रमरकुलपेपीय्यमानविकसत्सरसकुसुमरसे, सास्यन्द्यमानसल्लकीनिस्यन्दनिसेसिच्यँमानरसेऽवने वने, लताप्रतानैः वेवीय्यँमानेषु तरुगुल्मेषु सेसिम्यमानानां नानाविधशकुन्तानां, कालपरिपाकेन च वियोगिहृदयेष्विव पम्फुल्यँमानेषु फलेषु चञ्चूर्यमाणानामारक्तचञ्चुचुञ्चूनां चटकाचटुलचण्डुलादीनां श्रुतिसुखकरविरावैः जेह्रीयमाणमानसः सुचिरं व्यचरत्।

प्रियापार्थक्ये ( यङ्लुगन्त-प्रक्रिया )

तस्मिन् वने सवयस्यस्तथा विचरन्नेव स राजपुत्रोऽपरसागरे इव विस्तृते स्वच्छकाचविमलापे, इन्दीवरकुवलयकह्लारोत्पत्तिस्थाने, वनसीम्नि वर्तमाने सरोवरे स्नानार्थमागतां दिव्यां कन्यामेकां ददर्श। सा च स्वकीयलावण्यनिर्झरेण सरोवरं

---

१. यम उपरमेऽस्माद् यङि 'नुगतोऽनुनासिकान्तस्य' ततः 'अप्रत्ययात्' इति अप्रत्यये, टाप्। [ इति यङन्तप्रक्रिया ]

( यङ्लुगन्तप्रक्रिया )

२. चायृ सन्तानपालनयोः 'चायः की'। ३. 'विभाषा श्वेः'। ४. 'सिचो यङि'। ५. 'स्वपिस्यमिव्येञां यङि'। ६. 'चरफलोश्च', 'उत्परस्यातः'।

परिपि[1]परती, दृष्टिपातैश्चाभिनवमुत्पलवनमिव सरी[2]सृजती, जितेन्दुना मुखेनाम्बुजानि प्रत्यादेदिशती इव राजपुत्रस्य मनोऽजर्ह[3]रीत्। प्रविशति यूनि तस्मिँस्तत्र विलासच्छद्मना स्वदेशाद्याख्यातुं सा संज्ञाश्च अचरीकरीत्। तथाहि—पुष्पशेखरादुत्पलं गृहीत्वा सा कर्णे अचरीकारीत्। दन्तरचनाञ्चोत्पलेन व्यदाधात्। शिरसि साकूतं पद्मं हृदये च करम् अदादाधीत्। तथापि राजपुत्रो न तस्याः सङ्केतम् अजाग्रहीत्। बुद्धिमान् बुद्धिशरीरस्तु अबोबुधीत् तदानीं सर्वम् इति स तस्या निवासादिविषये सर्वं निश्चेचयाञ्च[4]कार।

क्षणाच्च सा कन्या तदनुगैस्ततो नीता किन्तु स्वगृहमवाप्य पर्य्यङ्कस्थिता सास्व[5]पती अपि न तन्नृपात्मजनिहितचित्ता विश्रामम् अलालम्भीत्। राजसुतोऽपि समवाप्तनिजनगरीको भ्रष्टविद्यो विद्याधर इव तां विना कृच्छ्रां दशाम् अन्वबोभूवीत् इति तस्यैतामवस्थामवलोक्य रहसि तत्कारणं मन्त्रिपुत्रो बुद्धिशरीरः अपा[6]प्रट्। अभिव्यक्ततत्कन्यानिमित्तकदुःखश्च तदानीं राजपुत्रो मित्रेण भृशमाश्वास्यमानः अजागदीत् 'यस्या नाम, ग्रामोऽन्वयो वा न ज्ञायते सा कथं प्राप्येति किमर्थं त्वं मृषा मामाश्वासयितुं प्रयायसीषि नाहमेतावान् भाग्यवान् यद्विधिर्मह्यं तादृश्यास्तस्याः साक्षात्कृतिमपि वितातीर्तात् किमुतान्यत् इति। राजपुत्रेणेत्थमुक्तो मन्त्रिपुत्रोऽकथयत् यत्सङ्केतेन सा सर्वम् असोसूचीत् इति कथं भवता साऽज्ञातनामान्वयग्रामेत्युच्यते; तथाहि—कर्णे उत्पलं यत्तया न्यस्तं तेनैतत्सूचितं यत्तस्या निवासः कर्णोत्पलस्य राज्ञो राष्ट्रे वर्वृतीति। तया या दन्तरचना कृता तयैतत्कथितं यदहं दन्तघाटकस्य कन्याऽस्मीति। समुत्तंसितपद्मा च सा 'पद्मावती' इति स्वनाम असुसूचत। एवं हृदयसमर्पितहस्ता सा एतदुक्तवती यत्त्वयि मम प्राणा वर्तन्ते इति। अत एतेन सर्वेणैतत्समायातं यत् कलिङ्गदेशे विख्यातो यः कर्णोत्पलो नृपस्तद्दन्तघाटकस्य सङ्ग्रामवर्धनाख्यस्येयं जगद्विख्याता, प्राणाधिकप्रिया पद्मावतीनामा कन्या। लोकतो हि सर्वमेतदहम् अशोश्रविषम् इत्यखिलं वेवेद्मि। अत एव च तद्देशादिशंसिनीं संज्ञामवागच्छम्। नाहं त्वां वनीवञ्चीमि, मा मदीयां गिरमतो मृषा त्वं जाँगृढि, मा चात्मभाग्यं जर्गृढि[8]। प्रात-

---

१. पॄ पालनपूरणयोः; 'गुणो यङ्लुकोः' 'दीर्घोऽकितः' 'नाभ्यस्ताच्छतुः'। २. 'रुग्रिकौ च लुकि'। ३. 'ऋतश्च', 'यङो वा'। ४. 'विभाषा चेः'। ५. लुका लुप्ते प्रत्ययलक्षणाभावात् 'स्वपिस्यमि'—इत्यस्याप्रवृत्तिः। ६. प्रच्छ ज्ञीप्सायाम्। ७. ग्रह उपादाने। ८. गृहू गर्हणे।

रवधि केवलं विस्रब्धस्त्वं वर्वृद्धि ततो यथोपायं सर्वं सम्पादयिष्ये। मन्त्रिपुत्रेणेत्थ-मुक्तो राजसुतः अतीतोट्, समुपलब्धोपायश्च अमोमोत्।

परेद्युर्मन्त्रिपुत्रकृतमन्त्रणोऽश्वारूढो राजपुत्रः प्रियार्थी मृगयाव्याजेन स्वमन्दि-रान्निर्गत्य पुनस्तां दिशमुद्दिश्य स्वाश्रमशिश्रयत्। मध्येमार्गञ्चोन्द्भूतवातूलविवेवि-[1]क्तसैनिको मन्त्रिपुत्रैकसहायः सन् कलिङ्गविषयं प्राप। तत्र तौ राजसुतमन्त्रिपुत्रौ कर्णोत्पलमहीभृतो नगरे तस्य दन्तघाटकस्य भवनमन्विष्य तददूरे एव एकस्या वर्षीयस्या योषितो गृहं प्राविशताम्। तत्र प्रदत्ताम्बुयवसाश्वौ निभृतस्थलेऽ-वस्थाप्यैकत्र स्थिते च राजपुत्रे मन्त्रिपुत्रो वृद्धां जगाद, 'अप्यम्ब, सङ्ग्रामवर्धनं दन्तघाटकं जानासि ?' तदाकर्ण्य सा जरद्योषिज्जगाद, 'आम्, अहं तस्य दुहितुः पद्मावत्या धात्रीति सर्वं तत्परिवारं सम्यग्वेद्मि। किन्तूपहतवसनमिदानीमहं विभर्मीति नाहं तदन्तिकं गन्तुं जाहर्मि[2]। एतदाकर्ण्य स्वकीयोत्तरीयादिदानेन तां सन्तोष्य मन्त्रिपुत्रः पुनरब्रवीत्, 'मातः, यदहं प्रार्थये तद्गुप्तं सम्पाद्यास्म-त्साहाय्यं चर्कृहि। दन्तघाटकसुतां पद्मावतीं गत्वा त्वमेवं वद 'यो राजपुत्रः सरसि त्वया जरीगृधयाऽदरीदृश्यत त्वद्धृद्दरीशयहरीभूतोऽसावत्र वरीवृतीति। किञ्च, यदा प्रभृत्येव सरसि त्वं प्रेमदृष्ट्या तम् अवर्वरीः[3], हृदयेन च अजर्घाः[4], तदा प्रभृत्येव स रमणीरूपत्वज्जागाधा[5]ऽनङ्गबाधाऽगाधार्णवनिमग्नो निजजर्गृहाम-प्यात्मतोष्टूयारूपेण जाग्रहीति। त्वन्नामसास्येन पद्मास्तरेऽपि मोमोर्ति[6]। कर्पूरा-गुरुशीरादिशीतोपचारेणापि न शान्तिम् अधिजङ्गमीति। अनुनेनीयमानोऽपि न किञ्चिच् चक्षुरीति इति तस्य दशाया दादयती त्वां सूचयितुमहमिहायाता। प्रणोनवीमि, तथाऽचिरं चरीकृहि येन तव संयोगेन सवामः कामोऽपि तं पास्प-र्धात्' इति। एतदाकर्ण्य दानवशीकृता सा वृद्धा पद्मावतीपार्श्वं गत्वा क्षणानन्तर एव कर्पूरलिप्तपाणिद्वयाङ्गुलिचिह्नितोभयगण्डा, परिभवोद्विग्ना रुदती प्रत्यावर्तत। पृष्टा च सती जगाद यदितो गत्वा गुप्तं युष्मदागमनं मया तस्यै निवेदितम् तेन च तया निर्भर्त्स्य द्वाभ्यां पाणिभ्यामहमाहतेति जाहेति न तदङ्गुलिमुद्रा अद्यापि मदीयगण्डौ इति। तयैवमुक्ते सति नैराश्यविषण्णं तं नृपात्मजं महाप्राज्ञो

---

१. विचिर पृथग्भावे। २. हर्य गतिकान्त्योः ( कान्तिरिच्छा शोभा च )। ३. वृञ् वरणे। ४. गृधु अभिकांक्षायाम्। ५. गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च, अप्रत्यये, टाप्। ६. मुर्च्छा मोहसमुच्छ्राययोः, 'राल्लोपः', तिबादीनामनार्धधातु-कत्वात् 'न धातुलोप आर्धधातुके' इत्यस्याप्रवृत्तिः।

मन्त्रिपुत्रो जनान्तिकमुवाच, 'मा विषादमाधिं वाऽधिजङ्गहि[1], मन्त्रं रक्षन्त्या तया निर्भर्त्स्य अस्या वक्त्रे दशाङ्गुलीर्निपातयन्त्या सूचितं यद्वलक्षपक्षीया इमा दश रात्र्यः सङ्गमानुचिता इति प्रतीक्ष्याः । इत्थमाश्वासितराजसुतो मन्त्रिसुतश्च विपणिविक्रीतस्वाधिकृतकिञ्चित्स्वर्णोपलब्धधनेन वृद्धया महार्हं भोजनं साधयित्वा तया सहोभावभुञ्जाताम् ।

अथो व्यतियापितदशदिनो मन्त्रिपुत्रो जिज्ञासार्थं पुनरपि वृद्धां पद्मावत्यन्तिकं प्रेषितवान् । मिष्टान्नपानादिलुब्धा सा तदनुरोधतः पुनः पद्मावत्या वासगृहमभ्युपेत्य तूष्णीं स्थितापि तदवस्थामपराधरूपेण गणयन्त्या तया सालक्तकाभिस्तिसृभिरङ्गुलिभिः उरस्यभिहता तदन्तिकादायाता । ताञ्चावलोक्य मन्त्रिसुतो राजसुतमब्रवीत् 'एवं जातेऽपि मान्यथैतज्जागृढि; विन्यस्तसालक्ताङ्गुलिमुद्रात्रयया तयेत्थं सूचितं यत्तिस्रो निशाः सरजस्काहमित्येता अपि प्रतीक्षया वेवीय्यन्ताम्[2] इति । [ इति यङ्लुगन्तप्रक्रिया ]

त्र्यहे गते मन्त्रिपुत्रस्तां वृद्धां पुनः पद्मावत्यै प्राहैषीत् । सा च तदानीं तन्मन्दिरमवाप्ता सम्मानपूर्वकं प्रीत्या सम्भोजिता पानलीलादिभिर्दिनं विनोदिता सातिशयम् असुखायत[3] । सायञ्च यावत्सा वृद्धा गृहं गन्तुं सुमनायते[4] तावत्तत्र्यालोकाः भयानकं बहिर् अशब्दायन्त[5] यदलानाद्भ्रष्टो मत्तहस्ती जनान् मथनन् धावतीति । तदाकर्ण्य पद्मावती वृद्धामेवमभाषत यद्धस्तिरुद्धमार्गेण तव गमनं साम्प्रतमसाम्प्रतम् । अतः पीठिकायां समुपस्थाप्य बृहद्गवाक्षबद्धालम्बितरज्जुका त्वां ततः प्रक्षिपामि । एवं गृहोद्यानं प्राप्य वृक्षमसुमारुह्य विलङ्घितादःप्राकारा स्वगृहं गच्छ । एवमुक्त्वा सा चेटीभिर्गवाक्षेण तां वृद्धां रज्जुपीठिकया

प्रियापार्थक्ये
( नामधातुप्रक्रिया )

---

१. 'अनुदात्तोपदेश०' इत्यनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् । २. अज गतिक्षेपणयोः, यङन्ताद् यक् , अस्य यङ्लुक् नास्ति; आर्धधातुके इति विषयसप्तमी तेन यङि विवक्षिते एव व्यादेशः । यङो लुकापहारे तु विषयत्वाभावेन 'अजेर्व्यघञपोः' इत्यस्याप्रवृत्तेः ।

( इति यङ्लुगन्तप्रक्रिया )

❀ नामधातुप्रक्रिया ❀

३. 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङ् । ४. 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' । ५.'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' ।

वहिरचीकरत्। सा चापि यथोक्तेन पथा गत्वा राजपुत्राय मन्त्रिसुताय च यथा-वत्सर्वं वेदापयति[1] स्म इति चतुरो मन्त्रिपुत्रो राजपुत्राय सर्वं तदित्थम् अर्थापयति[2] स्म यत्तवेष्टं सिद्धम्, तया हि युक्त्या मार्गः प्रदर्शितः अतस्त्वमद्य प्रदोषे एतेनैव पथा तस्याः प्रियाया मन्दिरं प्रविश। तेनेत्थमुक्तो मन्त्रिपुत्रयुक्तो राजपुत्रो बृद्धा-निर्दिष्टेन तेन प्राकारवर्त्मनोद्यानमागत्योपरिष्टान्मार्गोन्मुखीभिश्चेटीभिरधिष्ठितां लम्बमानां सपीठिकां रज्जुमवलोक्य तदारूढो दासीभिराशूत्क्षिप्तरज्जुः प्रियान्तिकं प्रापितः। तस्मिँश्च तत्र प्रविष्टे मन्त्रिपुत्रः स्वावासं प्रत्याययौ, राजपुत्रश्च हर्म्या-भ्यन्तरवर्तमानां पद्मावतीं रूपयाञ्चकार[3]। सा चापि तमवलोक्य चिरौत्सुक्योचितैः कण्ठग्रहादिभिस्तैस्तैरनुभावैस्स्वान्तःप्रेमभावमभिव्यानञ्जेति गान्धर्वेण विधि-नोढया तया कान्तया सह पूर्णच्छो राजपुत्रो गुप्तं तत्र तस्थौ।

अथ गतेषु केषुचिद्दिवसेषु एकदा रात्रौ राजपुत्रः पद्मावतीमेकान्ते मन्त्रयाञ्च-कार यन्मया सहागतो मम सुहृन्मन्त्रिपुत्रस्तव धात्रीगृहे एकाकी तिष्ठतीतीह चिरयति[4] मयि स दुःखायिष्यते[5] अतः इदानीमहं तदन्तिकं यामि सम्भाव्य च तं पुनरिहागमिष्यामीति। एतदाकर्ण्य तद्वियोगचिन्तया दोदूयमानापि पद्मीमृदूय[6]-माना सा धूर्ता पद्मावती प्रियमुवाच, 'आर्यपुत्र, मया कृतास्ताः संज्ञास्त्वया ज्ञातास्तव मित्रेण तन्मन्त्रिपुत्रेण वेति मां विज्ञापय। तन्निशम्य राजपुत्रो न्यगदीद् यन्मया तैः सङ्केतैर्न किञ्चिद् ज्ञातमपि तु त्वदर्थं दोदुःख्यमानं मामवलोक्य भृशमाश्वासयन् स मम सुहृदेव सर्वं त्वत्सङ्केतितं सविस्मयमस्मँयति[7] स्म। एतदाकर्ण्य सा जगाद, 'एवं विलम्बेन तद्विषये कथयता त्वयाऽनुचितमाचरितम् यतो हि स ते सखेति मम भ्राता। अतस्ताम्बूलदानादिना स सर्वथा परिचरि-तव्य आसीत्।' एवमुक्तवत्या तयाऽनुमतो राजपुत्रः पूर्वपथेन सख्युरन्तिकमाजगाम तत्कृतं संज्ञाविज्ञानञ्चानुषङ्गतस्तं सूचयाञ्चकार। न स किन्तु तस्मिन् विशश्वास।

परिणतिं गते दिवसे, निर्वृत्ते च तयोः सान्ध्ये विधौ, सायं पद्मावत्याः सखी स्वहस्तोपात्तसपक्वान्नताम्बूलपात्रा तत्राजगाम। पृष्टमन्त्रिपुत्रकुशला च सा

१-२. 'अर्थवेदयोरप्यापुग्वक्तव्यः'। ३. रूपं ददर्शेत्यर्थः 'सत्यापपाशरूप०'। ४. चिरं कुर्वति, 'तत्करोति तदा चष्टे'। ५. सुखादिभ्यः कर्तृवेदनायाम्। ६. 'कर्तुः क्यङ् सलोपश्च' इत्याचारे क्यङ्। ७. 'अस्मदो द्वयोश्च' इति नियमेन मामाचष्टे स्मेत्येकत्वविवक्षायाम् अस्मान् आचष्टे स्मेति बहुवचनान्तविगृही-तादस्मच्छब्दाद् धात्वर्थविवक्षायां णिचि टिलोपः।

युक्तितो राजपुत्रस्य भोजनं निषेद्धुं भोजनपानादिषु तदागमं प्रतीक्षमाणां स्वस्वामिनीमावेद्य सद्योऽपद्यत।

गतायां पद्मावतीसख्यां मन्त्रिपुत्रो राजपुत्रमवदत्, 'देव, कौतुकमहमेकं त्वां दर्शयितुमिच्छामि तत्त्वं पश्य।' एतदुक्त्वैकं पक्वान्नं तत्रामत्रादुद्धृत्य सारमेयाय प्रादात्। तच्च स जग्ध्वैव व्यपद्यत। एतदवलोक्य चित्रीयमाणचेतसा[1] राजपुत्रेण तत्कारणं पृष्टः पटिष्ठः मन्त्रिपुत्रोऽभाषत, यत्संज्ञाज्ञानेन धूर्तं मामवगत्य त्वदनुरक्ता सा मत्तितृक्षया त्वदनुजिघृक्षया च विषेणान्नं मिश्रयित्वा मदर्थमिह प्रहिण्वती त्वाञ्च भोजनादिग्रहणाय तत्राकारयन्तीत्थं चिन्तयति यदेतस्मिन्नसति राजपुत्रो मद्यन्[2] मम वशंवदो भवेत्। सति चैतस्मिन्नेतद्वशगो मां मुक्त्वा स्वनगरीं परावर्तेत। अतः परित्यक्तमन्युस्त्वं मदुक्तयुक्त्याऽस्या हरणे मतिं कुर्याः। एवमुक्तवन्तं मन्त्रिपुत्रं यावत्स राजपुत्रः सत्यं बुद्धिशरीरस्त्वम् इत्थं प्रशंसति तावत् 'हा! राज्ञो बालः सुतो विपन्न' इति दुःखितजनारवो बहिरश्रूयत। तच्छ्रुत्वातिहृष्टो मन्त्रिपुत्रो नृपात्मजं जगाद यदद्य निशि त्वं पद्मावत्या गृहं गत्वा मध्वस्यन्तीं[3] तां मधु धापयेः। तत्पानमदेन च सा नष्टचेष्टा, निस्संज्ञा गतजीवेव यावत्तिष्ठति तावत्तस्याः कटीतटमग्नितप्तेन मद्दत्तेन शूलेनाङ्कयित्वोपात्ततदाभरणसञ्चयोऽवलम्बितरज्जुर्विनिर्गतो गवाक्षेण बहिरागच्छेः। ततः परं यथा भद्रं भवेत्तदहमभिधास्यामि। एवमुक्त्वा मन्त्रिपुत्रः कारितशूकरशावकसंकाशाश्रिकायसकुटिलकर्कशं शूलं राजपुत्राय ददौ। राजपुत्रश्च गृहीततच्छूलो निशि पूर्ववत्पद्मावतीगृहमवाप्य मद्यनिश्चेष्टां तां शूलेन जघनेऽङ्कितां हृतालङ्काराञ्च विधाय सख्युरन्तिकमागतस्तस्मै प्रदर्शिताभरणो यथाकृतं शशंस। मन्त्रिपुत्रोऽपि च तेन तदीप्सितं सिद्धं मत्वा गत्वा च प्रातः श्मशानं कृततापसवेषो राजसुतं स्वशिष्यं विधाय तमब्रवीत्, 'अलङ्कारेष्वेषु मुक्तावलीमादाय विचिक्रीषया त्वमापणं व्रज, बहुवस्त्राञ्चेमां वद; येन प्रदर्श्यमानामिमां चिक्रीषुः सर्वो जनो विलोकयेत् न किन्तु कश्चिदेनां गृह्णीयात्। पुररक्षिभिश्च चौररूपेण निगृहीतस्त्वं वदेर्यन्मदीयेन गुरुणा विक्रेतुमियं मह्यं प्रदत्तेति।

मन्त्रिसुतेनेत्थं प्रेषितो राजसुतो धृतमुक्तावलिरापणे भ्राम्यन् दन्तघाटक-

---

१. 'नमोवरिवश्चित्रङः क्यच्'। २. माम् इच्छन्, अस्मच्छब्दात् 'सुप आत्मनः क्यच्' इति क्यचि 'प्रत्ययोत्तरपदयोश्च'। ३. मधु इच्छन्तीम्, 'सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ'।

सुताऽऽज्ञापितैश्चौरगवेषिभिरधिकारिभिर्निगृहीतः तत्क्षणमेव नगराध्यक्षसमक्षमा-नीतः। तैश्च दन्तघाटककन्यायाः निशि हृतेयं मुक्तावली कुतो लब्धेति पृष्टो वेषेण तापसः स राजपुत्रोऽवादीत् यन्मह्यमियं मदीयेन गुरुणा प्रदत्तेति स एवैतद्विषये पृच्छ्यताम्। तदाकर्ण्य तदधिकारिणस्तमुपेत्य पप्रच्छुः, 'भगवन्, मुक्तावलीयं कथं तव शिष्यहस्ते गता ?' तन्निशम्य स धूर्तो रहसि रहस्यं तस्याभाषत यत्तपस्वी अहमरण्येषु सदैवेतस्ततो भ्राम्यन् दैवादिहाद्य निशि श्मशानमाश्र्ययिषम्[1]। क्षणं स्थितश्चेतस्ततः समागतं योगिनीगणमहमपश्यम्। तन्मध्ये एका योगिनी समानीतं कञ्चिद्राजपुत्रं समुद्घाटिततद्धृत्कमलं भैरवायोपहारीकृतवती। ततो मधुपानोन्मत्ता सा मामवलोक्य विविधान् कामुकीभावानभिव्यञ्जयन्ती, समुल्लसती, अश्वस्यन्ती[2] वडवेव मामुपगत्य जपतो मेऽक्षमालिकां मत्तोऽपाजिहीर्षतेत्यतिक्रुद्धेन मया सा जवनस्थले मन्त्रप्रज्वालितायसशूलेनाङ्किता, तस्याः कण्ठान्मयेयं मुक्तावली चाहृतेति तापसानर्हा सा मम विक्रेया वर्तते।

एतन्निशम्य पुराध्यक्षो गत्वा सर्वं तद्वृत्तं व्यजिज्ञपत्। भूपोऽपि च तदानीमेकामाप्तवनितां दन्तघाटकसुताजवनस्थलमवलोकयितुं प्रेषितवान्। परावर्तितायाश्च तस्या मुखात्सत्यं तज्ज्ञात्वाऽ'नयैव डाकिन्या मदीयः सुतो ग्रस्त' इति समुत्पन्नमतिर्मन्त्रिपुत्रतपस्विनः समीपे स्वयमेव गत्वा पृष्ट्वा च तत्कथनेन सुतावियुक्तिदुःखोद्वाष्पायमाणचक्षुर्भ्यां[3] पितृभ्यां शोच्यमानामपि पद्मावतीं पुरान्निरवासयत्। सा चैवं निर्वासिताऽप्यटव्यां वर्तमाना तत्सर्वं मन्त्रिपुत्रकृतमुपायं सम्भाव्य प्राणान्न जहाविति दिनान्ते परित्यक्ततापस-शिष्यवेषौ मन्त्रिपुत्रनृपात्मजौ समारूढाश्वौ मार्गे शोचन्तीं तामुपेत्य समाश्वासनपूर्वकं तुरगे समारोप्य स्वराष्ट्रे नीतवन्तौ। तत्र च तया निर्वृतो राजसुतः ससुखं तस्थौ। दन्तघाटकस्तु व्यतिकरेणैतेनारण्ये स्वसुतां श्वापदाशितां मत्वा यवीयांसमपि तं ज्यापयता[4], दवीयांसमपि तन्मृत्युं नेदयता[5], प्रतिदिनञ्च कन्यावियोगजन्यदुःखं द्राघयता[6] महता शोकेन व्यपादि[7], तद्भार्या च तमन्वगमत्।

---

१. श्रयतेर्लुङ्। २. 'अश्वक्षीर०' 'अश्ववृषयोर्मैथुनेच्छायाम्'। ३. 'बाष्पोष्मभ्यामुद्वमने'। ४. वृद्धं कुर्वतेत्यर्थे णाविष्ठवद्भावे 'वृद्धस्य च' इति ज्यादेशः। ५. अन्तिकं कुर्वतेत्यर्थे णाविष्ठवद्भावे 'अन्तिकबाढयोर्नेदसाधौ'। ६. 'प्रियस्थिरस्फिर०' इति दीर्घस्य द्राघादेशः। ७. 'चिण् ते पदः'।

आख्यातैतत्कथो वैतालो नृपमब्रवीत्, 'त्वं हि बुद्धिमतां श्रेष्ठः पुरुषः इति दम्पत्योरनयोर्मरणे किं मन्त्रिपुत्रोऽपराध्यति राजपुत्रो वा तत्र हेतुरुताहो पद्मावत्यास्तत्र वर्ततेऽपराध इति संशयं मेऽपनयस्व। जानानोऽपि यदि तत्त्वं त्वं न वदिष्यसि तदा शिरस्ते शतधा स्फुटिष्यति'[1]।

एवमुक्तवन्तं तं त्रिविक्रमसेनो वैतालं जानानः शापभियैवमवोचत्, 'योगेश्वर, न किमप्यत्र दुर्विज्ञेयं वर्तते; नापि चान्यतमस्यापि तेषां त्रयाणामत्र वर्तते पातकमपि तु राजा कर्णोत्पल एवात्रापराध्यति। यतो हि प्रभुकार्यं कुर्वन्मन्त्रिपुत्रो नात्रासत्त्रायत[2]। पद्मावती-राजपुत्रौ च कामशराग्निना सन्तापिताविति स्वार्थसाधनोद्यतौ अविचारार्हौ निर्दोषौ। राजा कर्णोत्पलस्तु धूर्तचरितेङ्गिताद्यजानानो नीत्यनभिज्ञ इति निजप्रजानां तत्त्वगतिमनवगत्य निर्विचारं यत्पद्मावतीं निरवासयत्तेन न सोऽपराधभागिति निर्विचिकित्सम्'।

नृपमुखादेवं समीचीनमुत्तरमाकर्ण्य तत्क्षणमेव नृपस्कन्धादुत्तीर्णः स वैतालो वै तालोत्पतत्पतत्रिभिश्शालोद्धूनितशाख-सनसनायमान[3]-सदागतिना सहाप्रतर्क्योऽपरिलक्षितश्च क्वापीयाय।

एवमन्तर्हिते वैताले पुनरपि भूपतिरमुमन्वेषिषिषुस्तच्छिंशपापादपान्तिकमाजगाम। यावच्च स त्विताालोकवशात्तत्रावलोकयति तावत्पूर्ववदेव भूतले पतितं कुवन्तं शवमवालुलोके इति शवान्तर्भूतं तं वैतालं पुनरपि भूपो यदा निजस्कन्धे समारोप्य तूर्ष्णीं जवाद्गन्तुं प्रववृते तदा स वैतालः स्कन्धाद्भूयस्तं नृपमब्रवीत्, 'राजन्नेवं गच्छन् त्वं महान्तं क्लेशमनुभवसीति तव मनोविनोदायाध्वश्रमापनोदाय च कथामेतां त्वां कथयामि—

'आसीत् कलिन्दनन्दिनीकूले ब्रह्मस्थलनामको ग्रामः। तत्राग्निस्वामीनामकः एकः श्रोत्रियो ब्राह्मणो न्यवसत्। अपुत्रः स पुत्रीयन्नपि[4] पुत्रीयन्नन्तेवासिनः[5] सुसन्तुष्टः स्वमठिकायामेवाब्प्रायाम्, अप्रासादीयत्[6]। सन्ततिकाम्यतः[7] तस्य कालक्रमे-

---

१. 'गाङ्कुटादिभ्यः'—इति ङित्वम्। २. 'सत्रकक्षकष्ट०' इति सत्रशब्दात् पापार्थे क्यङ्। ३. सन-सन-शब्दादव्यक्तानुकरणे डाचि, 'लोहितादिडाज्भ्यः क्यष्', 'वा क्यषः' इति वैभाषिकस्तङ्। ४. 'सुप आत्मनः क्यच्'। ५. 'उपमानादाचारे'। ६. 'अधिकरणाच्चेति वक्तव्यम्'। ७. 'काम्यच्च' इति काम्यच्प्रत्ययान्ताच्छतृप्रत्ययः।

णातिसुन्दरी मन्दारवतीनामकन्याऽजनि या स्वालौकिकसौन्दर्याधरीकृतविधिपूर्व-विनिर्मितसृष्टिर्यौवने, यौवनेऽसपत्नीयत[1]। सञ्जातख्यातिनि च तदभूतपूर्वसौन्दर्ययशसि दिशि दिशि, कान्यकुब्जतस्तत्रायाताः सर्वगुणसम्पन्नास्त्रयो ब्राह्मणपुत्रास्ताम् औढीयन्[2]। किन्त्वेकस्मै प्रदानेन शेषावात्महत्यां मा कुर्वीयातामिति भीतोऽग्निस्वामी न कस्मैचिदपि तेषु यौवनसौन्दर्योदयां दयाञ्चके मन्दारवतीम् इत्यविवाहितायामेव स्थितायां तस्यां तत्र ते त्रयो ब्राह्मणा अपि तद्वक्त्रचन्द्रासक्तचकोरदृष्टयो न्यवसन्।

अतर्कितघटनासंघटनपटीयान् किन्तु विधिर्हि वलीयान्। अस्यैव च बलेन क्लीवमानो[3]ऽपि ओजायते[4]। बालिशोऽपि विद्वस्यते[5]। दरिद्रदपि राजानति[6]। अयमेव च सर्वनाशकीनाशपाशबद्धमपि विपाशयति[7]। तिर्यञ्चं सध्र्यायति[8]। सध्र्यञ्चं तिरीयति[9]। दरिद्रं श्रीयति[10] श्रीमन्तञ्च दरिद्रयति[11]। अस्यैव बलेन सुदिनमपि दुर्दिनायते[12], दुर्दिनं सुदिनायते। वीतरागतयाऽपरिगणितशीतवातातपः, आत्मविकाशापसारिताज्ञानध्वान्तस्वान्तः तपस्यन् अप्येतत्प्रेरितो जनो दुर्जन इव कामिनीकाञ्चनकामनाकृष्टः कष्टायते[13]। त्रैलोक्यनाथानामपि नाथोऽयं स्वहस्तोपात्तनाथं नाथहरिमिव प्राणिमात्रं यथेच्छं चालयति, उत्थापयति, उपवेशयतीति कश्चिदिह कंसति[14] इतरः कृष्णति अपरो रामायते[15] अन्यो रावणायते। अतस्तद्विवशीकृता मन्दारवत्यपि समुत्पन्नामन्ददाहज्वरेण पञ्चत्वमगात्। एतेन तच्छोकविक्लवास्ते ब्राह्मणपुत्रास्तद्बान्धवैः समं श्मशानं नीत्वा परासुं तां स्वाभिलापाभिः सह भस्मसाच्चक्रुः। एकतमश्च तेषां विहितमठिकः, कृततद्भस्मशय्योऽयाचितोपलब्ध-

---

१. युवतीनां समूहे सपत्नीवाचरदित्यर्थः, 'कर्तुः क्यङ्सलोपश्च' इति क्यङि विवाहजन्यसंस्कारविशेषनिमित्तकेन पतिशब्देन समासे सति नित्यस्त्रीत्वात् 'क्यङ्मानिनोश्च' इत्यस्याप्रवृत्तिः। २. ऊढां विवाहितामैच्छन्। ३. 'आचारेऽवगल्भक्लीब०-' इति क्विप्। ४. ओजस्वी इवाचरति इति विग्रहे 'कर्त्तुः क्यङ्सलोपश्च' इति क्यङ् स च ओजसोऽप्सरस—इति नित्यम्। ५. 'कर्तुः क्यङ्सलोपश्च', इति क्यङि, 'नः क्ये' इति नान्तस्यैव पदत्वात् सस्य रुत्वं न। ६. 'राजा' इवाचरति, 'अनुनासिकस्य क्विझलोः क्ङिति'। ७. पाशं विमुञ्चति 'सत्यापपाश०'। ८. सध्र्यञ्चं करोति। ९. तिर्यञ्चं करोति। १०. श्रीमन्तं करोति। ११. दरिद्रं करोति। १२. 'सुदिनदुर्दिननीहारेभ्यश्च'। १३. 'कष्टाय क्रमणे'। १४. 'सर्वप्रातिपदिकेभ्यः क्विप्'। १५. कर्त्तुः क्यङ् सलोपश्च'।

भक्ष्येण प्राणिणिषत्[1]। द्वितीयश्च तदस्थीन्युपादाय भागीरथीं ययौ। तृतीयश्च शिरो मुण्डयित्वा[2] सञ्चीवरयमाणः[3] शूद्रान्नं व्रतयन्[4] देशाद्देशान्तरभ्रमणप्रसङ्गेनैकदैकस्मिन् ग्रामे कस्यचिद्विप्रस्यातिथिर्बभूव। तस्य गृहे द्विजपत्नी यदा भोजनं परिपचन्ती आसीत्तदा क्षीरस्यँस्तत्सुतो[5] रोदितुं प्रावर्ततेति भृशं सान्त्वयमानोऽपि न स यदा व्यरंसीत्तदा गृहीतबाहुर्गृहिणी तं ज्वलदग्नौ प्राक्षिपदिति क्षिप्तमात्र एव स मृद्वङ्गो बालको भस्मीभावमभजत्। एतदवलोक्य समुपजातरोमाञ्चः स तापसातिथिरचिन्तयद् यदहं ब्रह्मराक्षसवेश्मनि प्रविष्टोऽस्मीति मूर्तं किल्बिषमिवेदमीयमन्नमधुना मधुना सम्पृक्तं विषमिवात्र नाहम् अशनायामि[6]। तृषार्दितोऽपि च नात्राहम् उदन्यामि। एवं चिन्तयित्वा ततः प्रतिष्ठमानं तं प्राघुणिकं गृहस्थः प्रोवाच, 'भगवन्, अकृतभोजनो भवान् मद्भवनतो मा दयँताम्[7], मार्दयतां[8] सर्वं निजासन्तोषकारणञ्चेति'। तदाकर्ण्य तत्पत्नी-बालक-व्यतिकरमुक्तवन्तं गृहस्थः पुनरवोचत् यद् यद्येतदेव कारणं तदा जपसिद्धस्य मम मन्त्रस्य मृतसञ्जीवनीशक्तिं त्वमधुना पश्य। एवमुक्त्वा मन्त्रपुस्तिकामनुवाच्याभिमन्त्रितां धूलिं तद्भस्मनि चिक्षेपेति तद्रूप एव बालकस्तस्माज्जीवन्नुत्तस्थौ। एतेन परां निर्वृतिमवाप्तो विप्रतापसस्तत्र बुभुजे। गृहस्थोऽपि च तां पुस्तिकां नागदन्तेऽवस्थाप्य भुक्त्वा पीत्वाऽशयिष्ट।

तत्पुस्तिकामन्त्रस्यैवंभूतातिचमत्कारकप्रभावेणातिविस्मितो विप्रो गृहपतौ सुप्ते सति, प्रियाजीवितार्थी, गृहीततत्पुस्तिकस्ततो निर्गत्यातन् दग्धतत्प्रियश्मशानस्थलमवाप। गत्वा च तत्र तत्कालं तं पुरुषमवालुलोके यश्च गङ्गाम्भसि मन्दारवत्यस्थीनि क्षेप्तुं गङ्गां गत आसीत्। ततस्तत्कालं तत्र कृतमठिकं तद्भस्मनः उपरि शयानं, गङ्गातः परावर्तितं चेत्थमुभौ स जगाद यदहमात्ममन्त्रशक्त्या कान्तां भस्मतो जीवन्तीमुत्थापयामीति मठिकैषापास्यताम् युवाञ्चापसरतमिति। एवं निर्बन्धात्तावपास्य मठिकाञ्च निर्लोठ्य समुद्घाटितपुस्तको विप्रपुत्रस्तन्मन्त्रेण धूलिमभिमन्त्र्य भस्मनि प्राक्षिपदिति जीवन्ती मन्दारवती प्रतप्तकाञ्चनवर्णाभा,

---

१. उभौ साभ्यासस्य। २. 'मुण्डमिश्र०' इति णिच्। ३. 'पुच्छभाण्डचीवराण्णिङ्' 'चीवरादर्जने परिधाने च'। ४. 'व्रताद्भोजनतन्निवृत्त्योः'। ५. 'अश्वक्षीर०' इत्यनेन 'क्षीरलवणयोर्लालसायाम्' इति सहकारेण क्यच्यसुगागमः। ६. 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु'। ७. दय दानगतिरक्षणहिंसादानेषु, इत्यस्माल्लोट् ( मा गमः इति भावः )। ८. माम् आचष्टाम्।

घृतवह्निप्रविष्टनिष्क्रान्ताधिकद्युतिवपुः समुदतिष्ठत्। तादृशीं तां जातामवलोक्य तद्दर्शनमात्रेणैव स्मरातुरास्ते त्रयोऽपि अहमहमिकया तामुपयन्तुम् अकलयन्[1]। एकतमस्तेष्वेवं तस्यां स्वाधिकारम् अपप्रथत्[2] यदियं मदीया भार्या यतो हि मयैव मन्त्रबलेनेयं पुनरुज्जीविता; द्वितीयश्चैवं स्वाधिकारं तस्याम् अदद्रढत्[3] यत्तीर्थेऽस्या अस्थिप्रक्षेपेणेयं मयोज्जीवितेति मदीयैषा भार्या। तृतीयश्चैवमुक्त्वा तयोरधिकृतिम् अचकशत्[4] यदस्या भस्म रक्षित्वा तपस्यता मयोज्जीवितेति मदीयैषा भार्येति।

'एवमेनं विवादास्पदं विषयं सम्यङ्निरूप्य राजन्, कथय सा कन्या कस्य भार्योपपद्यते'। वैतालत एतदाकर्ण्य राजा व्याजहार, 'यः क्लेशमनुभूयापि तां मन्त्रेणाजीवयत् सोऽस्याः समुत्पादकत्वात् पितरति[5]। यश्च गंगामस्थीनि निनाय स सुतति[6]। यश्च भस्मशय्यामाश्लिष्य गाढानुरागावगाढो बाढं तत्रैव तपस्यन्नकुत्राप्यढौकिष्ट स एव पतयति[7]' इति।

मुक्तमौनात्त्रिविक्रमसेनादेवमुत्तरमवाप्य तस्य स्कन्धादवतीर्य वैतालोऽतर्कितः स्वपदमगच्छत्। भिक्षवर्थसम्पादनसमुद्यतो राजा च भूयोऽपि तमवाप्तुं मनो बबन्ध, यतो हि—'प्राणात्ययेऽपि प्रतिपन्नमर्थं तिष्ठन्त्यनिर्वाह्य न धीरसत्त्वाः'।

( इति नामधातुप्रक्रिया )

इति कौमुदीकथाकल्लोलिन्यां प्रक्रियानिर्देशे सप्तमः कल्लोलः।



---

१. कलिं कलहमगृह्णन्नित्यर्थे 'हल्यादिभ्यो ग्रहणे' इति सहकारेण 'मुण्डमिश्र०' इति णिच्। २. पृथुमकरोत् इति करोत्यर्थे णिच्। प्रथ प्रख्याने इति णिचि लुङि 'अत्स्मृदृत्वरप्रथ०' इति वा। ३. दृढमकरोत्। ४. कृशमकरोत्। ५. पितेवाचरति, क्विपि, शपि गुणः। ६. सुत इवाचरति। ७. पतिरिवाचरति।

( इति नामधातुप्रक्रिया )

# अथ कण्ड्वादिनिर्देशोऽष्टमः कल्लोलः

ततो वैतालावाप्तिसमुद्योगतत्परो नृपोत्तमः पुनरपि तच्छिंशपातरुमवाप्य पूर्ववदेव स्वस्कन्धोढसवेतालशवस्तूर्ष्णीं त्वरितचरणः चरणाञ्चकार[1]। प्रयान्तं च तं तत्पृष्ठगो वैतालश्चित्रीयमाणः समुवाच यदन्धतमसाच्छन्नायां तमिस्रायां यातायातं कुर्वन्नूनं त्वं तन्तस्यसि[2] इति त्वत्खेदापनोदाय भूयस्त्वां कथामेतां कथयामि—

प्रियापार्थक्ये (कण्ड्वादयः)

अस्ति भूमण्डलविख्यातं पाटलिपुत्रनामकं नगरम्। पुरा तत्र गुणगणाग्रहग्रहिलो विक्रमकेसरीनामा नृपतिर्बभूव। तस्य गृहे शक्रशापवशाद् धृतशुकशरीरो मेधायन्[3] दिव्यविज्ञानवान् सर्वशास्त्रपारङ्गमो विदग्धचूडामणिनामा शुक आसीत्। तदुपदेशेन नृपात्मजो मागधीं भार्यां चन्द्रप्रभाभिधामुपयेमे। तस्या राजपुत्र्या अपि तथैव परमविज्ञानशालिनी सोमिकानामशारिकाऽभवत्। उभे ते शुक-शारिके निजविज्ञानैर्निजप्रभू दम्पती सेवमाने तत्रास्ताम्।

एकदा शारिकया सहैकशय्यासनाहारविहारं कामयमानः शुकः शारिकां तथाकर्त्तुं प्रास्तावीत्। सारिका चैतदाकर्ण्योवाच यत्पुरुषा हि दुष्टाः कृतघ्नाश्च, स्वल्पकालमेव ते रज्यन्ति, परिपूर्णार्थाश्च विरज्यन्ति, इत्यचिरमेव स्वजनेभ्यो वीरर्ज्यन्ति[4]। अतो नाहं पुरुषसंसर्गमिच्छामीति। एतेनातिशयं हृणीयमाणः[5] शुकः शारिकाम् अगदत् यन्नैवं पुरुषा दुष्टा भवन्ति अपि तु स्त्रिय एव नृशंसहृदयाः स्वार्थसाधिकाश्च जगतीह दृश्यन्ते। इत्थमुक्तवति शुकेऽत्र विषये वृद्धिं गते चोभयोः पारस्परिके विवादे उभावपि तौ शकुनी यथास्वपक्षनिर्णयाय राजपुत्रं शरण्यमवर्ण्यताम्[6]। राजपुत्रश्च तयोर्विवादमाकर्ण्य कथं कृतघ्नाः पुरुषाः इति प्रमाणयितुं सारिकामाह। सा च निजपक्षं पोष्टुं पुंदोषाख्यायिनीमाख्यायिकामेतामाख्यत्—

अस्ति सर्वभूमण्डलविख्याता कामन्दिका नाम महानगरी। तत्रार्थदत्ताभिधानो वणिङ् न्यवसत्। तस्य निजसन्ततिसम्पत्तिरसम्भूयसी अपि पैतृक-

---

कण्ड्वादयः।

१. चरण गतौ 'यस्य विभाषा'। २. तन्तस दुःखे। ३. मेधा आशु ग्रहणे। ४. इरज ईर्ष्यायाम्। ५. हृणीङ् रोषणे लज्जायाञ्च। ६. वरण गतौ।

सम्पत्तिसन्ततिरसम्भूयसीत्[1]। वार्धके तस्य धनदत्तो नाम पुत्रोऽजनि। उपरते च पितरि स युवा द्यूतादिव्यसनासक्तो विगतधनो दौर्गत्यं गतः परित्यक्तनिजदेशो देशान्तराणि भ्रमितुं निर्यान् चन्दनपुरनाम्नि नगरेऽशनार्थी एकस्य वणिजो गृहमविशत्। स च वणिक् युवानमेनमवलोक्य पृष्टान्वयादिः कुलीनमवगत्य कृततत्सत्कारः स्वगृहेऽवस्थाप्य विविधालङ्कारैरुपस्कृतां सुसंवस्त्रितां[2] च रत्नावली-नाम्नीं निजकन्यां ददौ।

अथ गतेषु केषुचिद्दिनेषु सुखविस्मृतदुर्गतिर्धनदत्तो वल्गूयन्त्या[3] नवोढया वध्वा श्वशुरगृहकृतवसतिरपि व्यसनोन्मुखः तत्सुतैकसन्तानमवशं श्वशुरं कथमप्यनुमान्यैकया वृद्धया स्त्रिया सहात्मना तृतीयो रत्नावलीमादाय तद्देशात्प्रस्थितवान्। गच्छन् सोऽटव्यामेकस्याम्, मुक्ततस्करभयो भार्याभरणान्यादायार्थार्थी गुणवतीमपि भार्यां जिघांसुस्तया वृद्धस्त्रिया सहैकस्मिन् गर्ते तां निक्षिप्य ततो गन्तुमचिन्तितमतुरण्यत्[4]। एवं क्षिप्त्वाथ तत्र तिरस्यति[5] तस्मिन् वृद्धा तु व्यपद्यत किन्तु लतागुल्मादिजालपतिता रत्नावली प्राणैर्न व्ययुज्यतेति विगतेषु केषुचित् क्षणेषु आयुषः शेषतया सा तस्माद्गर्तादुत्थाय समवलम्बिततृणगुल्मादिविक्षताङ्गी, करुणं क्रोशन्ती, पदे पदे पन्थानञ्च पृच्छन्ती पितुः पार्श्वं प्राप। अकस्मात्तत्र तथाभूतामागतामालोक्य पितृभ्यां ससम्भ्रमं पृष्टा रुदती सा साध्वी एवमभाषत यन्मार्गे वयं चौरैर्लुण्ठिताः। अहञ्च तैर्गर्त्ते निपातितापि न मृतेति कारुणिकेनैकेन पथिकेन गर्तादुद्धृता दैवादिहायाता। तदाकर्ण्य नितरां द्रवस्यन्तौ[6] तत्पितरौ तामाश्वास्य समुचितं भिषज्यन्तौ[7] सातिशयम् अभिषण्ज्यताम्[8] इति कतिपयैरेवाहोभिः सा पूर्ववदेव औरस्यत्[9], वियुक्तभर्तृसंलग्नचित्ता च पितृवेश्मनि तस्थौ।

व्यतीतेषु केषुचिद्दिवसेषु स्वदेशमागतो धनदत्तो द्यूतक्षपिततद्वित्तो व्यचिन्तयत् यच्छ्वशुरवेश्म गत्वा रत्नावलीं गृहस्थिताञ्चोक्त्वा श्वशुरात्पुनः किञ्चिद्धनमानेतुं तं वनीवञ्चानि। एवं स हृदये कृत्वा समवाप्तश्वशुरवेश्मा दूरात् स्वभार्ययाऽदृश्य-

---

१. सम्भूयस प्रभूतभावे। २. 'वस्त्रात्समाच्छादने' णिच्। ३. वल्गु पूजामाधुर्ययोः। ४. तुरण त्वरायाम्। ५. तिरस् अन्तर्धौ। ६. द्रवस् परितापपरिचरणयोः। ७. भिषज् चिकित्सायाम्। ८. भिष्णज् उपसेवायाम्। ९. उरस् बलार्थः।

तेति तया धावित्वा तत्पादयोर्गृहीतः। निजपत्नीं तत्रावलोक्य भीताय च तस्मै तत्पत्नी पितृभ्यां प्राग्वर्णितं सर्वं न्यवेदयत्। ततस्तया सह निर्भयं श्वाशुरशरणं प्रविष्टो दृष्ट्वा हृष्टाभ्यां श्वशुराभ्यां समभिनन्दितश्च रत्नावल्या सह श्वशुरश्रियं भुञ्जानो यथासुखं कतिपयदिनान्यास्त।

एवं श्वशुरवेश्मनि ससुखं निवसन्नपि स चैकदा निशीथेऽङ्कसुप्तां स्वभार्यां निहत्यापहृततदाभरणो भुरणितनिजनृशंसपाशवत्तिरलक्षितो निजक्षयमचैषीत्।[1]

एवं पुरुषाः पापाः। यामेव मूर्तिं निजहृदयमन्दिरे प्रेम्णा सपर्यन्ति[2] तामेवार्थान्धाः समरर्यन्तीति[3] यथाभिलषितं क्रौर्यं चेक्रीयिषिषवो[4] नृशंसाः पुरुषाः प्रशंसास्पदं कथं मन्येरन्।

इति कौमुदीकथाकल्लोलिन्यां कण्ड्वानिर्देशेऽष्टमः कल्लोलः।



१. भुरण धारणपोषणयोः। २. सपर पूजायाम्। ३. अरर आराकर्मणि।
४. करोतेर्यङन्तात्सन्नन्ताण्ण्यन्तात्सन्नन्तादुप्रत्ययः।

( इति कण्ड्वादयः )

## पद-वाच्य-लकारार्थनिर्देशात्मको नवमः कल्लोलः

एवं पुंदोषदर्शिनीमाख्यायिकामाख्याय तूष्णीकाम् आसीनायां[1] सारिकायां राजपुत्रः स्वपक्षं पोषयितुं शुकाय अतिष्ठत[2] इति तया प्रियापार्थक्ये विप्रवदमानो[3] राजसुते तिष्ठमानः[4] शुकशकुनिरेवं वक्तुं (आत्मनेपदप्रक्रिया) प्राक्रमत[5]—

अस्त्येका हर्षवती नाम नगरी। तत्र बहुकोटीश्वरस्य धर्मदत्ताख्यवणिजो वसुदत्ताभिधानयातिरूपसम्पत्त्या, प्राणेभ्योऽप्यधिकप्रियया सुतया बभूवे[6]। तां च तेन समानाय रूपयौवनसम्पत्तये, ताम्रलिप्त्यां कृतवसतये, समुद्रदत्ताय दत्त्वा निरतिशयं कन्यापितृत्वानृण्यसुखम् अनुबभूवे।

एकदा पितृवेश्मनि कृतवसतिः, पत्यौ स्ववेश्मस्थे सति, दूरात् तत्रायान्तं कञ्चिद् युवानं दृष्ट्वा दुर्निवारमारमोहिता, सखीसाहाय्यानायितं तं प्रच्छन्नकामुकं सा व्यत्यभजत[7]। तदाप्रभृति च तदेकासक्तमानसा रहसि प्रतिनिशम् अरंस्त।

अथ गणरात्रापगमे स्वदेशतस्तस्याः पतिस्तत्रातुत्रौके इति प्रमुदितमानसा तन्माता नक्तं कृतमण्डनां तां तन्निजपतिसमीपं प्रेपितवती। किन्तु वसुदत्ताया अन्यासक्तमानसत्वात्तत्रैकत्र रहसि वर्तमानावपि न तौ व्यत्यहसतां[8] नापि च व्यत्यजल्पताम्। एवमेकत्र वर्तमानयोरपि षट्त्रिंशत्सङ्ख्याङ्कयोरिव विरुद्धदिङ्मुखसम्मुखीनयोस्तयोः, पतिसान्निध्येऽपि जारं निध्यायन्त्यास्तस्या अध्वपरिश्रान्तः पतिरध्यशयिष्ट[9]।

---

आत्मनेपदप्रक्रिया

१. अनुदात्तङित आत्मनेपदम्। २. 'प्रकाशनस्थेयाख्ययोश्च;' इति प्रकाशने तङ्। ३. विभाषा विप्रलापे। ४. 'प्रकाशनस्थेयाख्ययोश्च' तिष्ठन्त्यऽस्मिन् जनाः विवादपदनिर्णयार्थमिति स्थेयो विवादपदनिर्णेता अथवा तिष्ठति विश्राम्यति विवादपदनिर्णयोऽस्मिन्नित्यर्थे बाहुलके अधिकरणे 'अचो यत्'। 'स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते' इति मेदिनी। अतो राजसुतं निर्णेतृत्वेनाश्रयन्नित्यर्थः। ५. प्रोपाभ्यां समर्थाभ्याम्। ६. भावकर्मणोः। ७. 'कर्तरि कर्मव्यतिहारे'। ८. प्रतिषेधे हसादीनामुपसंख्यानम्'। ९. ङित्वादात्मनेपदम्।

भुक्त-पीत-सुप्तेष्वथ सर्वेषु, निशि सन्धिं भित्त्वा चौर्य्याय क्रममाणः[1] कश्चिच्चङ्क्रमणश्चौरो वासगृहाभ्यन्तरे न्यविक्षत[2]। तत्कालमेव च तम् अजानाना[3] वणिक्सुता निजजारकृतसङ्केता, सङ्गतिस्थानम् उपतिष्ठमानेन[4] मार्गेण निकेतनान्निभृतं प्रास्थित[5]। एतेन विघ्नितेच्छश्चौरो व्यचिन्तयत् यद्येषामाभरणानां कृतेऽहमत्र प्रविष्टस्तैराभरणैर्युक्तैषा निशीथे निर्व्रजितेति निरूपयामि तावत्क्वैषा विसेधत्[6]यैतदनुजिज्ञासन्[7] स चौरो गृहान्निर्गत्यालक्षितस्तद्दत्तदृष्टिः, ससङ्केतसखीयुतां वणिक्सुतां ताम् अनुससार। सा च समवाप्तसङ्केतस्थानोद्याना, स्वकामुकं वृक्षे लम्बमानं रात्रौ सङ्केतस्थानागतं नगररक्षिभिश्चौरबुद्ध्योद्बध्यमानं पाशकण्ठं गतासुं समवलोक्य विह्वलोद्भ्रान्ता स्वोरःस्थलम् आघ्नाना[8] 'हा! हतास्मि', इति विलपन्ती भूमौ निपपात। क्षणानन्तरं तरोश्च तमथ गतासुं निजजारमवतार्य अङ्गरागेण पुष्पैश्चालङ्कृत्य रागशोकान्धमानसा सा निःसंज्ञं तन्मुखमुन्नमय्य यावत् निंस्ते तावद्वेतालाधिष्ठितः स परपुरुषो दन्तैस्तस्याः नासिकां चिच्छिदे इति सव्यथाऽतिविह्वला सा तस्मादपाससार।

एवं विनसाऽपि[9] सा किंस्वित्सासुरसौ स्यादिति बुद्ध्या पुनस्तं निपुणं समपश्यत[10] किन्तु वीतवेतालं, निश्चेष्टं, मृतमेव तमवलोक्य भीता परिभूता च सा रुदती तस्माच्चचाल। एतत्सर्वं परिच्छन्नोऽवलोक्य किमेतया कृतमिति चौरोऽचिचित्रीयत, किमतः परमियं कुर्यादिति द्रष्टुं[11] जिज्ञासमानश्च कौतुकाद् दूरतश्च तां भूयोऽनुजगाम।

इतः सा स्वैरिणी तस्मादागत्य सुप्तस्थितभर्तृकं स्वकं गृहं प्रविश्य स्वकृतं सर्वम् अपजानाना[12] प्रोच्चै रुदती पतिमेवम् उदायत[13] यद्भर्तृरूपः शत्रुरयं नासिकाच्छेदेन माम् अध्यकृत[14]। एवं मुहुर्मुहुः स्वं पतिम् अपवदमानायाः[15] क्रन्दन्त्या-

---

१. 'वृत्तिसर्गतायनेषु क्रमः' इति सर्गे (उत्साहे) तङ्। २. 'नेर्विशः'। ३. अनुपसर्गाज्ज्ञः। ४. 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्'। ५. 'समवप्रविभ्यः स्थः'। ६. 'सेधतेर्गतौ' इति षत्वाभावः। ७. ज्ञाश्रुस्मृदृशां सनः इति प्राप्तस्तङ् 'नानोर्ज्ञः' इत्यनेन निषिध्यते। ८. आङो यमहनः। ९. विगतया नासिकयोपलक्षितेत्यर्थादिह वेर्ग्रख्ययोरभावः। अत एव 'विनसा हतबान्धवा' इति भट्टिः। १०. सम्पूर्वकात् 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्'। ११. 'ज्ञाश्रुस्मृदृशां सनः'। १२. 'अपह्नवे ज्ञः'। १३. 'यमो गन्धने'। १४. 'अधेः प्रसहने'। १५. 'विभाषोपपदेन प्रतीयमाने'।

स्तस्याः संशृण्वानाः[1], सर्वे तत्पारिवारिकाः परिजनाश्च प्राबुध्यन्त[2]। तत्पिता चाथार्द्धनासिकां तामवलोक्यातिक्रुद्धस्तत्पतिं भार्याद्रोहिणं समवेदिष्ट[3] इति सक्रौर्यं तमतीतडत्। तथाभिहन्यमानोऽपि न किन्तु स मूकवत् किञ्चिदपि समह्वयत[4]।

एतत्सर्वमवलोक्य ततोऽपसृते चौरे, कोलाहलेन चावसितायां तस्यां निशि, आक्रममाणे[5] च तमोऽपहेऽहस्करे आस्थानमण्डपमध्यमाक्रामति[6] च भूभृति, तेन वणिजा छिन्ननासिकया सुतया सह निजजामाता न्यायालयं नीतः। राजा च सर्वं तच्छ्रुत्वा तत्त्वं नयमानः[7], तेन स्वदारद्रोहिणञ्चैनं वणिक्सुतं संजानानो[8] न्यक्कृततद्वचा कृततद्वधविज्ञप्तिर्हन्तुं प्रतिजज्ञे। परेद्यवि सडिण्डिमघोषं वध्यभुवं नीयमाने तद्वणिक्सुते स चौरो राजपुरुषानागत्य प्रोवाच—'निरपराधमिमं मा भवन्त आहसत[9]। यथा चैतद्वृत्तं, सर्वमहं तत् [10]संविदे। मां राजाग्रे नयन्तां सर्वमहं तत्र उपवदिष्ये[11]। इत्थं राजाग्रं नीतो वृताभयः स चौरः आमूलात्सर्वं वृत्तान्तं राज्ञे न्यवेदयत्। अब्रवीच्च यन्न मदीयः प्रत्ययश्चेत्तदाऽद्यापि तच्छवस्यास्येऽस्याः सा नासा दृश्यताम्। एवमाकर्ण्य प्रेषितप्रेष्यमुखेभ्यो राजा सर्वं तथैव तदवगत्य वणिक्पुत्रबन्धं निरास्यत[12]। दुष्टाञ्च ताम् उदाकुर्वाणः[13], तस्याः कर्णावपि च कर्तयित्वा, देशान् निरास्थत[14] तत्पितुश्च दण्डं धनेन उदनयत[15]। चौरं प्रति चातीव तुष्टः पुराध्यक्षं विधाय उपानयत[16]। एतेनेत्थं समायातं यत्स्वकीयदुर्वृत्तिदुराग्रहाग्रहिला महिला निसर्गेणैवं शठा भवन्ति। नीतावुशनसमपि व्यतिगच्छन्ति[17], कौटिल्ये कौटिल्यमप्यतिक्रामन्ति। निजप्रेमपाशैराकृष्य पुरुषान् व्यतिघ्नन्ति[18], स्वकटाक्षक्षुरनिक्षेपैरेव पुरुषहृदयं व्यतिलुनते[19]। अधरपयोधरमूल्येनैव जीवनं

---

१. अर्तिश्रु०। २. अजागरुः। ३. 'विदिप्रच्छिस्वरतीनामुपसंख्यानम्'। ४. 'निसमुपविभ्यो ह्वः'। ५. 'आङ उद्गमने'। ६. 'ज्योतिरुद्गमने इति वाच्यम्' तेनेह न तङ्। ७. 'सम्माननोत्सञ्जन०' इति ज्ञाने तङ्। ८. 'सम्प्रतिभ्यामनाध्याने'। ९. 'हनः सिच्' इति कित्त्वेऽनुनासिकलोपः। १०. विदिप्रच्छि०। ११. 'भासनोपसम्भाषा०' उपमन्त्रणे तङ्। १२. 'उपसर्गादस्यत्यूह्योर्वेति वाच्यम्'। १३. 'गन्धनावक्षेपण०'-अवक्षेपणे ( भर्त्सने ) तङ्। १४. 'अस्यतिवक्ति०', 'अस्यतेस्थुक्', 'उपसर्गादस्यत्यूह्योः'। १५. 'सम्माननोत्सञ्जन०' इत्युत्सञ्जने ( उत्क्षेपे ) तङ्। १६. 'सम्माननोत्सञ्जन०' इत्यादिना भृतौ तङ्। १७-१८. 'न गतिहिंसार्थेभ्यः'। १९. 'कर्तरि कर्मव्यतिहारे'।

परिक्रीणते[1]। महतोऽपि धनुर्धारिणः कुसुमशरशरैरेव पराजयन्ते[2]। परिणामं जानाना अपि परपुरुषान् उपतिष्ठन्ते[3]। शैशवादेव प्रतारणे शिक्षन्ते[4]। यौवनेऽनेकान् गर्धयन्ते[5]। प्रतिज्ञातमनुचणं मिथ्या कारयते[6]। मनोरमा अपीमा दृष्ट्वा को न विकुरुते[7]। तथापि विश्वस्तस्यानुरक्तस्य वधाय चेमास्तद्धृदयपटल एव निजशस्त्रं संक्ष्णुवते[8]। आत्ममहत्त्वप्रदर्शनार्थं तु यत्किमपि एताः सङ्गिरन्ताम्[9] परं योषितः पापाः इति संवित्तिशीलाः सर्व एव संविद्रते[10]।

पुरुषस्तु योषिदनुपातेन स्वल्पमेव सन्मार्गम् उच्चरते[11]। कुलीनो हि स शैशवे स्वभावतः सच्छिशुषु संक्रीडते[12]। कौमारे ब्रह्मचर्यपरायणो गुरुभ्यो विद्याम् आदत्ते[13]। ततो गृहस्थमाश्रित्य सत्सन्तत्या एदिधिषमाणो[14] निजकुलवंशानुरूपां भार्याम् उपयच्छते[15] इति न स कदापि परललनाः प्रकुरुते[16]। पातालतलस्पर्शिनि श्वभ्रेऽतलस्पर्शिनि पयोधौ वा यथासमयं परार्थं पतित्वा भौतिकं क्षणभङ्गुरं शरीरं प्रकुरुते[17]। यथाशक्तिजीवनपर्यन्तं हरि-गुरु-जनम् उपकुरुते[18]। स्वं यज्ञं कारयमाणः[19] सत्पात्रविप्रेभ्यः कोटिशो घटोध्नीरष्टापदसुसज्जितशफश्रृङ्गा गा संयच्छते[20]। अद्वैततत्त्वं समुद्य[21] मुक्तावुत्तिष्ठते[22]। शरणसमागतसपत्नान् अधिकुरुते[23]। दुःखिन उपवदते[24]। अन्यायञ्च अपवदते[25]।

एवमुभयपक्षे प्रत्यक्षे न्यायदक्षो भवानेव सिद्धान्तपक्षं निर्णयस्व। एतावदुक्त्वा क्षीणेन्द्रशापः शुकः चित्ररथाभिधो दिव्यरथाधिष्ठितो दिव्यरूपो गन्धर्वो बभूव। सारिका चापि तत्कालं क्षीणशापा तिलोत्तमा अप्सरा भूत्वा दिवमुत्पेदे।

---

१. 'परिव्यवेभ्यः क्रियः'। २. 'विपराभ्यां जेः'। ३. 'उपाद्देवपूजासंगतिकरण०'। ४. 'शिक्षेर्जिज्ञासायाम्'। ५. 'गृधिवञ्च्योः प्रलम्भने'। ६. 'मिथ्योपपदात् कृञोऽभ्यासे'। ७. 'अकर्मकाच्च'। ८. 'समः क्ष्णुवः'। ९. 'समः प्रतिज्ञाने'। १०. 'विदिप्रच्छि०' 'वेत्तेर्विभाषा'। ११. 'उदश्चरः सकर्मकात्'। १२. 'क्रीडोऽनुसम्परिभ्यश्च'। १३. 'आङो दोऽनास्यविहरणे'। १४. 'पूर्ववत्सनः'। १५. 'उपाद्यमः स्वकरणे'। १६.-१८. अत्र 'गन्धनावक्षेपण०' इत्यादिना क्रमशः साहसिक्ये, उपयोगे, सेवने च तङ्। १९. 'विभाषोपपदेन प्रतीयमाने'। २०. 'समुदाङ्भ्यो यमोऽग्रन्थे'। २१. 'उपसर्गाद्ध्रस्व ऊहतेः'। २२. 'उदोऽनूर्ध्वकर्मणि'। २३. 'अधेः प्रसहने' ( प्रसहनं क्षमा, अभिभवश्च ) अत्र क्षमायां तङ्। २४. 'भासनोपसम्भाषा०' इत्यादिना उपभाषायाम् ( उपसान्त्वने ) तङ्। २५. 'अपाद्वदः'।

ततो वैतालो भूपालमुल्ललाप, 'एवमेकैकं पृष्टौ तावन्योन्यविषयिणीं कथां प्रकुर्वाणौ[1] तत्र परस्परस्य निंदां यद्यपि व्यत्यकुरुतां[2] तथापि वस्तुगतिरगतिकाऽनिर्णीता च तथैवावातिष्ठतेति राजन्, स्त्रीपुरुषान्यतरपापत्वतत्त्वं त्वं नयस्व[3]'। तदाकर्ण्य भूपतिरूचे, 'योगेश्वर, योषितः पापा अयमेव सिद्धान्तः पक्षः सर्वेषां नीतिविदनुभवशालिनां सम्मतः।

एवमुक्तवति भूभृति स वैतालः पूर्ववदेव तत्स्कन्धादन्तर्दधे। राजा चापि पुनस्तदन्वेषणपरप्रयत्नं प्रतिपेदे।

निशि च समवाप्तशिंशपातरुर्नरपतिस्तथैवोढसवैतालशवो भूयो भिक्षुसमीपमुपसर्तुं तत्वरे। पथि गच्छन्तञ्च तं भूभृतं तच्छ्रमापनोदार्थमिमां कथां वक्तुमुपाक्रमत वैतालः—

अस्ति पूर्वाम्बुधेस्तटे ताम्रलिप्ती पुरी। तत्र चण्डसेनाभिधानो राजाऽभूत्। स हि परस्त्रीपराङ्मुखोऽपि सदासङ्ग्रामसमुन्मुखोऽरिमुख्यान् आह्वयत[4]। शत्रुलक्ष्मीणामपहर्तापि प्रजाद्रव्यसम्पदः पर्यहरत्।

एकदा भूपतेस्तस्य सिंहद्वारे सत्वशीलाख्यो दाक्षिणात्यो राजपुत्रः समागत्य नैर्धन्याद्राज्ञे निवेद्य तम् उपकुर्वाणो[5] बहून्यब्दानि तिष्ठन्नपि नृपान्न किञ्चित्फलमुपलेभे। अतो निजदशायां भाग्ये च हृणीयमानोऽतिनिर्विण्णस्ततोऽगात्। कार्पटिको भूत्वा वनञ्चाश्रयत्।

गतेष्वथ केषुचिद्वत्सरेषु प्रजविना सप्तिना सञ्चरमाणो[6] राजाऽऽखेटार्थमेकस्मिन् दिने मृगाटवीमाविवाय। तत्र विविधवन्यपशूनामाखेटं कुर्वन्नेकं महान्तं शूकरमनुधावन्नतिदूरं वनान्तरमवाप्य पश्चाद्विरहितसैन्यः पर्णतृणाच्छन्नमार्गे महावने परिश्रान्तो दिङ्मोहं गतस्तेनैव धृतकार्पटिकवेषेण सत्वशीलेन समगत[7]। तमवलोक्य भूपतिः सस्नेहं समपृच्छत[8] 'कच्चित्त्वं ताम्रलिप्तीमार्गं सम्वित्से' इति। तदाकर्ण्य बद्धाञ्जलिः आर्नुवानः स कार्पटिकोऽभ्यधत्त 'देव, मार्गमहं जाने किन्तु गन्तुमिदानीमस्थाने। यतो हि कालोऽयं महतो निदाघस्य, मध्याह्नश्चाजायत।

---

१. 'गन्धनावक्षेपण०' प्रकथने तङ्। २. 'इतरेतरान्योन्योपपदाच्च'। ३. सम्माननोत्सञ्जन०' इति ज्ञाने तङ् ( निश्चिनु इत्यर्थः )। ४. 'स्पर्धायामाङः'। ५. 'गन्धनावक्षेपणसेवन०'–इति सेवने तङ्। ६. 'समस्तृतीयायुक्तात्'। ७. 'समो गम्यृच्छिभ्याम्', 'वागमः' 'अनुदात्तोपदेश० 'ह्रस्वादङ्गात्'। ८. 'आङि नुप्रच्छयोः'।

स्फुरद्रश्मिशिखाजालो रविर्वितपते[1]। अत आगमयस्व[2] तावत्। माऽग्रे समृतं[3]। क्षणञ्चेह उपतिष्ठताम्[4]। तदाकर्ण्य राजा तमभाषत, 'तर्हीह क्वापि वर्तते चेत्पानीयमानीयताम्। कार्पटिकस्तत्तथेति प्रतिजानानो राजानं नेदीयसि प्रवहन्तीं नदीमनैषीत्। तत्र विपर्याणीकृतं कृतविवर्तनम् अपस्किरमाणं[5] तदीयाश्वं प्रदत्ताम्बुशष्पकवलं विगतश्रमञ्च चक्रे। कृतस्नानाय राज्ञे च स्ववसनाञ्चलात्प्रोन्मुच्य प्रक्षालितानि हृद्यान्यामलकानि समुपानिन्ये। कुत एतान्यासादितानीति भूपतिना पृष्टः कार्पटिकोऽतिप्रह्वः सामलकाञ्जलिरुवाच, 'देव, मदीयैषा वृत्तिः—दशवत्सराणि व्यत्यायन् परित्यक्तभवच्छरणः अहमिह देवदेवं महादेवमाराधयन्नामलकानि व्रतयामि। एतदाकर्ण्यातिकृपाक्रान्तेन ह्रीणेन च राज्ञैतच्चिन्तयता अन्वतप्त[6] यद्भृत्येषु क्लिष्टाक्लिष्टमजानतो नृपान्, तद्विषये राज्ञोऽबोधयन्तं परिवारञ्च धिक्। एवं सञ्चिन्त्य राजाऽनुबध्नतः कार्पटिकस्य हस्तात्कथञ्चिदतिसङ्कुचितोऽप्यामलकद्वयमुपादाय अभुंक्त[7] पीतपानीयश्च तेनैव कार्पटिकेन सह तत्रैव विशश्राम।

व्यतीतेषु च केषुचित्क्षणेषु सपर्याणीकृतं चारुरयं हयं समारुह्य विक्रममाणेन[8] तेन ततः प्रतिष्ठमाने राजनि मार्गप्रदर्शनार्थञ्चाग्रे सरति पदातौ, तस्मिन् कार्पटिके, पथि समवाप्तनिजसेनश्चण्डसेनः स्वपुरीमवाप। तत्र च प्रख्यापितकार्पटिकभक्तिः, प्रदत्तबहुविषयोऽपि न तद्भक्तिनिष्कृतिममन्यत। एतेनातिकृतज्ञः सत्वशीलो विमुक्तकार्पटिकवृत्तिश्चण्डसेनस्य पार्श्वे स्थित्वा तमेव प्रत्याशुश्रूषत्[9]।

एकदा राजा तमुपह्वरे समुपाह्वत[10] सिंहलपतेः सुतामात्मार्थं याचितुं सिंहलद्वीपं गन्तुञ्च न्ययुंक्त[11]। अतः सत्वशीलोऽब्धिवर्त्मना भूपादिष्टैर्द्विजैः सह पोतमधिरुह्य तत्र गन्तुं समुदयुङ्क्तेति तत्पोतोऽध्यरोहयत[12]।

---

१. 'उद्विभ्यां तपः'। २. 'आगमेः क्षमायाम्' (मा त्वरिष्ठा इति भावः)। ३. 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्', 'हस्वादङ्गात्', ४. 'अकर्मकाच्च'। ५. 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्', 'अपाच्चतुष्पाच्छकुनिष्वालेखने'। ६. तपतेर्भावे लुङ् 'तपोऽनुतापे च' (अविचार्य कार्यं कृत्वा पश्चादशोचीत्यर्थः)। ७. 'भुजोऽनवने'। ८. 'वेः पादविहरणे'। ९. 'प्रत्याङ्भ्यां श्रुवः'। १०. 'निसमुपविभ्यो ह्वः'। ११. 'स्वराद्यन्तोपसर्गादिति वक्तव्यम्' इति सहकारेण 'प्रोपाभ्यां युजेरयज्ञपात्रेषु'। १२. 'णेरणौ यत्कर्मणौ चेत्स कर्त्ताऽनाध्याने'।

जलधेर्मध्यभागं गते तस्मिन् प्रवहणेऽब्धौ जनान् विस्मापयमानोऽभ्रंलिहो[1] विचित्रवर्णविचलद्वैजयन्तीविराजितो जाम्बूनदध्वज एकः समुदाजत। तस्मिन्नेव च काले सहसा समुन्नतघनावली वर्षितुमारेभे। तीव्रो वायुर्ववौ। पाथोधिरफेनायत इति वर्षवातैस्तैराधोरणैर्बलादाकृष्येव तस्मिन् ध्वजालाने स पोतद्विपः समासज्यत। अतो वीचिविप्लुते वारिधौ वहनेन सह स ध्वजो निमङ्क्तुं प्रावर्तत। एतस्मिन्नेव काले भयाकुलाः प्रवहणस्था विप्राः सम्प्रावदन्त[2] भूपतिं चण्डसिंहमुद्दिश्याब्रह्मण्यम्। तदाकर्ण्य स्वामिनोऽयशस्करं तच्छ्रोतुमसहिष्णुः सत्वशीलो गृहीतनिस्त्रिंशो बद्धोत्तरीयको निरपेक्षोऽनुध्वजमात्मानं महोदधौ तत्क्षणमक्षिपेति तस्मिन्निमग्ने वातोर्मिदूरोत्क्षिप्तं तत्प्रवहणमभज्यत। तत्स्थाँश्च सर्वान् जनान् यादसां पतिः समगिलत्[3]। ( इत्यात्मनेपदप्रक्रिया )

अम्बुधिमग्नः सत्त्वशीलश्च यावदितस्ततोऽवलोकयति[4] तावद्दृष्टितो वारिधिरतिरस्यत्। दिव्या पुरी चैका समवालोक्यत। अधरस्थिताऽपि या स्वश्रिया सुरपुरम् अन्वकरोत्[5]। सौधनिर्माणकौशलिकायाञ्च विश्वविश्वकर्म-कर्मापि पराकरोत्[6]। न कोऽपि कमपि यत्र अभिचिक्षेप[7]। वर्धमानपरस्परस्पर्धिपरार्ध्यर्द्धिं परिमृष्यत्सु[8] यत्रत्येषु न कोऽपि कस्मैचित् ईर्ष्यां प्रोवाह[9]। पुर्याञ्च भयानि तत्रत्यभूपभयभीतानीव क्षणादेव उपारंसिषुः[10]। आरमन्तो[11] विभूतिभाजो भृत्याः अपि च यत्र सर्वथा पर्यरंसिषुः[12]।

प्रियापार्थक्ये ( परस्मैपद-प्रक्रिया )

तस्याञ्च नगर्यामितस्ततः क्राम्यन्[13] सत्त्वशीलो मणिमयस्तम्भसुशोभितसद्रत्नबद्धसोपानवापीकोद्यानशोभाशालिनि, हैमे शोभनालये, रत्नचित्रोच्छ्रितध्वजे, मेरुप्रोन्नते एकस्मिन् देवगृहे प्रतिष्ठापितां भगवतीं कात्यायनीं ददर्श। भूभृदुद्भूता दृषद्रूपाऽपि या दृषद्धृदयमपि द्रावयति[14], नाशयति[15] दुःखम्, जनयति[16] सुखम्। दृष्ट्वा

---

१. 'भीस्म्योर्हेतुभये'। २. 'व्यक्तवाचां समुच्चारणे'। ३. प्रतिज्ञानाभावान्न तङ्।

( इत्यात्मनेपदप्रक्रिया )

❀ परस्मैपदप्रक्रिया ❀

४. 'शेषात्कर्तरि परस्मैपदम्'। ५-६. 'अनुपराभ्यां कृञः'। ७. 'अभिप्रत्यतिभ्यः क्षिपः'। ८. 'परेर्मृषः'। ९. 'प्राद्वहः'। १०. 'विभाषाऽकर्मकात्'। ११-१२. 'व्याङ्परिभ्यो रमः'। १३. 'अनुपसर्गाद्वा' इति वैभाषिकतङभावे परस्मैपदम्। १४-१६. 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्योणेः'।

च तां तत्र कृतदेवीप्रणामोऽभ्यर्चितचण्डीचरणः किमेतदिन्द्रजालं स्यादित्याश्चर्येण तदग्रतो यावत्समुपविशति तावदुद्घाटितारारा, रराज तत्रैका दिव्या कन्यका। देव्यग्रगतप्रभामण्डलोद्गता, प्रफुल्लाब्जवदना, पुष्प्यत्पुष्पस्मिता, मृणालनालमृद्वङ्गी, सञ्चारिणी सरोजिनीव, स्त्रीसहस्रपरिवृता सा च देवीगर्भगृहं सत्त्वशीलस्य हृदयञ्च सममेव प्रविवेश। विहितवरिवस्या सा देवीगर्भगृहात्तु निरगात् किन्तु सत्त्वशीलस्य हृदयं निविश्य शूकशिखाग्रभक्तिरिव तत्रैव स्थितापि देवीप्रभामण्डलमाविशत्। सत्त्वशीलोऽपि च ततः पश्चात् तत्रैव प्रविष्टवान् इति तदन्तः सर्वासां भोगसम्पदां सङ्केतोद्याने इव अन्यस्मिन्नेवोत्तमपुरे मणिपर्य्यङ्किकानिषण्णां कन्यां तामवलोक्य समासादिततत्पार्श्वः तत्रोपविश्य सोत्कम्पपुलकैस्तदालिङ्गनोत्सुकतामाविष्कुर्वन् चित्रलिखित इव तन्मुखासक्तलोचनोऽवृतत्[1]। सा कन्या च तदानीं साङ्गमपि तमेवमनङ्गाविष्टमवलोक्य चेटीमुखमद्राक्षीत् इतीङ्गितज्ञास्तास्तं तत्कालमब्रुवन्, 'त्वमस्माकमतिथिरित्यस्मस्वामिनीकृतातिथ्यं गृहाण, उत्तिष्ठ, नेनिग्धि, अशान' इति। एतदाकर्ण्यावलम्बिताशः कथमप्युत्थितः स ताभिः प्रदर्शितामुद्यानवापिकामेकां स्नातुं गतस्तत्र निमग्नस्ताम्रलिप्त्यां चण्डसिंहनृपोद्यानवापीमध्यात्तत्क्षणमुत्तस्थौ। तत्र चाकस्मादात्मानमवलोक्याचिन्तयत् 'अहो किमेतत् क्वोद्यानम्? क्व च दिव्यं तत्पुरम्! अमृतासारसमं च क्व तद्दर्शनम्। क्व च सद्य एव तद्वियोगगरलम्। अहं हि जागर्मीति नायं स्वप्नोऽतः पातालकन्यास्ता मां पर्य्यमूमुहन्त[2] एतद्ध्रुवम्। एवं ध्यायन् तत्कन्यावियुक्तः उन्मत्त इव, ग्रहगृहीत इव कामार्तस्तत्रैव भ्राम्यन् विललाप। वातोद्धूतैः पिशङ्गैः पुष्परेणुभिः, विप्रयोगानलैरिव तं परीताङ्गमवलोक्योद्यानपालकाश्चण्डसिंहमहीभृतं व्यजिज्ञपन्निति स स्वयमप्यागत्य तत्र तदवस्थं तमदर्शत्। सान्त्वयित्वा च तं सर्वं स्ववृत्तान्तं समुद्घाटयितुमेवं तं निरबध्नात्, 'सखे, क्व प्रस्थापितस्त्वं क्व गतः? क्व चायं कुसुमशरशरस्त्वयि निपतितो य एवं तवासह्यदुःखाय पर्य्यक्लृपत्[3]? तच्छ्रुत्वा सत्त्वशीलः सर्वं स्ववृत्तान्तं तस्मै शशंस। तन्निशम्य तदानृण्यं गन्तुं समुपलब्धावसर इव वीरो राजा तं तेनैव मार्गेण तत्प्रि-

---

१. 'द्युद्भ्यो लुङि' (पुषादित्वादङ्)। २. 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति प्राप्तं परस्मैपदं 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' इत्यनेन निषिध्यते। ३. द्युतादित्वात् परस्मैपदे च्लेरङ्।

यासुरकन्यकान्तिकं प्रापयितुं प्रतिज्ञाय तमतिशयमाश्वासयन्नसिस्नपत्, स्वादिष्ठविविधभोज्यानि अबूभुजत्[1], चन्दनकर्पूरोशीरादिमिश्रितशीतलपेयानि अपीप्यत[2] एकस्मिन्नेकान्तप्रकोष्ठे सुसज्जीकृतसोपबर्हशय्यायाञ्च अशीशयत्[3]।

॥ इति परस्मैपदप्रक्रिया ॥

अन्येद्युर्मन्त्रिविन्यस्तसमस्तराज्यभारो राजा सत्त्वशीलप्रदर्शितमार्गेण प्रयान् तन्मध्यभागे प्रागिवोत्थितं सपताकं ध्वजमवलोक्य सत्त्वशीलेनौच्यत[4], 'देव, अनेनैव तेन दिव्यप्रभावेण ध्वजेन भूयते[5]। अत्राब्धौ मयि प्रियापार्थक्ये मग्ने देवेनाऽप्यनुध्वजं मज्यताम्।' एवमुक्त्वा सत्त्वशीलेन (भावकर्मप्रक्रिया) ध्वजस्य सामीप्यमवाप्य पयोधौ भूपतिप्रत्यक्षेऽप्यात्मा-प्रत्यक्षेपि[6]। तदवलोक्य राज्ञापि सोऽनुपदमनुसस्रे इत्यन्त-र्मग्नाभ्यां ताभ्यां सैवादर्शपुरी समदर्शि। तत्र च देवीं दृष्ट्वा साश्चर्येण राज्ञा सत्त्वशीलेन च साऽस्तावि ताभ्यामेकत्र तत्रोपाविश्यत च।

क्षणानन्तरमेव ससखीजनया, रूपिण्या प्रभया इव कन्यया देवीप्रभा-मण्डलाद्बहिर्निरगामि। सत्त्वशीलेन च प्रदर्शितां तां वीक्ष्य राज्ञा तस्यां तस्याभिषङ्गो स्थानेऽमन्यत। तयाऽपि च शुभशरीरलक्षणया राजानमवलोक्य 'केनानेनापूर्वपुरुषेण भूयेतेति मुहुश्चिन्तयन्त्याऽपचित्यायम्बिकामन्दिरं प्राविश्यत ससत्त्व-शीलेन राज्ञा चापि तथैव अन्वकारि।

क्षणाच्च कृतापचित्या याचितसत्पतिप्राप्तिवरया वरारोहया मन्दिरान्निर्गत्य स्वसखी समादेशि यद्योऽसौ महात्मा मया मन्दिरेऽस्मिन्नधुनावलोकितः क्व तेन स्थीयते[7] इति गवेषयित्वा निगद्यतां यद्वयमातिथ्यग्रहणेन तेन सनाथीक्रियामहे इति। एवमुच्यमानया तया सख्या सोऽन्विष्योद्यानवर्ती नृपतिरतिप्रह्वीभूताया निजस्वामिन्या निदेशम् अबोध्यत। तदाकर्ण्य वीरेण नृपतिना ऊचे, 'अलमत्या-तिथ्येन, तदाग्रहेणैवैतेनातिथ्याय सम्भूयस्यते'। सखीमुखेनेत्थमुक्तया तया तदार्जवेनातिसमाकृष्टयेव दैत्यकन्यकया देवी तं स्वपतिमयाच्यत। विचित्रशकुन्ता-

1. 'निगरणचलनार्थेभ्यश्च'। 2-3. 'अणावकर्मकाच्चित्तवत्कर्तृकात्'।

इति परस्मैपदप्रक्रिया

❀ भावकर्मप्रक्रिया ❀

4-5. 'भावकर्मणोः', 'सार्वधातुके यक्'। 6. 'चिण्भावकर्मणोः'। 7. घुमास्था० इतीत्वम्।

लापैर्वायुविधूनितनिजभुजलतैर्विकीर्णकुसुमैः पादपैरानन्द्यमानयेव स्वयं तदुद्यानं गत्वा च प्रश्रयावनतया पार्थिवो निजातिथ्यं स्वीकर्त्तुं प्रार्थयामासे। राज्ञा चैतदाकर्ण्य सत्त्वशीलप्रदर्शितमार्गेण तत्रत्यां देवीं द्रष्टुमागतमात्मानं निवेद्य कया त्वयाऽभ्यर्थितास्मदातिथ्यया भूयते इति सा समपृच्छि। तच्छ्रुत्वा तया कौतुकात्त्रिजगदद्भुतं पुरमवलोकयितुमायाता कन्याहमित्युदतारि। एतेन विहसता राज्ञा प्रत्युदतार्यत यत्स्नानवापिकायां यदनेन सत्त्वशीलेन सह पूर्वं सङ्घटितं तत्सर्वमहमनेन श्रवादिषि। अतोऽस्मद्दर्शनार्थं देव्यैव पर्य्याप्यते[1]। स्वसत्कृतिस्वीकृतावितथमन्यमनस्कं राजानमवगत्य दैत्यकन्ययाऽत्यन्तं जग्ले। तथापि तत्सत्त्वोत्कर्षेण, गाम्भीर्येण च किंकरीकृतया तया स्वकीयातिथ्यं राजानं स्वीकारयितुं पुनरपि स्ववाणीवीणास्वनो व्यतायत[2]। येन च मन्त्रमुग्धेनेव सत्त्वशीलसखेन तथेत्युक्त्वा तया सह गत्वा चापावृतकपाटे तस्मिन्नन्तस्तथैव प्रवेशितेन दिव्यं तदपरं पुरं ददृशे। नित्यसन्नद्धसर्वर्त्तौ, सदापुष्पफलद्रुमयुक्ते, रत्नकाञ्चननिर्मितमेरुपृष्ठे इव च तस्मिन् पुरे महार्हे रत्नासने समुपावेशितेन राज्ञा तत्कन्याकृतयथोचितापचितिर्जगृहे। अनन्तरञ्चेत्थं कन्यया निजपरिचयोऽदायि—'देव, अहमसुरेन्द्रस्य महात्मनः कालनेमेः कन्या। जनकश्च मदीयो विष्णुना अवधि[3]। इदञ्च पैतृकं मे पुरद्वयं विश्वकर्मणा निरमायि। सर्वकामदेऽस्मिन् पुरे न केनापि जीर्यते न म्रियते। अत्र चेदानीं त्वमेव मे सर्वस्वम् इति सपुराहं तव वशे वर्ते।' एवं समर्पितसर्वस्वा सा भूपतिनोचे 'यद्येवं तर्हि त्वं मया वीराय, सुहृदे, बान्धवाय च सत्त्वशीलाय प्रदीयसे। अनेन तव पाणिर्ग्राहिष्यते[4]।' मूर्तिमता देवीप्रसादेनेव नृपेण तथोक्ता सा दैत्यकन्यका 'तथास्तु' इत्यन्वमन्यत। अतः कृततद्दैत्यकन्यापाणिग्रहः, प्राप्तासुरपुरविश्वैश्वर्यः, सत्त्वशीलो भूपतिनोदे, 'त्वद्दत्तामलकयोर्भुक्तस्यैकस्यामलकस्य संशोधितर्णेनापि मयेदानीं द्वितीयतस्तेऽधमर्णेन स्थीयते।'

इत्थं तमुक्त्वा भूपेन स्वपुरीं गन्तुम् अक्रामि[5]। अतस्तदनुमतेनोपात्तदैत्यसुताप्रदत्तापराजितनामखड्गजरामृत्युहरभक्ष्यफलेन तेन तदुक्तवाप्याञ्च निमग्नेन

---

१. 'आदेच उपदेशेऽशिति' इत्यत्र अशितीति कर्मधारयादित्संज्ञकशकारादौ निषेधः। एश आदिशित्वाभावात् तस्मिन्निषेधाभावे आत्वम्। २. 'तनोतेर्यकि'। ३. 'जनिवध्योश्च'। ४. 'स्यसिच्सीयुट्तासिषु०' इत्यादिना चिण्वदिट्। ५. 'अनाचमिकमिवमीनामिति वक्तव्यम्'।

स्वदेशे समुन्मज्ज्य सर्वसिद्धिकामेनाभावि। सत्त्वशीलेन च दैत्यकन्याजानिना तत्पुरराज्यमशासि।

तद्राजन्, उच्यताम्, 'पयोधिपत्तनेऽनयोः कः सत्त्वाधिकस्त्वयाऽवगम्यते'। त्रिविक्रमसेनेनोचे यदविज्ञाततत्त्वार्थो निःस्पृहोऽम्बुधौ पतितः सत्त्वशील एव मया सत्त्वाधिकोऽवागामि[१]। राज्ञा तु तत्त्वार्थं विज्ञायैव तत्कार्याभिनिविविक्षया तत्रागामि इति न तत्सत्त्वाधिक्यम्।

एतदाकर्ण्य भूपतेः स्कन्धात्पूर्ववदेव वैतालेनावतीर्य स्वास्पदं शिंशपातरुरधिशिश्रिये। राज्ञा चापि 'प्रारब्धे ह्यसमाप्ते शिथिलीभवन्ति किं सुधियः' इति धियं धारयता पुनः सोऽनुससे।

एवं चतुर्विंशतिकृत्वो गतागतं कुर्वन्तं भूपतिमवलोक्य वैतालेन निरधारि यदयं सत्त्वराशिर्विप्रलब्धुमशक्यः। परमस्माभिः क्रीडता भिक्षुणा नैतावतैव स्वाभिलाषा शामिष्यते[२] इत्यद्योपायतः स दुरात्मा वच्यताम्[३]। तत्सिद्धिश्च भाविकल्याणेऽस्मिन् राज्ञि निवेश्यताम्।

एतदवधार्य वैतालेन तेन नृपतिर्निजगदे, 'भूपते, घोरायां तमिस्रायामस्यां श्मशानेऽस्मिन् गतागतं कुर्वता सुखार्हेणापि भवता घोरेण श्रमेणैतावती रात्रीरजागारि[४]। पृष्ठेन शवोऽवाहि। स च दूरातिदूरमनायि। एवं सुखशरीरसम्बन्धस्तृणवदभाजि[५] तथापि मया परीक्ष्यमाणेन त्वया नाद्यावधि तत्फलं समुपालम्भि[६] अतो धैर्येण तेऽधुनाऽतिसन्तुष्टोऽहं शवादस्मान्निर्गच्छामि। त्वया चायं भिक्षुसमीपं नीयताम्[७] किन्तु यन्मया ते हितार्थं बोध्यसे तन्नूनं त्वया विधीयताम्। यतो हि येनैतत्कर्तुं त्वम् अयाचिष्ठाः[९], येन च त्वत्प्रतीक्षायामद्यापि श्मशानमास्यते[१०] स कुत्सितो भिक्षुरिति मामस्मिन्नाहूयार्चयिष्यँस्त्वामुपहारीचिकीर्षुर्भूमौ साष्टाङ्ग

---

१. उदात्तोपदेशत्वात् 'नोदात्तोपदेश०' इति निषेधो न। २. चिण्णमुलोर्दीर्घोऽन्यतरस्याम् (चिण्वदिटः आभीयत्वेनासिद्धत्वाण्णिलोपः)। ३. वञ्चु प्रलम्भने—अनिदिताम्०—इति न लोपः। ४. 'जाग्रोऽविचिण्णल्ङित्सु' इत्युक्तेर्न गुणः। ५. भञ्जेश्च चिणि। ६. विभाषाचिण्णमुलोः। ७. प्रधाने कर्मणि प्रत्ययः। ८. हितार्थं बोध्यते इत्यपि साधु। ९. दुहादित्वाद्गौणे कर्मणि प्रत्ययः। १०. अकर्मकाणां कालादिकर्मकाणां कर्मणि भावे च लकारः। [इति भावकर्मप्रक्रिया]

प्रणामं कर्त्तुं त्वामादेक्ष्यति। तदा 'पूर्वं त्वं तथा कृत्वा मामादर्शय ततोऽहं करिष्ये' इति स त्वया वाच्यः। कुर्वति च तथा तस्मिन् त्वया तस्य शिरोऽसिना छेद्यम्। एतेन तस्य वाञ्छितया विद्याधरसिद्ध्या ते भविष्यते। तत्साहाय्येन च त्वयेयं भूमिर्भोक्ष्यतेऽन्यथा तेन भिक्षुणा बलिरूपेण त्वमुपहारीकारिष्यसे। एतदर्थमेवेयच्चिरं तेऽभिलषितं मया व्यघानि। अतः परं किन्तु सिध्यताम् 'सिद्ध्या ते भूयताम्।' राजानमेतदुक्त्वा वैतालेन तेन प्रेतशरीरान्निर्गत्य स्वाभीष्टमार्गोऽग्राहि। [ इति भावकर्मप्रक्रिया। ]

नरपतिश्च प्रीताद्वैतालात् क्षान्तिशीलं श्रमणमहितं विदित्वा गृहीतशवः प्रहृष्टस्तस्मात्प्रस्थितः असृग्विलिप्ततलगौरास्थिचूर्णनिर्मितमण्डले, विन्यस्तशोणितपूर्णकुम्भके, प्रज्वलत्तैलमहाप्रदीपे, हुतपार्श्वस्थहुतभुजि, स्वेष्टदैवतपूजनसम्भृतोचितसम्भारे कृष्णपक्षक्षपारौद्रे श्मशाने तन्मार्गाभिमुखस्थितमेकाकिनं तं श्रमणं ददर्श। भिक्षुस्तदानीं समुपानीतशवं राजानमवलोक्योत्थाय तं प्रशंसन्

प्रियापार्थक्ये
( कर्मकर्तृप्रक्रिया )

महतीं कृतज्ञतां तस्य तदनुग्रहकृतेऽभिव्यानक् आशु च तस्य स्कन्धात्तं शवमवतारयामास। तथा भस्मोद्धूलितगात्रः, केशयज्ञोपवीती, सञ्चीवरितप्रेतचीवरः, क्षणं ध्यानस्थितो भूत्वा तस्मिञ्छवे मन्त्रबलादाहूतं तं वैतालवरं प्रवेश्य कपालार्घपात्रेणार्घ्यम्, निर्मलैर्नरदन्तैः पुष्पाणि, सुगन्धिविलेपनम्, मानुषनेत्रैर्धूपम्, मांसैर्बलिं च क्रमाद्ददत् परिसमापिततत्सपर्यः पार्श्वगं राजानं भूतले तत्साष्टाङ्गप्रणामं कर्त्तुं निरदिशत्। तदाकर्ण्य स्मृतवैतालवचा भूपस्तमादौ तथा कृत्वा दर्शयितुमादिशदिति यावदेव स भिक्षुः; साष्टाङ्गो भूमौ निपतति तावदेव राजाऽसिस्[1]तस्य शिरोऽच्छिनत्। उदराच्च तस्य समुत्पाटितं हृत्पद्मं तस्मै वैतालाय चोपाहरत्।

एवं संजाते प्रीणैर्भूतगणैः साधु ! साधु !! इत्युच्चारिते सति तुष्टो वैतालस्तस्माच्छवादवादीत्–'राजन्, त्वं हि मयाऽत्यर्थं क्लेशित इति तवायासविचारेणापि मदीयेन हृदयेन[2] भिद्यते। किन्त्वधुना तवाभिनिवेशफलम्[3]पाचीति

---

❀ कर्मकर्तृप्रक्रिया ❀

१. असेः करणत्वेऽपि कर्तृत्वविवक्षायां प्रथमा। २. कर्मणः कर्तृत्वविवक्षायां भिद्यतेरकर्मकत्वाद्भावे प्रत्यये तृतीया। ३. 'कर्मवत्कर्मणा तुल्यक्रियः' इति कर्तुरभिहितत्वात्प्रथमा।

मत्प्रसत्त्या यद्भिक्षोरभीप्सितमासीत्तद्विद्याधरेन्द्रत्वं भूमिसाम्राज्यभोगान्ते ते सम्पत्स्यते ।' एवमुक्त्वा तस्माच्छवान्निर्गत्य स्वकीयस्थिति[1]र्जगाम ।

गते तस्मिन् वैताले, सुरैः सह तत्र राज्ञः पुरो महेश्वरस्तुष्टः साक्षादाविरभूत् । आदिशच्च, 'वत्स, साधु एतद् अकृत[2], यत् विद्याधरमहाचक्रवर्तिताग्रहाग्रहिलः पापोऽयं कूटतापसः समुपायातविनाशावधिः स्वयमेवावधि[3] । पुरा त्वं ममांशतो विक्रमादित्यरूपेण सृष्टोऽभूरिति म्लेच्छरूपा असुरास्त्वया अदमिषत । अद्य चोद्दामवृत्तिजनार्दनाय त्वं त्रिविक्रमसेनाख्यभूपतिरूपेणावतारितः इति वशीकृतसद्वीपपातालभूमिस्थापितानश्वरकीर्तिना त्वयाऽचिराद्विद्याधराधिराजेन भाविष्यते चिरानुभूतदिव्यभोगसुखेन च स्वेच्छयैव तत उद्विग्नेनान्ते मम सायुज्यञ्चावाप्स्यते । अपराजितनामा खड्गोऽयमधुना मत्तस्त्वयाऽऽदीयताम् । अस्य प्रसादाद्यथोदितं सर्वं त्वया लप्स्यते । एवमुक्त्वा प्रदत्तखड्गरत्नो देवः शिवो वाक्पुष्पाभ्यर्चितोऽन्तरधात् । त्रिविक्रमसेनोऽपि चाशेषं कृत्यं समाप्तमवलोक्य उपस्यन्त्यां निशि निजपुरं प्रविश्य क्रमावगतराजरात्रिविचेष्टिताभिः, विततोत्सवाभिश्च प्रकृतिभिरभ्यर्चितोऽखिलं तद्दिनं निनाय । स्वल्पैरेव च वासरैः स शिवोक्तं सर्वमवापेति तदपरिमितोऽर्थोऽर्थिजनपीडापहरणम[4]कारि । तद्गुणोपस्नुता च वसुधान्यसुसम्पन्ना वसुधाधेनुर्यथाप्रजाकामम् अदोहि[5] । चञ्चलापि राज्यलक्ष्मीः स्वयं तत्र अवारुद्ध[6] । कृतयुगशासने इव तदीयसाम्राज्येऽसृज्यत[7] स्वपूजायै स्रजं भक्तः । अयुज्यत योगी योगम् । अतप्यत[8] च निर्विघ्नं प्रतिव्रध्नं[9] तपस्तापसः । एवमुपभुक्तैहलौकिकैश्वर्यो भूपवर्यो भवसायुज्यमवाप ।'

इत्थं पथि शापविप्रयोगाच्चिरमिलितो विक्रमकेसरी मन्त्री मृगाङ्कदत्तं सर्वमभिधाय प्रकृतार्थमेवमुवाच यदेतां कथां तस्मिन् ग्रामे मासमभिधाय स वृद्धो

---

१. यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु तत्रैव 'कर्मवत्कर्मणा तुल्यक्रिय' इत्यस्य प्रवृत्तेरत्र कर्तृस्थक्रिये तदप्राप्तिः । २. 'अचः कर्मकर्तरि'इति वैकल्पिकश्च्लेश्चिणभावः । ३. हन्तेर्वधादेशे तस्मान्नित्यं च्लेश्चिण् । ४. 'अचः कर्मकर्त्तरि । ५. 'दुहश्च' इति वैकल्पिकश्चिण् 'न दुहस्नुनमां यक् चिणौ' इत्यनेन दुहेर्यक एव निषेधात् । ६. 'न रुधः' इति च्लेश्चिणभावः । ७. 'सृजियुज्योः श्यंस्तु' इति यगपवादः श्यन् । ८. 'तपस्तपः कर्मकस्यैव' । ९. प्रतिदिनम् ।

भूयोऽवादीत् यदङ्गीबः किल राजा त्रिविक्रमसेनो वैतालानुग्रहेण सर्वमिष्टं प्राप्तवान्। तस्मात्त्वमपि मन्त्रमिमं मत्तो गृहीत्वा निर्विषादस्तमेव वैतालमुख्यमनेन मन्त्रेण प्रसादयन् प्रभुणा मृगाङ्कदत्तेन सङ्गममवाप्स्यसि। उत्साहभाजां हि न किमप्यप्राप्यम्। भग्नोत्साहश्च सर्व एवावसीदति। त्वञ्च मदीयः सर्पदंशहर्तेति मे बन्धुरतस्त्वत्प्रीत्याऽहमेतन्निर्दिशामि। त्वमवश्यमेवं कुरु।

एवमुक्तवतस्तस्माद्विप्रात्सक्रियमन्त्रमादाय प्राप्तोज्जयिनिरहं तत्र श्मशाने रजन्यां कृतशवस्नपनादिस्तन्मन्त्राहूततच्छववैतालं यथावदभ्यर्चितवान्। स च तेनातीवसन्तुष्टोऽभीष्टं वरं मह्यं याचितुमकथयत्। अहञ्च 'यत्र मदीयः प्रभुर्मृगाङ्कदत्तो वर्तते तत्रैव मां नय। नातः परमन्यो मे वरो वर्तते' इत्यकथयम्। वैतालेन चेत्थमाकर्ण्य मां स्वपृष्ठे समारोप्य प्रेततनुप्रविष्टेन नभोमार्गेण च गन्तुं प्रावर्ति। अहं च युष्मानवलोक्य श्रीमत्पादमूलम् अनयम्[1]। समाप्तकृत्यो मया च विसृष्टः स एवायं वैताल इदानीं यथेच्छं गतः। नागशापाद्धवद्वियुक्तोऽहं यथाऽधुना श्रीमता समगंसि तथा स इदमवधिर्वृत्तान्तः।

एवं श्रुतात्मामात्योदन्तो मृगाङ्कदत्तो निजकान्तानिमित्तमुज्जयिनीं गच्छन् पारावताख्यमुनिशापभ्रष्टक्रममिलितकतिपयामात्यः, सम्भावितभाविशेषसम्पत्तिर्मुमुदे। [ इति कर्मकर्तृप्रक्रिया ]

परेद्युश्च विक्रमकेसरिणा, गुणाकरेण, विमलबुद्धिना, विचित्रकथेन, भीमपराक्रमेण, प्रचण्डशक्तिना, श्रुतधिद्विजेन च युक्तः शापविश्लेषितान् शेषान् सुहृदश्चिन्वानः शशाङ्कवत्याः सम्प्राप्त्यै आत्मनाऽष्टमः उज्जयिनीमन्वचलत्।

प्रियापार्थक्ये ( लकारार्थप्रक्रिया ) क्रमाच्च स ग्रीष्मशुष्कतोयाम्, तरुलताविरहिताम्, अहस्करप्रखरकरातिसन्तप्तवालुकाम्, जनरहिताम्, मरुमरीचिभिरुद्यद्दुःखानलज्वालामालाभिरिवावृताम्, उच्छुष्कमर्मरैस्तृणैर्विकीर्णकेशामिवावलोक्यमानाम्, आतपक्लान्तोदन्यन्मृगारवै रुदतीमिव प्रतीयमानाम्, विशङ्कटाम् विन्ध्याटवीं क्षुत्तृपार्दितैः सचिवैः सार्धं परस्परं—'स्मरसि विक्रम-

---

१. मां श्रीमत्पादमूले अनयत् इति विवक्षायां मुख्यकर्मणः कर्तृत्वविवक्षयाऽपि गौणकर्मणो वर्तमानत्वात् 'सकर्मकाणां प्रतिषेधो वक्तव्यः' इति यगात्मनेपदयोर्निषेधः। [ इति कर्मकर्तृप्रक्रिया ]

केसरिन्, केसरिणं द्वौ हनिष्याव[1]। अभिजानासि गुणाकर, यद्वनेऽभुञ्ज्वहि[2]; बुध्यसे भीमपराक्रम, स्वालये निवत्स्यावस्तत्र[3] स्वप्नं द्रक्ष्यावः' एवमालपन्नुदलङ्घयत्। गत्वा चाग्रे ददर्शार्कतापगलितामृतांशुद्रवमिव स्वच्छशीतजलम्, दिगन्तव्यापि-विस्तारम्, आत्मनः प्रतिबिम्बमालोकयितुम् विनिर्मितं त्रैलोक्यलक्ष्म्या मणि-दर्पणमिव स्थितं सुमहत्सर एकम्। तस्य च सरसः पश्चिमे तीरे ससचिवो राजपुत्रो वायुविधूनितविस्तारिशाखाभुजकदम्बकम्, मूर्धलग्नसुरसरितम्, नृत्यन्तं शङ्करमिव अभ्युन्नतेन व्योमपृष्ठावगाहिना शिरसा नन्दनोद्यानशोभामवलोक-यितुमिवोद्यतम्, दिव्यरसैः शाखावलम्बिभिर्दिव्यैः फलैः शोभमानम्, महान्तं दिव्यपादपमेकमवलोकयति स्म। तञ्चावलोक्य यावत्ते तं सुचिरं निरूपयन्ति[4] तावत् क्षुत्तृषार्दितास्तन्मन्त्रिणः प्रधाव्य तद्वृक्षफलानि भोक्तुमारूढास्तानि दृष्ट्वैव षडपि फलत्वमुपगताः। मृगाङ्कदत्तश्च तदानीं तानपश्यन्नतिविह्वलस्तरौ तस्मिन्नेकैकं नामग्राहमाह्वास्त। यदा च न ते प्रतिवचनं ददुर्नापि चादृश्यन्त तदा एतत्तरु-निवासिना भूतेन केनचित्ते भक्षिता इति विचिन्तयन् नैराश्यविधुरः स मूर्च्छितो महीतले न्यपतत्। तं तथाविधमवलोक्य द्रुमानारूढः पार्श्वस्थः श्रुतधिद्विजस्त-माश्वास्य तत्क्षणमुवाच—'देव, एवं विशेषज्ञोऽपि भवान् परित्यक्तधैर्यः कथमव-सीदति? विविधकर्मसूत्रसम्बद्धो नरः कदा[5] (कर्हि वा) निजकृतकर्मणां फलं भुङ्क्ते, स्वसंयोगेन वियोगेन वा कं भ्रातरं कतरं[6] पितरं वा तत्फलं भोजयति एतद्बुद्ध्वा यो व्यसने न मुह्यति (मोक्ष्यति, मोग्धा वा) शास्त्रीयज्ञानानुकूलञ्च आचरति (आचरिष्यति, आचरिता वा) स एव कल्याणं प्राप्नोति[7] (प्राप्स्यति, प्राप्ता वा) अतो नागशप्तानां त्वत्सहायकानां वियोगोऽधिकाधिकं त्वां दुःखा-करोति चेद् धैर्यं[8] बधान। मुहूर्तादुपरि मन्त्रिणश्चेदागच्छेयुरथ[9] (आगच्छन्ति, आगमिष्यन्ति, आगन्तारो वा) सत्वरं त्वमस्मादुज्जयिनीं गच्छ। अचिरेणैव समवाप्तशशांकवतीसंयोगश्चैधि।

---

❀ लकारार्थप्रक्रिया ❀

१. अभिज्ञावचने लृट्। २. 'न यदि' इति लृटः प्रतिषेधे लङ्। ३. 'विभाषा साकाङ्क्षे'। ४. 'यावत्पुरानिपातयोर्लट्'। ५. विभाषा कदाकर्ह्योः। ६. 'किंवृत्ते लिप्सायाम्'। ७. 'लिप्स्यमानसिद्धौ च' इत्युभाभ्यामुभयत्र भविष्यति लट्। ८. वियोगदुःखाकरणं लोडर्थस्य धैर्यधारणप्रैषस्य लक्षणम्; तेन दुःखाकरणे धैर्य-बन्धनं त्वया कर्तव्यमित्यर्थे 'लोडर्थलक्षणे च' इति लट्। ९. 'लिङ्चोर्ध्वमौहूर्तिके'।

एवं श्रुतधिनाऽऽश्वास्यमानोऽपि राजपुत्रस्तच्छुचाऽभिभूतः वारयत्यपि श्रुतधौ 'एषोऽहं सरस्यात्मानमुज्झितुं गच्छामि[1] इति समुत्तस्थौ। एतस्मिन्नेव कालेऽशरीरिणी वाग्गगनादुद्गता, 'पुत्र, साहसेनालम्, प्राणाँश्चेत्त्वं धारयसि[2] सर्वं[1] स्वन्तं ते भवति। अस्मिन् हि वृक्षे स्वयं देवो गणपतिर्निवसति। स च त्वत्सचिवैरेतैरद्यावमानितो यतो हि अक्षालितकराङ्घ्रयोऽनाचान्ताः क्षुधार्त्तास्ते फलानि लिप्सवोऽस्मिन् वृक्षे समारूढा इति फलस्पर्शसमकालमेव, 'यच्चित्ता भवन्तस्तद्गतिं गच्छन्त्विति' विघ्नेशावाप्तशापाः फलतां गताः। अन्येऽपि येऽद्यावध्यनुपलब्धास्ते चत्वारो मन्त्रिणस्तेऽपि अनेनैव पथाऽऽगता एवमेव वृक्षमिममारुह्य फलत्वमिताः। अज्ञानवशाच्च तैस्तथाकृतम्। जानन् हि को नामैवं गणपतिमवमानयेत्[3]। त्वं तु मया सचेतीक्रियसेऽतो नाहं सम्भावयामि त्वमपि तथैव भगवन्तं गणाधिपमवमानयिष्यसीति[4] त्वरितं तपोभिस्त्वं गणनायकं सन्तोषयिष्यसि चेच्छीघ्रं सिद्धिस्ते भविष्यति[5]' इति।

एवमुक्तो मृगाङ्कदत्तो जातास्थो 'गणेशश्चेत्तुष्येत् आशंसे मन्त्रिणः समुपेयाम्[6]' इति विचारयन् देहत्यागान्निवृत्तः सरसि कृतस्नानस्समभ्यर्चिततत्तरुस्थगणनायको निराहारः श्रुतधिपरिचरितस्तस्मिँस्तरुतले एकादशदिनानि विघ्नेशाराधनमकार्षीत्[7]। द्वादशेऽहनि तुष्टो गणेशो निशि स्वप्ने बभाषे, 'पुत्र, तुष्टस्तवाहमिति योऽयं निकटतमपक्ष आगामी तस्य यदवरमादिमसप्ताहात्तत्र युक्तस्त्वं मुक्तशापान् सर्वात्ममन्त्रिणः समवाप्स्यसि। तैः सह गत्वोज्जयिन्यामवाप्तशशांकवतीकः पुनस्स्वनगरीं प्रत्यागत्य पृथ्वीराज्यञ्च करिष्यसि अतो वीरस्त्वं तद्वियोगखिन्नोऽपि मार्गे धैर्यं[8] त्यजसि जात्वात्महत्यां [9]चिकीर्षसि गर्हितमेतदिति कथं त्वं शूराभिमतमार्गाद्विचलेः[10]।

एवं गणेशादिष्टो मृगाङ्कदत्तो निशाक्षये प्रबुद्धस्तत्स्वप्नादेशं श्रुतधयेऽभ्यधात्। तेनाभिनन्दितश्च प्रातः कृतस्नानोऽभ्यर्चितगणनायको यावत्तद्वासवृक्षप्रदक्षिणां कुरुते तावत्तत्तरोरवतीर्य फलत्वमुक्तदशा दशापि तत्सचिवास्तत्पादयोर्निपेतुः। स च तेष्वेकैकमधिकाधिकप्रेम्णाऽवलोक्य परिषस्वजे। तेऽपि च कृततपसमात्म-

---

१. 'वर्तमानसामीप्ये वर्तमानवद्वा'। २. 'आशंसायां भूतवच्च'। ३. किंवृत्ते लिङ्लृटौ। ४. अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि। ५. क्षिप्रवचने लृट्। ६. आशंसावचने लिङ्। ७. 'नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इति क्रियाप्रबन्धे (सातत्ये) भविष्यत्यनद्यतननिषेधे लुङ्। ८. 'नानद्यतनवद्०' इति सामीप्ये लुटो निषेधे लृट्। ९. गर्हायां लडपिजात्वोः। १०. विभाषा कथमि लिङ् च।

प्रभुं नवेन्दुमिव क्षाममवलोक्य 'कः प्रभुरात्मोपजीविनामर्थे एवमात्मानमवसादयेत्' इति चिन्तयन्तः, श्रुतधिविदितसर्वभूतार्थाः सन्नाथवत आत्मनो मेनिरे। स्वकार्यसिद्ध्यै लब्धधृतिर्मृगाङ्कदत्तश्चापि तस्मिन्नेव सरसि स्नात्वा स्वीयसचिवैः सह सहर्षं व्रतपारणां विदधे।

कृतपारणसुस्थितेन तेन तस्मिन्नहनि प्राप्ताश्चत्वारो मन्त्रिणः तद्विश्लेषकालवृत्तान्तम् अपृच्छ्यन्तेति तेषां मध्याद् व्याघ्रसेनाख्य एवमात्मवृत्तान्तं वर्णयितुं प्रारभत—

'पारावताख्यनागस्य शापतो भवद्भ्यो दूरविभ्रष्टो नष्टचेतनोऽहमटवीं भ्रान्त्वा रात्रौ लब्धसंज्ञोऽपि चिरान्न दिशो नापि च पन्थानमपश्यम्। विगतायाञ्च दुःखदीर्घायां निशि, समुदिते चाशाप्रकाशकेऽर्केऽहमेवमचिन्तयम्, 'अहो! अस्मद्वियुक्तः स नः स्वामी क नु गतो भवेत्! नातः परं सम्भावयामस्तं वयं प्राप्नुयाम इति तथापि जातूज्जयिनीं स शशाङ्कवतीप्राप्तिहेतोर्गतो भवेदित्याशया शनैः शनैर्दुर्दशामिव कष्टां तामटवीं गाहमानोऽग्निचूर्णोत्करैरिव चार्ककिरणैर्दह्यमानोऽग्रे प्रायाम्। अत्र चागत्य फुल्लोत्पलेक्षणम्, हंसादिमधुरशब्दैश्च सम्भाषणमिव कुर्वत् प्रयुक्तवीचिहस्ताग्रम्, प्रसन्नविपुलाशयम्, दर्शनादेव च सत्पुरुषमिव सर्वार्तिहरम्, सरोऽवाप्तवान्। तत्र स्नात्वा बिसानि भुक्त्वा पीतपानीयो यावत् स्थितस्तावदागतान् दृढमुष्टि-स्थूलबाहु-मेघबलानिमानहमद्राक्षम्। समेत्य चास्माभिर्भवद्वार्ता मिथोऽपृच्छि। किन्तु सर्वेऽपि वयं तामजानानाः पापशङ्किनस्त्वद्विरहासहाः देहत्यागाय यावन्मतिं कुर्मस्तावत्तस्मिन्नेव सरसि स्नातुं दीर्घतपसो मुनेः सुतो महातपाः, संवीतकृष्णाजिनः, सव्यहस्तोपात्तकमण्डलुः दक्षिणहस्तोढाक्षमालावलयः, सहागतमृगशृङ्गोत्खातस्नानमृत्स्नः कतिपयैरन्यैः समवयस्कैश्च मुनिकुमारकैर्युक्तः तत्रागतः सरःप्रपतनोद्यतानस्मानुपागत्य कापुरुषोचितात्तस्मात् कार्यान्निवारयन् दूयमानस्यास्माकं मानसस्य हेतुमपृच्छत्। तदा मुनिपुत्राय तस्मै तत्क्षणमामूलान्निजवृत्तान्तमहमुक्तवान्। तदाकर्ण्यायतिदर्शिभिस्तैस्तैर्वाक्यैः सम्बोध्य देहत्यागान्निवर्तिताः वयं स्नात्वा नातिदूरं मुनिपुत्रकेण तेनातिथ्यं विधित्सुना निजपितुराश्रममानीताः। तस्य चैकदेशे दत्तार्घ्यानस्मानुपवेश्यैकैकमाश्रमतरुं गत्वा स भिक्षामयाचदिति क्षणादेव तद्वृक्षच्युतैः फलैः परिपूर्णं स्वकीयं भिक्षापात्रमादायास्मदन्तिकं भजन् दिव्यास्वादैः फलैरस्माँस्तर्पयति स्म। क्षीणे

१. 'विभाषाधातौ सम्भावनवचनेऽयदि' इति वैभाषिको लिङ्।

चाहन्येकस्थानोपविष्टानां समापितसान्ध्यविधीनां मुनीनामाश्रमे वयं तद्दर्शनाय गताः। प्रणिपत्योपविष्टाश्च कृतातिथ्यैः प्रियंवदैस्तैर्महर्षिभिः कुतो यूयमिति क्षिप्रं पृष्टाः। अतस्तेन मुनिकुमारकेण तदाश्रमप्रवेशान्तोऽस्मत्सम्बद्धो वृत्तान्तस्तेभ्यो विनिवेदितः। यच्चाकर्ण्य कण्वाख्यो ज्ञानी मुनिरभाषत यदापद्यभग्नधैर्यत्वम्, सम्पदि च निरभिमानिता, सर्वदोत्साहसम्पन्नता चैतत्सत्पुरुषव्रतम्। अतो नाहमवकल्पयामि[1] जातु युष्मादृक्षा एवमात्मानमवसादयेयुरिति। महान्तो हि महान्ति कृच्छ्राणि निजधैर्यतोऽविगणयन्तः समासादितमहार्था एव महच्छब्दभाजो भवन्ति यत्र नैव स्वकीयमहत्त्वं ते परिपालयेयुराश्चर्यं[2] तत्। ये हि धैर्यधारया दुरुत्तराण्यपि कृच्छ्राणि समुत्तरन्ति त एव स्वाभीप्सितानि प्राप्नुवन्ति। गलितसत्त्वविलुप्तचेष्टाश्च नष्टा भवन्तीति भवादृशा अपि यद्येवमात्मशक्तिमवहेलयेयुरमर्षणीयमेतत्[3]। अतो वैक्लव्यमेतत्परित्यजत। युष्माकमधिपतिर्मृगाङ्कदत्तोऽद्यापि प्राणिति। अतो योऽयमध्वा गन्तव्य आ उज्जयिन्यास्तस्य यदवरं विन्ध्यशिखरपल्ल्यास्तदभ्यन्तर एव यूयं तं प्राप्स्यथ[4]। स चापि समवाप्तसर्वसचिवशशाङ्कवतीकोऽश्वमेधयाजी[5] राजा भविता।

इत्थं तेन महर्षिणोक्ता वयमवलम्बितधृतयो नीततन्निशाः, अपि सङ्गमयेद्विधिरस्माकं[6] प्रभुमिति धिया ततः प्रचलिता अध्वखेदखिन्नाः क्रमात्काननमेतदवाप्तवन्तोऽशनायोदन्यानिपीडिताः फलानां हेतोर्गणनाथवृक्षमेतमधिरुह्य फलत्वं गता अपि त्वत्तपसाऽद्य विमोचिताः। अयमेवास्माकं चतुर्णां त्वद्वियोगकालवृत्तान्तः'।

मृगाङ्कदत्तो निजसचिवाद्व्याघ्रसेनादेतत्सर्वमाकर्ण्य शशाङ्कवतीलाभसमुपलब्धधृतिस्तां निशामनैषीत्। प्रातश्च तस्मादुत्थायाशेषैः सचिवैः श्रुतधिना च युक्तो विघ्नविघातकवृक्षं नत्वा शशाङ्कवतीं प्रेप्सुरुज्जयिनीं गन्तुं शश्वत्समयस्यत्[7]। मार्गेऽनुतटोद्भिद्यमानस्फुरन्मुञ्जपुञ्जभिद्योध्यसन्निभानेकह्रदिनीस्तटिनीः, विचरद्भीममत्तमातङ्गाः, भग्नभुग्नकीचकाः, शुद्धाः पुष्पवतीरपि च क्रूरसत्त्वाश्रिताः, शान्तैः मुनिभिः, प्रच्छायतरुरोमन्थायमानमृगैश्चाश्रिता वनभुवः क्रमादतिक्रम्योज्जयिनीपुर्याः सान्निध्यमवाप। तत्र च गन्धवत्यां नद्यां कृतस्नानो विगताध्वक्लमः सानुगो

---

१. 'जातुयदोर्लिङ्'। २. चित्रीकरणे च। ३. यदाययोरुपसङ्ख्यानम्। ४. भविष्यति मर्यादावचनेऽवरस्मिन्। ५. अश्वमेधेन यक्ष्यमाण इत्यर्थे 'धातुसम्बन्धे प्रत्ययाः' इति नियमेन 'करणे यज' इति भविष्यति णिनिः। ६. 'उताप्योः समर्थयोर्लिङ्'। ७. 'हशश्वतोर्लङ् च'।

महाकालश्मशानं समतिक्रम्य राज्ञा कर्मसेनेन परिपालिताम्, गृहीतविविधायुधैः रक्षिभिरधिष्ठितप्रतोलीकाम्, गिरीन्द्रशिखराकारप्राकारपरिवेष्टिताम्, अविज्ञात-जनदुष्प्रवेशाम्, अतिदुर्गमपरिखापरिरक्षिताम् उज्जयिनीमाससाद। ताञ्चाव-लोक्य विमना मृगाङ्कदत्तः स्वानुगानुवाच 'प्रियाप्राप्तेस्तु गतिरेवैकत आस्ताम् प्रवेशोऽप्यत्र नास्माकं भवेत्' इति, एतदाकर्ण्य ते तमवोचन्, 'देव, अपि पयोधिं स्वबाहुभिरुत्तरेयुरध्यवसायिनः[1]। अपि गिरिं शिरोभिर्भिन्द्यु[2]र्विजिगीषोत्साहवन्तः। अतः कथमेकदैव सत्स्वप्यस्मादृशेषु सहायकेषु नैराश्यमित्थं भवतः? पुरीयमस्माकं बलसाध्या किन्त्वत्रोपायोऽवश्यं विचेतव्यः। एतद्विषये तु बहुशो देवताभिरपि भवानुपदेशित इति। एवं सचिवैः प्रोत्साहितः स कतिपयदिनानि बहिरे-वातिष्ठत्। तन्मन्त्री विक्रमकेसरी चैतस्मिन् समये वासभवनात् तत्प्रियाकर्षण-भिलाषया यावद्वैतालं ध्यायति तावत् कृष्णच्छविः प्रांशुः, उष्ट्रग्रीवः, गजाननः, महिषाङ्घ्रिः, ऊलूकाक्षः, खरकर्णो वैतालस्तत्र प्रादुरभूत्। किन्तु शम्भोर्वरात्तां नगरीं तथाविधा नाक्रमन्तीति तत्प्रवेशासमर्थोऽसौ जगाम। एतेनातिखिन्नं प्रभुमवलोक्य नीतिज्ञः श्रुतधिरुवाच, 'आश्चर्यं देव, नीतिज्ञोऽपि भवानजानन्नि-वैवं मोहमेष्यति[3]। स्वपरान्तरमनवेक्ष्य कोऽत्र प्रवेष्टुं विक्रमेत। नगर्यां ह्यस्यां चतुर्ष्वपि द्वारेषु एकैकस्मिन् कुञ्जरसहस्रद्वयी, वाजिनां च पञ्चविंशतिः, रथानां दशलक्षम्, एतद्रक्षार्थं सन्नद्धमास्ते। अतो वीराधिष्ठितपुर्यां परि-गणितामस्माकमस्यां प्रविष्टिर्नार्थसिद्धयेऽपि तु पतङ्गवृत्तये एव सम्पद्येत। न सम्भवामि स्वल्पेन सैन्येन प्रविश्यापीमां पुरीमत्रत्यं राजानं प[4]राजयेत भवान्। अतः का[5]मये, दारुणनर्मदानक्रत्रासज्ञातेन मायावटुना तेन पुलिन्दराजेन, तन्मित्रेणातिबलीयसा मातङ्गराजेन, तत्सम्बन्धानुरागिणा दुर्गपिशाचेन बाल-सब्रह्मचारिणा परमपराक्रमशालिना शक्तिरक्षितसंज्ञेन चैतैः सर्वैः सबलैः समेत्य सम्यक्सहायसम्पन्नः एतत्समीहितं साधयेत्। एवं करिष्य[6]ति चेद्भवान्नूनं विजेष्यते। दूतागमनसंविदश्च भवन्तं प्रतीक्षमाणः किरातराजोऽपीहैव समीपे स्थितो मातङ्गराजादेशान्मायावटुरपि सज्जो ध्रुवमागतो भवेदिति सर्वैर्मिलितैरुज्जयिनीपति-रभिषेण्येतेति सर्वे समुशन्ति। तस्मात्तस्य मातङ्गपतेः करभग्रीवनामकं निवास-

---

१–२. 'सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे'। ३. शेषे लृडयदौ। ४. अनव-क्लृप्त्यमर्षयोरकिंवृत्तेऽपि। ५. इच्छार्थेषु लिङ्लोटौ। ६. 'हेतुहेतुमतोर्लिङ्'।

कोट्टं गच्छाम। तत्रैव च कैरातो राजा शक्तिरक्षित आकार्यते। तत एव च सर्वैः सम्भूय सिद्धये समुद्योगो विधेयः। सम्भावयामि, स्वीकुर्यादेतद्भवान्[1]।

श्रुतधेरेतत्प्रज्ञापूर्णवाक्यमाकर्ण्य सामात्यो मृगाङ्कदत्तस्तद्वाक्ये श्रद्धात्। अन्येद्युश्च धृतोदयं, प्रदर्शिताशं, विश्वनभोनित्याध्वगं मित्रं नमस्कृत्य ससचिवो दुर्गपिशाचस्य मातङ्गेन्द्रस्य निकेतनं गन्तुं समुच्चचाल। तत्र पूर्वं विन्ध्याद्रिमारुह्य दूरतो दक्षिणपार्श्वं च तस्यावरुह्य दन्तिदन्ताजिनचिता भिल्लपल्लीरवलोकयन् कुत्र तस्य मातङ्गाधिपतेरास्पदं स्यात्! कुतश्च वयं तज्ज्ञास्याम इति मृगाङ्कदत्तोऽन्तर्दध्यौ। तदैव च मुनिकुमारक एकः सम्मुखमायादिति कृतानतिः सहामात्यस्तमपृच्छत्, 'अपि जानासि त्वं मातङ्गभूपतेर्दुर्गपिशाचस्य गृहं क्व वर्तते? तं हि वयं दिदृक्षवः।' एतदाकर्ण्य स तापसपुत्रकः उवाच, 'इतो नातिदूरे वर्तमानस्य विन्ध्यस्य सानुनि करभग्रीवनामा कुटिलदुर्गमः कोट्टो वर्तते तत्रैव प्रचण्डविक्रमो दुर्गपिशाचो मातङ्गपतिर्निवसति। स हि धनुर्धराणां लक्षस्याधिपतिः। तैर्दस्युभिः स द्विषां सार्थं दलयति। महाटवीं चैतां भुनक्ति। इच्छामि, अनेनैव पथा तेन सङ्गच्छेतां[2] भवान्। मुनिकुमारकादेतदाकर्ण्य सानुगो मृगाङ्कदत्तस्तेनैव मार्गेणात्वरत क्रमेण च करभग्रीवस्य मातङ्गराजकोट्टस्य भिल्लपल्लीसमाकुलं निकटं प्राप्नोत्। तत्र स इतस्ततो धावतो बर्हिबर्हेभदशनव्याघ्रचर्ममृगामिषान् शबरौघानवलोक्याचिन्तयत्, 'अरण्यवृत्तयो हीमे तिर्यञ्च इव जीवन्ति। तथापीमे दुर्गपिशाचं निजप्रभुं ब्रुवते। प्रजासु न क्वापि किञ्चिदराजकं वर्तते। निर्बलो हि जीवः सबलस्य जीवनं न भवेदिति राजशब्दो देवैर्विनिर्मितः'। एवं विचिन्तयन् स यावत्करभग्रीवकोट्टमार्गं विविदिषति तावत्तत्रागतस्य मायावटोश्चारैः समगतेति ते चारास्तस्यागमनं मायाबटवे न्यवेदयन्। तदाकर्ण्य ससैन्यः पुलिन्दराट् तत्रागत्य निकटीभूय परित्यक्ताश्वो राजसूनोस्तस्य पादयोः पपात। पृष्टकुशलो राजा चापि सामात्यं वाहनारूढं तं निजकटकमनैषीत्। तदागमनशंसिनं प्रतीहारं च शबराधिपो मातङ्गराजाय प्राहिणोत् इत्यचिरादेव स्वदेशतो—यथार्थनामा शिलाकूटकठोरशरीरावयवः, तरुणोऽपि क्षपिताशेषवयाः, कृष्णोऽप्यनन्यसेवी, मातङ्गराजोऽपि भूभृत्पादोपजीवी, नूतनजलधर इव मायूरपिच्छचित्रधनुर्धरः, हिरण्याक्ष इव वराहक्षतविग्रहः,

---

१. 'विभाषाधातौ सम्भावनवचनेऽयदि'। २. इच्छार्थेषु लिङ्लोटौ।

घटोत्कच इव धृतोत्सिक्तभीमरूपः, कलिरिवाधर्मनिरतोच्छृङ्खलप्रजः, पुलिन्दाश्रितपादोऽपरो विन्ध्याचल इव—दुर्गपिशाचोऽभ्याजगाम।

आगत्य च क्षितौ दूरान्न्यस्तशिराः स दुर्गपिशाचो मृगाङ्कदत्तं प्रणत्यकृतकृत्यमात्मानं मन्यमानो 'देव यत्किञ्चित्पत्रं पुष्पं श्रीचरणेषु समर्पये इतीच्छामि'[1] एवं ब्रुवाणो मुक्ताकस्तूरिकादिकमुपायनीचकार। ततस्तत्रैव सञ्जाते सेनानिवेशने कृतस्नानाहारादिकमेकान्ते सुखासीनं प्रीतिप्रश्रयं मृगाङ्कदत्तमवदत्, 'अयं मायाबटुर्बहुकालादिहायातस्त्वदाज्ञां प्रतीक्षमाणो मया साकं स्थित इतीयच्चिरं किं कुर्वन् क्व भवता स्थितमित्यधुनाऽस्मान् निबोधयतु भवान्। तदाकर्ण्य शशाङ्कवत्याः प्राप्त्यर्थमुज्जयिनीगमनपर्यन्तेऽभ्युदीरिते स्ववृत्तान्ते स दुर्गपिशाचस्तमब्रवीत्—देव, धीरो भव यच्चास्माभिः कार्यं तद्विस्रब्धं ब्रूहि। त्वदाज्ञया किं किंराजानं[2] कर्मसेनं बद्ध्वाऽत्रानयेम[3] उत तत्सुतां शशाङ्कवतीं प्रसह्यापहरेम इत्यादिशतु। तन्निशम्य मृगाङ्कदत्तो बहुमानमभाषत, 'अपि मिलिता भवन्तः शशिनं वशिनं कृत्वा भूमिमवतारयेयुः, सुमेरुं वा परमाणुसात्कुर्युः। किं बहुना, किं न कर्त्तुं शक्यते, सम्भाव्यते वा युष्माभिः तथापि शशाङ्कवतीप्राप्त्यर्थं यदुपयुक्तं भवेत्तत्कुरुध्वम्[4]। एवमन्योन्यालापं कुर्वतोस्तयोर्भगवान् भास्वान् अस्ताचलचूडामवलम्बितवान् इति स्कन्धावारे व्यतियापितत्रियामो मृगाङ्कदत्तोऽचिरात् किरातराजं निजमित्रं शक्तिरक्षितमानेतुं गुणाकरं विससर्ज। तत्र च गत्वा सर्वमुक्तवति गुणाकरेऽतिमहासैन्यः किरातपतिस्तत्राजगाम। मृगाङ्कदत्तोऽपि प्रत्युद्गम्य सकटकं तमभिपूज्य प्रीत्या प्रावेशयत्।

एतस्मिन्नेव काले प्रेषितदूतेभ्यः सर्वमाकर्ण्य मातङ्गराजस्यान्येऽपि मित्रबान्धवास्तत्राययुरिति यथोचितभूभागेषूपविष्टैर्नरेश्वरैर्मृगाङ्कदत्तो बुभुजे। मातङ्गराजमपि च भोजयित्वा अन्यानपि स्वसुहृदस्तत्रैव पृथक् पृथक् 'स्वादिष्ठरसवद्भिः पयोभिः सह भिस्सां भुङ्क्ष्व, दाधिकमास्वादयस्व, पिबत, खादत, भुङ्ध्वमास्वादयध्वमित्यभ्यवाहारयत्[5]।

---

१. इच्छार्थेभ्यो विभाषा वर्तमाने। २. 'किमः क्षेपे'। ३. 'विधिनिमन्त्रण'—इति संप्रश्ने लिङ्। ४. प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च। ५. 'समुच्चयेऽन्यतरस्याम्', 'समुच्चये सामान्यवचनस्य'।

सम्पादिते चैवमश्नीतपिवतादिक्रिये मृगाङ्कदत्तो मातङ्गराजादीन् निजसुहृदो जगाद—'इदानीं कालहारो व्यर्थ इति मुहूर्तादूर्ध्वमाशूज्जयिनी गच्छेत् [1]।' तन्निशम्य श्रुतधिरब्रवीत्, 'देव, नीतिविदामेतत्सम्मतं यद्विजिगीषुणा पूर्वं कार्याकार्यविभागो विधेयः। तत्र च यदुपायेनाशक्यं भवेत् तत्सर्वथा परित्यज्येत। एवञ्च सर्वेषु कार्येषु पूर्वः पूर्वो वरः। परः परश्चावरः। अतः पूर्वं सामप्रयोगोऽत्र क्रियतां [2] स्म। यतो हि सर्वैश्वर्यसम्पन्ने कर्मसेने न दानं सिद्ध्ये स्यात्। क्रुद्धलुब्धावमानिता अस्य न सन्तीति भेदोऽप्ययोग्यः। अतिबलाधिके दुर्गस्थेऽजितपूर्वे च तस्मिन्नन्यैर्नृपैः प्रयुक्तो दण्डः संशयावहः। अतः कालोऽयं यत्तेन राज्ञा सह साम एव व्यवह्रियेत [3]। तेन कार्येऽसिद्धे च दण्डप्रयोगो विधीयेत [4]।

श्रुतधेरेतद्वाक्यमाकर्ण्य सर्वे तत्र श्रद्दधुः। तद्दूरदर्शितां मन्त्रक्रमज्ञताञ्च प्रशशंसुरिति सर्वे परस्परं सम्मन्त्र्य दूतगुणान्वितं किरातराजानुचरं सुविग्रहनामानं दूतं लेखसन्देशं समर्प्य त्वमिमं कार्यभारं वहेः [5] औदासीन्यञ्चात्र मा कार्षीः' इत्युक्त्वा भूभृते कर्मसेनाय तं प्राजीहयन् [6]। स चोज्जयिनीं गत्वा राजभवनं प्रविश्य सिंहासनारूढं मन्त्रिभिः परिवारितं कर्मसेनं प्रत्यक्षीचकार। निर्दिष्टासनोपविष्टश्च पृष्टकुशलो राज्ञाभिनन्दितो लेखं समार्पयत्। मुद्राक्षेपप्रसारितञ्च यं प्रज्ञाकोषाभिधानो मन्त्री स्पष्टमेवमवाचयत्—

'स्वस्ति श्रीकरभग्रीवकोट्टमूलाटवीतटान्महाराजाधिराजस्यायोध्यापुरीपतेः श्रीमतोऽमरदत्तस्य पुत्रः श्रीमान् मृगाङ्कदत्तः उज्जयिन्यां वर्तमानस्य निजवंशपयोधीन्दोर्महाराजकर्मसेनस्य स्फुटमेवं सन्दिशति यत्त्वदीया कन्या दैवतैर्मदीया सदृशी भार्या समादिष्टेति सा मह्यं क्षिप्रं प्रदेया। एवं कृतेऽस्मत्पूर्ववैरभावो विनश्येत् नवीनो बन्धुभावश्च सम्पद्येत। नो चेन्निजभुजावेवैतत्कार्याय प्रार्थयिष्ये।'

मन्त्रिणा प्रज्ञाकोषेणेत्थं लेखे वाचितेऽतिक्रुद्धो राजा कर्मसेनो जगाद, 'ते हि सर्वदाऽस्मद्विपक्षाः। अनात्मज्ञस्य तस्याभिमानितैतेनापि लक्ष्यते यत्तेन स्वनाम पूर्वमुल्लिखितम्। अवज्ञया चास्माकं परस्तादुल्लिखितम्। अन्ते चात्मबाहुवीर्यं दर्पाध्मातेन तेनोदीरितम्। अतोऽभिमानिने तस्मै मत्प्रतिसन्देशोऽपि

---

१. लिङ्चोर्ध्वमौहूर्तिके ( कर्मकर्तृरूपम् )। २. स्मे लोट्। ३. लिङ् यदि। ४. अर्हे कृत्यतृचश्च। ५. शकि लिङ् च। ६. हेरचङीतिसूत्रेऽचङीत्युक्तेः कुत्वं न।

न योग्यः कन्यायास्तु कथैव केति दूत, त्वं याहि[1] याहीति याहि तव स्वामी चातः परं यत्समुचितमाकलयतां तद् विधत्स्व[2] विधत्स्वेति विधत्ताम्।

राज्ञा कर्मसेनेनेत्थमुक्तो दूतः सुविग्रहः क्रमायातमित्थमभाषत—'राजन्, राजपुत्रमपश्यन्नेव त्वमेवमोजायसे[3]। न सर्वसामान्योऽस्मत्स्वामी। न जीर्यति[4] तस्य यशःशरीरम्। न जृणाति[5] तस्य शक्तिः। नो जूर्यते[6] तस्य भुजबलम्। न जिनाति[7] तस्य तेजः। स तेजोभिरेवाखिजगदावृणोति[8]। यथार्हैर्धनैर्ज्ञातीन् वरति[9]! सर्वत्र सत्कीर्तिं वृणाति[10]। सर्वथा क्षेमं वरयति[11], व्रीयते[12] च यशः। युद्धे निवारयति[13] विद्विषः। निवर्ते[14] चानीतिशत्रुभीतिप्रजोपद्रवम्। यद्यप्याश्रितानां स गुरुमप्यपराधं मर्षति[15] तथाप्युद्धतानां नृपाणामणुमात्रमप्यनुचितव्यवहारं न मृष्यति[16]। युद्धे स निजविपक्षसैन्यप्रक्षिप्तनिशितशरसहस्रैरन्तरिक्षमाच्छादयति[17]। विद्विषां रुण्डमुण्डैराहवभूमिं छदति[18]। निजालौकिकगुणनिर्मितयशःपटैः स सुरलोकं छदयतीति[19] संख्ये सुरयुवतिविमुक्ताः पुष्पवृष्टयस्तं समाच्छादयन्ते[20]। अतस्तस्मिन्निहागते त्वं स्वपरान्तरमवभोत्स्यसे' इति।

सर्वसमक्षमित्थं तत्क्षमाभृतमुच्चैःकारमाचक्षाणे[21], ब्रुवाणे चेतरं नीचैःकारं, तस्मिन् वैदेशिकनैदेशिके, सकलैव राजसभा[22] निरतिशयक्षोभमवाप। क्रुद्धो नृपोऽपि दूतमवध्यं ज्ञात्वा नाग्रे किमप्यभ्यधात्। अन्ये च तत्रत्या वीराः

---

१–२. 'क्रियासमभिहारे लोट्लोटौ हिस्वौ वा च तध्वमोः', 'यथाविध्यनुप्रयोगः पूर्वस्मिन्'। ३. ओजस्वीव आचरसि, 'कर्त्तुः क्यङ् सलोपश्च'। ४. जॄष् वयोहानौ दैवादिकः। ५. जॄ वयोहानौ क्रैयादिकः प्वादिः। ६. जूरीहिंसावयोहान्योः दैवादिकः। ७. ज्या वयोहानौ क्रैयादिकः। ८. वृञ् वरणे, स्वादिः। ९. वृञ् वरणे भ्वादिः। १०. वॄञ् वरणे क्र्यादिः। ११. वर इच्छायाम्, चुराद्यन्तः। १२. वृञ् वरणे दिवादिः। १३. वृङ् सम्भक्तौ णिजन्तः। १४. वृञ् वरणे भौवादिकः उभयपदी। १५. मृष तितिक्षायाम् भ्वादिः। १६. दिवादिः। १७. छद अपवारणे चुरादिः। १८. छद आच्छादने भ्वादिः। १९. छद व्याप्तिकरणे चुरादिरदन्तः। २०. छद संवरणे चुरादिः। २१. 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ'। २२. 'सभाराजाऽमनुष्यपूर्वा' इत्यत्र राजपर्यायस्यैव ग्रहणान्नपुंसकत्वाभावः।

'न श्रद्दध्महे न मर्षयामहेऽस्मासु सत्स्वपि किंकिल अयमेवमस्मद्भूपतिमवमानयिष्यति[1]' इति दन्तदष्टौष्ठाः करैः करान् मृद्नन्तोऽधुनैव गत्वा किं न स हन्तव्य' इति मिथोऽब्रुवन्। वाचाटोऽयं वटुर्यातु, किमस्य गिरा कुप्यते, यद्दद्यते तत्समुचितं प्रतिविधास्यते इति धैर्यतोऽपरे निजगदुः। दूतोऽपि च विमनास्ततो विनिर्गतो निजशिबिरमन्वचलत्।

( इति लकारार्थप्रक्रिया )

इति कौमुदीकथाकल्लोलिन्यां पदवाच्यलकारार्थनिर्देशात्मको नवमः कल्लोलः।



१. 'किंकिलास्त्यर्थेषु लृट्'। [ इति लकारार्थप्रक्रिया ]

# प्रकीर्णकनिर्देशात्मको दशमः कल्लोलः

कर्मसेनसभातो विनिर्गतो दूतो निजकटकमासाद्य कर्मसेनोक्तं सर्वं समित्राय मृगाङ्कदत्ताय व्याहार्षीत्। सोऽपि च सुविग्रहोक्तमागृह्य विग्रहाग्रहग्रहिलो यानमादिक्षदिति तदादेशप्रबलपवनापातविद्युतो नर-तुरङ्ग-मातङ्गमकरो बलाम्भोधिः सपक्षाणां भूभृतां मनसि परितोषं विपक्षाणाञ्च प्रतिभयकरं क्षोभं समुत्पादयन् क्षमासीमानमतिचक्राम। क्षिप्रमेव च क्षितिं वल्गाविगलदश्वलालोन्मत्तकरटिकटकर्दमितां, कुर्वन् त्रिभुवनञ्च रणवाद्यघोषैर्बधिरयन् विजयायोज्जयिनीं प्रतस्थे।

प्रियापार्थक्ये
(प्रकीर्णकाः)

कतिपयैरेवाहोभिर्विन्ध्यमुल्लङ्घ्य सन्नद्धसैनिकः सुहृद्युक्तो मृगाङ्कदत्तः उज्जयिनीसीमानमनुप्राप्तवान्। अचिरेणैव चोज्जयिन्यवारुद्ध[1]। कर्मसेनोऽपि चैतत्सर्वमवगत्य सन्नद्धो युद्धाय नगर्याः निरगात्। निकटीभूय च व्यतिघ्नन्त्या[2]वुभयोः सेने सम्प्राहृषाताम्[3]। उभयत्रत्या वीरा भयानकमसङ्क्रामन्त। पञ्चदिवसान् यावत् प्रवहच्छोणितनिम्नगेन शूरान्तकरेण रणेनास्थीयत[4]। पञ्चमेऽह्नि श्रुतधिर्मृगाङ्कदत्तसमीपमागत्योवाच—युष्मासु समरासक्तेषु इतो धृतभिक्षुकरूपः स्वविद्याप्रभावतो निकटादप्यदृश्यो यदहमजगवेषं[5] तत्तुभ्यं वदामि कृपयाकर्ण्यताम्, 'यदैवासौ राजा कर्मसेनो युद्धाय निरगच्छत् तदैव मातुरनुज्ञया शशांकवती स्वगृहान्निर्गत्य समरे स्वपितुः श्रेयोऽर्थं देवीमाराधयितुं पुरीवर्तिगौर्यायतनमशिश्रियत्। तत्रस्था च रहसि एकामाप्तां चतुरिकाभिधेयां सखीमादिशत्, 'सखि, तातेन सह अयं विग्रहो मदर्थमुपस्थितः। वलिना चानेनाक्रान्तोऽयमस्मै राजसुतायावश्यं मां प्रदास्यति। यतो हि राजानो राज्यार्थमपत्यस्नेहं न गणयन्ति। राजसुतश्चायं ममानुरूपो वर्तते न वेति नाहमवगच्छामि। तत्कीदृगयं वर्तते, कीदृशस्तत्स्वभावः, कियच्च तच्छौर्यादिकमिति सर्वं तद्विषयकं गुप्तरूपेणावगत्यागच्छ। चतुरिकानामा त्वं स्वकीयनामानुरूपं चातुर्यमिहकर्मणि सदुपयुङ्क्ष्व' इति।

---

❀ प्रकीर्णकाः ❀

१. कर्मकर्तृरूपम् 'न रुधः'। २. 'न गतिहिंसासार्थेभ्यः'। ३. 'हरतेरप्रतिषेधः'। ४. भावकर्मणोः। ५. गवेषमार्गणे इति चौरादिकाल्लुङ्।

एवमुक्ता सा सखीसमुपेतास्मत्कटका भवन्तमवलोक्यान्यच्च सर्वं ज्ञातव्यं गुप्तरूपेणावगत्येतो निवर्तिता राजपुत्रीमजपत्, 'सखि, राजपुत्रस्याभिरूपताम-शेषां शेषरसना अपि न वदेयु[1]स्तथाप्येतावन्मात्रं मया वक्तव्यं यदसौ सौन्दर्ये त्वत्तुलामेवाधिरोहति । गुप्तरूपेण तच्छीलशौर्यादिविषयेऽप्यहमेवमवबोधिता यत्स पोषति[2] विप्राणां मनांसि, पुष्यति[3] च यशांसि धर्मप्रचारेण, पोषयति[4] निजा-नुजीविनो यथेष्टदानेन, न स पुष्णाति[5] स्वाननुगुण्यकृष्णां तृष्णाम् इति तस्य साहाय्यकरविक्रमः प्रतिक्षणं पूषति[6] । वृणक्ति[7] वृजिनैः सह स सङ्गम् । वृंक्ते[8] धर्म-प्रतिकूलैः सहयोगम् । वर्जयति[9] चानर्जवोपेतैः सम्पर्कम् । वर्जति[10] च दुर्जनानां सङ्गम् । महति[11] स नित्यं भक्त्या माहेयीम् । महयति[12] महाजनान् इति महीयमा[13]-नस्य तस्य लक्ष्मीरन्वहं मंहते[14] । यद्यपि स स्वद्विषतां बलं मिनोति[15] तथापि समरे निःशस्त्रान् न स मीनाति[16] । मीयते[17] मान्ये मायाम् । मयते[18] च धर्मेण धनम् । लुञ्चति[19] सोऽविश्वस्तान् निजसेवातः । न लुञ्चति[20] कस्मिन्नपि कार्ये, न च विलुञ्चति[21] स्वयमरीनतिरिच्यापरधनमिति य एव तस्यानुजीविषु परस्वम् अधिलुञ्चति[22] तस्य शिरोऽसौ सद्यो लुञ्चयति[23] । एकोऽपि स न रिपुषु [24]क्षुभ्यति । न [25]क्षोभतेऽनुग्राह्येषु । महाहवे च न तस्य मनो मनागपि [26]क्षुभ्नाति । नीच-सङ्गत्याः स जिहेति[27] । अनृतभाषणाद् ह्रीच्छति[28] । स्वैरिणीनां[29] च कथाश्रवणा-देव हृणीयते[30] । अयशस्करकृतिसम्मन्त्रणेनापि [31]लज्जते । व्रीडाजनकविचारेणापि

---

१. 'शकि लिङ् च' । २–३. पुष पुष्टौ भ्वादिर्दिवादिश्च ।

४. पुष धारणे चुरादिः । ५. पुष पुष्टौ क्र्यादिः । ६. पूष वृद्धौ । ७. वृजी-वर्जने । ८–१०. वृजी वर्जने क्रमशः अदादिः, चुरादिः, भ्वादिः । ११. माहेयीम् गाम्, महति पूजयति, मह पूजायाम् भ्वादिः । १२. मह पूजायाम् चुराद्यदन्तः । १३. महीङ् पूजायाम् कण्ड्वादिः । १४. महि पुष्टौ भ्वादिः । १५. डुमिञ् प्रक्षेपणे स्वादिः । १६. मीञ् हिंसायाम् क्र्यादिः । १७. मीङ् हिंसायाम् दिवादिः । १८. मेङ् प्रणिदाने भ्वादिः । १९. लुञ्च अपनयने भ्वादिः । २०. लुचि आलस्ये । २१.–२२. लुञ्च स्तेये । २३. लुञ्च अपनयने अस्य णिजन्तं रूपम् । २४.–२६. क्षुभ सञ्चलनेयस्य क्रमशः दिवादि-भ्वादि-क्र्यादि-रूपाणि । २७ ह्री लज्जायाम् जुहोत्यादिः । २८. ह्रीच्छ लज्जायाम् भ्वादिः । २९. 'स्वादीरेरिणोः' इति साधु । ३०. हृणीङ् रोषणे लज्जायाञ्च कण्ड्वादिः । ३१. ओलस्जी व्रीडायाम् तुदादिः ।

व्रीड्यति[1]। अर्दते[2] दुरितोदयम्। अर्दयति[3] च द्रविणदानेन दीनानां दारिद्र्यम्। वितनति[4] स नीतिधर्मकृत्यम्। वितनोति[5] च विद्विड्वनिताहृदयवियोगव्यथाम् इति कृत्यैरेतैः सत्कीर्तिं वितानयन्[6] सर्वतोभावेन स राजकुमारस्तवानुरूपतामावहति।'

सखीमुखेनेत्थमुक्तायास्तस्याः शशाङ्कवत्या मानसं त्वत्प्राप्त्यभिलाषापाशोऽमामोत्[7]। तत्क्षणादेव च तव स्वपितुश्च श्रेयस्काम्या[8] सा त्वद्विरहेण तनीयसीं तनुं बिभ्रती मदनार्ता मोमूर्च्छीति[9]। अतो गुप्तमद्य निशि गत्वा निर्जनाद् गौर्याश्रमादपहृत्यालक्षितस्त्वं तामिहानय। इमे राजानस्तावदस्य दुर्गपिशाचस्य मायावटोर्गृहे तिष्ठन्तु। पश्चाच्चेमे मया साकं तत्रैष्यन्ति। एवं कृते, निवृत्ते चास्मिन्नायोधने सैन्यसंक्षयो न भवेत्। तव, त्वदीयभाविश्वशुरस्य च सर्वथा कल्याणं भवेत्। युद्धरूपोपायो हि व्यर्थमेवाकाले यवीयस्सैन्यासून् जांग्रहीतीति[10] बुधास्तं जर्गृहति[11]।

श्रुतधिनैवमुक्तो मृगाङ्कदत्तोऽश्वानारुह्य सचिवैः सह ततश्चलित्वा श्रुतधिप्रत्ताभिज्ञानैः सुलक्षितं पुष्पकरण्डाख्योद्यानान्तरे वर्तमानं तत्कालोद्यच्छशांकरश्मिप्रकाशितं गौर्याश्रममवापत्।

इतश्च परिचर्यादिपरिश्रान्ते सखीजने निर्निद्रा शशांकवती व्यचिन्तयत् यत् मदर्थं राजानो राजपुत्राश्चान्वहमाहवे हन्यन्ते। अम्बिकया देव्या च स्वप्ने मदर्थार्थिताहवः स राजपुत्रो मदीयः पूर्वभर्त्ता समादिष्टः। किन्तु लेखादद्येत्थमवगतं यत्पिता पूर्ववैराद्दर्पाच्च मन्दपुण्यां मां न तस्मै दित्सतीति विधातरि वामे कथं स्वप्नदेवतादेशनिश्चयः क्रियेत। अतो यावद्रणे तातस्य तस्य मम प्रियस्य चाहितं न श्रृणोमि[12] तावद्धुताशमात्मानं किं न त्यजामि। एवमवधार्य गौर्याः पुरो गत्वा स्वोत्तरीयविरचितपाशा साऽशोकपादपे मर्त्तुमध्यवास्यत्।

एतस्मिन्नेव काले मृगाङ्कदत्तोऽपि सवयस्यस्तत्रागत्योद्यानतरुबद्धतुरङ्गमो गौर्याश्रममगमत्। तत्रावलोकितराजपुत्रिणा विमलबुद्धिना च निगदितः,

---

१. व्रीड लज्जायाम् दिवादिः। २. अर्द हिंसायाम् भ्वादिः। ३. णिजन्तः। ४.-५. तनु विस्तारे भ्वादितनादी। ६. तनु श्रद्धोपकरणयोः चुरादिः। ७. मव बन्धने यङ्लुकि लङ्, ज्वरत्वर० इत्युपधावकारयोरूठि पिति गुणः। ८. 'काम्यच्च', 'अप्रत्ययात्' टाप्। ९. मुर्च्छा मोहसमुच्छ्राययोः 'यङो वा'। १०. ग्रह उपादाने। ११. गृहू गर्हणे 'अदभ्यस्तात्' इति झस्यात्। १२. 'यावत्पुरानिपातयोर्लट्'।

'देव, अत्र काचित्कन्यका पाशेनोद्बध्यात्मानं जिघांसति[1]। तत्केयं स्यादिति पश्य।' तच्छ्रुत्वा राजपुत्रस्तामवलोक्य तदलौकिकरूपापहृतहृदयः केयं भवेदिति जिज्ञासया यावत्सवंस्यश्छन्नस्तिष्ठति तावदुद्विग्ना शशांकवती देवीं व्यजिज्ञपत्, 'देवि, अस्मिन् जन्मनि मदीयप्राग्दुष्कृतैर्यदि स राजपुत्रो मृगाङ्कदत्तो न मे पतिर्जातस्तदा त्वत्प्रसादेन सोऽन्यस्मिन् जन्मनि मदीयो भर्त्ता भवेत्।' एवं देवीं विज्ञाप्य सा राजपुत्री कृतदेवीप्रणतिर्वाष्पार्द्रलोचना पाशं कण्ठेऽर्पयामास। एतस्मिन्नेव च क्षणे प्रबुद्धास्तत्सख्यस्तददर्शनोद्विग्नास्तां चिन्तयन्त्यस्तदन्तिकमुपजग्मुः। शशांकवतीं च तस्यां दशायामवलोक्य, 'हा! सखि, किमेतत्त्वया समारब्धम्? साहसेनानेनालम्। आगमयस्व[2] क्षणं तावत्' इत्युक्तवत्यो व्यपाशयन्[3]। एवं सञ्जाते यावदत्युद्विग्ना शशाङ्कवती तत्र तिष्ठति तावद्गौरीगर्भगृहान्तराद्भारतीयमश्रूयत 'शशाङ्कवति, विषादं मा गाः। स्वप्ने उक्तं मदीयं वचो मृषा न भावि। स एवायं मृगाङ्कदत्तस्ते पूर्वभर्त्ताऽत्र प्राप्तस्तव समीपे वर्तते। अतोऽनेनैव सह व्रजित्वाऽखिलमैश्वर्यं भुङ्क्ष्व।'

एवमुक्ता सा यावत्किञ्चिदुन्मनायमाना[4] तिष्ठति तावन्मृगाङ्कदत्तस्य मन्त्री विक्रमकेसरी तामुपगम्य समभ्यधात्, 'देवि, सत्यं भवान्या समादिष्टः स एवायं ते पतिस्तव प्रेमपाशाकृष्टोऽत्रायातः।' तच्छ्रुत्वा साचीकृतलोचना सा कान्तं, तेजस्विनं, सहचारिणां मध्यवर्तिनञ्च तं दृष्ट्वा यावत्पतदनङ्गशरपुङ्खपक्ष्मचितैरिव कण्टकितैरङ्गैः स्तम्भनिश्चला तिष्ठति तावन्मृगाङ्कदत्तस्तामुपेत्य प्रेमपूर्णया गिरोवाच यत् तवगुणपाशाकृष्टः परित्याजितनिजबन्धुराज्यदेशः, अनुभूतानेकारण्यवासवसुधाशयनक्लेशः, दासीभूतोऽहमहमिहायातः। तत्ते मयि स्नेहानुरोधश्चेदस्मत्पुरपुरन्ध्रीनयनोत्सवं प्रवर्धय। सङ्ग्रामः शाम्यतु पक्षद्वयं श्रेयश्चानुभवतु।

मृगाङ्कदत्तेनेत्थमुक्ता शशाङ्कवती मन्दाक्षमन्दाक्षरं समाचचक्षे 'त्वत्पर इदानीमयं जनस्त्वच्चित्त इति यथा कुशलं भवेद्यच्च तेऽभीष्टं स्यात्तथैव विधीयताम्।'

शशाङ्कवत्या वाक्सुधयेत्थं सिक्तो मृगाङ्कदत्तो गौरीं प्रणम्य राजपुत्रीञ्च तामश्वे स्वपृष्ठतः समारोप्य अश्वसमारूढैर्दशभिः शस्त्रपाणिभिर्वीरैः सचिवैः सह धृतायुधो रात्रावुज्जयिन्या निर्गत्य श्रुतधिप्रदर्शितयुक्त्या शशाङ्कवतीसहितो मायावटोर्गृहमागमत्।

---

१. 'अञ्जनगमां सनि', 'अभ्यासाच्च'। २. 'आगमेः क्षमायाम्'। ३. पाशं व्यमुञ्चन्। ४. 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः'।

क्षणानन्तरमथ प्रबुद्धेषु रक्षिषु राजसुतामपहृतामवगत्य राजमहिषी तदानीं स्कन्धावारस्थितं कर्मसेनं तद्वृत्तं नगराध्यक्षेण अवागमयत्। स च तदाकर्ण्य रहसि सेनापतिमाकार्य शूराधिरूढैः पञ्चभिः शतैरश्वैस्तत्र गत्वाऽन्विष्य मृगाङ्कदत्तं हन्तुं बद्धुं वा समादिदेश। सेनापतिश्च यथानिर्दिष्टबलयुक्तः कटकाद्रात्रावुज्जयिनीमागात्। तत्र च मिलितान्नगराध्यक्षात्सोऽशृणोत् यदन्यैर्वीरैरिव कैश्चिद्वीरैरेवापहृता राजपुत्रीति व्यर्थोऽवस्कन्दः। तच्च स राजभवनमासाद्य कर्मसेनं विज्ञापितवानिति राजपुत्रीप्राप्तिं प्रयत्नासाध्यां मत्वा विनिवृत्तावस्कन्दविचारास्ते तूष्णीमेव तां निशामनयन्। मृगाङ्कदत्तसैन्यशिविरेऽपि च मायावटुप्रमुखा नृपाः श्रुतधेः कथनानुसारेण युद्धसन्नद्धा एव तस्यां निश्यजागरुः।

प्रातःकाले चारैरन्विष्टवृत्तान्तः कर्मसेनो मृगाङ्कदत्तकटके दूतं सम्प्रेष्य सर्वान् राज्ञो विज्ञप्तवान् यद् यद्यपि मृगाङ्कदत्तेन मदीया सुता छलेनापहृता तथापि तं तस्या उपयुक्तं पतिं मन्वानैरस्माभिरित्थं विज्ञाप्यते यत्स युष्माभिः सह मम गृहमायातु येन मत्सुतायास्तेन सह सविधि विवाहो भवेत्। तत्सन्देशमाकर्ण्य मृगाङ्कदत्तसहिताः सर्वे राजानः कर्मसेनसन्देशं परस्परं विचारयन्तः ऐकमत्येन निरचैषुर्यत्तदीया सुता प्राप्तैवेति तद्गेहगमने कुशलममन्वानानामस्माकं तत्र गमनमश्रेयस्करम्। एतदाकर्ण्य मृगाङ्कदत्तः श्रुतध्यभिमतमजिज्ञासत। स चाह 'कर्मसेनस्य गृहेष्ववश्यं गन्तव्यमित्येषा मदीया मतिः यतो हि सर्वमेतदशाठ्येन तेन सन्दिष्टमन्यथा सुतायामपहृतायामपि सोऽजेयो बली युद्धं त्यक्त्वा कथमेवमुदासीत[1]। सबलस्य च ते तद्गेहगतस्य स किं कुर्वीत? मन्ये, तव तत्र गमनं तेन सहाजर्यं संगतं स्थापयिष्यति परस्परप्रत्ययञ्च स्फावयिष्यतीति दुहितृस्नेहेन सोऽग्रे सहाय एव भवेत्। स हि अवैधविवाहं न वष्टि तेनेत्थं विशिनष्टीति तत्र गमनं श्रेयः।

एतदाकर्ण्य सर्वे राजानः साधु! साधु!! इति ब्रुवाणाः श्रुतधिं श्रद्धाय तद्वचः प्रशशंसुरिति मृगाङ्कदत्तस्तानवोचत् 'सर्वमेवमस्तु, किन्तु तातमम्बाञ्च विना न मे विवाहो रोचते इति तयोराह्वानाय कश्चिदितो व्रजतु। विज्ञाततदभिप्रायश्चाहं यथोचितं विधास्ये।' एवमुक्त्वा स तत्रस्थ एव भीमपराक्रमं स्वमन्त्रिणं पित्रोः पार्श्वं प्रैषयत्। स चाप्ययोध्यामागत्य सुतवियोगक्षामतनोः सपत्नीकस्याभीष्टसुतोदन्तश्रवणसमुत्सुकस्य राज्ञः पादयोर्निपत्य गृहनिर्गमनादा-

१. 'विभाषा कथमि लिङ् च'।

रभ्य कर्मसेनीयसन्ध्यन्तं विविधाद्भुतं सर्वं स्वप्रभुवृत्तान्तं निवेदयन् इत्थं प्रकृतमुक्तवान् यत् तव सूनुना मृगाङ्कदत्तेन स्ववीर्यतः कर्मसेननृपतिसुता शशाङ्कवती समुपालम्भि। तद्विवाहश्च देव्या देवेन च विना शोभनो न प्रतिभासते इति युष्मान् प्रतीक्षमाणः स शबराधिपतेर्मायावटोर्गृहे वर्तते। तेन विसृष्टश्चाहमिह भवन्तं सर्वं विज्ञापयितुमायितो[1]ऽमायितः[2]।'

तदाकर्ण्य सुतकल्याणे कृतमतिरमरदत्तस्तदानीमेव देव्या सार्द्धं मतङ्गजारूढोऽत्युत्सुकः सचिवैः सह हस्त्यश्वबलयुक्तः पुत्रं प्रति प्रागास्त[3]। अल्पैरेव च प्रयाणकैः स शबराधिपदेशस्थं सुतकटकमवाप। पितुरागमनमाकर्ण्य समग्रै राजभिः सह चिरोत्सुको मृगाङ्कदत्तोऽपि च निर्गत्य पितरौ दृष्ट्वा दूरादेव तुरङ्गमादवतीर्णो गजावरूढयोः पित्रोश्चरणाननमस्यत्। सर्वे तत्सहायकनृपाश्चापि सदेवीकममरदत्तं क्रमशः प्रणेमुरथ मायावटो राजधानीं प्रविश्य तत्र पादावनतां स्नुषां शशाङ्कवतीं चावलोक्य ततो निर्गतोऽमरदत्तः स्वकटके वसतिं विधाय पुत्रेण सर्वैः राजभिश्च सह भुक्त्वा विविधोत्सवैस्ससुखं तद्दिनं नयानो भाविना चक्रवर्तिपुत्रेण मृगाङ्कदत्तेनात्मानं गौरवान्वितं च मन्वानस्तत्रातिष्ठत्।

एतस्मिन्नेव समये कर्मसेनप्रहितो दूतः समागत्योवाच, 'देव, अस्मत्स्वामी मन्मुखेनाभिधत्ते यदहमात्मपुत्रं सुषेणं तत्र प्रेषयामि। स च विधिना निजभगिनीं तुभ्यं दास्यतीत्यस्मत्स्नेहानुरोधश्चेत्तामविधिना नोर्द्वहे[4]ः। राजोचितमेतत्सन्देशमाकर्ण्य नृपतेरमरदत्तस्य हृदयमतितुष्ट्याऽविच्छ्रदिति[5] स प्रतिसमदिक्षद् यदस्मासु त्वदीयप्रभोरेवं स्नेहश्चेत्तर्हि स सुषेणमिह प्रेषयतु वयं निजेन पुत्रेण तत्सुतायास्तथा विवाहं करिष्यामो यथा सर्वथा स सर्वेषां सन्तोषकृद्भवेत्।

दूतमुखेन कर्मसेनमेवं प्रतिसन्दिश्यामरदत्तः, श्रुतधिम्, निजपुत्रम्, नृपतींश्चान्यानेवमुवाच, 'अधुना वयमयोध्यां गामहे। तत्रैव विवाहः शोभते। सुषेणस्य यथाविधि सत्कारश्चापि तत्रैव सम्बोभवीति इति दुर्गपिशाचो मायावटुश्चैहैव सुषेणं सम्प्रतीक्षमाणौ तिष्ठताम्। आगतेन च तेन सहेमौ पश्चादयोध्यामुपारिष्यतः।'

राज्ञ एतद्वच आकर्ण्य सर्वे राजभिरनुमतोऽमरदत्तोऽन्येद्युर्देव्या सैन्यैश्च सह ससचिवमृगाङ्कदत्तः, सुषेणागमनावधि तत्र मायावटुं संस्थाप्य शशाङ्कवत्या सह

१. अय गतावित्यस्मात् क्तः, आगत इत्यर्थः। २. माया संजाता अस्येति मायितस्तथाभूतो नेत्यमायितः (मायारहित इति भावः)। ३. गाङ् गतौ। ४. 'अर्हे कृत्यतृचश्च'। ५. विच्छृ व्याप्तौ (व्याप्तमभवत्)।

तस्माच्चलित्वा मार्गक्रमेण किरातराजस्य शक्तिरक्षितकस्य गृहमवाप्यैकं दिनं तत्र विश्रान्तः क्रमात्स्वनगरीमयोध्यामायतामायत ।

अन्येद्युर्गणकैर्लग्नाहे निश्चिते सति राजाऽमरदत्तस्तद्विवाहार्थं सर्वां सम्भृतिं चकार । अचिरादेव चैको मायावटोर्हृष्टो दूतः समागत्य नृपतिं व्यजिज्ञपत् 'देव, राजपुत्रः सुषेणः स नृपतिर्मायावटुश्चागत्य अयोध्यायाः सीमान्ते वर्तेते', तन्निशम्य नृपतिरमरदत्तः स्वकीयेन सेनापतिना सह मृगाङ्कदत्तं ससुहृदं सुषेणं प्रत्यभ्युद्गन्तुमादिदेशेति स तदाज्ञां शिरसा वहन्नयोध्यातो निर्गत्य कार्मसेनिमुपागतवान् । दूरतश्चैव वाहावतीर्णौ कृतकण्ठग्रहौ मिथः पृष्टकुशलौ नृपात्मजौ प्रीत्याऽमिलताम् । एकरथारूढौ च पौरपुरन्ध्रीणां नयनोत्सवं बंहयन्तौ[1] प्राविशतामयोध्याम् । सुषेणश्च तत्र कृतनृपतिप्रणतिरुपलब्धतदतिसत्कृतिरथ स्वसुर्निवसतिमुपगच्छति स्म वाष्पायमाणनेत्रया च तया कृताश्लेषो व्रीडापरवशां तां जगाद, 'स्वसः, तातस्त्वामाह अद्यैतन्मया ज्ञातं यदम्बिकया स्वप्ने राजपुत्रो मृगाङ्कदत्तः तव पतितिर्निर्दिष्ट आसीत् । भर्तृमार्गानुसरणं हि स्त्रीणां परमं व्रतमिति तावकीनमिष्टमिदानीं सिद्धम् ।' तन्निशम्य निजकृत्यानुभूतगौरवं तां सुषेणो राजाग्रे नीत्वा तदर्थं सञ्चितप्रेषितं सर्वं धनं प्रदर्शयन्नुवाच, 'तातानुप्रेषितं सर्वमेतद्धनं विवाहवेद्यामस्यै प्रदास्यामीति ।' अथ अन्नं भुङ्ग्ध्वं दाधिकमास्वादयध्वमित्यभ्यवहर[2]ध्वमित्यादिप्रेमपूर्वकमेकैकमुच्चार्य सम्पादितेऽशनपानादिव्यापारे मृगाङ्कदत्तादियुताः सर्वे जना निर्वृत्तास्तद्दिनं निन्युः । लग्नदिने चान्येद्युरतिव्यग्रे राज्ञि मृगाङ्कदत्तः स्वावसरानुरूपस्नानादिक्रिया निर्वर्तयामास । प्राकृतिककान्तिकृतकौतुकामपि केवलमाचार इति शशांकवतीं नार्यः पर्यष्कार्षुः[3] । कौतुकागारादथ निर्गत्य प्रज्वलद्धुतभुजं वेदीमासीनयोर्वधूवरयोः उपरि प्रयत्नसाफल्यहृष्टस्य कामस्य सुहासानिव आचारलाजान् अवाकिरन्नरनार्यः । क्रमाच्च सम्पाद्यमाने वैवाहिकक्कृत्ये राजसुतायाः शशांकवत्याः फुल्लाब्जकलिकाशोभारुचिरलक्ष्म्या पाणिमच्युत इवाग्रहीन्मृगाङ्कदत्तः इति यथार्हप्रदत्तैर्हस्त्यश्वरत्नाभरणान्नपानवस्त्रादिभिरमरदत्तो राजा निजप्रियपुत्रविवाहोत्सवमुपलक्ष्य सपौराः सर्वाः प्रकृतीर-

---

१. बहुलं कुर्वन्तौ; बहुलशब्दाण्णिचि इष्टवद्भावः । २. 'समुच्चयेऽन्यतरस्याम्', 'समुच्चये सामान्यवचनस्य' । ३. 'सम्परिभ्यां करोतौ भूषणे', 'अडभ्यासव्यवायेऽपि सुट्कात्पूर्वस्येति वक्तव्यम्' ।

रञ्जयत्। कृताभिषेकस्य सुषेणस्य शिरस्युष्णीषं परिसित्य[1] तदुचितमेकं देशं हस्त्यश्वहिरण्यभारवस्त्रादिकं च दत्वा शबरकिराताधिपतिमायावटुशक्तिरक्षितादीनपि तथैव सममानयत्। एवञ्चोत्सवतूर्यनिःस्वने समुल्लसति, निष्पन्नविवाहमङ्गलो मृगाङ्कदत्तो नवोढया शशाङ्कवत्या सह निजमन्दिरं प्रविवेश तथा यथासमयं राजभिः, सुषेणेन, शशाङ्कवत्या च सह विविधाहारपानानिगोष्ठ्यादिभिः सह तद्दिनमनैषीत्।

परेद्यवि स्वस्वदेशविसर्जितसुषेणादिराजचक्रः सुतशौर्यसुखनिर्वृतो भूपतिरमरदत्तो निर्विघ्नपरिसमापिताखिलवैवाहिककृत्यः परमानन्दमन्वभवत्। मृगाङ्कदत्तोऽपि च वैरिणो विजित्य तत्तत्क्लेशैरवाप्तया शशाङ्कवत्या, भीमपराक्रमादिभिर्निजसचिवैश्च चिरं सुखी समवतस्थे।

कालेनाथ भुक्तसर्वविषयोऽमरदत्तो वर्षीयांसमात्मानमवगत्य, 'परैरनिन्द्यं चरितं महात्मनां वयोऽनुरूपोचितमेव शोभते' इति नीतिमनुस्मरन् प्रमुखसचिवपौरादिभिः सह सम्मन्त्र्य शुभेऽहनि गणकोक्तलग्ने सुयोग्यमात्मजं राज्येऽभिषिच्य वाराणसीं गतो गङ्गाम्बुपरिप्लुताङ्गस्त्रिसन्ध्यं त्रिपुरान्तकं वरिवस्यन् सपत्नीको मुनिवत्तपस्यन् फलमूलादि व्रतयंस्तस्थौ। मृगाङ्कदत्तोऽपि च भास्वानम्बरतलमिव विपुलामलं राज्यमवाप्य करसन्निपाताक्रान्तसकलक्षितिभृत्प्रसरत्प्रतापो निजसहायकसचिवैरयोध्यामध्यास्याश्वमेधेनेष्ट्वा नानादिगागतभूपाश्रितपादपद्मो दयितया शशाङ्कवत्या सह चिराय निष्कण्टकसुखान् भोगान् बुभुजे।

[ मृगाङ्कदत्तकथासमाप्तिः ]

मलयवनान्ते पिशङ्गजटो मुनिरित्थं मृगाङ्कदत्तीयां कथां कथयित्वा विरहिणं नरवाहनदत्तं जगाद 'प्राप्नोतीह[2] पुरा मृगाङ्कदत्तो यथा शशाङ्कवतीं, त्वमपि तथैवावश्यं मदनमञ्चुकामवाप्स्यसीति धृतधैर्येणावलम्बितस्थैर्येण भवता भवितव्यम्।'

---

१. षिञ् बन्धने; 'परिनिविभ्यः सेवसितसय—' इति षत्वं तु न, सितसयेति प्रत्ययविशिष्टस्य ग्रहणेन तदुभयप्रत्ययान्तस्यैव 'विषितः, विषयः' इत्यत्र षत्वविधानात्। २. यावत्पुरानिपातयोर्लट्' इति भूतार्थे लट्।

एवं तस्मान्मुनीन्द्रोदाराशयात्कर्णनलिकाद्वारेणापीतामृतवचा नरवाहनदत्तो मदनमञ्चुकावासावाहितधृतिर्मलयगिरौ ललितलोचनामन्विष्यन् यावद्विचरति तावदेव तस्य गोमुखप्रभृतयश्चिरमितस्ततस्तमन्विष्यन्तो बम्भ्रम्यमाणाः[1] सचिवाः, समवचितकुसुमा ललितलोचना च तत्राऽऽगंसतेति[2] निजचरणनतांस्तान् सर्वान् अभिनन्द्य तैः सह स स्वपुरीमाजंगे[3]। तत्र च सर्वपरिव्राजकजनमिलितो निजप्रियतमां मदनमञ्चुकां समवाप्य जहर्षतमाम् ।

प्रियासमागमः

इति कौमुदीकथाकल्लोलिन्यां प्रकीर्णकनिर्देशात्मकः दशमः कल्लोलः ।



१. भ्राम्यतेर्यङन्ताच्छानच् । २-३. गाङ्गतौ ।

( इति प्रकीर्णकाः )

# अथ कृदन्तनिर्देशात्मक एकादशः कल्लोलः

कौशाम्ब्यामित्थमात्मपरिवारेण सङ्गतो वत्सेश्वरसुतो नरवाहनदत्तः आद्यया मदनमञ्चुकयाऽन्याभिश्चापि दिव्याभिर्वनिताभिः सह परिक्रीडमानः पितृविभूतिभिः सम्पूर्णकामो गोमुखादिभिः सह निवसन्[1] स्वाभीष्टवधूसङ्गमनोरमान् तौर्यत्रिककलापरम्यान् दिवसान् व्यतियापयामास। अथैकदा स तामग्र्यां कान्तां मदनमञ्चुकां सपरिजनां निजावरोधस्यान्तरनालोकयन्नुषसि रजनीविरहापगतकान्तिर्निशाकान्त इव विवर्णतां गतोऽचिन्तयत्, किं मदीयं चित्तं जिज्ञासमाना मदीया प्रिया क्वाप्यतिरस्यत् आहोस्वित् मम कस्यचिदपराधस्य लेशात्क्वापि कुपितैव गता। केनचिन्माययाऽपहृताच्छन्ना वा कुत्रचित्स्थापितेत्थमनेकसङ्कल्पविकल्पपरम्पराविह्वलः किंकर्तव्यविमूढः समजायत। तस्य तथाभूतामनवलोकितव्यां[2] दशामवलोक्य तस्य पिता वत्सेश्वरो मातरो मन्त्रिणो भृत्याश्चातिविह्वलतां गताः। निजसुतया विहीना कलिङ्गदत्ता चापि सममुहत्।

मदनमञ्चुकापहारः
(कृत्यप्रक्रिया)

अथैकान्तःपुररक्षिकाऽऽकर्णयत्सु सर्वेषु नरवाहनदत्ताग्रेऽब्रवीत् यद्धर्म्याग्रे सतीं मदनमञ्चुकामवलोक्य नभसोऽवतीर्ण एको विद्याधरयुवा यश्च 'मानसवेग' इति स्वनामोक्त्या कलिङ्गसेनामभ्येत्य मदीया सुता दातव्या इति तामयाचत्, तदानीञ्चैनया निषिद्धो यथागतं गत्वा गुप्तमिदानीमागत्य स मायया किं न तामपहरेत्। परदारान् यद्यपि दिव्या नैव कामयन्ते तथापि रागान्धं जनं सदसद्विवेको रहयतीति सर्वं सम्भाव्यते। तदाकर्ण्य नरवाहनदत्तस्य विरहोत्प्लुतं चेतो वीचिविक्षोभितमम्बुजमिवाजनि। रुमण्वांस्तत्राब्रवीत् 'इयं पुरी अभितो रक्षिता वर्तते इतीहासंस्तुतस्य कस्यचिदपि प्रवेशनिर्गमौ न सरलौ। हरप्रसादाच्चास्या अन्येनानिष्टेन न सम्भवनीयमिति[3] प्रणयकोपात्तयैव क्वचित्स्थितया भुवेलिमम्[4]। प्रणयकुपिता हि कामिन्य एवं प्रायः कुर्वन्तीति बहुत्र प्रसिद्धं वर्तते। तथाहि—

---

❀ कृत्यप्रक्रिया ❀

१. 'धातुसम्बन्धे प्रत्ययाः'। २. 'तव्यत्तव्यानीयरः'। ३. 'तव्यत्तव्यानीयरः'। ४. 'केलिमर उपसंख्यानम्'।

पुरा अङ्गिरानाममुनिरष्टावक्रस्य कन्यां सावित्रीं विवाहार्थमार्थयत् किन्त्व-न्यस्मै पूर्वकल्पितां स्वसुतां सगुणायापि अदानीयाय[१] तस्मै मुनयेऽङ्गिरसेऽदेयां मत्वा प्रत्याख्यात्। अतो मुनिरसावश्रुतानाम्नीं तद्भ्रातृतनयामुपयम्य तया भार्यया सह सुखामास। अश्रुता च सावित्रीं पूर्ववाञ्छितां जानाति स्मेत्येकदा यदा सोऽङ्गिरा मुनिर्गायत्रीं जपन्नतिष्ठन्मौनी तदा सा 'आर्यपुत्र, किमेवं चिरं चिन्त्यते' इति प्रणयेन मुनिमपरीपृच्छिष्ट। तदुत्तरे 'प्रिये! सावित्रीं ध्यायामीति' सोक्ता। तच्छ्रुत्वा अश्रुताऽऽत्मनि तामष्टवक्रसुतां सावित्रीमाकलय्यान्यसंसक्तचित्तेन पत्या सह तिष्ठन्त्या मम जीवन-दुर्यापनेनालमित्यधुनैव मया[२] प्राणाः परित्यक्तव्या इत्थं सञ्चिन्तयन्त्यतिनिर्विण्णा[३] स्वप्राणान् परित्यक्तुं वनमगास्त। तत्र च भर्त्तुः शुभमनुध्याय कण्ठे पाशं पर्यास्थत किन्तु 'पुत्रि, मेत्थं मनसि म्लेर्यम्[४], तव पत्याऽहं सावित्री ( गायत्री ) अनुध्याता न चाङ्गने'ति गदित्वा विपाशयन्ती साक्षसूत्रकमण्डलुर्गायत्री आविर्भूयैनां समाश्वास्यातिरस्यत्। सा च मुनिपत्नी अङ्गिरसाऽन्विष्यता वने सम्प्राप्ता।

तदेवं स्त्रीणां प्रणयखण्डनं सर्वथा असह्यम्[५] इति स्वल्पेनाप्यपराधेन कुपिता सा क्वचिदिहैव स्थिता भवेत्। शम्भुरचया चापि सा राजपुत्रवधूः इतीहैव तामन्वेष्टुं यत्यम्[६]।

रुमण्वतेत्थमुक्ते सति राज्ञा वत्सेश्वरेणोक्तम्, 'आम्, सम्भवत्येतत्। अन्यद्दुरितं तु तद्विषये न कथमपि सन्दिहेलिमम्, यतो हि मदनमञ्चुका कामांशस्य नरवाहनदत्तस्य पण्या[७] भार्याऽवतारेण रतिर्नैषा पण्यस्त्रीव[८] सर्वसाधारणवर्या[९]। तया च सहामुष्य नरवाहनदत्तस्य दिव्यं भोग्यं[१०] विद्याधरैश्वर्यमशरीरिणी वाग-वगिति[११] न कथमपि मृषोद्या[१२] तया प्रभवनीयम्[१३]। अत उपलम्भ्या[१४] साऽवश्यमिहैव क्वाप्युपलभ्या[१५] भवित्रीति।

---

१. 'कृत्यल्युटो बहुलम्'। २. 'दुरःषत्वणत्वयोरुपसर्गत्वप्रतिषेधो वाच्यः' इति णत्वे दुर उपसर्गत्वं न अतोऽत्र 'णेर्विभाषा' इत्यस्याप्रवृत्तिः। ३. 'निर्विण्णस्योपसङ्ख्यानम्'। ४. 'अचो यत्', 'ईद्यति'। ५. 'शकिसहोश्च'। ६. 'तकिशसियतिजनिभ्यो यद्वाच्यः'। ७. स्तुत्या। ८-९. 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु'। १०. पालनीयमुपभोग्यं च। ११. वच परिभाषणेऽस्य लङि, अवक्। १२. 'राजसूयसूर्यमृषोद्य०'। १३. 'नभाभूपूकमि०'। १४. 'उपात्प्रशंसायाम्'। १५. 'पोरदुपधात्'।

राज्ञा स्वयमित्थमुदितेऽपि तद्विरहविह्वलो नरवाहनदत्तस्तदन्वेषणाय निर्जगे। यथा यथा च मार्गयमाणः स तां नावाप तथा तथाऽधिकाधिकतमदह्यमानाङ्गो दग्धाङ्गो यथा विभिन्नेषु आर्च्यैषु[1] देशेषु पीतमद्य[2] इव बभ्राम। सवसन्तकमरुभूतिहरिशिखगोमुखादि-सचिवा अपि समुपसार्येषु[3] सर्वस्थलेषु तां चिन्वानाः पर्य्याटुः।

मदनमञ्जुका मार्गणम्

निर्गते च तस्मिँस्तत्पुरात् पिहितद्वारकास्तद्गृहास्तद्विरहदुःखदर्शनोद्वेग-निमीलितनेत्रा इव प्रतिबभुः। वनेषु च मदनमञ्जुकां पृच्छन्तं तं चलत्पल्लवपाण-यस्तरवो नास्माभिस्सा दृष्टेति [4]निर्गद्यं निवारयन्त इव, उद्यानेषूत्पतन्तः पतत्रिणो विचिन्वते तस्मै 'न सेतो गता' इति शंसन्त इव प्रतीयिरे। अत्रान्तर एव अनवद्य[5]विचेष्टिता वेगवती नाम विद्याधरी—या च कदाचिन्मदनमञ्जुकां दृष्टवती आसीत्—तदुदारवपुर्वेषेण नगरवाह्यवनान्तरे समुपागत्यैकाकिनी स्वैरमशोकतरो-रधस्तस्थौ। ताञ्च, विचिन्वानो भ्राम्यन् आर्यगृह्यो[6] मरुभूतिः, सशल्यस्य कृते विशल्यकरणीमिवावलोक्य निजप्रियाव्यामोहपाशबद्धं गृह्यकम्[7] इव नरवाहनदत्त-मुपगत्योवाच, 'एकस्याशोकतरोरधोऽधुना नगरगृह्या[8] त्वदीया प्रिया मया सम-वलोकिते'ति। एवमुक्तेन तेन सह नरवाहनदत्तस्तत्क्षणमेव तदुद्यानं हृष्टो गत्वा तृष्णगध्वगो मरौ वारिधारामिव तां विरहातिक्रान्तां स्वभार्यां मदनमञ्जुकां भृशमार्त्तो यावदेव प्रणिंसितव्याम्[9] आलिलिंगिषति तावत्समवाप्तकालमतिवर्तितु-मक्षमोपसर्या[10] धेनुरिव वृषस्यन्ती, सद्यः परिणयैषिणी सा धूर्ता चक्शे "मां त्वं तावन्मा स्पार्क्षीः, एकं मे वचस्तावदाकर्णय, अहं हि त्वदवाप्तेः प्राक् त्वत्प्राप्त्यर्थं यक्षान् प्रार्थयमाना विवाहसमये युष्मभ्यं स्वहस्तेन बलीन् प्रदास्यामीति प्रतिज्ञा-यापि तेभ्यस्तान् दातुं विस्मृतवतीति तत्कोपाद् यक्षैरपहृता, 'गच्छ पुनर्विवाहं कृत्वा प्रतिज्ञातं बलिं च नः प्रदाय स्वपतिमुपेया नान्यथा ते शिवं भवेदि'त्थ-मुक्ता तैरिहानीय मुक्ता। तन्मामिदानीमाशु पुनः परिणयस्व येनाहं यक्षेभ्यो

---

१-२. चरेराङि चागुरौ, 'गदमदचर०'। ३. 'उपसर्या काल्या प्रजने' इत्यस्या-विषयत्वात् कर्मणि 'ऋहलोर्ण्यत्'। ४. 'गदमदचरयमः–'। ५. 'अवद्यपण्यवर्याः'। ६. 'पदास्वैरिबाह्यापक्षेषु च'। ७. शुकं मृगं वेत्यर्थः ('गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते' इत्यमरः)। ८. नगराद्बहिः स्थिता। ९. 'वा निंसनिक्षनिन्दाम्'। १०. 'उपसर्या काल्या प्रजने'।

बलिं दत्त्वा सत्यवद्य[1]गीस्ते भामिनीभूयं[2] गता भूयोऽपि त्वदभिलषितं सम्पादयेयम् । त्वयाऽपि च मदीयो नवोऽनृतोद्या[3]दीनवो मृज्यो[4] भवेत् ।" एतत्तद्वाक्य[5]माकर्ण्य विरहकातरो नरवाहनदत्तस्तत्क्षणमेव स्तुत्य[6]माहात्म्यम्, धृतविपूय[7]मेखलाङ्कैः शिष्यैर्जुष्टं, विगतविनीयम् च निजपुरोधसं शान्तिसोमं सम्भृत्य[8]भृत्यैः समाहूयापरिमितकुप्या[9]कुप्यधामा, क्षणाभ्यन्तर एव प्रयोजितं[10]नियोज्योपयमनसम्भृतसम्भारो गृध्यां[11] तां मायामदनमञ्जुकां वस्तुतो वेगवतीं विद्याधरीमुपायत[12] । सा च मद्य[13]-पिशितादिभिः स्वहस्तेन यक्षेभ्यो बलिं ददौ । नरवाहनदत्तश्चाथ वासभवनस्थो रुच्यया[14] तया सह तत्कथनानुसारं मैरेयं [15]पेयं पपौ । परिवर्तितरूपया च तया सहच्छायया [16]सूर्य इव अव्यथ्य[17]शक्तिर्जीवलोकसुखमुपाभुङ्क्त ।

एकदाऽनया नरवाहनदत्तो रहसि निगदितो यत्सुप्ताहं समुद्घाटितमुखी न कृत्य[18]कार्येणापि त्वया कदापि विलोकनीया । एतदाकर्ण्य किमर्थमनयेत्थमुक्तमिति सकौतुको राजपुत्रस्तोषकोत्तरास्तरसुप्तायां तस्यामन्येद्युर्यावत्तस्या मुखमुद्घाट्यावलोकयति तावत् स्वापवेलावशेनापगत-भव्य[19]-मायारूपा सा काचिदन्यैव, न पुष्य[20]तारोद्दीप्तमुखी मदनमञ्जुकेत्युपलभ्य जाग्रदेवावतिष्ठमानः प्रबुद्धां ताम् 'का त्वम् ? सत्यं सर्वं मे मुग्धे त्वमभिधेहि' इति पप्रच्छ । समुपजातप्रतिभेदा सापि निजे रूपे वर्तमाना निर्निद्रोपविष्टं नरवाहनदत्तमेवं यथावस्तु वक्तुमुपचक्रमे ।

प्रिय, अस्ति हिमगिरिसानौ आषाढपुरनाम विद्याधरपुरम् । तत्र कुलपरम्परागतराज्यश्रीशकटियुग्य[21]-वर्यः, अन्वमावास्यं[22] स्वादिष्टपाक्य[23]फलसुसम्पादितपितृकार्यः[24], पूयमानावश्यपाच्यदैवहव्यः[25], सन्ध्याद्वयसम्पाद्यमानाचाम्यः[26], सकलसल्लोक-

1. 'वदः सुपि क्यप् च' इति यत् । 2. 'भुवो भावे' । 3. 'वदः सुपि क्यप् च' इति क्यप् । 4. 'मृजेर्विभाषा' इति क्यप् । 5. शब्दाख्यायां ण्यति कुत्वम् । 6. एतिस्तुशास्वृदृजुषः क्यप्' । 7. विपूयविनीयजित्या- । 8. सम्भर्तव्यकर्मकरैः 'भृञोऽसंज्ञायाम्' 'समश्च बहुलम्' । 9. 'राजसूयसूर्य-' । 10. 'प्रयोज्यनियोज्यौ शक्यार्थे' । 11. ऋदुपधाच्चाक्लृपिचृतेः । 12. विभाषोपयमने । 13. 'गदमद-' । 14. 'राजसूयसूर्य०' । 15. 'अचो यत्', 'ईद्यति' । 16-17. 'राजसूयसूर्य०' । 18. 'विभाषाकृवृषोः' 'ह्रस्वस्य पिति कृति तुक्' । 19. 'भव्यगेय-' । 20. पुष्यसिद्ध्यौ नक्षत्रे' । 21. 'युग्यं च पत्रे' । 22. 'अमावस्यदन्यतरस्याम्' । 23-24. 'ऋहलोर्ण्यत्', 'चजोः कु घिण्यतोः' । 25. 'ण्य आवश्यके' इति कुत्वं न । 26. 'आसुयुवपिरपित्रपिचमश्च' इति ण्यत् ।

लाप्यः, नगरनिःसारितनिःशेषनिस्राप्यः, प्रणाय्य[1]जनानधिष्ठितनिकाय्यः[2], आनाय्यमानानाय्य[3]-सान्नाय्यः[4], क्रियमाणकुण्ड[5]पाय्यासाव्यसोमस्तोमः, परिचाय्य[6]धाय्या[7]-संधुक्ष्यमाणचित्यः[8], समयोचितसम्पाद्यमानाग्निचित्यः[9], अवधीयमानगेयोपस्थानीय[10]-प्रवचनीयः, [11]निजभुजोपार्जितकरप्रचेयोच्छ्रितफलसम्पत्तिनिर्जर[12]राजर्यसङ्गतिर्विद्या-धराधिपवेगवतः पुत्रो मानसवेगाख्यो राजाऽस्ति। वेगवतीनामा तस्याहं कनीयसी स्वसा। स च मदीयो भ्राता मामतिद्विषन्मतिरतिद्विषन् [13]प्रगोपणीयां विद्यां दातुं नैच्छदिति मया महता क्लेशेन तपोवनाश्रितात् [14]अर्च्यात् पितुः सकाशात् सर्वाधिकबला विद्याः प्राप्ताः। साऽहमाषाढपुरीयोद्याने रक्षिभिरावृतां दीनां मदनमञ्चुकामवलोकितवती। सा च त्वदीया [15]भार्या मदीयेन भ्रात्रा माययाऽपहृता। सा हि साध्वी स्त्री अनिच्छन्ती च तेन पराभवितुम् अशक्या इति कुभ्रात्रा तेन तदनुनयने नियुक्ताऽहमेकदा त्वत्प्रलापपरां [16]प्रगे तामगे। तत्प्रबोधनप्रसङ्गाच्च तया साध्व्या सह त्वन्नाम्न्यभ्युदीरिते सति मम मनस्त्वदेकाग्रं सञ्जातमिति 'यन्नाम्नि श्रुते त्वं स्मरपरवशा भवेः स ते पतिः' इत्याद्यो देवीस्वप्नादेशो मया स्मृतः। अतः तत्संस्मृत्य तां मदनमञ्चुकां धृतिं धारयित्वा तस्या रूपेण त्वमुपायतः [17]उपयतः। तदेहि, यत्र ते प्रिया मदनमञ्चुका वर्तते तत्रैव तत्कृपाविष्टा त्वां नयामि। यतो ह्यात्मनिरपेक्षा मदीया कापि त्वत्प्रेमवश्यता वर्ततेऽतः सपत्न्याः कैङ्कर्यमपि मेऽभिरोच्यम्[18]। एतदाभाष्य स्वविद्याबलेन सा वेगवती तस्यामेव निशि प्रियावियोगानुभूयमानहृच्छोकमोक[19]कोकमिव नरवाहनदत्तमादाय खमुदपप्तत्।

एवं चक्षुषामगोचरतां गतयोस्तयोस्तद्वृत्तमाकर्ण्य नरवाहनदत्तपरिवारोऽतिक्षोभं प्रापत्। यौगन्धरायणादयो मन्त्रिणोऽपि मरुभूतिमुखैः पुत्रैः सह व्यह्वल-

१. 'प्रणाय्योऽसम्मतौ'। २. 'पाय्यसान्नाय्यनिकाय्यधाय्याः'। ३. 'आनाय्योऽनित्ये'। ४. 'पाय्यसान्नाय्य'। ५. क्रतौ कुण्डपाय्यसंचाय्यौ। ६. अग्नौ परिचाय्योपचाय्यसमूह्याः। ७. 'पाय्यसान्नाय्य'। ८-९. चित्याग्निचित्ये च। १०. 'भव्यगेय०'। ११. 'भुजन्युब्जौ पाण्युपतापयोः'। १२. 'अजर्यं सङ्गतम्' निर्जरैर्देवैः सह अजर्या संगतिर्यस्य। १३. 'हलश्चेजुपधात्'। १४. 'यजयाचरुचप्रवचर्चश्च'। १५. विभर्त्तेर्ण्यत्। १६. प्रातःकाले तामगच्छमिति भावः। १७. उपायेन विवाहित इत्यर्थः। १८. 'यजयाचरुच–' इति कुत्वाभावः। १९. 'ओक उचः के' ( ओकः शकुन्तवृषलौ; तेन कोकपक्षिणमिवेति भावः )।

यन्। एतस्मिन्नेवान्तरे प्रभावद्धमण्डलो द्वितीयो भास्कर इव नारदो[1] मुनिराकाशादवतीर्य 'विद्याधर्या निजभुवं नीतस्ते सुतः शीघ्रमेवैष्यतीति विज्ञापयितुं भगवता शङ्करेणाहं तव समीपे धृत्यर्थं प्रेषित' इति वत्सेशं जगाद; स्वीकृतवत्सेशसपर्यो यथावृत्तं वेगवत्याश्चरितं शंसयित्वा चान्तर्दधे।

ततः परं व्योमवाह्यवह्या[2] वेगवती व्योम्ना नरवाहनदत्तमाषाढपुरं प्रापयति स्म। तच्चावगत्य तत्र मानसवेगो वध्यौ[3] तावाकलयन् तद्धत्यां[4]मचिकीर्षत्। अतस्तेन सह वेगवत्याः विद्याबलोद्धतं युद्धमभूत्। निजविद्याबलेन सा भीषणं भैरवरूपं विधाय घनाघनं[5] मानसवेगञ्च सहसा सम्मोहयन्ती तमग्निपर्वते निधाय युद्धकाले च विद्याहस्ते न्यस्तं नरवाहनदत्तं गन्धर्वपुरस्थे एकस्मिन्नाखेये[6] निर्जले कूपे निक्षिप्योवाच, 'आर्य, त्वयैव मनाग् वृत्यम्[7]। वर्तमानस्य चात्र सर्वथा वृध्या[8] सर्वविद्याधराधिपतिता ते भाविनीति माऽधृतिः कल्प्या[9]। अद्याहं ज्येष्ठव्यतिक्रमणेन दुर्बलीभूता विद्याः सबलयितुं प्रगै। अचिरादेव च त्वामिहैव पुनरभ्युपगास्ये। एवमुक्त्वा सा वेगवती विद्याधरी, वेगवती क्वापि निर्गतवती। मानसवेगश्चाग्निपर्वते निक्षिप्तोऽप्यमृतस्ततो निजमन्दिरमागात्।

॥ इति कृत्यप्रक्रिया ॥



---

१. नारं सुखं द्यति इति नारदः 'आतोऽनुपसर्गे कः'। २. वह्यं करणम्। ३. 'हनो वा यद्वधश्च वक्तव्यः'। ४. हनस्त च। ५. 'चरिचलिपति-' इत्यत्र 'हन्तेर्घत्वञ्च'। ६. 'ई च खनः'। ७. 'ऋदुपधात०' वर्तितव्यम्, स्थातव्यमिति भावः। ८. 'ऋदुपधात्०'। ९. कृपू सामर्थ्ये, कृपेर्लत्वस्यासिद्धत्वात् ऋलृवर्णयोः सावर्ण्यविधानाच्च ऋदुपधत्वम्; क्यबभावे ण्यत्।

( इति कृत्यप्रक्रिया )

# अथ पूर्वकृदन्तप्रकरम्

**मदनमञ्जुकामार्गणो ( निरुपपदकृतः )**

इतः कूपस्थितस्य नरवाहनदत्तस्यैको वीणादत्तनामा गन्धर्वोऽवेक्ष[1]को दयो-दन्वति निमङ्क्ता[2] पृष्टतदन्वयनामा तद्धस्तग्राही[3] तं कूपादुद्धरँस्तदानीन्तनतदीय-दुःखस्य नशिता[4] भूत्वोवाच, 'त्वं मानुषश्चेन्न गन्धर्वस्तदा मानुषागम्यस्यैतन्नगरस्य पथः कथं लम्भक[5] इति तत्त्वतः प्रतिबोधयन्नस्मत्सन्देदिहा-मरीमृजा[6]-चेक्रियो[7] बोभूया इति, एवं वदावदः[8] सनरवाहनदत्ताद् व्योमचरचर्यविद्याधर्या वलात्तत्रावटे तन्निचिक्षिसेर्ज्ञो[9] गुणी वीणादत्तश्चक्रवर्तिलक्षणोपेतं तमवलोक्य सूनृत-वाचां पाटूपटः[10] स्वगृहं नीत्वा विविधोपचारैस्तस्य उपचराचरोऽवोभूवीत्। बुधो[11] नरवाहनदत्तश्चान्येद्युस्तत्पुरस्थान् सर्वान् स्ववाद्यघोषेण रमणान्[12] वीणाहस्तान-वलोक्य प्रियं प्रज्ञं[13] च वीणादत्तमकथयत्, 'निलिम्पकल्पा[14]नामेतेषां सर्वेषामाबाल-वृद्धपौराणां वीणा-धार्याणां[15] पश्यम्[16] अत्रत्यारविन्दा[17] लौकिकामोदकामोदानां च जिघ्रम्, परमानन्दविन्दं मां सर्वेषामेतेषां वीणाधारणकारणजिज्ञासनाकूपारपारयं

---

❀ पूर्वकृदन्तप्रकरणम् ❀

१ 'ण्वुल्तृचौ', 'कर्तरि कृत्', 'युवोरनाकौ', । २. 'मस्जिनशोर्झलि' । ३. 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' । ४. 'रधादिभ्यश्च' । ५. 'लभेश्च' । ६. 'यङोऽचि च'; 'न धातुलोप आर्धधातुके' । ७. संयोगपूर्वकत्वाद् 'एरनेकाचः–' इति यणभावे इयङ्। ८. 'चरिचलिपतिवदीनाम्०' । ९. 'इगुपधज्ञाप्रीकिरः कः' । १०. 'पाटेर्णिलुक् चोक् च दीर्घश्चाभ्यासस्य' । ११. 'इगुपधज्ञा–' १२. नन्द्यादित्वाल्ल्युः । १३. 'आतश्चोपसर्गे' । १४. 'नौलिम्पेर्वाच्यः' । १५. अनुपसर्गाल्लिम्पविन्दधारिपारि'—इत्यादिना शः । १६. पाघ्राध्माधेट्दृशः शः' । १७. 'गवादिषु विदेः संज्ञायाम्' ।

कुरु' इति। तदाकर्ण्य तदुत्तरस्य दंदो[1] वीणादत्तस्तत्रत्यराजपुत्रीपरिचयप्रसङ्गा-
वंतानो[2] नरवाहनदत्तं जगाद–'अस्त्यत्र रिपूदेजयः, परमधनुर्वेदवेदयः, सत्यन्या-
यानत्यायः[3], विदः सर्वशास्त्राणाम्, वितृदोऽन्यदुःखदानाम्[4], सागरदत्ताख्यो गन्ध-
र्वाणां राजा। स्वकीयसौन्दर्याधरीकृताप्सरोरूपा तस्य गन्धर्वदत्ताख्या दयोदया
धया[5] गान्धर्वे परमोत्कर्षं प्राप्ता शौरिणा स्वयं प्रदत्तं स्वगीतकं जेगीयमाना 'यः
कश्चिद्गान्धर्वविदस्त्रिभिर्ग्रामैः सम्यग्वैष्णवं स्तुतिगीतकं वीणायां वादयति स मे
पतिरि'ति निरचैषीत्। अस्या राजपुत्र्या एतन्निश्चयं ज्ञात्वा सर्वे वीणासु शिक्षन्ते[6]
किन्तु नाद्यावधि कोऽपि तथाभूतो वीणावादनपारयोऽभूदिति गृहे[7] गृहे ग्रहेण[8]
आविष्टानामिव सर्वेषां हृदि तदवाप्तिदावोज्ज्वलो[9] [10]ज्वालोऽवलोक्यते'। वीणा-
दत्तादेतदाकर्ण्य समासादितसकलकलावैदुष्यसातयः[11] नरवाहनदत्तस्तं प्रत्युवाद,
'अहं सर्वासां कलानां स्वयंवरवृतः पतिः। त्रैलोक्ये वर्तमानं यावद्गान्धर्वं, तस्य
नायः[12]।' एतन्निशम्य वीणादत्तो नरवाहनदत्तं सागरदत्तान्तिकं नीत्वोवाच, 'अयं
वात्सराजिर्नरवाहनदत्तोऽशेषगान्धर्वप्रवीणः, [13]नर्तक-गाथक[14]-गायनी[15]-नायक-नन्दक-
नन्दनः, स्वकीयापूर्वसौन्दर्यसमाकर्षितषोडशहायनीगणः[16], विद्याधरीहस्तादिह नगरे
विभ्रष्टस्तव सामीप्य-सरकः[17] सञ्जातः। गन्धर्वाचार्योऽयं केशवस्तुतिगीतकं वेत्ति'
इति। एतदाकर्ण्य राजाऽब्रवीत् सत्यं सर्वमेतत्। गन्धर्वाणां मुखान्मयैतच्छ्रुत-
मित्ययमस्माकं मान्यः। [18]जीवकोऽयं भूयात्। नात्र विचिकित्सालेशोऽपि यदयं
देवांशोऽन्यथा विद्याधरीं सङ्गत्य कथमिह मानुषो गन्धर्वनिकेतमनुगेत।

॥ इति निरुपपदकृतः ॥

---

१. 'ददातिदधात्योर्विभाषा'। २. 'तनोतेरुपसंख्यानम्' इति णः। ३. 'श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च' इति अतिपूर्वकादिण्धातोर्णः। ४. 'इगुपज्ञा०'। ५. कन्या, 'पाघ्राध्मा धेट्०'। ६. 'शिक्षेर्जिज्ञासायाम्'। ७. 'गेहे कः'। ८. 'विभाषा ग्रहः'। ९.-१०. 'ज्वलितिकसन्तेभ्यो णः' इति पाक्षिको णः, पक्षेऽच्। ११. 'अनुपसर्गाल्लिम्प०' (सातिः सुखार्थः सौत्रो हेतुमण्ण्यन्तः)। १२. नेता, 'दुन्योरनुपसर्गे' इति णः। १३. 'शिल्पिनि ष्वुन्,' 'नृतिखनिरञ्जिभ्य एव'। १४. 'गस्थकन्'। १५. 'ण्युट् च'। १६. हश्च व्रीहिकालयोः'। १७. 'प्रुसृल्वः समभिहारे वुन्'। १८. आशिषि च'। [ इति निरुपपदकृतः ]

एतत्कथनानन्तरं राजाज्ञया महत्तरिकाभिरानीतां गन्धर्वकलाकलापज्ञां[1] गन्धर्वदत्ताह्वां राजकन्यां निजपितुः पार्श्वे समुपविश्य तद्वचसा उपवीणयन्तीमतिप्रह्वाम्[2], शर्मदां[3] ब्राह्मीं श्रियमिवाङ्गुलित्रेण[4] स्वरान् श्रुतिषु योजयन्तीं दृष्ट्वा नरवाहनदत्तो विस्मितिकारे[5] तद्गीते रूपे च नितरां मुग्धोऽप्यवदत्, 'तन्त्रीवादनपरिष्ठपतिकामे[6], कल्याणाचारे, राजपुत्रि, समस्थस्ते[7] वीणास्वर इति विविधस्वरवादनबहुक्षामाया[8] अपि भवत्याः जाने, कुत्रचित्तन्त्र्यां वालो वर्तते।' एवमुक्त्वा यावत्सा निरीक्षते तावत्तत्रैको वालस्तयाऽवापीत्येतदवगत्य सर्वेऽपि ते स्वोच्छ्रायस्वर्गह्वायमिवाषाढपुरगिरिमधिवसन्तो[9] गन्धर्वा विस्मयमापुः। विरतिमञ्चितायाञ्च तद्विपञ्च्यां दिविष्ठ[10]–प्रष्ठ–परमेष्ठीव[11] गन्धर्वपतिः सागरदत्तो गन्धर्वदत्ताहस्तात्तां वीणां भूमिष्ठ–पुञ्जिष्ठगन्धर्वकलामूर्त्तेरिव नरवाहनदत्तस्य हस्ते समर्पयन् 'राजपुत्र, इमां गृहीत्वा स्वकीयस्वरामृतरसेनास्माकं श्रुतीः सन्तर्प्यास्मच्छोकापनुदो[12] भव' इत्युवाच। नरवाहनदत्तश्चापि तथानुज्ञातः उपवीणयँस्तथा विष्णोर्गीतकमगायद् यत्सर्वे ते गन्धर्वाश्चित्रलिखिता इवातिष्ठन्। गन्धर्वदत्ता चापि स्वप्रतिज्ञानुसारं सर्वथा सन्तोषप्रदं, प्रफुल्लकुमुद[13]मालयेव प्रणयार्द्रया दृष्ट्या तमनिभृतमवृत। तदालोक्य तथाभूतां तत्प्रतिज्ञां स्मरन्, सन्मार्गप्रज्ञ[14]स्तद्भावसंख्य[15]श्च नरपतिर्गन्धर्वदत्तां सुतां सदिव्यातोद्यके विवाहोत्सवे, विष्णुगीतसञ्ज्ञाय[16]–नरवाहनदत्तसञ्ज्ञाय ददाविति नवोढया गन्धर्व-

मदनमञ्जुकापहारे (सोपपदकृतः)

---

❀ अथ सोपपदकृतः ❀

१. 'आतोऽनुपसर्गे कः'। २. कविधौ सर्वत्र सम्प्रसारणिभ्यो डः' अतः 'आतश्चोपसर्गे' इति कं बाधित्वाऽनेन डः। के तु सम्प्रसारणे प्रहुव इति जायेत। ३.–४. 'आतोऽनुपसर्गे कः'। ५. 'कर्मण्यण्'। ६. 'शीलिकामिभक्ष्याचरिभ्यो णः'। ७. 'सुपि स्थः'। ८. 'ईक्षिक्षमिभ्याञ्च'। ९. 'ह्वावामश्च' इत्यणि 'आतो युक् चिण्कृतोः'। १०. 'सुपिस्थः'। ११. 'अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कङ्गमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः'। १२. 'तुन्दशोकयोः परिमृजापनुदोः'। १३. 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्। १४. 'प्रे दाज्ञः' इति णापवादः कः। १५. 'समि ख्य' तद्भावं संचष्टे इत्यर्थे चक्षिङः ख्याञि कः। १६. उपसृष्टत्वात् 'कर्मण्यण्' 'आतो युक्—' 'गापोष्टक्' इत्यस्यानुपसृष्टे एव प्रवृत्तेः।

दत्तया दिव्यान् भोगान् भुञ्जानो यथावसरं शीधुपः स शीधुपीं[1] ताम् अनुक्रीडन्[2] चिरं तत्र तस्थौ ।

एकस्मिन् दिने कवचहरो[3] वत्सेशांशहरो[4], मनोहरां नगरश्रियं समवालुलोकयिषुर्नगरान्निर्गतः सुखाहरांस्तांस्तान्[5] प्रदेशानालोक्य भ्रमणार्हं[6] पुरोद्यानं समदस्तम्बेरम[7] इव प्रविवेश। तत्र च दुहित्रा सहाकाशादवतरन्तीं, 'पुत्रि, सोऽयं वत्सराजस्ते भावी पतिरिति' निजसुतां जल्पन्तीमनभ्रेऽपि खशयां[8] सवृष्टिं विद्युतमिव व्योमचरीं[9] योषितमेकामपश्यत्। समुपागताञ्च 'का त्वम्, किमर्थञ्चेहागतेति' तामन्वयुङ्क्त। तदाकर्ण्येप्सितोपक्रमणी दिव्या योषित्तमब्रवीत्, 'देव, अहं हि गिरिशप्रभावेण[10] [11]भिक्षाचरीकृतनिजारिवर्गस्य, शत्रुसेनाचरसञ्चूर्णनप्रसादितभर्गस्य, धार्मिकपुरस्सरस्यापि[12] संयुगपूर्वसरस्य[13], तपस्विनोऽपि महासिधनुरादायचरस्य, सत्पथोच्चरणभीरोरपि च रणविभीतेर्देवसिंहाभिधानस्य विद्याधरपतेर्यशस्करी[14] विद्येव[15] वचनकरी जीवनसहचरी[16] भार्या धनवती नाम। एषा चाजिनावतीनामधेया[17] पतिंवरा[18] मदीया कन्या करप्रतापेन [19]दिवाकरस्येव, शरीरधाम्ना च विभाकरस्येव, स्वपक्षसम्पदामादिकरस्यापि विपक्षसम्पदामन्तकरस्य, निजप्रजानरुष्करस्यापि महाधनुष्करस्य, निजकुलकुमुदनिशाकरस्याप्यज्ञानतमोऽहस्करस्य, द्विकरस्यापि बहुकरस्य, कर्मकरायमाणादिवलसामन्तस्यापि[20] अनूरीकृतशासनारिनारीनिस्सिन्दूरीकृतसीमन्तस्य चण्डसिंहस्य पुमनुजा[21] भगिनी।

---

१. 'पिबतेः सुराशीध्वोरिति वाच्यम्' इति सहकारेण 'गापोष्टक्' ङीप्। २. अनोः तृतीयार्थे कर्मप्रवचनीयतेति 'क्रीडोऽनुसम्परिभ्यश्च' इत्यस्याप्रवृत्तिः। ३. 'वयसि च'। ४. 'हरतेरनुद्यमनेऽच्'। ५.'आङि ताच्छील्ये'। ६. 'अर्हः'। ७. 'स्तम्बकर्णयोरमिजपोः' 'हस्तिसूचकयोरिति वक्तव्यम्'। ८. 'अधिकरणे शेतेः'। ९. 'चरेष्टः' टित्वान् ङीप्। १०. 'गिरौ डश्छन्दसि' इत्यस्य लोकेऽप्रवृत्त्या गृधातोः 'इकृकृष्यादिभ्यः' इतीकि निष्पन्नाद्गिरिशब्दादस्त्यर्थे लोमादित्वाच्छः। ११. 'भिक्षासेनादायेषु च'। १२. 'पुरोऽग्रतोऽग्रेषु सर्त्तेः'। १३. 'पूर्वे कर्त्तरि'। १४. 'कृञो हेतुताच्छील्यानुलोम्येषु'। १५. 'विदन्ति अनये'ति विग्रहे 'संज्ञायाम्'—इति क्यप्। १६. पचादिषु चरडिति पाठात्, सिद्धिः। १७. संज्ञायाम्, 'मतौ बह्वचः—' इति दीर्घः। १८. 'संज्ञायां भृतवृजि०'—इति खच्, 'अरुर्द्विषदजन्तस्य मुम्'। १९. 'दिवाविभानिशा०'। २०. 'कर्मणि भृतौ'। २१. 'अनौ कर्मणि'।

यस्याः प्रियङ्करो[1] भर्ता गगनोद्गतया गिरा भवानादिष्ट इति वेगवत्यात्र निक्षिप्तं भाविविद्याधरेश्वरं भवन्तं निजविद्याबलेनावगत्य स्वच्छन्दमभिधातुमिहायाता। स्वैरं वैरकारा[2] विद्याधरा हि नैसर्गिकमानवद्वेषेणैककं त्वां स्तम्बकरि[3]–कडङ्कर-कुक्षिंभरि[4]–बलि–नाथहरि[5]मिव मा मृत्युदेवतायायुपहारीकुर्वन्त्विति विद्याधरैक-गम्येऽत्र स्थाने तव स्थानमस्थाने। तदागच्छ, आवामन्यत्र न यावः साम्प्रत-मस्मात्त्वां तदगम्यां भुवं नयावः। अवसरे सम्प्राप्ते त्वमेतां मदीयां सुतां परि-णेष्यसि।' एवमुक्त्वा धनवती तमादाय ससुता, दिवमुद्गत्य श्रावस्त्या उपवने च तं निक्षिप्य अजिनावत्या सहातिरस्यत्।

एतस्मिन्नेवान्तरे वातमर्जान्[6] रजयन्[7] दूरागतो राजा प्रसेनजित् उदाराकार-लक्षणं हस्तिघ्न[8]बलोपपन्नमपि प्रियंवदं[9] तं राजपुत्रं दृष्ट्वा सकौतुकं तमुपसृत्यानुयुक्त-तत्कुलनामधामाऽतिप्रीतः स्वभवनं नीत्वा तच्छीलशौर्यादिगुणवशंवदो भगीरथ-यशोऽभिधां निजकन्यामजायाघ्नस्यापि[10] जायाघ्नस्य तस्य अपतिघ्नीमपि[11] पतिघ्नीं चकारेति तद्विनोदाय धात्रा सृष्टया मूर्तिमत्या लक्ष्म्या इव तया महार्हविभवो नरवाहनदत्तस्तत्र चिरमरंस्त।

---

१. 'क्षेमप्रियमद्रेऽण् च'। २. न शब्दश्लोककलहगाथावैर०' इति टस्य निषेधे अण्। ३. 'स्तम्बशकृतोरिन्' 'व्रीहिवत्सयोरितिवक्तव्यम्'। ४. 'फलेग्रहिरात्मम्भरिश्च' इत्यत्र चात्कुक्षिम्भरिः। ५. 'हरतेर्दृतिनाथयोः पशौ'। ६. वातशुनीतिलशर्धेषु'—इत्यादिना खश्। ७. 'रञ्जेर्णौ मृगरमणे नलोपः'। ८. शक्तौ हस्तिकपाटयोः'। ९. 'प्रियवशे वदः खच्'। १०. अविद्यमानो जायाघ्नस्तिलको यस्येत्यजायाघ्नस्तस्येति बहुव्रीहिः, न जायाघ्नोऽजायाघ्न इति तत्पुरुषो वा। जायां हन्तीति जायाघ्नस्तस्यापि अजायाघ्नस्येति विरोधः। जस्य = पितुः अयः= शुभावहो विधिस्तं न हन्तीति जायाघ्न स्तस्येति परिहारः ( निजजन्मना पितुः समृद्धिकरस्येति तत्त्वम् ) 'लक्षणे जायापत्योष्टक्'। ११. 'अमनुष्यकर्तृके च' अविद्यमाना पतिघ्नी पाणिरेखा यस्याः सा अपतिघ्नीति बहुव्रीहिः, न पतिघ्नी इत्यपतिघ्नीति तत्पुरुषो वा। अत्रत्यो विरोधः द्वितीयस्य पतिघ्नीशब्दस्य पातीति पः=रक्षकस्तं तिग्नुवन्ति आस्कन्दन्ते इति पतिगो द्वेषिणः तान् हन्तीति पतिगघ्नः शत्रुघाती ( मूलविभुजादित्वात्कः ) तस्य स्त्रीं चकारेति व्युत्पत्त्यावसेयः।

अथैकदा लोकलोचनानन्दवर्षिणि रजनीरमणे प्राचीदिग्वधूमुखमण्डने, मानिनीमानखण्डने, निरभ्रनिर्मलव्योमदर्पणे भगीरथयशोवक्त्र इवामृतदीधितौ दिग्भामिनीभालबिन्दाविन्दावुदिते सति, कौमुदीसुधाधौते हर्म्याग्रे, प्रियया सह तदिच्छयाऽसावसावीत्। सेवितापानलीलश्च सोऽभ्यन्तरं गतो भगीरथयशोयुक्तः शयनीयकं भेजे। तत्र च तस्यां प्रियायां सुप्तायां सुप्तविनिद्रकोऽसावकस्मादचिचिन्तत, 'भगीरथयशःप्रीतिसम्पदः मामिह रमयन्तीत्यन्या मामकीना भामिन्यो न स्मेरयन्ति[1]। सर्वंकषो[2] विधिरेवात्र हेतुः। ललाटंतप[3]निष्ठुराक्षरां तल्लिपिं वाचयितुमात्माहितविश्वविश्वंभरा[4]भारभुजंगमो[5]ऽपि वाचंयमः[6]। स एव हि शुनिन्धय[7]-खरिन्धय[8]-स्तनंधया[9]नप्युग्रंपश्य[10]महामहिमशालिनाम् [11]आढ्यंभविष्णूनां मुष्टिन्धयान्[12] करोति। प्रियंकारा[13]नपि च प्रियेभ्यः पृथक् करोतीति [14]ऋतिंकरे काले द्विषन्तपा[15] अपि मत्प्रियंकराः सचिवा मरुभूत्यादयो मत्तो वियोजिताः नाहमद्यावध्यस्य दुःखस्य अन्तगः[16]। सर्वास्ववस्थास्वस्मत्सुसखा चतुरो गोमुखोऽधुना [17]दूरग इति न सोऽपि वर्तमानोद्विग्न्यान्धंतमसपूर्णपाणिन्धमे[18] जीवनाध्वनि [19]इरंमद इव मां मार्गं निर्दिशति'।

एतच्चिन्तयन्नेव स निद्राघ्न[20] मधुरं मृदु च हा ! दुःखमिति कयाचिन्नार्यैवोदीरितं वचः शुश्राव। श्रुत्वा च तद् दीप्तप्रदीपे स्वकीयजनंसुगे[21]ऽप्यसंस्तुतजनदुर्गेऽत्र भवनेयावदितस्ततोऽवलोकयति तावद्गवाक्षान्तस्तदानींतनंतमो[22]ऽपहं नार्या दिव्यं मुखचन्द्रं पश्यन्नपि शेषमङ्गमपश्यंस्तद्दर्शनोत्सुकताक्लेशापहृतद्रूपाकृष्टनयनो दोलायमानचेताः क्षणमतिष्ठत्। एतस्मिन्नेवान्तरे गवा-

---

१. आध्याने 'णेरणौ'वित्यस्याप्रवृत्तिः ( नोत्कण्ठापूर्वकस्मृतिविषयीभवन्तीत्यर्थः)। २. 'सर्वकूलाभ्रकरीषेषु कषः'। ३. 'असूर्यललाटयोर्दृशितपोः'। ४. संज्ञायां भृतवृजि०'। ५. 'गमेः सुपि वाच्यः' 'खच्च डिद्वा वाच्यः'। ६. 'वाचि यमो व्रते', 'वाचंयमपुरन्दरौ च'। ७. 'वातशुनीतिल०', 'खित्यनव्ययस्य'। ८. 'घटीखारीखरीषूपसंख्यानम्'। ९. 'नासिकास्तनयोर्ध्माधेटोः'। १०. उग्रंपश्येरंमदपाणिन्धमाश्च'। ११. 'कर्त्तरि भुवः खिष्णुच्खुकञौ'। १२. 'नाडीमुष्ट्योश्च'। १३. 'क्षेमप्रियमद्रेऽण् च'। १४. कष्टप्रदसमये; 'मेघर्तिभयेषु कृञः'। १५. 'द्विषत्परयोस्तापेः'; 'खचि ह्रस्वः'। १६.–१७. 'अन्तात्यन्ताध्वदूर०'। १८.–१९. 'उग्रम्पश्येरंमदपाणिन्धमाश्च'। २०. 'अमनुष्यकर्तृके च'। २१. 'सुदुरोरधिकरणे'। २२. 'अपेक्लेशतमसोः'।

न्नात् सा दिव्या स्त्री प्रदर्शितनिजपाणिपल्लवतल्लजा 'इत एहि' इति सूचकविरहितवर्णसङ्घा[1]टमङ्गुल्याऽससंकेतत् । तदवलोक्य संसुप्तदयितान्निवासभवनात् स्वैरं निर्गत्य तद्दिव्ययोषितमुपागतवति समुत्के तस्मिन्नित्थं साऽशब्दायिष्ट 'हा मदनमञ्चुके, अन्यहृदयक[2]पाटघ्नं पतिं प्रशंसन्ती त्वं हतासि' तदाकर्ण्य स्मृतप्रियः, प्रज्वलद्विरहवह्निर्नरवाहनदत्तस्तां दिव्यभामिनीमभाणीत्, 'सुभगे, प्रियंक[3]रणेनानेन रूपेण सुभ[4]गंभावुकं मां दर्शनमिह ददती का त्वमेता[5]दृशी द्युस[6]दः सदृग[7]ङ्गनाग्र[8]णीर्निजमर्मस्पृशा[9] [10]वाचा मां विस्माययसि । कुत्र वा त्वया मदीया प्रिया मदनमञ्चुका समवलोकिता ? किमर्थञ्च युवजनकामप्रसू[11]स्त्वं ममोपनिषद्[12] अवलोकयसे एतत् सर्वं सविस्तरं श्रावय' इति । एतन्निशम्य सा तं तन्निविडनिशि ततोऽतिदूरं नीत्वा, 'मदनांश[13]भाग् , शृणु सर्वम्' एवमुक्त्वेत्थं वक्तुमारभत ।

अस्ति विविधप्रतिभितशिल्पिनिर्मितप्रतिभित्त्यभ्रंलि[14]हप्रासादपुष्करावत्यां पुरि प्रातिकूलिकपृतनासरित्कू[15]लमुद्रुजोद्ध्य[16] इवायोध्यः, प्रत्यहं [17]खारिम्पचपात्रपाचित न[18]खम्पचपायससम्पादिताशनायिताशितंभ[19]वः, सपत्नासूर्यम्पश्य[20]दारमुखविधुविधु[21]न्तुदारुन्तुदः, मन्दुरानददपरिमिततुरङ्गम-मितङ्ग[22]मोऽपि कुलायिकापरिपालितागणितकूजद्यजुःसाम[23]ग-विहङ्ग[24]मः, जनमेज[25]य इव द्विषन्नागसंहर्तापि भुजङ्गभीरुः, [26]भयङ्करभूभृद्भगंद[27]र-पुरन्द[28]रः, सद्गुणग्रा[29]मगोऽपि सर्वत्रग[30]विचारः, शत्रुशीर्षघाती,[31]

---

१. 'कर्मणि समि च' इति सम्पूर्वकाद्धन्तेरण् टकारश्चान्तादेशः । २. 'शक्तौ हस्तिकपाटयोः' । ३. 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' । ४. 'कर्तरि भुवः खिष्णुच्खुकञौ' । ५. 'त्यदादिषु दृशोऽनालोचने कञ्च' । ६. 'सत्सूद्विषद्रुह०' । ७. 'समानान्ययोश्चेति वक्तव्यम्', दृग्दृशवतुषु । ८. 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' । ९. 'स्पृशोऽनुदके क्विन्' । १०. क्विब्वचि०' । ११.–१२. 'सत्सूद्विष' । १३. 'भजो ण्विः' । १४. 'वहाभ्रे लिहः' । १५. 'उदि कूले रुजिवहोः' । १६. 'भिद्योद्ध्यौ नदे' । १७. 'परिमाणे पचः' । १८. 'मितनखे च' । १९. 'आशिते भुवः करणभावयोः' इत्यनेन भावे खच् । २०. 'असूर्यललाटयोः'– । २१. 'विध्वरुषोस्तुदः' । २२. 'गमेः सुपि वाच्यः' । २३. 'गापोष्टक्' । २४. 'खच डिद्वा वाच्यः' । २५. 'एजेः खश्' । २६. 'मेघर्तिभयेषु कृञः' । २७. 'भगे च दारेः' इति काशिका' । २८. 'पूःसर्वयोर्दारिसहोः' । २९. 'अन्यत्रापि दृश्यते इति वक्तव्यम्' इति डः । ३०. 'सर्वत्र पन्नयोरुपसंख्यानम्' । ३१. 'कुमारशीर्षयोर्णिनिः' ।

राजघ[1]राजवर्चसः, अग्न्याराधनपिङ्गलः पिङ्गलगान्धारो नाम विद्याधरेश्वरः। मित्रशी[2]रपि समवाप्तगुरुजनशुभाशीः[3], सत्य-शीलतनुच्छत्[4] स वेदविदामू[5]रपि धर्मसूत्रच्छिदां मूः[6], इन्द्रियसंय[7]ताम् [8]अग्रेगूः अपि कामादिषड्वर्गरिपुधूः[9], सञ्चाल्यमानागणितजनोपकृतिसंस्थोऽपि शंस्थः[10], सर्वसाधु[11]कारी, अनु[12]जीविभिरपि बन्धुव्य[13]वहारी, प्रातःस्नायी,[14] स्थण्डिल[15]शायी, क्षीर[16]पायी ब्रह्मवादि[17]नाम् आदेशानु-सारम् अग्निष्टोम[18]याजी, सोम[19]याजी च भूत्वा श्येनचिद्र[20]थचक्रचिदादिषु प्राज्या-ज्य[21]याजिविविधाग्निकर्म[22]कृत् [23]अग्निचित्सोम[24]सुत्ख्यातिमवाप। तस्मादेवं समाराधन-प्रसन्नस्य हुता[25]दो वराद् विजावा[26], निजोपजीविप्र[27]जाजनकामदु[28]घवृत्तेः सर्वसत्त्वाभि-लभ्यमाणशर्मणोऽपि [29]क्रव्यादां सुशर्म[30]णस्तस्यासन्तानताधिप्रशामः [31]प्रतान् प्रभा-वतीनामा कन्याहम्। एकदाचाषाढपुरे स्वाभिन्नहृदयमानिनीं[32] निजसखीं वेगवतीं द्रष्टुमहमगमम्। किन्तु सा क्वापि वने[33]वर्तिनी तपसि स्थितेति तामप्राप्य तन्मातुः पृथिवीदेव्या मुखात्त्वत्प्रियां मदनमञ्जुकामत्रस्थितां ज्ञातवती अतः तामवलोकयितुमत्रायाता। सा च त्वद्विरहविधुराऽनशनकृशा, पाण्डुरधूसरा, बद्धैकवेणी, त्वद्गुणगायनी, तद्दुःखदुःखितोदश्रु-विद्याधराधीशकन्यावृन्देन परिवारिता, तव स्वरूपपरिचयं मह्यमददादिति विद्याप्रभावादिदानीं त्वामिह

---

१. 'राजघ उपसंख्यानम्'। २. 'क्विप् च' शास इत्० इतीत्वम्। ३. 'आशासः क्वावुपधाया इत्वं वाच्यम्'। ४. 'इस्मन्त्रन्क्विषु च'। ५.-६. 'ज्वरत्वर०'। ७. 'गमादीनामिति, वक्तव्यम्। ८. 'ऊङ् च गमादीनामिति वक्तव्यम्'। ९. 'राल्लोपः'। १०. 'स्थः क च'। ११. 'साधुकारिण्युपसंख्यानम्'। १२. 'सुप्यजातौ णिनिस्ताच्छील्ये'। १३. 'कर्त्तर्युपमाने'। १४.-१५. 'व्रते'। १६. 'बहुलमाभीक्ष्ण्ये'। १७. 'ब्रह्मणि वदः'। १८-१९. 'करणे यजः'। २०. 'कर्मण्यग्न्याख्यायाम्'। २१. 'आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्'। २२. सुकर्मपापमन्त्रपुण्येषु कृञः। २३. 'अग्नौ चेः'। २४. 'सोमे सुञः'। २५. हुतमत्तीति हुताद् अग्निः तस्य; 'अदोऽनन्ने'। २६. 'अन्येभ्योऽपि दृश्यन्ते'; 'विड्वनोरनुनासिकस्यात्'। २७. 'उपसर्गे च संज्ञायाम्'। २८. 'दुहः कब्घश्च'। २९. 'क्रव्ये च। ३०. शॄ हिंसायाम् अस्मात् 'अन्येभ्योऽपि०' इति मनिनि 'नेड्वशिकृति'। ३१. अनुनासिकस्य क्वि०' इति दीर्घः; 'मोनो धातोः'। ३२. 'मनः'; 'क्यङ्मानिनोश्च'। ३३. 'व्रते'।

स्थितं विज्ञाय त्वदानयनाय त्वत्प्रियतमं[1]मन्यां तामाश्वास्य तदर्थसिद्धये तवाभ्याशमाशु समाशूना[2]स्मि। किन्त्विह प्रेमिनरं[3]मन्यं त्वामन्यचिन्तानिमग्नमवलोक्य 'हा दुःखम्'! इत्युक्त्वात्वदीयस्त्रियं[4]मन्या साऽनुशोचिता। एतन्निशम्यात्युत्कण्ठितो वासवदत्तज[5]स्तां जगाद यद्मयि कृपालुश्चेत् तदा अदृष्ट[6]जव्यतिकरेणोपलब्धसाक्षात्कृतिस्त्वम्, यत्र मे प्रिया मदनमञ्जुका वर्तते तत्र नीत्वा, मां तद्वियुक्त्यपारपरिखा[7]पारदृश्वानं[8] कुरु। [ इति सोपपदकृतः ]

एतदाकर्ण्य तमादाय खमुत्पतन्ती प्रभावती विहगेन[9] मार्गेण ज्योतिष्मत्यां निशि गन्तुं प्रववृते। यान्ती चैकत्र ज्वलन्तमग्निमवलोक्य, करधृत[10]नरवाहनदत्तहस्ता, तत्प्रदक्षिणां कुर्वाणा, प्रौढा सा, युक्त्यैवोद्वाहविधिं निर्वर्तितवती[11]। नभस्तलादुन्नतावनतां पृथिवीम् आशीविषगतिसदृशीः सरितः, अभ्रङ्कषान् पर्वतान्, अन्यानि च कौतुकानि पदे पदे प्रियममुं दर्शयन्ती समुत्पतनक्रमेण चातिदूरमाजगाम। तत्र चाकाशगमनश्रान्ते नरवाहनदत्ते पिपासौ, व्योममार्गादवतीर्य चन्द्रांशुधवलाम्भसः सरसः समीपे वनान्ते चैकस्मिंस्तमवातारयत्। तत्र पीताम्भसः, क्षीणवद्[12]ध्वक्लान्तेस्तस्याश्रितै[13]कान्तलतोर्णुतै[14]तरुरमणीये कानने, कान्तासम्भोगलालसा समुत्पन्न[15]वतीति नरवाहनदत्तेन हठादर्थिता प्रभावती कृताश्वासां मदनमञ्जुकां चिन्तयन्ती कृच्छ्रादनिच्छया सम्भोगे प्रवृत्ता तस्मै स्वाभिप्रायं सूचयन्ती कथामिमामकथयत्—

**मदनमञ्जुकापहारे ( निष्ठा-निर्देशः )**

आसीत् पुरा पाटलिपुत्रे काचिद् दूनं[16]दयितैकसूनुरतिरूपवती पूनधना[17]

---

१. 'आत्ममाने खश्च'; खित्यनव्ययस्य'। २. आङ्पूर्वकाच्छ्वयतेः क्तः, 'श्वीदितोनिष्ठायाम्' इतीडभावे 'ओदितश्च' इति नः, यजादित्वात्सम्प्रसारणे 'हल इति दीर्घः' आगतास्मीति भावः। ३. आत्मानंप्रेमिनरं मन्यते इत्यर्थे 'आत्ममाने खश्च', 'इच एकाचोऽम्प्रत्ययवच्च'। ४. 'इचएकाचः'–। ५. 'सप्तम्यां जनेर्डः', ङ्यापोः संज्ञा०। ६. 'पञ्चम्यामजातौ'। ७. 'अन्येष्वपि दृश्यते' इत्यत्र अपि शब्दः सर्वोपाधिव्यभिचारार्थः। तेनात्र परिपूर्वकात् खन्धातोर्डे टाप्। ८. 'दृशेः क्वनिप्'। ९. 'डे च विहायसो विहादेशो वक्तव्यः'। १०. 'निष्ठा'। ११. कर्तरि कृत्'। १२. 'निष्ठायामण्यदर्थे', 'क्षियो दीर्घात्'। १३. 'श्र्युकः किति'। १४. ऊर्णोतेर्णुवद्भावो वाच्यः' तेन एकाच्त्वान्नेट्। १५. रदाभ्यां निष्ठातो नः पूर्वस्य च दः'। १६. दु गतौ, क्ते 'दुग्वोर्दीर्घश्च' विधवेत्यर्थः। १७. 'पूञो विनाशे', निर्धनेत्यर्थः।

धनीका[1]। समुच्छूनकामवासना[2] सा चात्मतोषायानुनिशं परपुरुषसङ्गत्यै 'पुत्र, मोदकांस्तेप्रातरानेतास्मीति' शून्यभवनप्रहीणं[3] सुतं समाश्वास्येतस्ततो याति स्म। यतो ह्यन्वहमुखं सा मोदकानानीय बालकाय ददाति स्मेति स तदाशया गृहेऽदूनचेतास्तूष्णीमतिष्ठत्[4]।

एकदा विस्मृतिवशान्मोदकाननानीयमाना सा मोदकान् याचमानाय बालकायाकथयत्, 'पुत्र, अहं तु स्वकामुकरूपमोदकमतिरिच्य नान्यं मोदकं जाने। तन्निशम्यान्यासक्तयाऽनया मदर्थं मोदका नानीता इति वीताश्वासनाशाऽवशीनस्वान्तः[5] स शिशुर्निरसुस्संजातः'।

इत्थं हे प्रिय, त्वया सह समक्ता[6]ऽहं सुतरां त्वां स्वीकरोमि चेन्मयैव त्वत्सङ्गमाय कृताश्वासाय अपीदानीं वृक्णाशाया[7] मदनमञ्चुकायाः कुसुमसुकुमारं हृदयं परिस्कन्दीकृतं[8] भवेदिति प्रतिस्तब्धाहं[9] दयितमप्यद्यूनदयितं[10] त्वां नाभिलषामि। प्रभावत्येत्थमुक्तो नरवाहनदत्तस्तस्याश्चारित्रौदार्यं भृशं प्राशंसत्। नयनवाश्चर्यनिर्माणकौशलञ्च विधेरनुचिन्तयन् 'यत्र मदनमञ्चुकाऽऽस्ते तत्र मां नयेति' च पुनस्तामब्रवीत्। तच्छ्रुत्वा प्रभावती तमादाय व्योममार्गेणाषाढपुरं प्राप्य स्नेहेन विना निर्वाणोन्मुखीं[11] दीपप्रभां रचित्री स्नेहेनेव, ग्रीष्मे शुष्कजीवनां[12] नदीं प्रावृट् वृष्टिपूरेणेव विरहाधिक्षामां[13], शुष्यत्तनुं मदनमञ्चुकां तेन सङ्गमयामासेति शर्वरीशर्वरीशयोरिव तयोः सङ्गमोऽन्योन्यानन्दाय समपद्यत। तत्रोभावपि तौ प्रभावती-प्रभावोपनतानि सुपक्वानि[14] फलान्यन्यानि स्वादिष्ठभोज्यानि[15] चाभुञ्जा-

मदनमञ्चुका-( समागमः )

---

१. स्त्री। २–३. 'ओदितश्च'। ४. 'स्वादय ओदितः, अतः दूङ् परितापे अस्य 'ओदितश्च' इति निष्ठानत्वे दूनः। ५. 'विभाषाऽभ्यवपूर्वस्य'; 'हलः'; 'श्योऽस्पर्शे'। ६. 'अञ्चोऽनपादाने', 'यस्य विभाषा'; संगतेत्यर्थः। ७. ओव्रश्चू छेदने; 'स्वरतिसूति–इति वेट्कत्वात् 'यस्य विभाषा, 'ओदितश्च' तस्यासिद्धत्वात् 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः'। ८. 'परिस्कन्दः प्राच्यभरतेषु'। ९. 'प्रतिस्तब्धनिस्तब्धौ च'। १०. 'दिवोऽविजिगीषायाम्'; अक्षीणकान्तमिति भावः। ११. निर्वाणोऽवाते'। १२. 'शुषः कः'। १३. 'क्षायो मः'। १४. 'पचो वः'। १५. 'भोज्यं भक्ष्ये'।

ताम्। तद्विद्याबलेनैव च मदनमञ्चुकामपहाय न कोऽप्यन्यः प्रस्तीमेष्वपि[1] जनेषु द्रष्टुं तमशकत्।

प्रातःकाले विरहकृशायास्तस्या[2] एकबेणीं मुञ्चन्तं निजप्रियमत्यमर्षपरवशा मदनमञ्चुका जगाद, 'क्षीवे[3] मानसवेगे हते एवैषा हर्षोत्फुल्ल[4]नेत्रेणार्यपुत्रेण तदसृक्समुन्न[5]हस्तेन मोक्तव्या, मृताया ममैषा मया सहैवमेव बद्धा वा दग्धव्येति समधिकदुःखनुन्नया मया विन्नमासीत् किन्त्वसावग्निपर्वते वेगवत्या निक्षिप्तोऽप्यदृष्टेन त्राणो न म्लान इति विदितमेव भवतस्तथापि जीवत्येव तस्मिन्नद्यैषा त्वया मुक्तेति ह्रीणाया मे मनो दोदूयते। साध्व्या पत्न्येत्थमुक्तो नरवाहनदत्तस्तामित्थं सान्त्वयन्नुवाच, 'विद्याः समासाद्याचिरादेवामुं शत्रुं हत्वा पूर्त[6]त्वदभिलाषवित्तः[7] कृतकृत्यः शान्तचित्तां त्वां करिष्यामीति खेदं मा गाः'। एवं मदनमञ्चुकां समाश्वास्य नरवाहनदत्तो वैद्याधरे पुरे उवास। प्रभावती च ध्यातस्वविद्याप्रभावतः त्रातनरवाहनदत्ता स्वयमन्तर्हितैव तदीयमेवमप्रतर्क्यं रूपं कृतवती यत्तद्रूपेण ख्यातोऽपि राजपुत्रो निःशङ्कं यथासुखं विविधान् भोगान् भुञ्जानस्तत्रासाञ्चक्रे तथापि, इयं मदनमञ्चुका वेगवत्या वयस्येतीमां वित्तीकृतनिजसखीसख्यैकचित्तीभूता प्रभावती, निजसखीमिव सर्वथा परिचरति, एवञ्च 'अयं भित्तीकृत[8]सकलसपत्नस्वान्तः प्रच्छन्नोऽनङ्ग इव मूर्तो[9], नरवाहनदत्त' एतत्सर्वं जानानाः आषाढपुरवासिनो मानसवेगतः, तद्रहस्यमुद्घाटयन्तो निजकर्त्तव्यानृण्यं[10] जग्मुः।

एकदा पारस्परिकवार्ताप्रसङ्गेन मदनमञ्चुका, मानसवेगकृतस्वापहरणवृत्तान्तं निगदितवती यल्ललितललनालुब्धो[11] गृध्यागुधितो[12] मानसवेगः [13]क्षुधितो हर्यक्षो

---

१. 'स्त्यः प्रपूर्वस्य'; प्रस्त्योऽन्यतरस्याम् ( स्त्यै शब्दसंघातयोः; संघीभूतेष्वपि जनेषु इत्यर्थः )। २–३. अनुपसर्गात् फुल्ल क्षीबकृशोल्लाघाः'। ४. 'उत्फुल्लसम्फुल्लयोरुपसंख्यानम्'। ५. 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' 'श्वीदितो निष्ठायाम्'। ६. 'श्र्युकः किति', 'न ध्याख्यापॄमूर्च्छिमदाम्'। ७. 'वित्तो भोगप्रत्यययोः'। ८. भित्तं शकलम्'। ९. न ध्याख्यापॄमूर्च्छिमदाम्, 'राल्लोपः'। १०. 'ऋणमाधमर्ण्ये'। ११. 'लुभोऽविमोहने' गार्ध्ये लुब्धः। १२. 'उदुपधाभावादिकर्मणोरन्यतरस्याम्', 'शब्विकरणेभ्य एवेष्यते'; ( गुधितः परिवेष्टित इत्यर्थः। गुध-परिवेष्टने, दिवादिः )। १३. 'वसतिक्षुधोरिट्'।

**मदनमञ्जुकायाः (स्वापहरणवृत्तान्तः)**

हरिणीमिवाभिभूय स्वमायया मामवहृत्य क्रूरकर्मभिर्भाययन् यावदेवानुचुकूलयिषति तावदेवामर्षितेन[1], समुद्धृतासिना, ललज्जिह्वेन, भक्तजनाञ्चितवाञ्छितेन[2], भैरवाकारेणाऽविर्भूय भगवताभैरवेण सहुङ्कारं प्रधर्षितः[3] 'किमियं विद्याधरेन्द्राणां भाविचक्रवर्तिनो भार्याऽस्मासु स्थितेष्वेवं परिभूयते' ? भगवतेत्थमुक्तः पापो मानसवेगो मुखाद् रक्तं वमन्नवन्यां क्लिशितो[4] निपतितवान्[5]। ततस्तिरोहिते देवे, निष्कुषित[6]तद्धुङ्कारभयशल्यः, क्षणादवाप्ताश्वासनः, स मयि क्रौर्यान्निवृत्तो निजगेहं गतः। अन्तःपुरचेट्यश्च तदानीमतिभीतां, वियोगविक्लवां, प्राणत्यागोन्मुखीं मामुपगत्य मधुस्फीता[7]भिर्वाग्भिः सान्त्वयन्त्य एवमुक्तवत्यो यत्पुरा पूत[8]चरित्रां काञ्चिद्रूपवतीं मुनिकन्यामवलोक्य काममोहितो हठात्तामपहरन्नयं मानसवेगस्तद्बन्धुभिः शप्तो यदनिच्छन्तीं परनारीमभिजिगमिषोस्ते मूर्द्धा शतधा विदलिष्यतीति बलादयं परदारान् गन्तुं नैव शक्नोत्यतो मा भैषीः, देवादेशेनाचिरमेव ते भर्त्रा सह सङ्गमः संभावित[9] इति प्रमोदिता[10] भव। एवमुक्तवतीष्वेव तासु तत्स्वसा वेगवती मामाश्वासयितुमिहागत्येतो गता त्वां प्राप्तेत्यतः परं न किञ्चित्ते निगूढम्।

तदनन्तरमेव ज्योत्स्नासितैर्वस्त्रैरमला चान्द्री तनुरिव स्वकीयेन सौम्येन दर्शनेनामृतेनेव मां सिञ्चन्ती दुरात्मनोऽस्य साध्वी धात्री पृथ्वी देवी तत्रैवागत्येत्थं मामवबोधितवती यन्मद्दुहितुर्वेगवत्याः अत्रास्मिन् राज्ये पितृकल्पितो भागो वर्तते। सा च, त्वदीयेन भर्त्रा परिणीतेति त्वदीया सखी। अतस्तद्धनमात्मीयं स्वं समाकलय्य समुपभुञ्जाना 'शत्रुहस्तनिपतिता तदन्नं कथमहं भुञ्जीय' इति विचारपरा शुभोदर्कं परित्यक्ताहारमात्मानं मोपेक्षस्व। स्वविद्याबलेन सर्वमेतद-

---

१. 'मृषस्तितिक्षायाम्'। २. 'अञ्चेः पूजायाम्' इतीटि 'नाञ्चेः पूजायाम्'। अञ्चु-विशेषणे इति चौरादिकाद्ध क्ते 'निष्ठायां सेटि' इति णिलोपः। ३. 'निष्ठाशीङ्०' 'आदिकर्मणि निष्ठा वक्तव्या' 'विभाषा भावादिकर्मणोः'। ४. 'क्लिशः क्त्वानिष्ठयोः'। ५. 'तनिपति–' इति वेट्कत्वान्निषेधे प्राप्ते 'द्वितीयाश्रितातीतपतित–इति निर्देशादिट्; कृन्तत्यादीनामीदित्त्वेन 'यस्य विभाषेत्यस्यानित्यत्वाद्वेट्। ६. 'इण्निष्ठायाम्'। ७. स्फायः स्फी निष्ठायाम। ८. 'पूङश्च'। ९. 'निष्ठायां सेटि। १०. 'उदुपधात्–' इति वैभाषिककित्त्वाभावे गुणः।

हमवगे[1] तुभ्यञ्चावितथमभिदधे। एवमुक्त्वा सशपथं सुतासम्बद्धोद्दीप्त[2]स्नेहभावयाऽहमवस्थोचिताहारं कारिता। त्वया सहागत्यैष भ्राता वेगवत्या पराजितस्त्व च रक्षितः। अतः परं न किञ्चिदहं वेद्मि। बाढ[3]मेतत्किन्तु यन्नैराश्यध्वान्ताक्रान्तस्वान्तापि वेगवतीसिद्धिम् अम्लिष्ट[4]विरिब्ध[5] तद्दैवतवचश्च स्मरन्ती त्वत्प्राप्त्याशा संलग्नान्[6] प्राणान् प्रधृष्टा[7]हं न पर्य्यत्याक्षम् इति महानुभावायाः प्रभावत्याः प्रभावाद् दृढ[8]शत्रुसङ्कटेऽप्यत्र मम प्राणपरिवृढो[9] मयोपलब्धस्त्वमिदानीम्। तथापि मदीये स्वान्ते कष्ट[10]मेतच्चिन्तया वर्तते यत्प्रभावत्या अनुपस्थितौ तव तद्रूपे विनष्टे काऽऽवयोर्दशा स्यादिति।

इत्थमुद्घुषित[11]वाक्यां मदनमञ्चुकां परिसान्त्वयति नरवाहनदत्ते तत्र तिष्ठति, प्रभावत्याञ्च स्वपितुर्भवनं समर्ण[12]वत्यां तदन[13]भ्यर्णतया विनष्टतद्रूपं नरवाहनदत्तं कमपि तत्र स्थितं पारदारिकं मत्वैकदा सर्वोऽपि राजकुलपरिजनो भयाद्राजकुलं गत्वा न्यवेदयदिति भयभीतां वारयन्तीमपि मदनमञ्चुकामपवार्य स्वबलान्वितो राजा मानसवेगो नरवाहनदत्तं पर्य्यविवेष्टत्। तदानीमेव

**नरवाहनदत्तस्य निग्रहः**

तन्माता पृथिवीदेवी सत्वरं तत्रागत्य राजानमब्रवीत्, 'पुत्र, नायं पारदारिकोऽपि तु परिपीतस्फीतवृ[14]त्तसकलशास्त्रकलाकलापक्षीरसागरावगाहनोद्भूतामृतयशःश्रृत[15]क्षीरः, दान्तः[16], प्रशान्ताऽऽस्वान्तः[17][18], सर्वदाहृष्टहृष्ट[19]तनूरुहः, विद्याधरैरुचितम

---

१. अवगच्छामि। २. 'श्वीदितो निष्ठायाम्'। ३. 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानिमन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु'। ४. म्लिष्टमविस्पष्टम् तद्विरुद्धम्; स्पष्टमित्यर्थः। ५. विरिब्धः स्वरस्तेन स्पष्टस्वरमित्यर्थः। ६. संलग्नान् संसक्तान्; निष्ठा नत्वं निपातनात्। ७. 'धृषिशसी वैयात्ये'। ८. 'दृढः स्थूलबलयोः'। ९. 'प्रभौ परिवृढः'। १०. 'कृच्छ्रगहनयोः कषः'। ११. 'घुषिरविशब्दने', इत्यनेन अविशब्दने घुष्टा रज्जुरित्यादावेवनिषेधेऽत्र शब्देन प्रकटीकृताभिप्रायार्थे इट्। १२. अर्दतिरिह गत्यर्थकस्तेन समर्णवत्यामित्यस्य 'अर्देः सन्निविभ्यः' इतीण्निषेधे संगतवत्यामित्यर्थः। १३- 'अभेश्चाविदूर्ये'। १४. 'णेरध्ययने वृत्तम्' (अधीतमित्यर्थः)। १५. 'श्रृतं पाके' (सुपक्वंदुग्धम्)। १६-१७. वा दान्तशान्त'—। १८. रुष्यमत्वरसंघुषाऽऽस्वनाम्। १९. हृषेर्लोमसु।

पचितः[1], वत्सराजात्मजो नरवाहनदत्त इदानीं निजभार्यामुपायातः। जामाता चायमस्माकम् इत्येतद्विद्याबलेनाहं सर्वमवगच्छामि। मात्रेत्थमुक्तः समुत्पन्न-पीनामर्ष[2] प्रप्यानस्वेदो[3], नातिप्रह्लन्नो[4], मानसवेगो जगाद, 'त्वया सहेहादितः[5] स्थितः मयाऽविदितः शत्रुरितीदानीमयं निर्दयं दितः, निशितैः[6] शस्त्रैश्छितोऽवसितोऽन्धापीने[7] मितः क्रव्यादां पुरो वा निहितः[8] समवलोकितः स्यात्।' एतन्निशम्य जामातृस्नेहतो मात्रा पुनरभिहितम्, वैद्याधरे लोकेऽधर्मो न लभ्यतेऽतोऽत्र विद्याधराणां या धर्मार्था सभा वर्तते तत्प्रधानस्याग्रे प्रसङ्गोऽयं समुपस्थापनीयः। तेनैव हि यः समुचितो निर्णयः प्रदत्तो[9] भवेत्स शोभतेतराम्। मातृप्रत्तोत्तरवच[10] एतदिति गौरवात्तन्मानसवेगेन प्रतिपन्नं किन्तु बद्ध्वा तं तत्र नेतुमादेशोऽनूत्त[11] इति श्रुतिनलिकाधीतंतत्सातादेशविषोन्मत्त[12][13] इव हृन्निखातकुन्ताघातसमसञ्जातामर्षो नरवाहनदत्तस्तोरणस्तम्भमुत्पाट्यागणितांस्तत्रत्यान् भृत्यानतर्दीत्। हतस्य चैकस्य हस्तादसिमेकमाकृष्य दिव्यपराक्रमः सोऽन्यानपि जघन्यान्निजमन्युवह्निदग्धानन्तकजग्धा[1]नकार्षीत्[4]। नरवाहनदत्तीयमेतत्पराक्रममवलोक्य मानसवेगो दिव्यया निजविद्यया बद्धं भार्यानुगतञ्च तं तां सभामनैषीत् इति भेरीमहाशब्दसमाहूता इतस्ततः शब्दकारा विद्याधराः सुधर्मायां देवा इव समागत्य सम्मिलिताः।

विद्याधरैः परिवृतस्तद्राजो वायुपथो रत्नसिंहासनं समुपाविष्ट इति दृष्ट्वा दुष्टो मानसवेगस्तदग्रे स्थित्वेत्थमब्रवीत्, 'मर्त्योऽपि स्वसुरन्तःपुरे चारित्रविध्वंसकोऽयं वध्यः' इति। एतन्निशम्य राज्ञा स्वाभियोगे प्रत्युत्तरीतुमुक्तः आमुक्तो वीरो नरवाहनदत्तः प्रत्तवानुत्तरमेतत्, 'सा एव सभा यत्र सभ्यो भवेत्; स एव च सभ्यो यो धर्मं वदेत्; स एव च धर्मो यत्र सत्यं स्यात्; तदेव च सत्यं सच्छलनिर्मुक्तं प्रतीयेत। अहं ह्यत्र मायया बद्धो भूमौ च स्थितः। मत्प्रतिवादी मानसवेगश्च मुक्तः आसने चोपविष्टः इत्ययमपि यावन्नावनावत्रस्थितो, विवादस्तावन्नावनवस्थितः।

---

१. 'अपचितश्च'। २. 'प्यायः पी'। ३. सोपसर्गस्य प्यादेशो न। ४. 'ह्लादोनिष्ठायाम्'। ५. 'द्यतिस्यतिमास्थामित्ति किति'। ६. 'शाच्छोरन्यतरस्याम्'। ७. आङ्पूर्वकस्य प्यायः, अन्धूधसोः (अर्थयोः) प्यादेशोऽतोऽत्र अन्धापीनेऽन्धकूपे मितः प्रक्षिप्त इत्यर्थः। ८. 'दधातेर्हिः'। ९. 'दो दद्घोः'। १०. 'अच उपसर्गात्तः'। ११. अनुपूर्वकाद्ददातेः क्ते 'दस्ति'। १२. धेट् धातोः 'घुमास्था—इतीत्वम्। १३. षणुदाने इत्यस्य क्ते 'जनसनखनां सञ्झलोः'। १४. 'अदो जग्धिर्ल्यप्तिकिति'।

वायुपथ एतदाकर्ण्य तमपि मोचयित्वा, मानसवेगमपि क्षितावुपावेशयत्। ततः सर्वेषु शृण्वत्सु नरवाहनदत्तोऽभ्यधाद् यदनेनाहृत्य समानीतां स्वभार्यां मदनमञ्जुकामहमत्र प्राप्तवाँश्चेत्तदा कस्य शुद्धान्तो-

नरवाहनदत्तस्य मुक्तिः

मया ध्वंसितः ? अस्याः स्वस्रा चाहं वेगवत्या मम पत्न्या मदनमञ्जुकाया रूपेणाभ्युपगत्य स्वकीयो भर्त्ता विहितश्चेत्तदा का मे प्रक्षीण[1]चारित्रापराधिता ?

एतत्सर्वमाकर्ण्य राजा वायुपथोऽब्रीत्, 'भविष्यन्महोदयो महात्मायं धर्म्यं वदतीति नायमधर्मकलंकपङ्केनाङ्कनीयः। एवमुक्तोऽपि मानसवेगो मोहान्धोऽधर्मान्न यदा न्यवर्तत तदा धर्मानुरोधिनस्तस्य सन्नद्ध-

मानसवेगस्य पराभवः

सैनिको महान् संक्षोभः समजायत। तत्रत्यदिव्यकन्यका विलोकयन्नरवाहनदत्तश्चाचकथत् यन्मायां विहाय मया सह युध्यस्व, एकेनैव च प्रहारेण क्षितौ[2]युर्भूत्वा क्षतविक्षतः क्षितौ निक्षिप्तो युद्धकलानिष्णा[3]तस्य, नैकदा जन्यनिहतसपत्नासृक्सरितप्रतिस्नौ[4]तस्य मम पौरुषञ्चावलोकस्व। एवमन्योन्यसमुपजातकलहेषु विद्याधरेषु सभान्तरस्थात्सहसैव विदीर्णस्तम्भाद्भैरववपुरञ्जननिभो व्याप्ताम्बरो, विनिह्नुततरणिः, विद्युल्लतातरलप्रदीप्तलोचनार्चिः, प्रलयमहामेघ इव देव एक आविर्भूय 'न कथमपि भाविविद्याधरचक्रवर्तिनः कुष्ठ[5]लेऽत्र पराभवो भवेदिति' गर्जन्मानसवेगमुत्थाप्याधोमुखीचकार ! नरवाहनदत्तञ्चाशु भुजाभ्यामादाय संरक्षणार्थमृष्यमूकपर्वतपरिष्ठ[6]लं प्रापय्य तत्रैव च तं स्थापयित्वा तिरोदधौ।

इत्थमपनीते ततो नरवाहनदत्ते शान्ते च विद्याधरसम्भ्रमे वायुपथः स्वैरपरैश्च सहितः स्वहर्म्यमाजगाम। मानसवेगोऽपि च हर्षविषादाकुलितां मदनमञ्जुकां पुरस्कृत्याषाढपुरं प्रत्यावृत्तवान्।

सुखदुःखयोश्चक्रं विधिविधानानुकूलमनिर्बाधं परिवरिवृतीति। तत्रैव च

---

१. 'निष्ठायामण्यदर्थे,' 'क्षियो दीर्घात्'।　　२. 'वा क्रोशदैन्ययोः'। ३. 'निनदीभ्यां स्नातेः कौशले'। ४. सूत्रार्थाभावात् 'सूत्रं प्रतिष्णातम्' इत्यस्य प्रत्युदाहरणम्। ५–६. विकुशमिपरिभ्यः स्थलम्।

प्राणिनां धीरस्वपरीष्टिरिति विजयलक्ष्मीमाश्लिष्टः[1], शिवमुपासित[2] एकोऽपि नरवाहनदत्तस्तैस्तैर्दारैः संयोजितो मुहुर्मुहुर्वियोजितः।

अथैकदा ऋष्यमूकाद्रिमधिष्ठितं तं प्रभावती समागत्योक्तवती यन्ममासन्निधानात्पापं चिकीर्षुणा मानसवेगेन भवान् सभां नीत इत्येतद्विज्ञाय विद्याप्रभावेण भैरवदेवाविर्भावविडम्बनं कृत्वा तत्पापपाशान्मया छिण्णो[3] भवानिह समानीतः। एतद्धि समिद्ध-सिद्धक्षेत्रम् इति बलवतां विद्याधराणामपि मते[4], विदिते, जुष्टे, रक्षिते चात्र गिरौ केषामपि मायाप्रपञ्चो न प्रभवति। ममापि विद्याविभवो नात्र प्रसरतीति कथं त्वमत्र वन्याहारेण वर्त्स्यसीति मे दुःखम्।'

एतदुक्तवत्या प्रभावत्या सह कालं प्रतीक्षमाणो नरवाहनदत्तो मदनमञ्जुकांध्यायँस्तत्रोवास। तत्पर्वतासन्ने पवित्रे पम्पासरसि सस्नौ। स्वादूनि फलानि मूलानि च पप्सौ। मृगमांसोपदंशञ्च तीरतरुपतितैः सरसं सुगन्धि च पयः पपौ। एवं तत्र निवसतो रामाश्रमानालोकयतश्च तस्य मनो विनोदार्थं प्रभावती यत्किंचिद्रामायणवृत्तान्तमवर्णयत् यदिदं ससौमित्रिसीतस्य, रामस्य तापसैः सह तरुमूले कृतोटजम् आसितम्[5]; इदं तस्य भुक्तम्[6]; इदञ्च यातम्[7] इत्यादि। एवमत्र कतिचिद्दिनानि स्थितो रामोऽब्धिं बद्ध्वा विमानीकृतलंकेश्वरोऽनेनैव पथा विमानेन जानकीमानिन्ये। एवमेव भवानपीह कञ्चित्कालं स्थित्वा गतो मदनमञ्जुकामवाप्स्यतीत्यादिकथयन्त्या तया सह सर्जल्पितं सहसितञ्च[9] निवसन्नरवाहनदत्तो दिनानि निनाय। ( निष्ठानिर्देशसमाप्तिः )

एकदा धनवत्यजिनावत्यावुभे विद्याधर्यौ—याभ्यां स गन्धर्वपुरात् श्रावस्तीं प्रापितो भगीरथयशसं परिणयतिस्म—दिवोऽवतीर्य पम्पायां[10] सुत्वानौ तमुपजग्मतुः। स्वकीयया सख्या प्रभावत्या सह तत्र अजिनावत्यां मिलितायां धनवती नरवाहनदत्ताय प्रास्तावीत्, 'एषा अजिनावती प्राङ् मया वाचा तुभ्यं दत्तेत्यासन्नाभ्युदयेनाधुनैषा त्वया परिणेतव्येति'। एतद्धनवतीवाक्यं प्रभावती नरवाहनदत्तश्च सखीस्नेहादनुमुमुदाते इति धनवती यथाविधि वत्सेश्वरायाजिनावतीं ददाना निजविद्याकल्पितदिव्यसम्भारं सुतोद्वाहमङ्गलोत्सवं निर्वर्त्यान्येद्युर्नरवाहनदत्तं

१-२. 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च'। ३. छिदिर् द्वैधीकरणे, 'त्नीतः क्तः'। ४. 'मतिबुद्धिपूजार्थेभ्यश्च'। ५-७. क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः'। ८-९. 'नपुंसके भावे क्तः। १०. सुयजोर्ङ्वनिप्।

बभाषे, 'पुत्र, यत्र-तत्र-चिरं स्थातुमसाम्प्रतम् । मायावी हि विद्याधरवर्ग इत्यधुना सभार्यस्त्वं निजपुरीं कौशाम्बीमुपढौकस्व । अहमपि निजसूनुना चण्डसेनेन सह तत्रैवागमिष्यामि । धनवतीत्थमुक्त्वा दिवमुद्ययौ । प्रभावत्यजिनावत्यौ च नरवाहनदत्तं नभसा कौशाम्बीं प्रापयामासतुः ।

इत्थं कौशाम्ब्या उद्यानेऽवतारितो नरवाहनदत्तस्तत्रत्यैः सर्वैर्जनैरदर्शीत्यतिभाग्यशालिनो वयं ये दिष्ट्या राजपुत्रं पश्याम इत्थं ब्रुवाणानां यूनां जरताञ्च[1] समन्ततो महान् कोलाहलः समजनिष्ट । नगरोपकण्ठे समुपनिषेदिवांसं[2] तं शुश्रुवान्[3] वत्सराजश्चाथाकाण्डसुधासारसंसिक्त इव वासवदत्तया, पद्मावत्या, रत्नप्रभादिभिर्वधूभिः, यौगन्धरायणादिभिर्मन्त्रिभिः, कलिङ्गसेनया, गोमुखादिभिश्च सह ग्रीष्मेऽध्वगो ह्रदमिव तमुपेयिवान्[4] । तत्र वत्सेशो देव्यौ च निजसुतं चिराद् ददृशिवांसस्[5]तमालिङ्ग्यामन्दानन्दं विविदिवांसः[6], समुच्छलदूर्मिवात्सल्यसागरमिव विविशिवांसः[7] हर्षकण्टकितेष्वङ्गेषु प्रोतमिव तं मोक्तुं न शेकुः । ततो मिलितेषु तेषु सर्वेषु प्रवर्तमाने महोत्सवे, सिद्धविद्याप्रभावतः सर्वमवगत्य मानसवेगस्य स्वसा, नरवाहनदत्तस्य पत्नी वेगवती, व्योममार्गेण तत्रावतीर्य निजपतिश्वश्रूश्वशुरकृतपादानतिर्नरवाहनदत्तं जगाद, 'भवदर्थं दुर्बलीभूताः सर्वा विद्यास्तपोवने साधयित्वा कल्याणिनस्तवान्तिकं पुनरहं प्राप्ता । एतदभिधाय सा प्रभावत्यजिनावत्यौ सख्यावभिगत्य ताभ्यामाश्लिष्टा यावत्ताभ्यां तत्रोपवेश्यते तावदजिनावती माता धनवत्यपि तैस्तैर्विद्याधराधिपैः समाच्छादितव्योमतलैरिव तद्बलैर्युतैः सह तत्रैवाजगाम । ततस्तस्याः सुतो महाभुजो वीरश्चण्डसिंहस्तद्बन्धुर्मितगतिः, प्रभावत्याः पिता पिङ्गलगान्धारः पूर्वप्रतिपन्नसभापतित्वो वायुपथस्तथा वज्रप्रभेण पुत्रेण सह राजा हेमप्रभो गन्धर्वदत्तया सुतया सहितो गन्धर्वराजस्तथा चित्राङ्गदेन युक्तस्सागरदत्तः, एते सर्वे तत्रोपगताः सपुत्रेण वत्सराजेन च सम्मानिता यथोचितासनेषूपाविशन् ।

तत्रैवं सर्वेषूपविष्टेषु सत्सु पिङ्गलगान्धारो राजा सदसि तिष्ठन्तं[8] जामातरं नरवाहनदत्तमुवाच, 'देवादिष्टं स्वचक्रवर्तिनं भवन्तं पश्यन्तो[9]ऽतिस्नेहवशात्सर्वे

---

१. 'जीर्यतेरतृन्' । २–३. 'भाषायां सदवसश्रुवः' । ४. उपेयिवाननाश्वाननूचानश्च' । ५–७. विभाषा गमहनविदविशाम्, 'दृशेश्च' । ८–९. 'लटः शतृशानचौ०' ।

वयमिह समवहिताः समाहयिताः[1]। नियतव्रता, दिव्यज्ञानवती, दधाना[2]ऽक्षसूत्रम्, वसाना[3] कृष्णाजिनम्, त्वामभिरक्षन्तो[4] सर्वदोद्युङ्क्ते। विद्याधरोत्तमवन्दनीया, सिद्धविद्या सावित्री साक्षाद्भगवतीवेयं ते श्वश्रूर्धनवतीति त्वदीयकार्यसिद्धौ न सन्देह-स्तथापि यदहं वच्मि तत्त्वमाकर्णय 'अत्र हिमाचले विद्याधराणां स्थितेर्द्वौ भागौ वर्तेते, उत्तरो दक्षिणश्च। कैलाशादर्वाग्दक्षिणः, तत्परतश्चोत्तरः। तत्रैषोऽमितगति-रुत्तरभागाधिपत्यार्थमिदानीं तप्तसुदुश्चरतपाः परितोषितेन शङ्करेणोक्तो यच्चक्र-वर्तिनरवाहनदत्तस्ते समीहितं साधयिष्यतीत्ययं तवान्तिकमुपयातः। इदानीं तत्रत्यसिंहासने समासीनः[5] मन्दरदेवाख्यो दुर्मतिर्मुख्यो राजा वर्तते। स चैवं बलवान् यदवाप्तविद्येनापि त्वया विजेतुमसाध्यः। यस्तु दक्षिणभागे गौरिमुण्ड इति विश्रुतो राजा वर्तते सोऽतिदुर्जयो दुरात्मा च। स च विविधमायाः विदन्तो[6], विदितस्य तव शत्रोर्मानसवेगस्य परमः सुहृदिति यावन्न स साधितस्तावन्न ते कार्यं सेत्स्यति। अतस्त्वमचिरेणैव सोत्कर्षं महाविद्याबलं साधय। पिङ्गलगान्धा-रेणेत्थमुक्तं धनवत्यप्यनुमुमुदे। विद्यासिद्ध्यर्थमीश्वराराधनार्थञ्च यथानिर्दिष्टं सिद्धक्षेत्रं गत्वा तत्प्रसादात्प्रकर्षावाप्तये च समादिष्टो नरवाहनदत्तः। एतस्मिन्नेव प्रसङ्गे चित्राङ्गदोऽब्रवीत्, 'देव, मिलिता इमे सर्वे राजानो भवन्तमभिरक्षन्तीति सर्वेषामग्रयायी एष विजयः क्रियताम्।

इत्थं तैरुक्तः कृतनिश्चयो महाविद्याबलम् अर्जयिष्यन्[7] नरवाहनदत्तो विहित-माङ्गलिकक्रियोऽमितगतिप्रज्ञाकल्पितोत्तमशिविकामारुह्य कल्पान्तपवनोद्धूतसाग-राम्भोनिभैर्निजबलैः परिवृतो नभः स्थगयन् क्षणादेव गन्धर्वपतिविद्याधरेश्वरैर्धन-वत्या च सिद्धक्षेत्रपर्वतकमानीयत। तत्र च सिद्धैरादिष्टव्रतस्तीर्थजलैरात्मानं पवमानो[8] हविषा शिवं यजमानः, स्थण्डिलमधिशयानः, सर्वदा विविधान् भोगान् भुञ्जानोऽपीदानीं फलैर्वृत्तिं कुर्वाणः, स्वानुभावेनैव च तपोविघ्नान् निघ्नानः[9], व्योम-चराधिपतिपरिवृतस्तैः सर्वथाकृतरक्षो रक्षोभिरक्षोभितहृदयो दिवानिशमतन्द्रितः शङ्कराराधनायात्यन्तमतपसीत्।

---

१. इय गतौ; समागता इत्यर्थः। २–३. आत्मनेपदत्वाच्छानच्; 'आने मुक्'। ४. लक्षणहेत्वोः क्रियायाः। ५. 'ईदासः'। ६. 'विदेः शतुर्वसुः'। ७. 'लृटः सद्वा', 'तौ सत्'। ८. पूङ्यजोः शानन्'। ९. 'ताच्छील्यवयोवचनशक्तिषु चानश्'।

तथा तपस्यन्तं तमतिसमुत्सुकाः पञ्च विद्याधरकन्यका मदनपरवशा मिथः समयं चक्रुर्यत् अयमस्माभिर्मिलिताभिर्युगपत्पतिर्वरणीयो विवाहश्चानेन करणीय इति। यदि चैकामुना सह पृथग्विवाहं कुर्यात् तदा सखीद्रोहिणीं तामुद्दिश्य शेषाभिरग्निप्रवेशो विधेयः। तमवलोक्यैवं दिव्यकन्यकासु तासु क्षुभ्यन्तीषु, तद्-वाप्तिविषयकं व्रतं च धार[1]यन्तीषु तत्राकस्मात्तपोवने महोत्पाताः प्रादुरभवन्; तथाहि—प्रतिष्यतां शूराणां गतिं बोधयन्निव उच्चैस्तमतरून् समुन्मूलयन्महारौद्रो वायुर्ववौ! किमत्र भवेदिति भयादिव भूमिश्चकम्पे। भीतावकाशदानार्थमिवाद्रि-सानवोऽस्त्रंसिषत। हे विद्याधराः प्रभुममुं रक्षत! रक्षत!! इति वदद् इवानभ्रं नभस्तलं घोरघोषमकरोत्। किन्त्वेवं भूतेऽप्युत्पातसम्भ्रमे नरवाहनदत्तोऽर्हन्तं[2] भगवन्तं त्रिलोचनं ध्यायन्निष्कम्प एव तस्थौ। अनिष्टाशङ्किनो गन्धर्वराजविद्याध-रेश्वराश्च सावधानाः सन्नद्धाश्च [3]द्विषद्भ्यस्तमवन्तोऽवस्थितवन्तः। व्याधूतलता-तीक्ष्णकोटिखड्गानि वनानि अहितागमशंसिन उत्पातान् भर्त्सयन्ति इव सिंहना-दान् मुमुचुः।

अन्येद्युश्चाकस्मात् आकाशे कल्पान्ताम्बुदमेदुरं घोरनादं विद्याधरबल-मदृश्यत। धनवती च तदानीं स्मृतनिजविद्याबलेन सर्वं विज्ञाय [4]सुन्वद्भिर्जर-द्भिश्च विजुगुप्स्यमानेन मानसवेगेन सहायं गौरिमुण्डः समा-

मानसवेग— युद्धम्

यात इत्यभ्यधात्। तदानीमुद्गूर्णविविधायुधान् सर्वान् विद्या-धरान् प्रति समानसवेगो गौरिमुण्डोऽभ्यधावत्। कायं मानवः। क्व च वयं द्युचरा इति तद्गृह्याणां युष्माकं दर्पमहमिह क्षणेनैव अपनेता[5] भवामीतिवादिनं तं निरा[6]करिष्णुश्चित्राङ्गदोऽपि क्रोधादभ्यद्रवत्। गन्धर्वाधीश्वरो राजा सागरदत्तस्तथा प्रचण्डदोर्दण्डो वायुपथः, पिङ्गलगान्धार-श्चैते सर्वे विद्याधरेश्वरमहारथाः परतेजोऽसहिष्णवः सबलाः सिंहा इवाभिगर्जन्तो द्विषद्द्विपमनोभीतिं प्रजनिष्णवः समुन्मदिष्णु मानसवेगमभ्यधावन् इति चित्रा-ङ्गदादयः सैन्यरेणुघनाकीर्णे, शस्त्रज्वालातडिल्लते, निपतदसृगम्बुनि तस्मिन् घोरे समरदुर्दिने सञ्चरिष्णवः शोणितासवसम्पूर्णं प्रकीर्णशत्रुशिरोबलिं महायागमिव चक्रुः। कबन्धमकरसङ्कीर्णाः, वहदायुधपन्नगाः, मिलन्मेदोडिण्डीरा रुधिरापगाः

---

१. 'इङ्धार्योः शत्रकृच्छ्रिणि'। २. 'अर्हः प्रशंसायाम्'। ३. 'द्विषोऽमित्रे'। ४. 'सुञो यज्ञसंयोगे'। ५. 'तृन्'। ६. 'अलंकृञ् निराकृञ्०—'

प्रावर्तन्त । एवं प्रवृत्ते भयानकयुद्धे स्थास्नुना[1] संहतसैन्येन गौरिमुण्डेन स्मृता, पूर्वाराधनसम्प्रीता गौरी विद्या साक्षात्त्रिनेत्रा, त्रिशिखायुधा च आविर्भूष्णु-[2]र्जिष्णून् नरवाहनदत्तीयान् प्रवीरान् अमूमुहत् इति समुपलब्धबलो धृष्णुर्गौरि-[3]मुण्डः प्रधाव्य त्रस्नु-क्षिप्नुं नरवाहनदत्तं बाहुयुद्धायाह्वयत् । द्वन्द्वयुद्धे च नरवाहनदत्तबाहुविद्धोऽक्षमी,[4] मायावी, तमी, गौरिमुण्डः स्मृतनिजविद्याबलेन तं हन्तुं बाहुभ्यामादाय खमुद्ययौ किन्तु धनवतीविद्याबलान्वितं नरवाहनदत्तं हन्तुमशक्नुवन्नुन्मादी[5] सोऽद्रिपर्वते तं चिक्षेप । द्वेषी[6], मानसवेगोऽपि च निजद्रोहिणो[7]ऽभ्याघातिनश्च तत्सखान् गोमुखादीन् आदाय विकाषी,[8] खमुत्पतिष्णुरनास्थया दिक्षु प्रास्थित । एवमुत्क्षिप्तास्ते धनवतीप्रयुक्तया रूपिण्या विद्ययाऽवतारिताः पृथक् पृथग्भूमौ स्थापिताः 'विवेकिनं सिद्धकार्यं, [10]ऽपलाषिणं, शत्रुप्रमा-[11]थिनं, प्रसारियशस्कं च निजप्रभुं कुशलिनं भवन्तः शीघ्रं प्राप्स्यथ एवमुक्त्वा तिरोदधत्या च तया भृशमाश्वासिताः । एतेनास्माभिर्जितमिति विकत्थी समानसवेगो गौरिमुण्डो यथागतं तस्मान्नगात्स्वगृहानगात् । 'नरवाहनदत्तः सिद्धकार्यः शीघ्रं समेष्यति, न तस्य किमप्यनिष्टं भावि' इति धनवत्याऽभ्युदीरिते सति विस्रम्भिणस्ते चित्राङ्गदादयोऽपि स्वानि स्थानानि जग्मुः । धनवत्यपि स्वसुतामजिनावतीं सपत्नीभिः सहितामादाय स्वगृहं ययौ ।

इतोऽभ्यसूयको, विलासी च मानसवेगो मदनमञ्चुकामागत्य प्रललाप, 'तव पतिर्युद्धे हत इतीदानीमहमेव ते गतिरतस्त्वं मां भज'। एवमुक्ता सा तत्पुरस्थायिन्यपि तत्परिवादका[12] हसन्तीत्थमुवाच, 'सत्स्वपि तस्य [13]निन्दकेषु देवसुरक्षितस्य तस्य हिंसको[14] न कोऽपि समुदपद्यतेति नूनं स एव वो विनाशक[15] इति' ।

---

१. 'ग्लाजिस्थश्च ग्स्नुः' । २. 'ग्लाजीति' सूत्रे चकाराद् भवतेरपि ग्स्नुः । ३. 'त्रसिगृधिधृषिक्षिपेः क्नुः' । ४. 'शमित्यष्टाभ्यो घिणुन्', नोदात्तोपदेशस्येति वृद्धिनिषेधः । ५. उत्पूर्वान्मदेः अलंकृञादिसूत्रेण इष्णुजुक्तो 'वा सरूपोऽस्त्रियाम्' इति घिणुनपि । ६–८. सम्पृचानुरुधाङ्'— ९. 'वौ कषलसकत्थस्रम्भः' विघातीत्यर्थः । १०. 'अपे च लषः' अत्र चकाराद्भावपि; विशेषेण शोभाशालिनमित्यर्थः । ११. 'प्रे लपसृद्रुमथवदवसः' । १२–१५. 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्' ।

इतो नरवाहनदत्तं तच्छत्रुणा वह्निपर्वते क्षिप्यमाणं कश्चिद्दिव्यः पुमान् तत्राग्रहीत्; रक्षित्वा च तं मन्दाकिनीतटं निनाय। तत्र स नरवाहनदत्तेन 'को भवान्' इति पृष्टो जगाद, 'देव, भवेन भवद्रक्षणार्थमिह नरवाहनदत्तस्य प्रेषितोऽमृतप्रभनामा विद्याधराधिपोऽहम्। त्वदग्रे चायं वर-सहायकारारिः तन्निवासः कैलासाद्रिः। अत्र समाराधितशिवस्त्वं शिवं निर्विघ्नमवाप्स्यसीति एहि, तत्र त्वां नयामीति तत्क्षणमेव तं तत्र प्रापय्य तमामन्त्र्य च यथागतमगमत्। सम्प्राप्तकैलासो नरवाहनदत्तोऽपि च तत्राग्रस्थतपःसन्तोषितगणपत्यवाप्ताभ्यनुज्ञो गिरिजापतेराश्रमं प्रविश्य नियम-क्षामो द्वारस्थं नन्दिनं ददर्श। कृतप्रदक्षिणं चैनं स्वकीयोक्त्या सदयो नन्दीत्थमभ्य-नन्दयत्, 'सिद्धकल्पस्त्वमिदानीं सञ्जातः। अधुना ते विघ्नाः प्रशान्ता इती-हस्थस्त्वमाभगवत्तोषणात्तपस्येति'। नन्दिनेत्थमुक्तो नरवाहनदत्तो देवं शङ्करं देवीं पार्वतीञ्च ध्यायन्ननिलाशन उग्रं तपश्चकार। तेनातितुष्टो भगवान् भवो भगवत्या पार्वत्या सह दत्तदर्शनः प्रह्वं तमेवमादिशत् 'वत्स, प्रीतोऽस्मि ते। सर्व-विद्याधराणां चक्रवर्ती, निजाक्रोशक[1]-कदर्य-कम्पनः[2], निजानुजीविजनानन्दवर्धन[3]श्च त्वमधुनैधि। सर्वातिशायिन्यः सर्वा विद्याः, विद्यागर्धन[4]स्य, विद्याधरमण्डन[5]स्य च ते प्रादुःष्युः[6]। अस्मत्प्रभावाच्छत्रूणां क्षमायिता[7] निर्षूदिता च भूयाः। शत्रुशस्त्रै-रच्छेद्योऽभेद्यश्च त्वं रणे चंक्रमणान्[9] [10]स्थायुकांश्चाखिलान् घातकरिपून् [11]घातुको भव। शत्रुशक्तिसम्पत्तिलुण्टाके[12] त्वयि दृष्टे निजौजःप्रजल्पाकाः, कापुरुषकुट्टाकाः वराकाः शत्रवस्त्वच्छरणभिक्षाका भवन्तु। [13]अभ्यथिनो, जयिन[14]श्च ते विपक्षिणां क्षयिण्यो विद्या न तवेशिष्यन्ते। गौरी विद्या चापि त्वदायत्ता भविष्यति'। गौर्या सह तस्मै वरमित्थं दत्त्वा ब्रह्मनिर्मितं प्रजविनं[15] चक्रवर्तिमहापद्मविमानं[16], दयालु[17]र्निजभक्त-

---

१. 'देविक्रुशोश्चोपसर्गे'। २. 'चलनशब्दार्थादकर्मकाद्युच्'। ३. 'अनुदात्तेतश्च हलादेः'। ४. 'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः'। ५. 'क्रुधमण्डार्थेभ्यश्च'। ६. 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः'। ७. क्षमायीविधूनने; 'न यः' इतिनिषेधान्नयुच्। ८. 'सूददीपदीक्षश्च'। ९. 'जुचङ्क्रम्य'। १०–११. लषपतपदस्था'० इत्यादिना उकञ् नलोकाव्ययेतिषष्ठीनिषेधः। १२. 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्'। १३–१४. 'जिदृक्षिवि०' इत्यादिना इनिः १५. 'प्रजोरिनिः'। १६. पुंनपुंसकोभयलिंगता। १७. 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्' (आद्यास्त्रयश्चुराद्यदन्ताः)।

जनकृपालुर्हरो[1] विजयस्पृहयालवे श्रद्धालवे तस्मै प्रददे। ततः 'किमादिशसी'ति तदाज्ञागृहयालव इव सविग्रहाः सर्वा विद्यास्तस्याविरभूवन्।

इत्थं नरवाहनदत्तोऽवाप्तसिद्धिवरो, निजविजयनिःसंशयालुः[2] परमेश्वरौ प्रणम्य तदभ्यनुज्ञातो दिव्यं पद्मविमानमधिरुह्य सिद्धचारणोद्गीतामितगीतः प्रथममभित-गतेर्वक्रपुरसंज्ञं पुरमागतवान् इति तत्र सद्रुः[3] रमितगतिः स्वनिवेशं तं सन्निवेश्य, कृतातिथ्याय वर्णितनिजसिद्धये च तस्मै कृतप्रणतिर्दारुरपि[4] नरवाहनदत्तोपायनी-कृतसुलोचनाख्यस्वसुतो दारुतामन्वभवत्। नरवाहनदत्तोऽपि चापरविद्याधर-लक्ष्मीमिव प्रेमपाशसेरुं[5] तामवाप्य मधुधारुः[6] स्तदहस्तत्रैवानैषीत्।

अपरेद्युर्वक्रपुरीयास्थानवर्तिनं नूतचक्रवर्तिनं नरवाहनदत्तमम्बरतलादवतीर्य आसृमरः,[7] भासुर[8]कार्तस्वरसवर्णोष्णीषपरिवेष्टितशिरोभागोऽभङ्गुर-मेदुरवेत्रकरः, विदुर इव राजकुलनीतिविदुरः,[9] एकः पुमान् बद्धाञ्जलिरेवं व्यजिज्ञपत्, 'देव, अहं क्रमागतः पौररुचिदेवाख्यश्चक्रवर्तिप्रतीहारो जित्वरस्य[10] श्रीमतः सेवार्थमिह आगत्वरः[11]। एतदाकर्ण्य सर्वकर्तव्यजागरूको[12] नरवाहनदत्तोऽमितगतेर्मुखमैक्षत। तेन च देव, सत्यमेतदिति विज्ञप्तस्तं स्वक्षत्तृत्वे न्ययोजयत्।

अथ विद्याप्रभावतः सर्ववृत्तमाकलय्य वेगवत्यादिभिस्तत्पत्नीभिः सह धन-वती, निजौदार्यसन्तोषितागणित-याजयूकः,[13] स्वानुभावापसारितनिजदुर्हृद्दंदशूकः, तत्सुतश्चण्डसिंहश्च, दीप्रप्रभावोऽपि[14] विनम्रो वायुपथान्वितो राजा पिङ्गलगान्धारः, क्रमेण सागरदत्तेन स्मेराननहेमप्रभादिभिश्च सह चित्राङ्गद एते सर्वे समागत्य चक्रवर्तिनस्तस्य पादयोर्निपेतुः। सोऽपि च श्वश्रूगौरवाद्धनवत्याश्चरणौ प्रणत्य समागतसर्वशुभाशंसुः[15] स्वागतेन सर्वान् सम्मानयामास। धनवती चापि जामा-तृशुभोदर्कमिच्छुः[16] राशीभिस्तमवर्द्धयत्। ततो विज्ञापितात्मसिद्धिवृत्तान्तास्ते चण्ड-

---

१. 'कृपां लातीति 'मृगय्वादयश्च' इत्यौणादिककुप्रत्यये साधु। २. 'शीङो वाच्यः'। ३. 'दाधेट्सिशदसदोरुः; सद्रुः स्थित इत्यर्थः। ४. दारुः काष्ठम् (दारुशब्दः पुंनपुंसकोभयलिंगः) दाता च; तेन दारुभिन्नः, न वर्ततेऽन्यो-दारुर्दाता यस्मादेवं भूतोऽपि वा दातृतामन्वभवदित्यर्थः। ५. षिञ् बन्धने। ६. धेट् पाने। ७. 'सृघस्यदः क्मरच्'। ८. भञ्जभासभिदो घुरच्'। ९. 'विदिभिदिच्छिदेः कुरच्'। १०. इण्नशजिसर्तिभ्यः क्वरप्'। ११. 'गत्वरश्च'। १२. 'जागुरूकः'। १३. 'यजजपदशां यङः'। १४. 'नमिकम्पिस्म्यजसकम-हिंसदीपो रः'। १५. 'सनाशंसभिक्ष उः'। १६. 'विन्दुरिच्छुः'।

सिंहादयः सर्वे नितरां प्रमुमुदिरे। पार्श्वोपसर्पितपत्नीकेन चक्रवर्तिना च 'मदीयास्ते सचिवाः क्व वर्तन्ते' इति पृष्टा धनवती 'मानसवेगेन क्षिप्तास्ते मया सुसंरक्ष्य विद्याप्रभावेण पृथक् पृथक् स्थापिता इत्यभिदधिस्तं[1] पर्य्यतोषयत्। ततो वत्सेशसुतो रूपिणीं विद्यामादिश्य तान् सर्वानानाययत्। तत्र समाजग्मीन्[2], पृष्टकुशलान् पादानेमींश्च तान् सर्वान् 'विभिन्नपरिस्थितिपापतिभिरगणितसुखदुःखसामहिभिर्भवद्भिरियन्तो दिवसाः क्वातिवाहिता इत्येकैकं पृच्छन् वक्तुं चादिक्षत्[3] इति गोमुख आदावेवं निजकथां वक्तुमारभत—

'देव, तदानीं द्विषा मानसवेगेन क्षिप्तं मां कापि देवी हस्तयोर्गृहीत्वा समाश्वास्य च दूरेऽरण्ये स्थापयन्ती तिरोदधे। तदानीमतिदुःखितोऽहमापाततस्तृष्णक् प्रपाततः स्वदेहं परित्यक्तुं धृष्णगभवम्। तच्चावलोक्य कोऽपि तापसस्तदानीमुपेत्य 'गोमुख, मैवम्, सिद्धार्थं वन्दारुजनमन्दारं स्वप्रभुं त्वं पुनर्द्रक्ष्यसि' इत्युक्त्वा न्यवारयत् कस्त्वं कथञ्च तद्वेत्सीति पृष्टश्च स शिवचेत्रं स्वकीयाश्रमं मां नीत्वा कृतातिथ्योऽब्रवीत्, 'कुण्डिनाख्यपुरीयो नागस्वामी नामा द्विजोऽहम् पितरि स्वर्गते ततः पाटलिपुत्रकं गत्वा विद्योपादानार्थं जयदत्तमुपाध्यायमुपासदम्। किन्तु शिक्ष्यमाणोऽपि न यदाहमक्षरमप्यविदं तदा सर्वे छात्रा मामुपाहसन्नित्यवमानग्रस्तोऽहं विन्ध्यवासिनीं प्रस्थितो मध्येमार्गं वक्रोलकाभिधं पुरं प्रापम्। तत्र च भिक्षार्थं प्रविष्टाय मह्यमेका गृहिणी गृहादेकस्माद्भिक्षया सहैकं रक्तकमलं प्रादात्। तद्गृहीत्वा यावदहमपरं गृहं प्राप्नोमि तावन्मामवलोक्य तत्रत्या गेहिनी, 'हा धिक्'! भवान् योगिन्या विप्रलम्भितो यतो हि तया रक्ताब्जव्याजेन तुभ्यं नरहस्तोऽयं प्रदत्तः इति पश्येत्थमदर्शयत्। एतदाकर्ण्य यावदहं वीक्षे तावन्न तदम्बुजमपि तु नरपाणिरेवेत्यतिभीरुरहं[5] तत्त्यक्त्वा तत्पादयोः पतित्वा 'मातः, तथा कुरु यथाहं प्राणिमीति तामवोचम्। तन्निशम्य सा मामादिशत् 'इतो योजनत्रयं गच्छ। तत्र करभके ग्रामे देवरक्षितनामा द्विजोऽस्ति। तस्य गेहे साक्षात्सुरभिरुत्तमा कपिला वर्तते साऽद्य शरणं प्राप्तं त्वामस्यां निशायामवश्यं रक्षिष्यति। तयेत्थमुक्तो भीलुँकोऽहं तस्माद्धावन् दिनक्षये करभग्रामे तस्य द्विजन्मनो गेहं प्राप्य प्रविष्टस्तत्र कपिलामवलोक्य कृतप्रणामो

१.-२. 'आदृगमहनजनः'–इत्यत्र 'भाषायां धाञ् कृसृगमिजनिनमिभ्यः'। ३. 'सासहिवावहिचाचलिपापतीनामुपसंख्यानम्'। ४. स्वपितृषोर्नजिङ्'। ५. 'शृवन्द्योरारुः'। ६.-७–'भियः क्रुकूलुकनौ'।

यावदेव देवि, भीरुको[1]ऽहं तव शरणं प्राप्तोऽस्मीत्यवोचम् तावदेवान्याभिः सह तर्जयन्ती सा योगिनी मन्मांसरुधिरार्थिनी नभोमार्गेण तत्रागात् । तामवलोक्य स्थावर[2]-जङ्गम-रक्षणेश्वरी सा कपिला निजखुरमध्ये मां सन्निवेश्याखिलां निशां ताभिर्योगिनीभिर्युध्वा मामावीत् । प्रातस्तु सा तासु गतासु कपिला मामवोचत्, 'पुत्र, अद्याहं त्वामभिरक्षितुं न शक्नोमीतीतः पञ्चयोजन्यामेकस्मिन्नरण्यस्थशिवालयेऽधुना भूतशिवो नामोत्तमो यायावरानुगामी[3] शैवो वर्तते सोऽद्यैकां रात्रिं शरणागतं त्वां रक्षिष्यतीति तां नमस्कृत्य ततः प्रस्थितोऽहं समवाप्तभूतशिवः समाश्रिततच्छरणोऽतिष्ठम् । रात्रौ च तत्रापि ता योगिन्यस्तथैवागमन्निति सोऽन्तर्गृहं मां प्रवेश्य त्रिशूलहस्तो द्वारस्थो योगिनीर्निरभर्त्सयत् ताः सर्वा जित्वा च मामाशिशत् । प्रातश्च सोऽपि मामभ्यधात् यद्ब्रह्मन्नतः परं पुनस्त्वामभिरक्षितुमहं न शक्नोमीतीतो दशसु योजनेषु सन्ध्यावासाख्ये ग्रामे वसुमतिनामा विप्रोऽस्ति तदन्तिकं त्वं व्रज । तत्र तेन तृतीयस्यामस्यां निशि सुरक्षितो मुक्तो भविष्यसि । इत्थं तेनोक्तो विहिततत्प्रणामस्ततोऽनुप्रस्थितः किन्त्वध्वनो दैर्घ्यात्सन्ध्यावासमनवाप्तस्यैव मे मध्येऽध्वं सूर्योऽस्तं[4] गत इति नक्तं पृष्ठतः समुदितास्ता योगिन्यो मामागत्याकस्माद्विद्युदुद्द्रुत्या[5] यावत्समुत्थाप्य विहायसा यान्ति तावत्तासां पुरोऽन्या अपूर्वा योगिन्यः परापतन्निति ताभिस्सह तासामपूर्वोद्धते युद्धे सम्प्रवृत्ते तासां हस्तादेकस्मिन्नतिनिर्जने देशे पतितस्तत्रापावृतद्वारेण 'प्रविश' इति अन्तःप्रवेशं ददद्दिवैकं महामन्दिरमपश्यम् । दद्दहं[6] च पलायमानस्तत्र प्रविश्य नारीशतसमावृतामद्भुताकारां प्रभया प्रदोषप्रज्वलितां मदनुकम्पया सृष्टां महौषधिमिव सुश्रियमेकां[7] नारीमपश्यम् । समाश्वस्तेन च मया क्षणात्पृष्टा साऽभाषत यदहं सुमित्राख्या यक्षिणी शापादेवमिह स्थिता वर्ते । मदीयशापशान्तये च मानुषः सङ्गः समादिष्टः इत्यशङ्कितप्राप्तस्त्वं मां भजस्व । एवमुक्त्वा सा क्षिप्रं मामुपावेश्याज्ञापिताभिर्दासीभिर्वस्त्राहारपानैरुपाचारयदिति तया यक्षिण्या सह ससुखं कतिचिद् दिनानि तत्राहमासम् ।

---

१. 'कुकन्नपि वाच्यः' । २. 'स्थेशभासपिसकसो वरच्' । ३. 'यश्च यङः' । ४. राजसूयसूर्य०' । ५. 'भ्रासभासधुर्विद्युतोर्जि०' । ६. अन्येभ्योऽपि दृश्यते' इत्यत्र दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । तेनात्र दृ भयेऽस्मात् क्विपि धातोर्द्वित्वं ह्रस्वत्वञ्च । ७. क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च ।

एकदा सा स्वैरं मामित्थमब्रवीत् यदिदानीं क्षीणशापाऽहमितो व्रजामि। मत्प्रसादाच्च समवाप्तदिव्यज्ञानः, प्रधीः[1], सिद्धभोगो निर्भयस्तपस्वी त्वं भविष्यसि। इहस्थः किन्तु त्वं मध्यमं पुरं मा द्राक्षीः। एवमुक्त्वा तिरोभूतायां तस्यां समुत्पन्नकौतुकोऽहं मध्यमं पुरमारूढस्तुरङ्गममेकमदर्शम्। तदभ्यर्णं चरणितश्चाश्वेन तेन खुरेणाभ्याहतः क्षणादस्मिन् शिवालये स्थितमात्मानमपश्यम्। ततः प्रभृत्यत्रैव स्थितोऽहं क्रमात्सिद्धिं गत इति मनुष्यस्यापि मे जगतस्त्रिकालज्ञानं[2] वर्तते। सिद्धयश्च सर्वस्यापि क्लेशबहुला इति त्वमिहास्स्व सर्वप्रतिभूः[3], विभुः[4], शम्भुस्तवाप्यभीष्टसिद्धिं विधास्यतीति।

ज्ञानिनेत्थमुक्तोऽहं त्वत्पादप्राप्तिसञ्जातास्थस्तदाश्रमे एतावन्ति दिनान्यनैषम्। स्वप्ननिर्दिष्टभावत्कसिद्धिश्चाद्य धाम्न्येव[6] कयाचिद्दिव्यया स्त्रिया गृहीत्वाऽहमिहानीतः इत्येष, देव, मदीयो वृत्तान्तः'।

एवमुक्त्वा तूष्णीकामासीने गोमुखे नरवाहनदत्ताग्रे मरुभूतिरवोचत्, 'मानसवेगेन तदानीं क्षिप्तं मां कापि देवता निजपाणिभ्यामादाय दूरे चाटव्यां विन्यस्य तिरोऽभवत्। अतिदुःखार्तस्तत्राहं मरणोपायचिन्तया भ्राम्यन्नदीपरिक्षिप्तमाश्रममेकमवलोकितवान्। तत्र च गत्वा तं प्रविश्याहं शिलातले समुपविष्टं ज्वलन्नेत्रं जटालं तापसमेकमवलोक्य तमुपागतः कृतनतिर्विहितस्तोत्रैः[7] कस्त्वम् कथञ्चेमाममानुषीं भूमिं दिव्यपञ्चरहितोऽप्यायात इति तेन पृष्टः सर्वं तस्मायवर्णयम्। तच्चाकर्ण्य, 'सुधीः स त्वं मात्मानमधीरोऽधीरिव वधीः। प्रभोर्वार्त्तां त्वं ज्ञास्यसि। ततः परं यत्कर्तुं क्षमं स्यात् तत्त्वया करणीय'मित्युवाच। एवं भावत्कवार्त्ताजिज्ञासया तत्र मयि स्थिते तां नदीं स्नातुं दिव्याः स्त्रियः समाजग्मुरिति तापसो मामवदत् यत्तासां स्नान्त्या एकस्यास्तटस्थापितवस्त्रमानय। तेन च त्वं प्रभोर्वार्त्तां ज्ञास्यसि। तच्छ्रुत्वाऽहं तथैवाकार्षम्। हृतवसना च सा शरीरविषक्तोन्नवसना मामन्वगात् 'नरवाहनदत्तस्य वार्त्तामाख्याय निजवाससी गृहाणेति' तापसेनोक्ता चावोचत्, 'नरवाहनदत्तो ह्यद्य हरमाराधयन् कैलासपर्वते वर्तते

---

१. 'ध्यायतेः सम्प्रसारणञ्च'। २. 'द्युतिगमिजुहोतीनां द्वे च'। ३. 'भुवः सञ्ज्ञान्तरयोः'। ४. विप्रसंभ्यो ड्वसंज्ञायाम्'। ५. 'मितद्र्वादिभ्य उपसंख्यानम्। ६. 'धः कर्मणि ष्ट्रन्'। ७. 'दाम्नीशसयुयुजस्तुतुद०'–इति ष्ट्रन् 'तितुत्रतथ'– इतीडभावः।

कपिपयैरेव च दिवसैः स विद्याधरसम्राट् भविष्यति । इत्थं तत्कथासंस्तवात्सा वनिता विमुक्तशापा दिव्या भार्या समपद्यत । तया साकं च सा तापसस्तस्थौ । अहमपि च चिन्ताधवित्रतत्कथनसञ्जातत्वत्समागमास्थस्तत्रैव न्यवसम् ।

गतेषु कपिपयदिवसेषु सगर्भा सा दिव्या स्त्री भ्रूणं प्रसूयावोचत 'आर्य, त्वत्सङ्गत्या मम शापः शान्तः । पुनरपि मत्प्रेप्सा चेत्तदा तण्डुलैः सहैतन्मम गर्भं श्रात्वा श्मशाने समशान । एवमुक्त्वा प्रयातायां तस्यां स तापसस्सतण्डुलं तद्गर्भं श्रात्वा प्सात्वा च खसुत्पत्यैनामन्वगात् । अहमपि च सर्वदुर्लालित्यलवित्रं[1], स्वस्तिसवित्रं, पवित्रं[2] सिद्धसिक्थं तद्विज्ञाय पाकभाण्डाद्धृतसिक्थद्वयमभक्षयमिति यत्राहमष्ठीवं तत्रैव काञ्चनं समजायत । एवं कुर्वन्नहं भ्राम्यन्नेकं पुरं प्रापम् । तत्र च वेश्यागृहे निवसतो मे एका कुट्टनी छलाद्वमनं कारितवतीति वमतो मे मुखाद् भास्वत्पद्मरागनिभे उभे प्राग्भुक्तसिक्थे निरगच्छताम् । निर्गते एव च ते कुट्टन्या तयोपात्ते भक्षिते चेत्येतेन नष्टां मदीयां हेमसिद्धिं सा कुट्टनी अगृह्णात् । तेनातिग्लानोऽप्यहं सर्वं तच्चन्द्रार्धशिखरस्य शिवस्य विधानमवधार्यापारस्याकूपारस्येव संसारस्यास्यापरिमितं बहुच्छलत्वं च विचार्यातिखिन्नस्त्वत्प्राप्तये तपसा देवीमाराधयितुं चण्डिकागृहमागच्छम् ।' त्रिरात्रोपोषितं च सा स्वप्ने देवी मामादिशत् यत्त्वदीयः स्वामी सिद्धकामः संजात इति गत्वा तं पश्य । तदाकर्ण्य प्रबुद्धोऽहं प्रातः कयाचिद्देव्येह त्वत्पादमूलमानीतः । एतावती, देव मदीया कथा' । ( पूर्वकृदन्तसमाप्तिः )

इत्थं कुट्टनीविडम्बनरूपं साधोर्मरुभूतेर्वृत्तमाकर्ण्य[3] शत्रुतरून्मूलनवायूर्ज[4]स्वलो नरवाहनदत्तः सपार्श्वगो जहास । हरिशिखश्च तत इत्थमात्मीयां कथां वक्तुम् आरभत—'भीष्मेण[5] शत्रुणा मानसवेगेन तथा प्रास्तं मामेका देवता समादायोज्जयिन्यामेकत्र सुरक्षितं न्यधात् । तत्र चाहमतिदुःखितो निशागमे देहं त्यक्तुमि[6]च्छन् श्मशाने काष्ठैश्चितामारचयम् । तत्राग्निं प्रज्वाल्य पूजयन्तं मामागामिनमभ्यर्थ[7]

उत्तरकृत्प्रत्ययाः

---

१. 'अतिलूधूसूखनसहचर इत्रः' । २. 'पुवः सञ्ज्ञायाम्' ।

( पूर्वकृदन्त-समाप्तिः )

॥ उत्तरकृदन्तप्रत्ययाः ॥

३–४. 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' । ५. भीमादयोऽपादाने ।
६. 'समानकर्तृकेषु तुमुन्' । ७. 'भविष्यति गम्यादयः' ।

ज्ञातुं[1] पर्याप्तस्तालजङ्घनामा भूताधिपतिरभ्यधात्, 'मा वह्निं प्रवेष्टुं[2] धृष्णुहि । नैष कालस्ते मर्तुम्[3] । तव प्रभुरद्यापि प्राणिति । अतः पूर्णसिद्धिकामं तं दर्शकस्त्वं[4] नूनं प्राणान् धारयेति' । तेनेत्थं मरणान्निवारितोऽहं तव संयोगाय[5] देवाग्रे तपस्यन् स्थितः कयाचिद्देवतयेहानीतः ।

हरिशिखेनेत्थमात्मकथायामुक्तायामन्यैरपि चोपवर्णितेषु क्रमादात्मवृत्तान्तेषु, नरवाहनदत्तोऽमितमतेर्गिरा धनवतीं प्रेर्य सर्वेभ्यस्तेभ्यस्स्वसचिवेभ्यः सर्वा विद्या अदीदपदिति सर्वेष्वपि तेषु विद्याधरी-

**मानसवेगगौरिमुण्डवधः**

भूतेषु 'अधुना स्वशत्रून् पराजित्यास्माकं प्रमोददायो[6] भव' एवं शुभेऽहनि धनवत्योक्तो नरवाहनदत्तः शिरोरोग[7]मिव शत्रुसा[8]रं सद्योऽपसारयितुं गोविन्दकूटाख्यं, गौरिमुण्डपुरं प्रति स्वबलप्रयाणारम्भ[9]मादिशत् । अतः [10]स्फारीभवच्छत्रार्कविद्याधरबलमकालोदितशत्रु-विनाशकधूमकेतुनीकाशमाकाशे समदृश्यत । नरवाहनदत्तोऽपि च शत्रुसङ्घाहन-[11]स्यदोपश[12]मशालिनीं स्वकीयकरेणुकामारुह्य, सर्वाश्च स्वभार्या वह्येषु समारोह्य, चण्डसिंहादिकेषु च पुरःसरेषु नभसा विजयाय प्रतिष्ठमानोऽध्वनि धनवती-निकेतमासाद्य स्वीकृततदर्चो मातङ्गपुरादाहवाह्वाय विद्याधरेशयोर्गौरिमुण्डमानसवेगयोः एकं दूतं व्यसर्जयत् । अन्येद्युश्च सर्वान् दारान्[13] मातङ्गपुरे संस्थाप्य दिव्यै राजभिः सह गोविन्दकूटं सम्यगभ्यषेणयत् । तत्र च प्रतिभटक्रोधैधाय[14] निर्गतौ गौरिमुण्ड-मानसवेगकौ, चण्डसिंहादयोऽग्रतः प्रत्यगृह्णन् । प्रवृत्ते चोभयतः संगररागर[15]क्ते सङ्ग्रामे, पतत्सुभटपादपः, स्रवद्रुधिरनिर्झरः स गोविन्दकूटाद्रिः शुशुभे । शूराणां जीविताद्मर आहवकालो रक्तावोद[16]विलसत्खड्गलताजिह्वो जृम्भते स्मेति रणे एक-दुर्जननिचाय[17]मिव सम्मुखागतं मानसवेगं स्वयमेव युद्धविद्योपाध्यायो[18] नरवाहन-

---

१. 'पर्याप्तिवचनेष्वलमर्थेषु' । २. 'शकधृषज्ञाग्ला'-इति तुमुन् । ३. 'काल-समयवेलासु तुमुन्' । ४. तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्' । ५. 'भाव-वचनाच्च' । ६. 'अण् कर्मणि च' । ७. 'पदरुजविशस्पृशो घञ्' । ८. 'सृ स्थिरे' । ९. 'भावे' । १०. 'स्फुरतिस्फुलत्यो र्घञि' इत्याकारः । ११. 'स्यदो जवे' । १२. घञि 'नोदात्तोपदेश' इति न वृद्धिः । १३. 'दारजारौ कर्त्तरि णिलुक् च' । १४. 'अवोदैधौद्मप्रश्रथहिमश्रथाः' (क्रोधवर्धनायेति भावः) । १५. 'अकर्तरि च कारके संज्ञायाम्', 'घञि च भावकरणयोः' । १६. 'अवोदैधौद्म०' । १७. 'परिमाणाख्यायां सर्वेभ्यः' दुर्जनराशिमिवेत्यर्थे राश्येकत्वेन समुदायिनां परिच्छित्तिरर्थाद्गम्यतेऽतश्चिनोतेः परिमाणाख्यायां घञ् । १८. 'इङश्च' ।

दत्तोऽभ्युत्पत्य तत्क्षणमेव च भग्नशिरस्त्राणं केशेषु समाकृष्य पाप्मनस्तस्याकृतनीशारं[1] शिरोऽसिना चिच्छेद। तद् दृष्ट्वा प्रकुपितमुच्चैः कृतसंरावं[2] प्रधावितं च गौरिमुण्डं केशेष्वाकृष्य गृहीततदंघ्रियुग्मोऽभ्रे भ्रामयित्वा शिलायां पातयन्ननुबन्धमिव तमभिनिष्टानतामनयत्[3]।

एवं गौरिमुण्ड-मानसवेगयोर्हतयोराश्रितसंद्रावे[4] च शेषे भीते तद्बले, गगनस्थाः सर्वे सुराः साधु साध्विति ब्रुवन्तो विद्याधरश्रायस्य[5] चक्रवर्तिनस्तस्योपरि पुष्पवृष्टिं कुर्वन्तो निजसंमदभावं प्रकटीकृतवन्तः। इत्थं निजविजयविश्राव[6]गौरवमनुभवन्नरवाहनदत्तस्तैस्तैः स्वकीयोन्नाय[7]सहायकनृपतिभिः सह तत्प्रस्तावेन[8] कृताभिलावस्य[9] गौरिमुण्डस्य राजधानीं प्रविश्य, तत्सम्बन्धानां विद्याधराधीशानां प्रणतिपूर्णहृदयसौजन्योद्गारं[10] भृशं शंसन् अनभीष्टोत्कारं[11]-रत्नोत्करपरिग्रहः, पुष्पनिकरकराणां तेषां पूजोपहारं प्रतिपन्नवान्।

**मदनमञ्जुकावाप्तिः**

ततो निहतसकलसपत्नराज्यावाप्तिकृतसमुत्सवे नानादिग्देशसमागतागणितविद्याधरोद्गीयमानं निजविजययशः संस्तावे[12] छन्दोगकृतसंस्तावमिव[13] शृण्वन्तं तं सम्राजं धनवती समुपेत्य 'देव, गौरिमुण्डस्य गन्धर्वविद्याकृतापूर्वसंस्तवा, त्रैलोक्यसुन्दरी आत्मनिकानाम्नी कन्याऽस्ति तां त्वमुपयच्छस्व। एवमुक्तो राजा तां तत्रानाय्य तदहन्येव तामुपयेमे। प्रातश्च वेगवती-प्रभावत्यौ सम्प्रेष्याषाढपुरान्मदनमञ्जुकामानाययदिति तत्रानीता सा निजपरिभावकमानसवेगवधोत्पन्नहर्षनिर्भरमानसा शूरं स्वपतिं विरहान्ते सम्प्राप्यानिर्वचनीयं संमदमन्वभवत्। नरवाहनदत्तोऽपि च चिरोत्सुकस्तस्यै सर्वां विद्यां दत्वा प्रभावतीं सम्प्रेष्य भगीरथयशसमप्यानाय्य गौरिमुण्डपुरोद्यानवर्ती सर्वाभिर्भार्याभिः सह कृतपानादिविविधलीलाप्रस्तारः[14] चिरं चिक्रीड।

---

१. निष्प्रावरणम्। २. 'उपसर्गे रुवः'। ३. 'अभिनिसः स्तनः शब्दसंज्ञायाम्'। ४. 'समि युद्रुदुवः'। ५. 'श्रिणीभुवोऽनुपसर्गे'। ६. 'वौ क्षुश्रुवः'। ७. 'अवोदोर्नियः'। ८. 'प्रे द्रुस्तुस्रुवः'। ९. 'निरभ्योः पूल्वोः'। १०. 'उन्न्योर्ग्रः'। ११. 'कॄ धान्ये'। १२. 'यज्ञे समि स्तुवः' इत्यनेनाधिकरणे घञ् यज्ञे इत्यर्थः। १३. संस्तुतिमिव। १४. 'प्रे स्त्रोऽयज्ञे'।

एकदाऽऽस्थानवर्तिनं चक्रवर्तिनमुभौ विद्याधरचारौ समागत्य विज्ञप्तवन्तौ यद् देव, आवामितो धनवतीगिरा मन्दरदेवस्य विस्तार[1]भाजं चेष्टां ज्ञातुं गताव-

**मन्दरदेवपराजयः**

भूव। तत्र चास्थानगतोऽनुभूयमानविद्याधरैश्वर्योद्ग्राह[2]-श्छन्नकायाभ्यामावाभ्यामेवं स ब्रुवन्नाकर्णितो यन्नरवाहनदत्तेन विद्याधरश्रीसंग्राहं[3] कृत्वा गौरिमुण्डादयोऽखिलाः परिणायेन[4] शारा इव पर्य्यायेण[5] निहता इत्यस्माभिरुद्धवन्नरिर्नोपेक्ष्य एषोऽत्र न्यायः। तदाकर्ण्य दिने, तत्रच्छन्नावितस्ततोऽटन्तौ कृतनिशोपशायौ[6] च सर्वथाऽनुमितत्चिकीर्षावावामिह देवं विज्ञप्तुमागतवन्तौ।

द्विषन्निकाया[7]गतचारमुखादेतदाकर्ण्य कोपाकुलीभूता नरवाहनदत्तसभाऽनिलाहता पद्मिनीव सञ्जाता। चित्राङ्गदस्य बाहू निजवलयनिस्वनैः स्वप्रभोर्युद्धादेशमिवामार्गयताम्। क्रुधा श्वसतोऽमितगतेर्वक्षसि समुत्फलन् हारः 'वीर, उत्तिष्ठ, उत्तिष्ठ इति वदन्निव प्रतिबभौ। करेण सशब्दकं भूमिं ताडयन् पिङ्गलगान्धारो वैरिनिकाय[8]चूर्णनोपक्रममिव व्यधित। वायुपथस्य मुखे कोपेनारोपिता चापलतेव विद्विषामन्ताय पदमादधे। संक्रुद्धश्चण्डसिंहः पाणिना पाणिं सम्मर्दयन्नेवमहं शत्रून् निर्मिमन्थिषामीत्यभिदधदिवालक्षयत। सागरदत्तस्य बाहुर्व्योम्नि मूर्च्छता हस्तास्फालनजन्यशब्देन रिपुमिवाह्वयत। नरवाहनदत्तस्तु कोपाविष्टोऽपि प्रकृतिस्थ एवानाकुलस्तिष्ठन् 'अक्षोभ्यतैव महतां महत्त्वलक्षणमि'ति सूचयन् शत्रुं जेतुं यात्रायै निश्चिन्वानः सचिवान्वितो भार्याभिः सह विमानमारुह्य गोविन्दकूटतः प्रतस्थे। सर्वे गन्धर्वराजविद्याधराधिपाः अपि चैनं चन्द्रं ग्रहा इव परिवार्य सह जग्मुरिति धनवत्यां पुरःसरन्त्यां नरवाहनदत्तो हिमाचलमासाद्य सितपद्मोच्छ्रितच्छत्रं, समुल्लसद्धंसचामरं सम्राडुपयुक्तमुपायनमिवादाय समुपस्थितं महासर एकं प्रापत्। तत्र 'चक्रवर्तिन्, भवताऽस्मिन् सरसि स्नातव्यमि'ति वायुपथेनोक्तस्तत्र स्नातुमवातरत्। तदानीं दिव्या वागुद्भूयेत्थमसूचयत्–यदत्र सरसि

1. 'प्रथने वावशब्दे'। 2. 'उदि ग्रहः'। 3. 'समि मुष्टौ'। 4. 'परिन्योर्नीणोर्द्यूताभ्रेषयोः' अभ्रेषो यथाप्राप्तकरणम्; तत्रार्थे घञ्, न्यायः। 5. 'परावनुपात्यय इणः'। 6. 'व्युपयोः शेतेः पर्य्याये'। 7–8. 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः', एकत्र निवासेऽन्यत्र समूहेऽनेनैव घञ्। वैरिनिकायइत्यत्र 'संघे चानौत्तराधर्ये' इति वा घञ्।

अचक्रवर्तिनः स्नानं न सिद्ध्यति। अतोऽद्य प्रभृति त्वदीयं चक्रवर्तित्वं सिद्धं सञ्जातम्। तदाकर्ण्य जलाभ्यन्तरे प्रविष्टश्चक्रवर्ती धौताञ्जनारुणदृशः, शिथिलितकेशपाशाः, अङ्गसंसक्तार्द्रवाससश्च प्रियाः पश्यन्नन्तःपुरैः सहाम्बुधौ पाथस्पतिरिव चिक्रीड। तदानीं तस्मात्सरसः समुत्पतन्त्यः पतत्रिपङ्क्तयः, प्रत्युद्गतानां श्रियां रसना इव प्रतिबभुः। तत्रत्यानि विकसितान्यपि कमलानि च नरवाहनदत्तावरोधवधूवदनाम्भोजलावण्यविजितानि इव जलोर्मिषु निममज्जुः। तत्र कृतस्नानश्च तस्मिन्नहनि तस्यैव सरसस्तटेऽसौ सपरिच्छद उवास। सभार्यासचिवश्च नर्मकथालापैस्तत्रैव स्थितोऽन्येद्युः प्रातर्विमानस्थः सबलस्ततः प्रतस्थे। मार्गे च वायुपथस्य पुरमवाप्य तदनुरोधेन तं वासरं तत्रैव निनाय। अपरेद्युः स तत्पुरीयोद्यानादिविहारार्थं गतो हेमसिकतिलसरित्तटोद्यानविहारिणीं सौम्यसंलापमनोरमामपरामिव रमां वायुपथस्वसारं वायुवेगयशोनाम्नीमपश्यत्। सापि चागतं तं वीक्ष्य तदारक्तचित्तेन तेन व्यावस्मायीं[1] समाश्रित्य ततोऽन्तर्दधे इति संलक्षितविलक्षः स, हेत्वन्तरपराङ्मुखीं तां मत्वा निजावासमागतवान्। ततो गोमुखवैदग्ध्यवशेन राज्ञः सहस्थेन मरुभूतिनाऽवगतेऽखिले वृत्तान्ते तन्मन्त्रणया वायुवेगयशश्चित्तं जिज्ञासुर्गोमुखस्तत्पुरमयासीत्। वायुपथश्चाकस्मात् पुरं द्रष्टुमिवागतं तं प्रीत्या सत्कृत्यैकान्ते नीत्वा जगाद यद्वायुवेगयशानाम कन्या मदीया भगिनी वर्तते। सा च सिद्धैर्भाविनी चक्रवर्तिपत्नी उक्ता। प्राभृतरूपाञ्च तामहं चक्रवर्तिने नरवाहनदत्ताय दित्सामि तत्र तव साहाय्यमपेक्षते। वायुपथोक्तिमेतामाकर्ण्य गोमुखोऽब्रवीत्, यद् यद्यप्यस्माकमेष प्रभुररिविजिगीषया प्रस्थितस्तथापि मदुचितं यत्तद्यावच्छक्यं साधयितुमहं प्रयतिष्ये। एवमुक्त्वा तमामन्त्र्य प्रचलितो गोमुखोऽभ्यर्थनां विनैव सिद्धं कार्यं नरवाहनदत्ताय न्यवेदयत्। अन्येद्युश्च तमेवार्थं वायुपथे विज्ञापयति धीमान् गोमुखो राजानमब्रवीत्, 'देव, वायुपथोऽयं तव भक्त इत्येष यद् ब्रवीति तत्त्वया नूनं कर्त्तव्यम्। एवमुक्तस्तथेति प्रतिपन्नो राजपुत्रो वायुपथेन दत्तामनिच्छन्तीमपि तदनुजां स्वीचकार। तदानीं विवाह्यमाना साऽवोचत् 'अकामयमानाऽप्यहं भ्रात्रा मदीयेन, दीये इति मदीयेऽस्मिन् कर्मणि लोकपाला यूयं साक्षिणः' इति। ब्रुवन्त्याश्चैवं तस्यास्तद्वचो, वर्तमाने तत्रत्ये वायुपथान्तःपुराङ्गनासांराविणे[2], न कोऽप्यन्यः शुश्राव। गोमुखश्च किन्तु

१. 'कर्मव्यतिहारे णच् स्त्रियाम्'; 'णचः स्त्रियामञ्'; 'न कर्मव्यतिहारे'।
२. 'अभिविधौ भाव इनुण्'।

तच्छ्रुत्वा तद्वाक्याशयं बुभुत्सुरितस्ततोऽभ्रमदित्येकान्तेऽग्निप्रवेशं कर्त्तुमुद्यताश्च-तस्रो विद्याधरकुमारिका ददर्श। तेन तथाकरणस्य कारणं पृष्टाश्च ता वायुवेगयशः-कृतं समयोल्लङ्घनरूपात्मावग्राहं[1] तस्मै तद्धेतुं निजगदुः। तदाकर्ण्य गोमुखो राज्ञः समीपं गत्वा नरवाहनदत्तादिभ्यस्सर्वं तन्न्यवेदयत्। तच्चाकर्ण्य विस्मितो राजा ताः कुमारिका रक्षितुं वायुवेगयशसा प्रार्थितः सर्वैः सह तत्र गत्वा पुरः प्रज्वालितानलाश्चतस्रः कुमारिकाः पश्यन् वायुपथराजाऽनुजया निजगदे, देव, एषैका कालकूटपतेः सुता कालिका नाम; द्वितीया च विद्युत्पुञ्जात्मजा विद्युत्पुञ्जा, तृतीया चैषा मन्दरस्य सुता मतङ्गिनी, चतुर्थी च पद्मप्रभा नाम्नी महादंष्ट्रसुता, पञ्चमी अहञ्चेति वयं पञ्च सिद्धक्षेत्रे तपस्यन्तं भवन्तं मारमोहिता मिथः समयं व्यदध्म यत्पञ्चभिरस्माभिरयमेव प्रियः पतीकरणीयः। भिन्नया च न कयाचिदप्यात्माऽस्मै समर्पणीया। कुर्वन्त्याञ्च तथैकस्यामन्याभिः सखीद्रुहं तामुद्दिश्य वह्निः प्रवेष्टव्यः। एतत्समयभीताहं पृथक् परिणयं नैच्छमधुनापि न तुभ्यमात्मा समर्प्यते इति लोकपालसाक्षिणि मदीयेऽस्मिन् समये सर्वा एता मम निवराः[2] सखीरुपयम्यैताभिः सहाहं निरुद्द्रावोच्छ्रायवता[3][4] भवताऽनुग्रहणीया। इत्थं तयोक्ते मरणविरताः कुमार्यः परस्परं समाश्लिष्यन्त्यस्तुतुषुः। राजा चापि निरतिशयं जहर्ष। तत्पितरोऽपि च तत्सर्वमवगत्य तत्क्षणं तत्रागतास्तस्मै नरवाहनदत्ताय यथाविधि सर्वास्ता ददुरित्येवं पञ्च गजाप्लाव[5]विद्याधरात्मजाः समवाप्य वत्सेशसुतः परं माहात्म्यमुपगतवान्।

एवं तत्र ताभिः सह चिरं वर्तमानं नरवाहनदत्तं हरिशिखः सेनापतिरेकदोवाच, 'देव, शास्त्रज्ञोऽपि भवान् कथमधुना समुल्लङ्घितनीतिनियमो विग्रहावसरेऽनवग्रह[6]ग्रहाय कामाय भोगप्रसरा[7]वसरं ददाति? क्व मन्दरदेवं जेतुं त्वदीयो यात्रोद्योगः क्वचेयन्ति दिनानि इहान्तः पुरैः सह ते विहारः? हरिशिखेनेत्थमुक्तो महाराजो जगाद, 'हरिशिख, युक्तमुक्तं भवता किन्तु न मेऽत्र कोऽपि भोगायोद्योगः। अयं हि भार्याप्राप्तिकरोऽधुनाऽरिमर्दे सहायक इति

---

१. 'आक्रोशेऽवन्योर्ग्रहः। २. अविवाहिताः, 'नौ वृधान्ये' इत्यनेन धान्ये एव घञ् विधानादिह 'ग्रहवृहनिश्चिगमश्च' इत्यप्। ३–४. 'उदि श्रयतियौतिपूद्रुवः'। ५. 'विभाषाङिरुप्लुवोः' ( गजाप्लावाः गजगामिनीः )। ६. 'अवे ग्रहो वर्षप्रतिबन्धे'। ७. 'पुंसि संज्ञायां घः प्रायेण' इत्यधिकरणे घः।

मयाऽभिनन्दितः । अद्यैव च [1]प्रप्राहवन्तो वणिजः स्वकीयक्रयसिद्धये इव विमुक्त-[2]प्रग्राहाश्वा मदीयसैनिका अरिपरि[3]भावाय, निजवि[4]जयसिद्धये च साधयन्तु । एवमुक्तवन्तं राजानं श्वशुरो मन्दरोऽवदत्, 'देव, दूरदुर्गमभूमिष्ठोऽयं मन्दरदेवोऽसिद्धचक्रवर्त्यङ्गसर्वरत्नेन न केनापि जेतुं शक्यते । अयं हि देवमाय-महावीरसुररक्षितद्वारदेशायां त्रिशीर्षाख्यगुहायां सुरक्षितो वर्तते । तत्र च देव, चक्रवर्तिरत्नं चन्दनपादपो वर्तते । तस्य च तरोर्निकटं न शक्नोत्यचक्रवर्ती जनो गन्तुम् इति त्वं तं स्वाभीष्टसिद्धये समाराधय । मन्दरादित्थमाकर्ण्य निराहारो निष्[5]प्रावारो यतव्रतो नरवाहनदत्तो रात्रौ तं चन्दनतरुं गच्छन् सुदारुणेभ्यो विघ्नेभ्यो वित्रास्यमानोऽपि तस्य तरोर्मूलमवाप्य निबद्धोत्तुङ्गवेदिकं महारत्नं तं सोपानैरध्यारुह्य ववन्दे । तेन चातिप्रसन्नस्तत्तरुः 'चक्रवर्तिन्, अयमहं ते सिद्धश्चन्दनवृक्षः, स्मृतमात्र एव चाहं त्वां सन्निधास्ये । त्वमधुनेतो गोविन्दकूटं व्रज, तत्रान्यान्यपि रत्नानि ते सेत्स्यन्ति येनाचिरमेव ते मन्दरदेवविजयनि[6]श्चयः । रात्रावेवमशरीरिण्या वाचोक्तो नरवाहनदत्तोऽतिहृष्टस्तथेत्युक्त्वा सिद्धिमान्, दिव्यपादपकृतप्रणतिर्निजकटकमायातस्तां निशां नीत्वा प्रातरास्थानेऽखिलेभ्यः साधितचन्दनतरुवृत्तान्तमाचख्यौ । ततः सर्वाभिः स्वदयिताभिः सर्वैर्निजसचिवादिभिश्च सह सम्मन्त्र्य मन्दरदेवदर्पं विजेतुकामश्चन्दनतरुप्रतिपादितान्यरत्नसिद्धयै दिव्येन विमानेन गोविन्दकूटगिरिं समाससाद ।

तत्र चैकदाऽऽस्थानमण्डपगतं चक्रवर्तिनं नरवाहनदत्तं व्योममार्गेणामृतप्रभसंज्ञको विद्याधरो, यश्चाग्निपर्वते शत्रुक्षिप्तमेनं [7]भयाद् रक्षितवान् आसीत्, समागत्य दत्तनिज[8]परिचयः सप्रीतिस्वीकृतराजातिथ्यादरातिशयः प्राब्रवीत्, 'देव, दक्षिणदिग्वर्ती मलयाख्यो महागिरिरस्ति । तत्रैकस्मिन्नाश्रमे वामदेवनामा महान् ऋषिरस्ति । स त्वां कस्यचित्कार्यस्य हेतोरेकाकिनमाह्वयति' इति तेनाहमिह प्रेषितः । त्वञ्च मदीयः पूर्वाजितः प्रभुरित्यहमिहायातः । तदेहि, तस्य मुनेरन्तिकं शीघ्रं सिद्धयै साधयावः । तेन विद्याधरेणैवमुक्तस्तत्रैव भार्याः सेनाश्च संस्थाप्य तथेत्यभ्युपगत्य नभोमार्गेण क्षिप्रं मलयाचलमवाप्य वामदेवमभ्युपगतो जरसा पाण्डुरं, प्रांशुशरीरं, नेत्रकुहरस्फुरत्तारकमणियुग्मम् विद्याधरेन्द्र-

---

१. 'प्रे वणिजाम्' । २. 'रश्मौ च' । ३. 'परौ भुवोऽवज्ञाने' । ४. 'एरच्' ।
५. 'वृणोतेराच्छादने' । ६. 'ग्रहवृदृनिश्चिगमश्च' । ७. 'भयादीनामुपसंख्यानम्' ।
८. 'एरच्' ।

रत्नस्थानं, समुल्लसज्जटालतम्, सिद्धिसाहाय्यहेतोः सहागतं हिमाद्रिमिवावलोक्य तन्मुनिचरणौ ववन्दे। सोऽपि च प्रदर्शितात्यातिथ्यादरो राजानमेवमभाषत, 'पुरा, पुरारातिना कामरूपेण दग्धोऽपि त्वं रत्या तोषितेन शम्भुना सर्वविद्याधरेन्द्राणां चक्रवर्ती विनिर्मितः। मम चैतस्मिन् गम्भीरान्तर्गुहान्तरे आश्रमे विविधानि रत्नानि सन्ति, मदादिष्टानि तानि साधयित्वा त्वं गृहाण। एवं सिद्धस्य ते मन्दरदेवो जेतव्यो भवेदेतदर्थमेव गिरिशाज्ञया त्वं मयेह समाहूतः।

तेन मुनिनेत्थमुक्तो नरवाहनदत्तः प्रहृष्टस्तां गुहां प्रविश्य विजिततत्रत्यविघ्नौघोऽभिधावन्तं मत्तगजेन्द्रं दृष्ट्वा प्रदत्ततन्मुखमुष्टिप्रहारः, दन्तस्थापितपादो लाघवेनैव तं मत्तगजेन्द्रमारुरोह। तदानीमेव 'साधु, सिद्धं चक्रवर्तिनस्ते महाहस्तिरत्नमित्येषाऽशरीरिणी वाणी गुहामध्यादुदभूत्' ततोऽहीन्द्राभं खड्गमेकमवलोक्य स तत्खड्गरत्नं चक्रवर्तित्वलक्ष्म्याः केशपाशमिवाग्रहीत्। येन 'साधु भोः जैत्रं खड्गरत्नं ते सिद्धमि'त्यशरीरिणी वाग्भूयो गुहाभ्यन्तरे समुदभूत्। ततः स चन्द्रिकारत्नं, तदनन्तरञ्च कामिनीरत्नमेवं विध्वंसिनीनाम्ना प्रसिद्धं विद्यारत्नञ्च सोऽसाधयत्। इत्थं साधितकार्यकालोपयुक्तमाहात्म्यप्रदरत्नः स गुहाया निर्गत्य तस्मै वामदेवर्षये सिद्धं सर्वं प्रशशंसेति प्रीतो मुनिस्तं सिद्धमहाचक्रवर्तिरत्नं जगाद, 'पुत्र, कैलाशोत्तरपार्श्वस्थितं मन्दरदेवमधुना त्वं विजित्योर्जितसाम्राज्यश्रियं भुङ्क्ष्व' इति।

तेन मुनिनेत्थमुक्तः सिद्धकार्यो नरवाहनदत्तः कृततन्मुनिस्तवः[1], अमृतप्रभेण सह व्योम्ना प्रस्थायाह्नाय गोविन्दकूटस्थं श्वश्र्वा महाप्रभाववत्या धनवत्याऽभिरचितं स्वशिविरं प्राप। तत्र गृहीतविष्टरश्च[2] पृच्छद्भ्यो जनेभ्यो वामदेवर्षिदर्शनम्, तदादेशेन गुहाप्रवेशम्, रत्नानां सिद्धिञ्च सर्वं शशंसेति वाद्यमानतूर्यो नृत्यद्विद्याधरीकस्तत्र महोत्सवाभिनन्दितो जनोऽजायत।

परेद्युर्विजयाशंसिनि लग्ने द्विजेभ्यः प्रदर्शितादरः[3], कृतमङ्गलो ब्रह्मनिर्मितं शर्वदत्तं विमानमारुह्य मन्दरदेवं विजेतुं ससैन्यान्तःपुरसमन्वितो नरवाहनदत्तः सेनापतिहरिशिखादेशानुविधायिभिश्चण्डसिंह-पिङ्गलगान्धार-वायुपथ-विद्युत्पुञ्जादिभिर्निजानुचरैः सह रणाय[4] प्रतस्थे इति प्रचलद्विद्याधरसामन्तचक्र[5]सेनाच्छन्नगगने

---

१. ऋदोरप्। २. 'वृक्षासनयोर्विष्टरः'। ३. 'प्रहवृदनिश्चिगमश्च'।
४. वशिरण्योरुपसंख्यानम्'। ५. द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्'।

तत्तेजोनिह्नुतप्रभः प्रभाकरो लज्जयेव निममज्ज। ततो देवर्षिगणसुसेवितं दिव्याङ्गनोद्यानं गण्डशैलमतिक्रम्य स्फटिकापाण्डुरत्विषः कैलासभूभृतो मूलमवाप। तत्र च मन्दाकिनीतीरे स्थापितनिजसेनापरिच्छदं तं विद्याधराधिपधीमान् मन्दर उवाच देव, अनेकविघ्नं[1] कैलासप्रस्थं[2] समुल्लङ्घ्याग्रतो गन्तुं न योग्यम्। हरास्पदस्यैतस्य हि लङ्घनेन विद्या नश्यन्तीत्यस्य त्रिशीर्षगुहामुत्तरेण गन्तव्यम्। सा च गुहा देवमायाभिधानेन राज्ञाऽभिरच्यते। स च राजाऽतिदृप्तः इति तमजित्वा पुरो गमनमयोग्यम्। मन्दरेणैवमुदितो धनवत्या चानुमोदितो नरवाहनदत्तस्तं वासरं तत्रैव स्थितः आदौ सामप्रयुक्तये कृततत्कृत्योपजापाय[3] देवमायाय दूतं प्राहिणोत्। देवमायश्च किन्तु सान्त्वेन तच्छासनमप्रतिपद्यमानो युद्धाय समनह्यत्। अतोऽपरेद्युस्सन्नद्धैस्तैस्तैः स्वकीयराजैः सह स चक्रवर्ती तं देवमायारिघासं[4] समूलमुन्मूलयितुं प्रतिप्रायात्। देवमायोऽपि च तत्स्वं[5] बुद्ध्वा योद्धुं सन्नद्धो वराहवज्रमुष्ट्यादिभूरिभूपतिसमन्वितोऽभ्युज्जगामाभ्यमित्रम् इत्युभयसेनासङ्घातसमाच्छादिताम्बरश्छिन्नभूरिशिरःश्रेणिकरकावर्षभीषणः सवीरगर्जनो घोरो रणघनागमः समजायत। तत्र चण्डसिंहो देवमायस्याग्रयोधं सेनान्यं वराहं जघान। अमायिना नरवाहनदत्तेन मायी देवमायश्च शरैः सव्यधो[6] रणे मूर्च्छितो बद्धोऽक्रियत। बद्धे च तस्मिन् वज्रमुष्टिमहाबाहुप्रभृतिभिः सह तत्सैन्यमभज्यतेति विमानस्थाः 'साधु! साध्विति स्वानवन्तो[7] देवा विजयिनस्तस्य जयस्वनं[8] चक्रुः। अथ संयतानीतं तमाश्वासननिगदैः सान्त्वयित्वा नरवाहनदत्तः ससङ्घं[9] देवमायमनुगृह्यामुञ्चत्। सोऽपि च तद्बाहुजितो वज्रमुष्ट्यादिभिः सार्द्धं प्रणतस्तस्य शासननियमान्[10] प्रत्यपद्यत।

अथैवं प्रवृत्ते संग्रामनिवृत्तिसूचककोणावातनिक्वाणे[11], शान्ते चोभयसैन्याहवे[12]-हवे[13], व्यपगते च तस्मिन्नहोरात्रे, प्रातरास्थानमायातो देवमायोऽधीश्वरेण तेन त्रिशीर्षगुहाम्नायं पृष्टो यथातथ्यमेवमवर्णयत्, 'देव, पुरा विद्याधरवराश्रिते भिन्न-

---

१.-२. 'घञर्थे कविधानम्'। ३. 'व्यधजपोरनुपसर्गे'; अप्; अतः उपसर्गे घञि, उपजापः। ४. 'घञपोश्च' इति अदो घस्लादेशः। ५. 'व्यधजपोरनुपसर्गे' इत्यप्। ६.-७. 'स्वनहसोर्वा'; घञ्, पक्षे अप्। ८. 'नौ गदनदपठस्वनः'। ९. 'संघोद्घौ गणप्रशंसयोः'; सबलमित्यर्थः। १०. 'यमः समुपनिविषु च'। ११. 'क्वणो वीणायाञ्च'। १२. 'आङि युद्धे'। १३. शब्दे; 'भावेऽनुपसर्गस्य' इतिह्वयतेरप्सम्प्रसारणञ्च।

साम्राज्ये कैलासस्य दक्षिणोत्तरे द्वे पार्श्वे अभूताम् । तत्र संयम[1]पूर्वककृततपस्तुष्टेन शम्भुना ऋषभाख्यश्चक्रवर्ती भवितुं प्रदिष्टः । स च जातूत्तरं पार्श्वं गच्छन् कैलाशमुदलङ्घयदित्यध्वस्थितहरक्रोधाद् भ्रष्टविद्यो दिवोऽपतत् ।

ततः स देवान्नादोऽपि तदानीम् अन्या[2]दो, [3]निर्निनदोऽपि समाकर्णितकाननपतत्रि-श्वापदनिनादो निर्निगदोऽपि श्रुतिविषयीकृतसशिष्यमुनिगणनिर्गा[4]दोऽत्युग्रेण तपसा पुनर्हरमाराध्य सन्तुष्टात्तस्मादुभयोः पार्श्वयोश्चक्रवर्तित्वमयाचदिति पिनाकभृत्तस्योत्तरदक्षिणोभयपार्श्वगमनसौलभ्याय कैलासं भित्त्वा महागुहाविवरं चक्रे । एवं विद्धः कैलाशः समुद्विग्नः 'भगवन्नेतन्मदीयमुत्तरपार्श्वं मानुषागम्यमिति गुहयाऽनया पार्श्वं तत्तेषां गम्यं सञ्जातमिति 'देव, तथा कुरु येन मदीयैषा मर्यादा न भिद्येत' । कैलासेनेत्थं विज्ञप्तो हरो दिग्दन्तिदृग्विषाहीन्द्रगुह्यकान् रक्षकान् गुहायां स्थापयामास । दक्षिणे विद्याधरेश्वरम् महामायम्, उत्तरे चापराजितां चण्डिकां कालरात्रिं स्थापयन् कृतगुहारक्षो हरो महारत्नानि समुत्पाद्य तत्र व्यवस्थामादिदेशयदियं द्विपार्श्वी सिद्धरत्नस्य चक्रवर्तिनः सदूतानां सदाराणां तदनुज्ञातानां राज्ञाञ्च गम्या भविष्यति, नान्येषाम् । व्यक्ते इत्थमादिष्टवति समये समये विद्याधरीसार्यमाणवीणाप्रक्वा[5]णमाकर्णयँस्तत्रर्षभकः साम्राज्यं कुर्वन्नपि दर्पमूलकर्प[6]णानिव निजप्राणान् वज्रिणे ददौ । एष च त्रिशीर्षाख्यगुहाया अस्या आगमो या च युस्माद्दक्षैर्विना धनजनमँदैरन्यैरगम्या । तस्य चैतद्गुहाद्वाररक्षिणो महामायस्य कुले कालानुक्रमेण जातोऽहं देवमायनामा । मम जन्मनि दिव्या सरस्वती सप्रर्मदाय सप्रमदाय मदीयजनकाय व्याजहार यद्विद्याधरेषु जातोऽयं मृधे रिपुभिर्दुर्जयः । यश्चामुं जेष्यति नूनं स चक्रवर्ती भविष्यतीति । तेनास्य स्वामिनाऽमुनाऽनुवर्त्येन प्रभुणा च भाव्यम् सोऽहं त्वया जितोऽतो भवान् कैलाशोभयपार्श्वैकचक्रवर्ती प्रभाववानस्माकं प्रभुरिति त्रिशीर्षगुहामेतां तीर्त्वा निजबलवशीकृतं शेषाहितसमाजमजः स्वसम[10]जंमुदजेनेव सम[11]जतु ।

---

१. 'यमः समुप०' । २. नितराम् अदनम् न्यादः 'नौ ण च' तद्रहितो निरशन इति भावः । ३. 'नौ गदनद०' निःशब्द इत्यर्थः । ४. 'नौ गदनद०' निगादो, वचनम् । ५. 'क्वणो वीणायाञ्च' । ६. 'नित्यं पणः परिमाणे' । ७. 'मदोऽनुपसर्गे' । ८. सपत्नीकाय । ९. 'प्रमदसम्मदौ हर्षे' । १०. 'समुदोरजः पशुषु' (समजः पशूनां सङ्घः, उदजः पशूनां प्रेरणम्) । ११. अज गतिक्षेपणयोः इत्यस्माल्लोट् ।

देवमायेनेत्थमुक्तश्चक्रवर्ती जगाद यद्वयमद्य गुहाद्वारमासाद्य तत्र वसामः प्रातः कृतसम्विधयश्च तां गुहां प्रवेष्टास्मः' इति। एवमुक्त्वा नरवाहनदत्तोऽन्योन्योपह्वैः[1] आहवसम्मिलितैः[2] सर्वैं राजभिः सह तत्र गत्वा गुहाद्वारमावसन् निरालोकान्तर्भागां पुञ्जीभूतकल्पान्तघनतामिस्रामिव स्थितामनर्केन्दुरश्मिप्रवेशां तां गुहामालुलोके। द्वितीयेऽह्नि कृततत्सपर्यो ध्यातोपनतसद्रत्नसहायः, सपरिच्छदः स चन्द्रिकारत्नैस्तत्रत्यतमांसि, चन्दनेन चाहिदृग्विषान्, हस्तिरत्नेन दिग्गजान् खड्गरत्नेन च गुह्यकान्, अन्यै रत्नैरन्यान् विघ्नाँश्च निवार्य सेनया सहामुमुत्तीर्णवान्। ततश्चोदग्द्वारेण विनिर्गच्छति तस्मिन्, 'चक्रवर्तिन्, रत्नप्रभावाप्तमाहात्म्येन त्वया गुहेयं तीर्णेति' दिवो वागुदभूत्। अथ धनवती देवमायश्च तं प्रभुमूचतुर्यदेतद्गुहाद्वारे सर्वदा कालरात्रिः सन्निधत्ते, सा चामृतं जिहीर्षूणां दानवेन्द्राणां वधकारिणी[3] विष्णुनाऽमृतमन्थने पूर्वमुत्पादिता। सैषा गुहामेतां रक्षितुं शर्वेण समादिष्टा येन यथोक्तैस्त्वादृशैर्विनाऽन्यो न कश्चित्तरेत् इति। चक्रवर्ती सिद्धरत्नस्त्वञ्च गुहामिमां तीर्णवान् इत्येषा विजयसिद्धये त्वयाऽवश्यमर्चनीया। एवं धनवती-देवमायोक्तस्य तस्य नरवाहनदत्तस्य वासरस्तत्राक्षैषीत्। कैलासोत्तरसानवश्च समासन्नसंग्रामरुधिरोक्षिता इव सन्ध्यारुणा अराजन्त। राज्ञस्तस्य सर्वं बलं समुपलब्धबलस्तमोर्घनो[4] गुहागृहरूपं सद्यो वैरमिव स्मरँस्तदानीमावृणोत्। आयसोद्घनघनोरस्कभूतादिगणः[5] कालरात्रिक्रोधाङ्कुर इवाविर्बभूवेति क्षणेनैव नरवाहनदत्तमतिरिच्य सर्वं तत्सैन्यं शीतलीभूतापघनं[6] निःसंज्ञं संजज्ञे। तदवलोक्यानर्चादुर्मनायमानकालरात्रिविजृम्भितं तत्सर्वमवगत्य नरवाहनदत्तस्तद्गुहाद्वारोपप्रघण[7]स्थतत्रत्यभूभृदुपघ्न[8]-निघ[9]-तरूपलब्धिर्मानुप्त्रिम[10]-पक्त्रिमफलपुष्पैस्तामर्चयन्नित्थं तुष्टाव, 'देवि, त्वं हि प्राणिनां प्राणशक्तिः, तेषां सञ्जीवनी चेति त्रिभुवनं त्वमेवाश्वासयसि। दुष्टदुरितद्रुमस्तम्बघ्न[11]द्रुघण[12]-परिघ[13]-पाणिदुर्गा त्वमेवेति जगदुत्पत्ति-स्थिति-नाशहेतवे तुभ्यं नमः। किन्त्वित्थं स्तुतापि यदा

---

१. 'ह्वः सम्प्रसारणञ्च न्यभ्युपविषु'। २. 'आङि युद्धे'। ३. 'हनश्च वधः।' ४. 'मूर्तौ घनः'। ५. 'उद्घनोऽत्याधानम्'। ६. 'अपघनोऽङ्गम्'। ७. 'अगारैकदेशे प्रघणः प्रघाणश्च'। ८. 'उपघ्न आश्रये'। ९. 'निघो निमितम्' (समारोहपरिणाहवन्त इत्यर्थः)। १०. 'ड्वितः क्त्रिः' 'क्त्रेर्मम्नित्यम्'। ११. 'स्तम्बे क च' १२. 'करणेऽयोविद्रुषु'। १३. 'परौ घः'।

कालरात्रिः सा न तुतोष तदा स्वमूर्द्धोपहारेण स तामार्चिचिषत् इति स्वशिरश्छेत्तुं समुपात्ताट्टहासोद्घं[1] तुष्टा देवी तत्क्षणमवोचत्, 'पुत्र, साहसं मा कार्षीः। एषाऽहं ते सिद्धा अचिरेणैव तवैतद्बलं प्रकृतिस्थं भवतु। विजयञ्च त्वमाशु प्राप्नुयाः। एवं तस्यामभिदधत्यामेव सर्वं तन्नरवाहनदत्तबलं पल्यङ्क[2]सुप्तप्रबुद्धमिव सञ्जातमिति सर्वास्तद्भार्याः, वयस्याः, अन्ये विद्याधराश्चावाप्तसमानन्द[3]थवश्चक्रवर्तिनस्तस्यात्मीयजनरक्ष्ण[4]-यत्नविशिष्टं तं प्रभावं मुहुर्मुहुः प्राशंसन्। वीरो नरवाहनदत्तश्च तदानीं विहिताहारपानाद्यावश्यकक्रियोऽनुभूततद्रात्रिप्रियस्वप्न[5]ः, कालरात्रिं प्रातर्विधि[6]नाऽनाधिरभ्यर्च्य पयोधि[7]गाम्भीर्यनिधिर्विरुद्धविद्याधरानिरुद्धाध्वानं धूमशिखं प्रतिप्रायात् इति मन्दरदेवीयप्रधानेन तेन सह चक्रवर्तिनस्तस्य तादृशं जन्यमजनि यत् सर्वतो व्योम, खड्गमयमिव, मही च शूरमूर्धमयीव, आहवह्वश्च 'जहि जहीति जहि, मा जहिहि, जहीहि, जहाहि इत्युग्रवीरवाक्यमय इवाभवत्। आसायंकालं प्रवर्तमाने एवं सेनयोरुभयोर्युद्धे चक्रवर्ती, धूमशिखं युद्धे बद्ध्वा शान्तधूमशिखोद्रेकमग्निदग्धेन्धनमिव कृत्वा निजशासनं ग्राहयामास।

द्वितीयेऽह्नि चाग्रतो योद्धुमायान्तं मन्दरदेवं चारेभ्यो ज्ञात्वा किञ्चिद्दूरं गतोऽग्रे बहुराजगणसैन्य-सन्निर्तिं, रचितव्यूहमग्रतः समागतं तमवलोक्य स्वपक्षीयराजन्यककारितप्रतिव्यूहरचनो नरवाहनदत्तोऽरेर्बलमभ्यधावत् इति प्रलयकालोद्वेलजलधिक्षुभितजलौघानुकारिणोरुभयोः सेनयोराहवो भयावहोऽवर्तत। एकतश्चण्डसिंहाद्या महारथाः, अन्यतश्च काञ्चनदंष्ट्राख्यप्रभृतयश्शूराः युध्यन्तेस्मेतिविक्षोभितकुलक्ष्माभृत्प्रकम्पितत्रैलोक्योऽवलोक्यो विजजृम्भे संग्रामः।

तत्र सर्वविद्याधरसैनिकानाम् अग्रेस्था[8]यं युध्यमानस्य नरवाहनदत्तस्य प्रथमतः स्थित्वा प्रतियुध्यमानस्य मन्दरदेवस्य च, परस्परं भीरु[9]ङ्कारम् आक्रोशताम् 'अलमेवंकारं[10] पलायितेने'ति न्यक्कारपूर्वकम् अरिवेदं[11] प्रहरताम्, यावद्[12]वेदमाहतानाञ्च सैनिकानां निर्भरभरितसकलत्रिभुवनोदरो महानुदभूद्रणारवः[13]। तं च

---

१. 'संघोद्धौ गणप्रशंसयोः'। २. 'परेश्च घाङ्कयोः'। ३. 'द्वितोऽथुच्'। ४. 'यजयाचयतविच्छप्रच्छरक्षो नङ्'। ५. 'स्वपो नन्'। ६. 'उपसर्गे घोः किः' ७. 'कर्मण्यधिकरणे च'। ८. 'विभाषाऽग्रे प्रथमपूर्वेषु'। ९. 'कर्मण्याक्रोशे कृञः खमुञ्'। १०. 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्'। ११. 'कर्मणि दृशिविदोः साकल्ये'। १२. 'यावति विन्दजीवोः'। १३. 'विभाषाङि रुप्लुवोः'।

प्रलयकालविजृम्भितमहाभैरवाट्टहासभैरवमारवमाकर्ण्य रणरसेन बद्धविकटरोमाञ्च-कवचेन प्रेर्यमाणो विजृम्भितातिभीषणभ्रुकुटिसङ्कटायमानललाटभित्तिर्नरवाहन-दत्तोऽमर्षदष्टदन्तच्छदः[1], उत्पाततडिल्लतानुकारिणा कृपाणेन कांश्चिदरिसैनिकान् समूलघातं[2] निहत्येतरान् पादघातम्[3] अवधीत्। चण्डसिंहेनापि च युध्यमानेषु प्रतिभटेषु दावानलावलीढद्रुम इव तत्क्रोधानलावलीढः कश्चिदूर्ध्वशोषम्[4] अशुषत्, अन्यो हस्तग्राहं[5] गृहीतोऽजकनाशम्[6] अनशत्? कश्चिच्च स सरित्पूरो द्रुममिव समूल-काषम्[7] अकषत्। इतरश्च जीवग्राहं[8] गृहीत्वा महोपलमयोघन इव रुक्षपेषम्[9] अपिनट्। कारांबन्धं[10] बद्धांश्च कांश्चिद्धनपोषम्[11] अपुष्णात्; पृतनानिष्कामं[12], यष्टिग्राहम्[13], अस्यपं[14]-गोरं, वीरःप्रतिपेषं[15] केशग्राहंश्च[16] युध्यमानानन्यान् द्व्यङ्गुलोत्कर्षम् अच्छिनत्[17]।

इत्थं घोरे तस्मिन् रणेऽभिधावितश्चण्डसिंहः काञ्चनदंष्ट्रेण भीमया गदया मूर्ध्न्यभिजघ्ने इति गदाहति[18]पतितं तं दृष्ट्वा धनवती विद्याबलेन शप्त्वोभे सेने निश्चेतने अकार्षीत्। नरवाहनदत्तो मन्दरदेवश्चेमावेवोभौ तदानीं सचेतनावतिष्ठ-ताम्। इत्थं धनवतीं तदानीं क्रुद्धां जगद्दीर्णि-लूनि-[19]धूनि-क्षमामक्षमां[20] वीक्ष्य दिक्षु देवा अपि दुद्रुवुः। मन्दरदेवश्चाथ चक्रवर्तिनरवाहनदत्तमेकाकिनं दृष्ट्वोद्गूर्णायुध-स्तमभ्यधावत्। अतो नरवाहनदत्तोऽपि विमानादवतीर्योत्खातखड्गरत्नो जवात्तं प्रतिजग्राह। मन्दरदेवश्च तदानीं मायया जयमिच्छन् मदोन्मत्तमातङ्गरूपं चक्रे इति विद्यातिशीतिशाली नरवाहनदत्तोऽपि तज्जनैः स्वमायया सुमहत्सिंहाकृति-रदृश्यत। क्षणानन्तरञ्च मुक्तमातङ्गवपुषा मन्दरदेवेन परित्यक्तसिंहाकृतिर्नरवाहन-दत्तो युध्यमानः साक्षाज्जयमिव खड्गं मन्दरदेवस्य कराद् युक्त्याऽहरत् इत्यप-शस्त्रं बाहुभ्यां युध्यमानं मन्दरदेवं गृहीतगुल्फो नरवाहनदत्तः क्षितौ निपात्य

---

१. पुंसि संज्ञायां घः प्रायेण', छादेर्घेऽद्व्युपसर्गस्य'। २. 'समूलाकृतजीवेषु हन्कृञ्ग्रहः'। ३. 'करणे हनः'। ४. 'ऊर्ध्वे शुषिपूरोः'। ५. 'हस्ते वर्तिग्रहोः'। ६. 'उपमाने कर्मणि च'। ७. 'निमूलसमूलयोः कषः'। ८. 'समूलाकृतजीवेषु'०। ९. 'शुष्कचूर्णरूक्षेषु पिषः'। १०. 'अधिकरणे बन्धः'। ११. 'स्वे पुषः'। १२. 'अपादाने परीप्सायाम्'। १३. 'द्वितीयायाञ्च'। १४. 'अपगुरो णमुलि'। १५. 'परिक्लिश्यमाने च। १६. 'समासत्तौ'। १७. 'प्रमाणे च'। १८. स्त्रियां क्तिन्'। १९. 'ऋल्वादिभ्यः क्तिन् निष्ठावद्वाच्यः'। २०. षिद्भिदादिभ्योऽङ्' (क्षमारहिताम्)।

तद्वक्षोविन्यस्तचरणः, समाकृष्टकेशोऽसिना विद्विषस्तस्य शिरश्छेत्तुं यावदुदयुङ्क्त तावदेव मन्दरदेवी, नाम्ना, कन्या तत्स्वसा तमभ्युपेत्य तद्विशसनं निवारयन्त्यब्रवीत्, 'तपोवनस्थस्त्वं दृष्ट्वैव प्राज्ञया भर्त्ता कल्पित इति राजन्, मदीयं भ्रातरं निजश्वशुर्यमिमं मा वधीः। तयेत्थमुक्तो नरवाहनदत्तो मन्दरदेवमुवाच, 'विद्याधरेश, त्वमधुना मया मुक्त इति रणे शूराणां जयपराजययोः प्रतिष्ठाचाञ्चल्यमवधार्य मा लज्जिष्ठाः। राज्ञेत्थमुक्तो नातिप्रह्लत्तिर्[1]मन्दरदेवो जगाद, 'आहवे स्त्रिया रक्षितस्य गर्हितेन मदीयेन जीवनेनेदानीं किमिति वनस्थस्याहं पितुरन्तिकं यामि। त्वमेव चात्रत्यश्चक्रवर्ती निर्मित इत्ययमेवार्थो मदीयेन पित्राऽप्यसूच्यत। इत्थमुक्त्वा कृतप्रस्थितौ[2] मानिनि मन्दरदेवे, संयदवसातौ[3], गगनस्थेषु च देवेषु प्रवृत्तायां चक्रवर्तिविजयोपलक्षितसहर्षध्वनिकीर्ति[4]-[5]स्तुतिसङ्गीतौ[6] धनवती निजं सुतमुभे सेने च स्वशक्त्या सचेतनयति स्मेति सुप्तप्रतिबुद्धा इव सर्वे ते सचिवादयो द्विषन्तं विजितमवगत्य नरवाहनदत्तमभिननन्दुः। काञ्चनदंष्ट्रादयश्च मन्दरदेवीया राजानस्तस्य शासनं जगृहुः। इत्थमवाप्तशर्वाचलोभयपार्श्वसम्पन्[7]नरवाहनदत्तः परां मुदमापन्नोऽरिविजयोत्सवाहततारतूर्यं, प्रजासचिवराजवृन्दवन्दितो रिपुप्रतापमिव मधु पिबन्ननुभूतनिजप्रियजनसमज्याभिषुत्यानन्दः शय्यातलमलमकरोत्।

मन्दरदेवस्य तपोवनगमनम्

प्रातश्चासौ चक्रवर्ती सम्पादिताहर्मुखक्रियो[8], निजबलान्वितोऽभ्युत्थायाग्रगामिनः काञ्चनदंष्ट्रस्य वचनात् कैलाससानुतो विमलसंज्ञकं मन्दरदेवीयं पुरं प्रयातुं समुद्घोषितनिजव्र[9]ज्[10]येच्छो[11] बभूव। तत्र गत्वा चामितगतिं राजानं मन्दरदेवस्य राज्येऽभिषिच्य काञ्चनदंष्ट्रादीन् तदीयान् महीभृतश्च तस्मै समर्प्य स्वीकृततत्कृत[12]परिचर्यो नवोढया वध्वेव कैलाशोत्तरदिक्पार्श्वलक्ष्म्या समाश्लिष्टो महर्द्धिषु तत्पुरीयोद्यानेषु रममाणो विद्याधरमहीक्षितां चक्रवर्तित्वमासाद्याप्य-

---

१. 'ह्लादः–' इति योगविभागात् क्तिन् ह्रस्वः। २. 'स्थागापापचो भावे'। ३–४. 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च। ५. 'श्रुयजीषिस्तुभ्यः करणे। ६. स्थागापापचो भावे'। ७. 'सम्पदादिभ्यः क्विब्वक्तव्य'। ८. 'संज्ञायां समजनिषद्°', 'अजेः क्यपि वीभावो नेति वाच्यम्'। ९. 'कृञः श च'। १०. 'व्रजयजोर्भावे क्यप्'। ११. 'इच्छा'। १२. परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्।

धिकप्रभुत्वकाम्यो[1] मन्त्रिभिर्वारितोऽपि सुराश्रयविद्याधरालङ्घ्यभूमिविजिगीषया तत्र गन्तुं प्रवृत्ते इति नारदस्ततोऽभ्युपेत्यैवमभाषत, 'नीतिज्ञस्यापि तेऽविषयोद्यमोऽयं दर्पेण कैलासोन्मूलनेहस्य[2] दशास्यस्येव, राजन्, अयुक्तः। शर्वेण हि ते विद्याधरेन्द्रताऽऽदिष्टा न सुरेन्द्रतेत्यर्कचन्द्राभ्यामपि दुर्लङ्घ्यो मेरुर्नतेऽतिक्रान्तिविषयः। विद्याधराणां भूमिर्हिमवान् हि त्वया विजित इति देवभूमौ मेरौ दुर्ग्रहं मुक्त्वा शिवमिच्छता भवता मन्दरदेवस्याकम्पनसंज्ञकः पिता द्रष्टव्यः' नारदमुनिरेवमुक्त्वा तथेति प्रतिपन्नं तं चक्रवर्तिनमामन्त्र्य यथागतं जगाम।

**नरवाहनदत्तस्यान्य-कन्यापञ्चकप्राप्तिः**

इतश्चक्रवर्ती, देवमायाच्छुतमृषभस्य तथा *वज्रिकृतनाशं स्मरन् बुद्ध्या सर्वं विमृश्य परित्यक्तदेवभूमिविजयोपलब्धिस्वागृहीतिर्[3]विनिवर्त्य तपोवनस्थितं तमकम्पनं राजर्षिं द्रष्टुं, निर्विकल्पकसमाधिजागरा[4]परायणैः योगनिष्ठैर्महर्षिभिरधिष्ठितं ब्रह्मलोकमिव मृजा[5]वत्तत्तपोवनमवापत्। ददर्श च तत्र जटावल्कलधारिणं, द्वन्द्वदुःखभिदा[6]-विदावद्भिः, ब्रह्मज्ञानोपलभा[7]प्रभाशीलैः, कृपा[8]मात्रैकधनैः, विविधशास्त्रचर्चां[9] कुर्वद्भिः, मुनिजनैरुपासितं महाद्रुममिव कृतद्विजोपासनम्[10]अकम्पनम्। उपसृत्य च तत्र श्रद्धया[11] तपस्विनोऽस्य पादवन्दनां[12] चकार। कृतातिथ्योऽसावपि च राजर्षिस्तं जगाद, 'राजन्, इममाश्रममागच्छता त्वया समीचीनमाचरितम्। भाविनी चात्र महती ते वेदना[13]। समुल्लङ्घ्येममाश्रमं गच्छते च ते सम्वित्ति[14]सम्पत्तयो[15] महर्षयो नूनं शपेरन्।' तं चक्रवर्तिनं राजर्षावेवं ब्रुवति गृहीतमुनिवृत्तस्तत्तपोवने तिष्ठन् स्वस्रा कुमार्या मन्दरदेव्या सहितो मन्दरदेवोऽपि तत्र पितुरन्तिकमाससाद। नरवाहनदत्तश्च तं दृष्ट्वा कण्ठेऽग्रहीत्। अथ भ्रात्रा समुपागतां मन्दरदेवीमवलोक्य राजर्षिरकम्प-

---

१. 'काम्यच्च', 'अ प्रत्ययात्'। २. 'गुरोश्च हलः'। ३. 'तितुत्रेष्वग्रहादीनामिति वाच्यम्' तेनेह क्तिनीट्। ४. 'जागर्तेरकारो वा'। ५. भिदादित्वादङ्। ६. भेदनम्, दूरीकरणम्; ७. 'प्रतिवर्णमनुपलब्धेः' इतिभाष्यप्रयोगात्क्तिन्नपि-बाहुलकाद्बोध्यः'। ८. 'कृपेः सम्प्रसारणञ्च'। ९. 'चिन्तिपूजिकथिकुम्बिचर्चश्च'। १०. 'ण्यासश्रन्थो युच्'। ११. श्रदन्तरोरुपसर्गवद्वृत्तिः; अतो दधातेः 'आतश्चोपसर्गे'; टाप्। १२. 'घट्टिवन्दिविदिभ्यश्चेतिवाच्यम्'। १३. लाभः; लाभार्थस्यविदेरत्रग्रहणात्। १४. ज्ञानम्। १५. सम्पदादिषु 'क्विन्नपीष्यते।

---

* पृ० ३३७ त्रिशीर्षाख्यगुहागमकथा।

नस्सम्राजमुवाच, 'राजन् , दिष्ट्या परीष्टिमन्तरेणैव[1] मदभीष्टसिद्धिः सञ्जाता यद्गिरावस्मिन् कृतासिकं[2] मां त्वं समुपलब्धवान् । मन्दरदेवीयं मम सुता दिव्यया वाचा चक्रवर्तिनो महिषी भवितुमुक्तेति मयाऽर्पितामिमां त्वमुपयच्छस्व । राजर्षावेवमुक्तवति तदात्मजा जगाद, 'इह मम वयस्याः चतस्रः कन्या वर्तन्ते एका तासु काञ्चनदंष्ट्रजा कनकवत्याख्या। द्वितीया च कालजिह्वस्य सुता कालवती। तृतीया दीर्घदंष्ट्रस्य तनुजा श्रुता। चतुर्थी च पोत्रराजस्य पुत्री अम्बरप्रभा। विद्याधरेन्द्रकन्यानां तासामहं पञ्चमीति वयं पञ्च पूर्वं तपोवने आर्यपुत्रमिममवलोक्य मिथः समयं व्यदध्म यदस्माभिः सममेवायं भर्त्ता कर्तव्यः। पृथक् तु येमं भजेद् 'अजीवनिस्तस्याः[3] शठायाः भूयाद्' इति तामाक्रोशन्तीभिः अन्याभिरात्माऽऽशु हन्तव्यः। अतस्तासां सखीनां परिणयं विना स्वकीयोपयमनं कृत्वा तत्समयोल्लङ्घने नाग्रगामिकां[4] कर्तुमहमिच्छामि। एवं तयोक्तस्तत्पिताऽकम्पनस्तेषामपि चतुःकन्यापितॄणामाकारणां[5] कृत्वा यथातथ्यं तेभ्यस्तत्क्षणं वर्णयित्वा करणीयमपृच्छत् इति कृतार्थंमन्यास्ते स्वकन्याः समानीय सह मन्दरदेव्या नरवाहनदत्ताय परिणये तासां दानमनुमोदितवन्तः।

इत्थं परिणीतान्यकन्यापञ्चकश्चक्रवर्ती बहूनि वत्सराणि सपरिच्छदो राजभोजन-पयःपानादिजन्येन[6] महताऽऽनन्देन तत्र स्थितस्त्रिसन्ध्यमृषीन् प्रणमन्

**नरवाहनदत्तस्य ऋषभाचल-गमनम्**

देवमायेनाकम्पेन चोचे, 'राजन् , प्राक्तना ऋषभकादयश्चक्रवर्तिनो ऋषभाद्रावभ्यषिच्यन्तेति त्वमपि स्वमहाभिषेकार्थं ससेनापरिच्छदस्तमेव राजाभिषेचनगिरिं[7] गन्तुं परम्परयाऽनया प्राप्तप्रांजनो[8] भव। एतदेवोद्धृतया देववाण्यापि अनुमोदितमिति नरवाहनदत्तोऽकम्पनेन सहान्यानपि ऋषीन् नत्वा शुभेऽहनि तस्मात्प्रतिष्ठमानोऽमितगतिप्रष्ठैः स्वशासननिष्ठैः सर्वविद्याधरेश्वरैस्त्रिशीर्षाख्यगुहायाः उत्तरं द्वारं प्राप्य सम्पूजितकालरात्रिस्त-

---

१. 'परेर्वा' इति वैकल्पिकयुजभावेक्तिनि तीषसह०—इति वेद् । २. 'धात्वर्थनिर्देशे ण्वुल्वक्तव्यः'। ३. 'आक्रोशे नञ्यनिः'। ४. 'पर्यायार्हणोत्पत्तिषु ण्वुच्'। ५. 'ण्यासश्रन्थो युच्'। ६. 'ल्युट् च'। ७. कृत्यल्युटो बहुलम्'। ८. 'कर्मणि च येन संस्पर्शात् कर्त्तुः शरीरसुखम्'। ९. राजा अभिषिच्यतेऽस्मिन्नित्यर्थे 'करणाधिकरणयोश्च'। १०. वा यौ' इत्यजेर्ल्युटि वैकल्पिकव्यादेशाभावः।

